श्रीः

कवितार्किकसिंह-सर्वतन्त्रस्वतन्त्र-

श्रीमद्वेङ्कटनाथ-वेदान्तदेशिक-

विरचिते

# सेश्वरमीमांसा—मीमांसापादुके

श्रीमदाचार्यकुमारवरदाचार्य विरचितं

मीमांसापादुका परित्राणम्

अभिनवदेशिकवात्स्य वीरराघवाचार्य-

विरचितं ग्रन्थद्वयव्याख्यानञ्च

# SESWARA MIMAMSA

and

# MIMAMSA PADUKA

*by*

**SRIMAD VEDANTA DESIKA**

with

ACHARYA KUMARA SRI VA[illegible]DACHARYA'S

**Mimamsa Paduka [illegible]itrana**

and

ABHINAVA DESIKA VIRARAGHAVACHARYA'S

**Sukshmarthateeka & Satpathasanchara**

*Edited by :*

**Sri Uttamur T. Viraraghavacharya**

*and Published by :*

UBHAYA VEDANTA GRANTHAMALA

**Price] 1971 [Rs. 10/-**

श्रीः

कवितार्किकसिंह–सर्वतन्त्रस्वतन्त्र–

श्रीमद्वेंकटनाथ–वेदान्तदेशिक–

विरचिते

# सेश्वरमीमांसा—मीमांसापादुके

श्रीमदाचार्यकुमारवरदाचार्य विरचितं

मीमांसापादुका परित्राणम्

अभिनवदेशिकवात्स्य वीरराघवाचार्य–

विरचितं ग्रन्थद्वयव्याख्यानञ्च

# SESWARA MIMAMSA

**and**

# MIMAMSA PADUKA

*by*

**SRIMAD VEDANTA DESIKA**

**with**

ACHARYA KUMARA SRI VARADACHARYA'S

**Mimamsa Paduka Paritrana**

**and**

ABHINAVA DESIKA VIRARAGHAVACHARYA'S

**Sukshmarthateeka & Satpathasanchara**

*Edited by:*

**Sri Uttamur T. Viraraghavacharya**

*and Published by:*

UBHAYA VEDANTA GRANTHAMALA

**Price] 1971 [Rs. 10/-**

We Acknowledge

with Thanks

the Munificent Donation

of the Entire Cost of this Book

**Seswara Mimamsa and Mimamsa Paduka**

FROM SRI U.VE

(Uruppattur, Nallan Chakravarti, Nattappattu,
Rajagopalacharya, Srinivasacharya)

**Sri N. R. SRINIVASAN**
*(Engineer, The Modern Construction Co., Madras)*

on the occasion of his

Shashtiabdapoorti Celebration

(PURATTASI-SRAVANA)

*in the Year of Sadharana*

श्रीः

## उभयवेदान्तग्रन्थमाला

# सेश्वरमीमांसा विषयसूची

### प्रथमाध्याये प्रथमपादः

## मीमांसापादुका

****

## ॥ सेश्वरमीमांसा सूत्रसूची ॥

वेदस्यार्थप्रत्यायकताधिकरणम् ॥ ७ ॥



वेदापौरुषेयताधिकरणम् ॥ ८ ॥

॥ प्रथमाध्यायद्वितीयपादस्थ सूत्राणि ॥

अर्थवादप्रामाण्याधिकरणम् ॥ १ ॥

## विधि(फल)वन्निगदाधिकरणम् (2)



## हेतुवन्निगदाधिकरणम् ॥ ३ ॥

## मन्त्राधिकरणम् ॥ ४ ॥

# शोधनिका

6 12 नाथै
22 8 मात्रेणावि
31 1 शासनाव
31 7 श्रुतिमुखेनै
31 13 ज्ञायत इति भावः
32 22 शाबरे
43 17 साधन
44 13 युक्तं
49 5 दिन्द्रिय
53 7 अर्थापत्ति
54 21 अवयवि
57 10 पदार्थयोर्वा
57 19 रेवार्थे
61 14 प्रत्यवमर्षः
61 17 प्रत्यवमर्श
61 17 शकारान्तम्
62 [illegible] बाधप्रसं
62 22 व्यापक
63 1 अस्त्वेवम्
68 22 नैकान्त्य
72 3 गुणाधीनं प्रामाण्यं
78 5 विषय
81 22 चयनाधार
83 15 प्रत्येकावयव
83 21 पृथिव्यप्
84 7 विशेषेण
85 4 बाधकवद्भिः
85 15 पश्यामहे
86 2 सेश्वर
86 2 प्रामाण्यम
87 3 शंकायाम
88 22 चिदिद्वाभाव
90 18 परिषदि
92 11 संकेत
98 6 विशेषप्र
101 16 दर्शनं
102 8 उदाहृत
103 14 पुरुषः
103 15 मशकार्थं
104 9 दध्यू
104 22 वच्छेदक
110 9 पक्षेपिशब्दादर्थो
110 10 अनादिर्व्यं
110 10 किं नु
110 17 परिणाम
110 19 सृष्ट्वा
111 21 निरासेनेति
111 23 तद्भिन्न
120 21 कार्या
121 3 आकांक्षा
121 9 एवं
121 20 प्रतिपत्ति
123 20 अन्तिम
124 4 पौरुषेय

| पृष्ठ | पंक्ति | शुद्ध | पृष्ठ | पंक्ति | शुद्ध |
|---|---|---|---|---|---|
| 124 | 14 | ग्रन्थो | 172 | 6 | अक्षातेष्व |
| 125 | 7 | भ्रान्ति | 173 | 3 | तदात्कालिक |
| 125 | 17 | प्रामाण्य | 173 | 10 | अशुद्धो |
| 126 | 2 | पुरुष | 173 | 21 | अथश्चैवं |
| 126 | 7 | दोषशंका | 180 | 21 | मित्युक्तं |
| 127 | 21 | अस्मर्यमाण | 181 | 10 | मित्यर्थः |
| 128 | 11 | स्मरन्ती | 187 | 16 | ऊर्क् |
| 129 | 9 | प्रत्युत | 189 | 3 | साधन |
| 131 | 2 | शाखा(म्) | 190 | 3 | वेतसः |
| 131 | 23 | तदनु | 190 | 21 | अप्सुयोनि |
| 132 | 18 | धिकरणे | 191 | 5 | सुसदेवः |
| 135 | 14 | नियोग | 209 | 3 | ग्रहण |
| 137 | 13 | हृताः | 209 | 7 | क्षिप्य |
| 137 | 15 | कृत्स्न | 210 | 11 | स्वाध्याया |
| 141 | 1 | ऽवधत्ते | 216 | 4 | नियमः |
| 141 | 22 | स्वाभाविक | 217 | 2 | लघीयः |
| 142 | 5 | प्रयत्नेन | 218 | 13 | मित्यर्थः |
| 144 | 16 | विनियोगो | 220 | 11 | कर्तारः |
| 146 | 4 | रत्न | 222 | 5 | प्रादुर्भा |
| 146 | 18 | प्रत्यक्षः | 222 | 11 | अब्देवत्यः |
| 146 | 19 | मानाप्तोपदेशा | 223 | 15 | शृंग |
| 150 | 5 | यश्चैता | 224 | 4 | जुषस्व |
| 150 | 11 | अनुमातुं | 226 | 16 | तुर्फरी |
| 151 | 2 | पश्चात्तनै | 228 | 5 | वाक्या |
| 151 | 14 | गर्गत्रिरात्र | 232 | 17 | पद्येन |
| 163 | 10 | काधि | 232 | 18 | वादैः |
| 166 | 19 | फलं | 235 | 5 | दिष्ट्यै |

236 13 पीव
236 15 मुभिक
244 7 कथित्
245 16 शृणु
246 4 कल्पित
246 18 षट्का
247 8 मैव
252 15 त्याज्यं
239 16 मीयत्वम्
2:4 2 शब्द
251 20 केन
252 15 त्याज्या
253 5 मैकशा
257 13 जैमिनि
258 6 कृत्स्न
259 4 मुपोद्घातं
261 14 चैकशा
267 14 शब्दस्य
270 7 विषयो
275 18 न्निर्णय
283 2 बाधक्रमाह
283 12 वैनाशिका
293 3 विध्यन्त
294 17 स्वरूपोत्पत्तौ
295 9 कर्तव्यता
309 13 यथावत्
316 4 भगवद्धि

320 19 मान्यार्थौ
341 11 प्रवर्तनमपि
341 17 प्राङ्मुख
345 12 क्वाचित्क्याः
348 17 हुंफडा
350 15 अध्ययन
352 6 शब्दशक्तिः
353 8 विधि
364 18 मैवं
370 . प्रायत्वे
371 2 आधान
376 14 आचार्य
380 1 सिद्धये
:81 15 च्याश्रमे
383 13 स्तनमु
387 15 समनन्तर
399 16 त्ववारणाय
410 3 ज्ञानानन्द
410 8 कारानु
410 15 तत्संप्रयोगे
411 13 मेत्तुं
416 19 कामिनी
417 1 तारतम्य
431 12 तदनन्तरा
450 4 प्रसक्त्य
452 3 तद्रूप
481 8 आपात

श्रीः

श्रीहयवदनपरब्रह्मणे नमः

श्रीमान् वेंकटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

श्रीमद्वेदान्तदेशिकविरचिता

# ॥ सेश्वरमीमांसा ॥

पूर्वमीमांसाख्य जैमिनिसूत्रव्याख्या

—o—o—

विहितमननमर्थं यः पुमर्थैश्चतुर्भिः
सफलयति वदान्यः स्वप्रसादेन देवः ।
निखिलनिगमवेद्ये सिद्ध्यतु श्रीसखेऽस्मिन्
भगवति निरवद्ये भक्तिरात्यन्तिकी नः ॥ १

---

श्रीः

## सूक्ष्मार्थटीका

श्रीमान् वाजिमुखः श्रियं वितनुतां येनोपदिष्टोऽखिलो
वेदः स्वात्मभुवेऽर्पितश्च पुनरप्याहृत्य हत्वाऽसुरौ ।
यस्यांशः सहजैमिनिर्मुनिवरो व्यासः स पाराशरि-
र्मीमांसां निरमात् सकर्मभगवद्ज्ञप्त्यै विमुक्तिप्रियः॥ १ ॥

स जयति जैमिनिरादौ जयति पुनः काशकृत्स्नोऽपि ।
नारायणावतारो जयति परं बादरायणः श्रीमान् ॥ २ ॥

निर्मत्सरा निशमयन्त्विदमादरेण
कर्माधिकारनयसूत्रगतिं समीचीम् ।

---

बहुमुनिबुधवर्यैक्षुण्णमादर्शयद् यं
यतिपतिरवधाय प्राच्यतन्त्रस्य मार्गम् ।
विहितनिखिलसूत्रव्याक्रियोऽशोधयत् तं
श्रुतिशिखरगुरुस्तौ नौमि मीमांसकाग्र्यौ ॥ २ ॥

वेदविहितानां धर्माणां विविधफलसाधनत्वे अवगम्यमानेऽपि "प्रत्ययार्थं तु मोक्षस्य सिद्धयस्संप्रकीर्तिताः" इति न्यायेन फलत्यागेन मोक्षसाधनशेषतयाऽनुष्ठापनमेव तात्पर्यविषय इति गीताशास्त्रस्येव वेदस्यापि मोक्षप्राधान्यमेवेति शक्यं वक्तुम् । तावदपरामर्शेऽपि साध्योपायाधीनफलहेतुप्रसादाश्रय सिद्धोपाय-रूपैकार्थप्रतिपादकत्वरूपं शास्त्रैक्यं वेदस्यास्तीति इह प्रथम-श्लोकेनादर्शि। तदर्थविचाररूपमीमांसाप्रवर्तकान् प्रणमति स इति । आदौ-कर्मकाण्डमीमांसनविषये । पुनः-मध्यांशे । परम्-अन्तिमांशे । यद्वा पुनश्शब्दः तुपर्यायो जैमिन्यपेक्षया वैलक्षण्यपरः । तेन जैमिनिवत् मीमांसाशास्त्रान्तर्गतभागकर्तृत्वाभावेऽपि विशिष्य काशकृत्स्नस्य प्रवर्तकत्वमक्षतमिति ज्ञाप्यते । अपिशब्देन जैमिनि-समुच्चयः । यद्वा पुनश्शब्दः भूयःपरः । जैमिनिना पूर्वं संकर्षे कृते भूयः काशकृत्स्नेनापि संकर्षान्तरं कृतम् । तस्यापि प्रशस्तमुनि-कृततयोपजीव्यत्वात् सोऽप्यनुसंधीयत इति भावः । कर्माधिकार-नयः-कर्मविषयकमीमांसा । सूत्रगतिं-सूत्रगतमर्थप्रतिपादनव्यापारं

शारीरकेण घटयत्यधमसदुक्त्या
देवस्तुरङ्गवदनो जगदन्तरात्मा ॥ ३

"अथातो धर्मजिज्ञासा" इत्यारभ्य, "अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्" इत्येवमन्तं विंशतिलक्षणं मीमांसाख्यमेकं शास्त्रम् ।

(एकविद्यास्थानत्वम्)

सा हि मीमांसा वेदवाक्यार्थविचारात्मिका तद्विशेषनिर्णयार्था सांगाध्ययनसंगृहीत-स्वाध्यायशब्दवाच्य-वेदाख्याक्षरराश्यापातप्रतीति-विषय-सप्रयोजनार्थविशेषविविदिषाप्रेरितपुरुषाधिकर्तव्या च। एवमेकरूपप्रयोजनविशेषोद्देशप्रवृत्तपुरुषव्यापारगोचरन्यायसंघातनिबन्धनात्मिकाया: त्रिकाण्ड्याः सामान्यतो विषयप्रयोजनप्रवृत्तिप्रकारविशेषविशेषिताधिकार्यैक्यादेकविद्यास्थानत्वमिति नातिप्रसंगः । प्रतिविद्यास्थानमवान्तरोपकारादिभेदस्य व्यवस्थितत्वात् न तथाऽपि भेदो दरीदृश्यते (मी. पा. 31) । काण्डभेदस्तु स्यात् षट्कादिभेदन्यायात् । स्मृतिपुराणवत् महर्षिभिः पृथगपरिसंख्यानाच्च ।

---

घटयतीति. तदिदं निशमयन्त्वित्यन्वयः। सूक्तिः प्राचीनार्वाचीनादृता विविधा । तत्र समीची शारीरकानुकूला गतिरसदुक्त्या ज्ञाप्यत इत्यर्थः । लक्षणम्—अध्यायः ।

विविदिषेति । निर्णिनीषेत्यर्थः । विषयः—वेदवाक्यार्थः, प्रयोजनं—तन्निर्णयः, प्रवृत्तिप्रकारः—वेदार्थापातप्रतीत्यधीनत्वादिरूप इति विशेषाः । काण्डभेदः-कर्मकाण्ड-देवताकाण्ड-ब्रह्मकाण्डात्मना भेदः । षट्केति । उपदेशषट्कातिदेशषट्केत्यर्थः । आदिना प्रमाणप्रमेय-सामान्यातिदेशविशेषातिदेशादिना भेदः अध्यायादि-

(एकप्रबन्धत्वम्)

ऐकप्रबन्ध्यं तु संगतिविशेषैर्विशिष्टक्रमत्वादिति भगवता भाष्यकारेणैवाभाषि। न च निरूप्यविशेषसद्भावं समीक्ष्य सङ्कर्षारम्भः, वैयासिको वा शारीरकप्रणयनप्रयासः। "संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति वृत्तिग्रन्थश्च प्रतिबन्द्यादियुक्तिगर्भः।

(प्रबन्धैक्यभञ्जकार्थविरोधाभावः)

अर्थविरोधस्तु न सौत्रः, आन्यपर्यात् सूत्राणाम्। उक्तं ह्यागमप्रामाण्ये, "भगवतो जैमिनेः कर्मणः फलोपन्यासः कर्मश्रद्धासंवर्धनाय"

---

भेदश्च गृह्यते। अवान्तरभेदाः न प्रबन्धैक्यविरोधिन इति भावः। नन्वस्तु नानापुराणनानाधर्मशास्त्रादेरिव एकविद्यास्थानत्वम्, प्रबन्धैक्यं तु कुतः इत्यत्र, उत्तरोत्तरसंगत्याश्लिष्टत्वाभावे हि प्रबन्धैक्यं दुर्वचम्; इह तदस्तीत्याह ऐकेति। निरूप्यविशेषेति। परस्परासंगतार्थमित्यर्थः। पूर्वमीमांसाप्रधाननिरूप्यं कर्म, उत्तरमीमांसायास्तु ब्रह्माद्वैतम्, द्वैतवर्धकस्याद्वैतोपयोगिनश्च कथं घटना, तथा शब्दरूपदेवतापरस्य कर्मकाण्डस्य देवताविग्रहादिपरस्य देवताकाण्डस्य च कथं घटनेति न मन्तव्यम्। तस्य तस्य तत्तत्प्रतिपादकत्वाभावादित्यर्थः। प्रतिबन्दीति। यदि काण्डभेदात् शारीरकस्य भिन्नशास्त्रता। द्वादशाध्यायीरूपकाण्डाद्भिन्नत्वात् देवताकाण्डस्य, षोडशलक्षणमेकं शास्त्रमित्यपि न स्यादित्यर्थः। तत्त्वटीकादौ एतद्वृत्तिग्रन्थविवरणं द्रष्टव्यम्। शब्दनित्यत्वम् सविग्रहदेवताविरहः, अपूर्वात् फलोत्पत्तिः इत्यादिः पूर्वमीमांसोक्तोऽर्थः शारीरकविरुद्ध इत्यत्राह अर्थविरोध इति। अतिवादत्वं तत्सूत्राणामेवार्थान्तर-

इति । **वेदार्थसंग्रहेऽपि,** "अश्रुतवेदान्तानां कर्मण्यश्रद्धा मा भूदिति **देवताधिकरणे** (पू.मी. 9.1.4) अतिवादाः कृताः, कर्ममात्रे यथा श्रद्धां कुर्यात् [श्रद्धा स्यात्] इति सर्वमेकं शास्त्रमिति वेदवित्सिद्धान्तः" इति ।

द्रव्यदेवतासामान्ये द्रव्यबलीयस्त्वञ्च (8.1.17) प्रमाणमुखेन; न पुनर्वस्तुसदसत्त्वाभ्याम् । तच्च स्वावसरे निर्वक्ष्यामः । अन्यदपि सर्वमविरुद्धत्वेन निर्णेतव्यम् ।

**(मीमांसान्तरान्वेषणायोगः)**

**अध्यस्य(स्त) व्याक्रियादोषं [षात्] ये सूत्रमपि तत्यजुः ।**

---

**संभवात् शारीरकदर्शितजैमिन्यभिप्रायविरोधाच्च ज्ञायते । वसु-रुद्रादित्यादीनां वस्वादिविषयकोपासनेष्वधिकारो न भवति, स्वस्य स्वाराध्यत्वायोगात् फलस्य प्रागेव प्राप्तत्वाच्चेति मध्वधिकरणे जैमिन्याशयो दर्शितः। अर्चिरादिमार्गेण कार्यब्रह्मरूपदेवतालोको न प्राप्यः, किन्तु परब्रह्मलोक एवेति च कार्याधिकरणे । तेन देवतातच्छरीर-तल्लोकावान्तरभेदादिकं जैमिनिसंमतमिति कथं तद्विपरीतार्थः पूर्व-मीमांसासूत्रवास्तवार्थः स्यादिति भावः । तर्हि देवतापेक्षया द्रव्य-बलीयस्त्वस्थापनं कथमित्यत्राह द्रव्येति । प्रमाणेति । द्रव्यं लौकि-कत्वात् चक्षुरादिप्रत्यक्षविषयः ; देवता शब्दमात्रगोचरः । प्रथम-प्रवृत्तप्रत्यक्षमादाय सादृश्यं ग्राह्यमिति भावः। निर्वक्ष्याम इति । अत्र ग्रन्थस्य लुप्तत्वेऽपि तत्त्वटीकादौ तत् सुदर्शम् । अस्मत्कृतायामुपयुक्त-मीमांसायाञ्च । ननु व्याख्यानानीव मूलमपि जैमिनीयं त्यज्यताम् किं परिष्करणेनेत्यत्राह अध्यस्येति । तदुक्तमिति पदेपदे व्यासाहतं व्यासप्रशंसितजैमिनिकृतं च कथमुपेक्ष्येत; वृत्तिद्रमिडभाष्यादि-संप्रदायविरोधश्चेति भावः।**

प्रायः स्फटिकमप्येते जह्युरेव जपाभ्रमात् ॥ (4. 11.) तेन नारायणार्यैः सूत्राणामन्यथाकरणं प्रौढिप्रकाशनमात्रमेव । वयं तु सामगाचार्यसूत्राणां व्याख्यादोषं प्रतिक्षिप्य सम्यञ्चमेवार्थं प्रतिपादयिष्यामः ।

दर्शयति च भगवान् बादरायणो जैमिनेरपि ब्रह्मतद्गुणाभ्युपगमम्, "साक्षादप्यविरोधं जैमिनिः", "सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति", "मध्वादिष्वसम्भवादनधिकारं जैमिनिः", "अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपिचैवमेके", "परं जैमिनिर्मुख्यत्वात्", "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" इत्यादिषु । "धर्मं जैमिनिरत एव", "शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः" इत्यादिषु क्वाचित्कविसंवादानुवादस्तु अन्यपरोक्तिमूलकमन्दमतिमोहशान्त्यर्थः । अथवा परकल्पितसौधादिशेषपूरणवत् विरुद्धैकदेशोद्धारेण संहितत्वपक्षेऽपि नार्यैक्यविरोधः ।

(कर्तृभेदस्य प्रबन्धैक्याविरोधित्वम्)

कर्तृभेदस्तु न शास्त्रं भिन्द्यात्, तदभेदश्च न तत् एकीकुर्यात्, एककर्तृकानेकवत् अनेककर्तृकैकदृष्टेर्लोकसिद्धत्वात् । परस्परसम्मत्या, कृतशेषपूरणेन वा । तात्पर्यपरिशोधनपूर्वकतदेकदेशप्रवृत्त्युपपत्तेश्च ।

---

नारायणार्यैरिति । एते मीमांसकमूर्धन्याः मीमांसापादुकायां तात्पर्यचन्द्रिकादौ च कृतप्रस्तावाः । प्रौढीति । अधिकरणसहस्रस्थाने तदर्धसंख्यैवालमिति सूत्रान्तर प्रणयनपूर्वकपरिष्करणे तत्कृतेऽपि न जैमिन्युपेक्षा तत्कृतेति भावः (शेषं पादुकापरित्राणे (श्लो. ॥) । सामगाचार्येति तदत्यागकारणोक्तिः ।

अतो विद्यास्थानान्तराननुवृत्ताव्यवहिताविरुद्धपरस्परसापेक्षांशवद्विषयाद्यैक्यात् प्रबन्धैक्यं च सिद्धम् । कर्मादिकाण्डभेदव्यपदेशश्च तदैक्यं व्यनक्ति । एतौ (एतेन ?) राहुकवन्धमीमांसकपक्षौ प्रतिचिक्षिपाते ।

(कर्मकाण्डस्य पूर्वत्वम्)

काण्डक्रमोऽप्यध्यायादिक्रमवत् अर्थप्राप्तः । वेदप्रामाण्यमन्तरेण हि विचारः सर्वोऽपि न सेत्स्यतीति प्रमाणलक्षणेन प्रागेव भाव्यम् । अथ च कर्मोपक्रमतया प्रायो वेदानाम्, तदितिकर्तव्यताभागयोरपि सारस्वतांगन्यायेन (5. 1. 7) मुख्यक्रमानुसारात्, अनाद्यभ्यस्तत्रिवर्गप्रथमप्रावण्यरूपार्थक्रमात्, अनन्तस्थिरफलापातप्रतीत्यादेश्चोभयत्राविशेषात्, कर्ममात्रेण चामृतत्वसम्भावनायाम्, "अत्के(र्के)चेन्मधु विन्देत" इति न्यायात्, पदार्थवाक्यार्थभाव-दृष्टान्तदार्ष्टान्तिकभावादेश्च पौर्वापर्यनियामकप्रमाणविशेषात् कर्मविचारः पूर्वभावी । तत्र भेद-अंग-प्रयुक्ति-क्रम-कर्तृभिः सामान्यातिदेश-विशेषातिदेश-तदनुबन्ध्यूह-बाध-तन्त्र-प्रसक्तिभिश्च प्रकृतिविकृतिरूपकर्मचिन्तानुक्रमे नान्यावकाशः । तदुद्देश्यदेवताविषयतया तु संकर्षानन्तर्यं समुचितमेव । अथ तु सर्व-

---

प्रमाणलक्षणन—प्रमाणाध्यायेन । सारस्वताङ्गेति । सरस्वतीदेवताको यागः पूर्वम्, सरस्वद्देवताकः पश्चात् । तयोर्मुख्ययोः क्रमेण निर्वापाद्यङ्गक्रम इति स्थितं पू-मी. । अत्के-समीपे । अर्के इति पाठे वृक्षविशेषे इति । पदार्थः "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इत्यादिसौत्रपदार्थः । दृष्टान्तेति । धारणवत्, औपसदवत् इत्याद्युपन्यस्तदृष्टान्तेत्यर्थः । तदुद्देश्येति । सर्वकर्मनिरूपणानन्तरं

कर्मसमाराध्यं सर्वदेवतान्तर्यामि परदैवतं चिन्तयिष्यते ।

विभूतिशक्तिमन्त्राख्यागुणाकारादिचित्रितैः ।
देवताकञ्चुकैर्भिन्नं यदेकं ब्रह्म चक्षते ॥ 5

(अन्यादृशापातप्रतीत्याऽपि ऐक्य-क्रमादिसिद्धिः)

किंच यदि कर्मत एवामृतत्वं स्यात्, किं तदङ्गकेनोपासनेन ;
अथ न, तदा तादर्थ्येनापि स्वरूपतः कर्मोपयुज्येतेत्यापातधीमतः
सन्दिहानस्यापि कर्मणि विचिचारयिषा दुर्वारा । तावन्मात्रात्
तदसिद्धिनिश्चये तु निष्प्रत्यूहः शारीरकारम्भ इति ॥

विंशतिलक्षण्यां वक्ष्यमाणं कृत्स्नवेदार्थविचारं सहेतुकं प्रति-
जानीते(नाति) [—जैमिनिसूत्रम्—]

अथातो धर्मजिज्ञासा ॥ १-१-१ ॥

---

तत्संबन्धिसर्वदेवतानिरूपणम् । प्रत्यक्षानन्तरञ्च परोक्षनिरूपणम् । तत्तद्देवतान्तर्यामिनिरूपणञ्च तत्तद्देवतानिरूपणं विना न घटते । अत एवंक्रमः । तुशब्देन देवतानिरूपणैदम्पर्याभावे कर्मशेषभूत यूपेष्ट-कावदान-प्रैष-होमादितत्तत्पादार्थपरत्वे च संकर्षस्य पर्यालोचिते सुतरां तस्य द्वादशलक्षणानन्तर्यमिति सूच्यते । संकर्षविमर्शनं शांकरभाष्योत्पत्तिकालप्रभृति संकर्षपूर्णपरिचयलोपस्यैवानुवृत्त्यादि च अस्मत्कृते परमार्थभूषणे 186 पुटमारभ्य द्रष्टव्यम् । जैमिनीय-संकर्षप्रथमाध्यायसूत्राणि साम्प्रतं क्वचित् (होषियर्पुरे) मुद्रितानि च । अन्तर्यामित्वमुपपादयति विभूतीति । नायं संकर्षग्रन्थार्थः । प्रकारान्तरेणापि कर्ममीमांसायाः पूर्वत्वमुपपादयति किञ्चेति । नन्वैकप्रबन्ध्ये पूर्णप्रबन्धार्थप्रतिज्ञैवाऽऽदौ कर्तव्या । तत् कथं धर्म-मात्रप्रतिज्ञेत्याशंकां परिहरन्नेव सूत्रव्याख्यानमारभते विंशतीति ।

**अथ**शब्दोऽत्रायमानन्तर्यार्थ एव, प्रसिद्धिप्रकर्षस्यानपवादत्वात्। मङ्गळार्थत्वं **त्वथधर्म**शब्दयोरन्यार्थत्वेऽपि प्रदीपादिवत् स्यात्। यद्यप्यत्र पूर्वं न किञ्चिदपि निर्दिष्टम्, तथाप्यतःपदोपादानेन स्वरसतः सामान्येन कस्यचिद्वृत्तस्य हेतुतोक्तेः तस्य धर्मजिज्ञासापदसमभिव्याहार-सामर्थ्यात् तदपेक्षितत्तया विशेष्यमाणत्वाच्च साङ्गवेदाध्ययनरूप-वृत्तविशेषसिद्धिः। न हि वेदाध्ययनात्पूर्वम् अन्यस्माद्वा नियतपूर्ववृत्ता-दनन्तरं वेदार्थविचारः तदुक्तिर्वाऽवकल्पते।

अतएवात्र **अत**श्शब्दोऽपि वृत्तस्य हेतुभावार्थ एव।

धर्मस्य जिज्ञासा **धर्मजिज्ञासा**। कर्मण्येवात्र षष्ठी; सम्बन्धसामान्य-षष्ठीमंगीकृत्य तेन तत्र कर्मसापेक्षजिज्ञासासामर्थ्यतः कर्मार्थत्वक्लृप्तेः विळम्बितत्वात्। "कर्तृकर्मणोः कृति" इति विशेषविधानात्। कर्त्रर्थ-ताया इहानन्वयात्। कर्मणश्चेप्सिततयाऽभ्यर्हितत्वात्। अन्यपरेऽपि सूत्रे विषयप्रयोजनसूचनोपयोगात्। आनुषंगिकविवक्षान्तरस्यात्रादोषत्वात्। प्रतिपदविधानषष्ठीसमासनिषेधस्य कृद्योगषष्ठ्यां प्रतिप्रसवेन "ज्ञोऽविदर्थस्य करणे" इत्यादिसूत्रविषयत्वस्थापनाच्च। यद्यपि सर्पिषो ज्ञानमित्यत्र कृद्योगोऽप्यस्ति, तथापि न कृद्योगजेयं षष्ठी, अपितु 'ज्ञोऽविदर्थस्य करणे' इति जानातेर्धातोरविदर्थस्य प्रवृत्त्यर्थत्वे सर्पिरादेः षष्ठ्यन्तस्य

---

अतएवेति। आनन्तर्यवाचिना अथशब्देन तत्प्रतियोगिनः कस्य-चिदुपस्थापितत्वादेवेत्यर्थः। वृत्तस्येति। वक्ष्यमाणविषयकत्वमेत-च्छब्दस्य नान्वेषणीयमिति भावः।

करणार्थत्वे च विधीयते । सर्पिषो जानीते मधुनो जानीते इत्यादिषु कृद्योगमन्तरेणापि षष्ठीप्रयोगदर्शनात् । तेन तत्र न समासः ।

(धर्मशब्दार्थविचारः)

धर्मशब्दोऽत्र चोदनालक्षणश्रेयस्करवाची । तेनाजहदभीप्सितस्वार्थेनाधर्मादिरपि कृत्स्नो वेदार्थो लक्ष्यते । अत एव च सिद्धपरभागार्थस्यापि संग्रहः । कर्मोपासनात्मकस्य धर्मस्य स्वरूपसाधनाधिकारा(र्या ?)-राध्यसाध्यादिकं तथा ।

तद्गोचरजिज्ञासासामर्थ्याद्वा कृत्स्नसिद्धिः । उक्तं च शारीरकाद्ये वेदस्य कार्यार्थत्वमन्वारुह्य **भाष्यकारैः**, "उपासनविषयकार्याधिकृतफलत्वेन 'ब्रह्मविदाप्नोति परम्' इत्यादिभिर्ब्रह्मप्राप्तिः श्रूयत इति ब्रह्म-

---

तेन-धर्मशब्देन । अजहदिति । अजहत् अभीप्सितस्वार्थरूपधर्मः यं धर्मशब्दं तेनेति विग्रहः । कृत्स्नवेदाध्ययनस्यानन्तर्यप्रतियोगित्वे हेतुत्वे च सिद्धे धर्मेति एकदेशप्रतिज्ञा न हि घटते इति भावः ।

अश्रद्धया उपनिषदर्थं यथावदजानद्भिर्मीमांसकैरुपासनानुक्तावपि कर्मवत् उपासनमपि धर्मशब्दमुख्यार्थः । अधर्मादिकं तु उपलक्ष्यम् । वेदार्थत्वरूपलक्ष्यतावच्छेदकधर्मस्य सर्वत्र सत्त्वात् । आराध्या देवताः, साध्यं फलम् । तथेति । वेदार्थभूतमित्यर्थः । धर्मशब्दस्य वेदार्थलक्षकत्वं प्राचीनमीमांसकादृतं पञ्चपादिका-भामत्यादावप्युक्तं दर्शितं परमार्थभूषणे ।

कर्मोपासनद्वयमेव धर्मशब्दार्थः । धर्मसंबन्धित्वेनैव आराध्यफलादीनां विचार आक्षिप्यत इति न लक्षणेति पक्षान्तरमाह तद्गोचरेति । पक्षान्तरमुपरि ।

स्वरूप—तद्विशेषणानां दुःखासंभिन्नदेशविशेषस्वर्गादिवत् रात्रिसत्र-प्रतिष्ठादिवत् अपगोरणशतयातनासाध्यसाधनभाववच्च कार्योपयोगितयैव सिद्धेः" इति। तथा तत्रैव-"धात्वर्थस्य च यागादेरग्न्यादिदेव-तान्तर्यामिपरमपुरुषसमाराधनरूपता, समाराधितात् परमपुरुषात् फल-सिद्धिश्चेति 'फलमत उपपत्तेः' इत्यत्र प्रतिपादयिष्यते" इति।

ननु "फलमत उपपत्तेः", "श्रुतत्वाच्च" इति सूत्राभ्यां परम-पुरुषस्यैव त्रिवर्गापवर्गरूपफलप्रदत्वमुपक्षिप्य, "धर्मं जैमिनिरत एव" इति तद्विरुद्धतया जैमिनिमतमनूद्य, "पूर्वं तु बादरायणो हेतुव्यपदेशात्" इति पुनः परमपुरुषस्यैव फलप्रदत्वं स्वमततया सूत्रितम्। एवमर्थमेव च तत्र भाष्यम्। अतः कथमिह धर्मजिज्ञासेति जैमिनिवाक्ये जिज्ञा-सासामर्थ्यादिना धर्माराध्यत्वाद्याकारेण ब्रह्मादिसिद्धिर्विवक्षितेत्यु-न्नीयते॥ मैवम्। तत्र तावत् जैमिनेर्ब्रह्मतद्गुणाद्यभ्युपगमः सौत्रो दर्शितः। इयञ्च कृत्स्नवेदार्थविचारप्रतिज्ञा, अन्यथा 'अतः' इति हेत्वनन्वयात्। न हि वेदैकदेशार्थजिज्ञासायां कृत्स्नवेदाध्ययनं हेतुत-योपादीयते। न चैकदेशाध्ययनं वृत्तम्, साङ्गसशिरस्कस्वाध्यायाध्ययनस्य विहितत्वात्। अत एव शास्त्रान्तरात् ब्रह्मभागविचार इति पक्षोऽपि निरस्तः। एवंच सति "धर्मं जैमिनिरत एव" इत्यस्यायमभिप्रायः—क्षणिकक्रियायाः कालान्तरभाविस्वर्गसाधनत्वमनुपपन्नमिति वदतो नास्तिकस्य गूढाभिप्रायेण जैमिनिना मुखमपिहितम्—न तावत् कर्मणामव्यवधानेन फलप्रदत्वनियमः, लोके मर्दनादिषु कृष्यादिषु च साक्षाद्वा परम्परया वा स्वयमेव फलप्रदत्वदर्शनात्। एवंच वेदेऽपि

यागादीनां साक्षात्फलसाधनत्वाभावेऽपि यत्किंचिदपूर्वं द्वारीकृत्य परम्परया फलसाधनत्वमुपपद्यते । तथासति, यजेत स्वर्गकाम इत्यादि-शास्त्रं स्वर्गकामस्य कर्तव्यतया यागादि अभिदधत् तदन्यथानुपपत्त्या अपूर्वद्वारेणैव फलसाधनत्वमवगमयति । तच्चापूर्वमतीन्द्रियत्वान्ना-ध्यक्षबोध्यम्। अतो न शास्त्रप्रामाण्यविरोध इति । तदेतदनूद्य तस्यापि हृद्गतं स्वमतमवसरे दर्शयन् भगवान् बादरायणस्तदुक्तमपूर्वं देवतानु-ग्रहरूपं प्राचीकशत् । अतो न विरोध इति ।

अत्र धर्ममुखेन समारम्भः, विधिवाक्यानां क्रियाप्रधानत्वात् । यष्टव्यानां तु देवतानाम्, राज्ञ इव सेवाविधिवाक्ये, प्राधान्यमार्थम् ; तत्पूजात्मकत्वात् यागादेः । ततश्च शब्दतो यत्प्रधानं शास्त्रं प्रतीमः, तत्र प्रथमं विचारोऽवतरति, पश्चात् तत्तदाराध्ये, ततः परं तत्पर्यवसान-भूमाविति प्रातीतिकोऽयं पर्वक्रमावतारः ।

यद्यपि ब्रह्मस्वरूपपरवाक्यानि सिद्धप्रधानानि समन्वयसूत्रे समर्थयिष्यन्ते, तथाप्यन्ततो निधिसत्तादिवाक्येष्विव पुरुषस्य बुभुत्सा-क्रमेणोपायविधायिवाक्यावधिर्विश्रमो **भाष्योक्तः**—"एवंभूतं ब्रह्म कथं

---

अपूर्वं द्वारीकृत्येति । विधिवाक्यादज्ञातपूर्वं द्वारीकृत्येत्यर्थः । प्राचीकशदिति । माधवीये अदादिगणे कश-कशि—गति-शास-नयोरिति धातुपाठमादृत्य निष्पादितमेतत् । अस्मादेव धातोः चाकशीति इति रूपमपि भट्टभास्करेण तत्रादर्शि । आराध्याराधनयोः आराधनस्य प्राधान्यं जैमिनिमतम्; आराध्यस्य ब्रह्मणः प्राधान्यं बादरायणो व्युत्पादयतीति विशेषः । तर्हि कथमप्रधानविषयक-प्रतिज्ञेति न शंक्यम्; शाब्दप्राधान्यस्थित्या तदुपपत्तेः ।

प्राप्यत इत्यपेक्षायां "ब्रह्मविदाप्नोति परम्", "आत्मानमेव लोक-मुपासीत" इति वेदनादिशब्दैरुपासनं ब्रह्मप्राप्त्युपायतया विधीयते। यथा स्ववेश्मनि निधिरस्तीति वाक्येन निधिसद्भावं ज्ञात्वा तृप्तस्सन् पश्चात् तदुपादाने प्रयतते" इति। अतः पूर्वोत्तरभागयोरनुवृत्तं कर्तव्यस्य शाब्दं प्राधान्यम्, सिद्धस्य तु पूर्ववत्सार्थसिद्धमिति सर्वभागानुवृत्त-शाब्दप्राधान्यशालिकर्तव्यमुखेनोपलक्षणम्, आक्षेपो वा युक्तः। देव-तानां च फलप्रदत्वे सिद्धे तासां द्रव्यक्रियागुणादिवत् धर्मतयैव संग्रहः, चोदितरूपेण श्रेयस्साधनत्वाविशेषात्। भगवद्गुणदर्पणे हि फलोपायं प्रस्तुत्योक्तम्–"स च सिद्धः साध्यः सालम्बनरूपश्च। सिद्धस्त्वाराध्य-मानतया फलप्रदा देवता" इत्यादि। एवमपि विंशतिलक्षण्यर्थसंग्रहः।

(धर्मशब्दार्थे तृतीयपक्षः)

यद्वा संगतिविशेषवशात् प्रथमप्राप्तविशेषप्रतिज्ञायामेव सामान्यप्रतिज्ञानमर्थसिद्धम्। तदनुगुणश्च सारग्रन्थः—"अधीत-वेदस्य हि पुरुषस्य कर्मप्रतिपादनोपक्रमाद्वेदानां, कर्मविचारः प्रथमं कर्तव्य इति अथातो धर्मजिज्ञासेत्युक्तम्। कर्मणां च प्रकृतिविकृति-रूपाणां धर्मार्थकामरूपपुरुषार्थसाधनतानिश्चयः "प्रभुत्वादार्त्विज्यम्"

---

एवमपीति। कर्मोपासनोभयपरत्वरूपद्वितीयपक्षेऽपीत्यर्थः।

सर्ववेदार्थस्य धर्मशब्दलक्ष्यत्वमित्येकः पक्षः, कर्मोपासन-रूपमुख्यार्थमात्रग्रहणमित्यन्यः पक्ष इति पक्षद्वयं प्रागुक्तम्; जैमिनि-विचारितकर्ममात्रग्रहणमिति तृतीयं पक्षमाह यद्वेति। प्रभुत्वा-दार्त्विज्यमिति न संकर्षान्तिमसूत्रम्; किंतु, 'विद्यते वाऽन्यकाल-

इत्यन्तेन सूत्रकलापेन सङ्कर्षेण (ससंकर्षेण ?) कृतः" इति । तत्पूर्व-ग्रन्थे तु कृत्स्नवेदार्थविषयो विचारप्रारम्भः सूचितः—"आरिप्सितस्य ब्रह्मज्ञानस्य वेदार्थविचारैकदेशत्वात्" इति । तथा भाष्येऽपि, "अध्ययनगृहीतस्य" इत्यारभ्य "वेदवाक्यविचाररूपमीमांसाश्रवणेऽधीत-वेदः पुरुषः स्वयमेव प्रवर्तते" इति ।

(जिज्ञासाशब्दार्थः)

यद्यपि ज्ञातुमिच्छा जिज्ञासा, तथापि च पुरुषतन्त्रत्वान्न स्वयं विधेया । ततश्चेप्यमाणं ज्ञानमर्थतः प्रधानमिति विचारारम्भसूत्रे तदेव विधेयम् । तस्य विचाररूपस्य रागप्राप्तत्वज्ञापनाय सन्प्रयोगः ।

(प्रथमाधिकरणरचना)

सांगाध्ययनादापातधीस्थस्वोपयुक्तवेदार्थस्याध्येतुः तन्निर्णिनीषया स्वत एव जातस्य मीमांसौन्मुख्यस्य पूर्वपक्षनयेन जातां प्रतिहति-मपाकुर्वता अध्ययनानन्तरं तत एव हेतोर्वेदार्थविचारः कर्तव्यतया सूत्रितः । अत्र मीमांसाशास्त्रमेव विषयः । तत् किमारम्भणीयम् उता-नारम्भणीयमिति संशयः। तदर्थं विचार्यते, मीमांसावसरोऽस्ति न वेति । यदा नास्ति, तदा नारम्भणीयम् ; यदाऽस्ति, तदा आरम्भणीयमिति ।

**अत्रैवं पूर्वपक्षः**—अधीतसांगवेदस्यैव मीमांसाधिकार इति न ततः पूर्वं तदवसरः। अत एव न सह । पश्चात्तु-"अधीत्य स्नायात्" इति

---

त्वात् यथा याज्यासंप्रैषः' इति । इदं तु द्वादशाध्यायान्तिमाधि-करणाद्यसूत्रम् । अतस्तदुचितं शोधनं सारे कार्यम् । स्नानम्—समावर्तनम् ।

स्नानविध्यवरोधान्नावसरः। न च "समानकर्तृकयोः पूर्वकाले" इत्यनुशासनात् पूर्वतामात्रोक्तिरिति वाच्यम्; व्यवधायकादर्शने स्वारसिकैनैरन्तर्यस्यानपवादात्। प्राणिधर्मैर्व्यवधानं तु न सर्वव्यवधानमनुजानाति।

न च अर्थज्ञानार्थाध्ययनविध्याक्षिप्ते मीमांसाशास्त्रे श्रुतिबलादेव स्मृतिबाध इति युक्तम्, प्रत्यक्षश्रुतिविरुद्धाया अपि स्मृतेर्मूलान्तरमिच्छतां तदयोगात्। अनिच्छतामपि प्रत्यक्षश्रुत्यैव मूलवत्त्वे का तस्याः क्षतिः। तथाचाऽऽमनन्तिच्छन्दोगाः—"आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्" इत्यादि। न चायमनुवादः, अप्राप्तेः। प्राप्तावपि प्रापकेन मूलवत्त्वसिद्धेः। न च श्रुत्या स्मृत्यर्थानुवादः, वैपरीत्यापातात्। तदनुमतेरेव च स्मृतिबाधायोगात्। न च न्यायः समावृत्तिश्रुतिस्मृतिभ्यामनूद्यते, वचनविरोधे न्यायश्च न प्रभवतीति वाच्यम्, तद्विरोधिनो वचनस्यैवासिद्धेः।

(अध्ययनविधेरक्षरराशिग्रहणमात्रार्थता)

यदि ह्यसौ विधिरर्थज्ञानपर्यन्तस्स्यात्, तदा तद्वैशद्याय स्यादेव मीमांसापेक्षा; न चैतदस्ति। स ह्यक्षरग्रहणपर्यन्तः, तावताऽपि जपाद्युपयोगात्; तस्यैव होमाद्यभिव्याप्तेः प्रथमभावितया शीघ्रबुद्धिस्थत्वाच्च। न चास्यापुरुषार्थत्वादफलतेति वाच्यम्, अर्थज्ञानेऽपि तुल्यत्वात्॥ तन्मूलानुष्ठानतः स्वर्गादिसिद्ध्या परम्परया तस्य प्रयोजनवत्त्वमिति चेत्-तुल्यम्॥ तथाप्यर्थज्ञानमन्तर्भावनीयमापन्नमिति

---

प्राणिधर्मैः—आहारविहारादिभिः।

चेन्न ; जपाध्यापनस्वरूपधारणादिनापि पुरुषार्थपर्यवसानात् । तदन्तर्भावेऽपि तस्यैव कुतः प्रयोजनता, यावता स्वर्गादेरिति तस्यैव कल्प्यताम् ; तस्यैव साक्षात्प्रयोजनत्वात् ॥ व्यवधानान्नैवमिति चेत्, आगतोऽसि पन्थानम् । एवंचाव्यवहितमक्षरग्रहणमेव प्रयोजनमनुमन्यस्व । न च अक्षरग्रहणस्य लौकिकेऽध्यापनादौ अलौकिके जपादौ च साधारण्यात् नाध्ययनरूपसंस्कारफलतेति वाच्यम् ; अर्थज्ञानस्यापि लौकिके प्रवचनादौ अलौकिके यागाद्यनुष्ठाने च साधारण्याविशेषात् ॥ अनध्ययनसिद्धेनापि ज्ञानेनार्थप्रवचनं शक्यमिति चेत्—अध्यापनमपि तथैव ॥ तत् तथा निषिद्धमिति चेत् ; अन्यदपि तथैव । अतोऽध्ययनविधेरक्षरग्रहणपर्यन्तत्वान्न ततोऽर्थज्ञानाय मीमांसाक्षेपः । न चाध्ययनशब्देन, तव्यप्रत्ययेन, स्वाध्यायशब्देन च मीमांसापि गृह्यते, येन विधिस्पर्शसम्भवः ।

न च "अष्टवर्षं ब्राह्मणमुपनयीत; तमध्यापयेत्" इति तदपेक्षितविधायिन्यां श्रुतौ, "श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्धपञ्चमान् ॥ अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत् । वेदांगानि च सर्वाणि कृष्णपक्षेषु संपठेत्" इत्यादिस्मृतौ वा व्याकरणादिवत् मीमांसायाः प्रसंगः ।

अतः सपरिकराध्ययनविधिनिरूपणे, "सत्सन्तानप्रसूत–सदाचारनिष्ठात्मगुणापेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्य आचा-

---

तस्यैव कल्प्यतामिति । स्वर्गस्यैव साध्यत्वेनैवान्वयः कल्प्यतामित्यर्थः ।

र्योच्चारणानूच्चारणरूपाध्ययनविधिर्भिन्नत्ववन्नियमवदक्षरराशिग्रहणमात्र पर्य-वस्यति" इति यथाभाष्यं न वैधी मीमांसा ।

ननु—रागादेव भवतु मीमांसारम्भः, [1]तथाच भवनाथेन पराभिमतसूत्रार्थं प्रतिक्षिपतोक्तम्; (मी. पा. 62) "सांगवेदाध्येतुः स्वोपयुक्तमात्रार्थधीर्मनागिति तत्सम्यक्त्वेच्छोः तदुपायोन्मुखस्य अनर्थ-परत्वधिया विमुखतापत्तौ अर्थपरत्वोक्त्या तन्निवृत्त्यर्थं विषयप्रयोजनज्ञानं प्रत्येव सूत्रम्, न त्वाद्यप्रवृत्त्यर्थम्" इति ।

तन्न; रागो हि तत्र प्रतिघातान्न प्रवर्तयितुं क्षमः । स्नानात्पश्चात्तु रागोऽनुवृत्तोऽपि निरन्तरविहितनित्यादिकर्मनिरुद्धा(रूढा)वसरतया पूर्व-वदेव । अतः, 'अध्ययनांग समस्तब्रह्मचारिधर्मनिवृत्तावपि गुरूपसदनादि-मात्रस्य पूर्ववन्मीमांसताम्' इत्यपि दत्तोत्तरम् ।

(वचनविशेषनिरासः)

न च "यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् । तावुभौ पुरुषौ लोके पङ्क्तिपावनपावनौ ॥" इति पावनार्थमीमांसाविधानात् कदा-चिन्मीमांसाया भवितव्यत्वे कश्चिदवश्यं विधिर्निरुध्यत इति प्रथमातिक्रमे

---

1 ननु रागादेव मीमांसारम्भं वयं किल ब्रूमः, भाट्टप्राभा-करमतयोः स्थितयोः कोऽन्यस्तथा पूर्वपक्षी इत्यत्र प्राभाकरपक्षस्थं भवनाथं दर्शयति तथाचेति । नात्र तत्खण्डनमिष्टम् । सूत्रं नाप्रवृत्त-प्रवर्तकम्, किं तु अज्ञातज्ञापकं सत् विधायकमित्यस्यापि स्वेष्टत्वात् (श्रुतप्र...22.) । अनर्थपरत्वधिया—वेदस्यार्थपरत्वाभावबुद्ध्या विमुखतेति तदुक्तम्, अधीत्य स्नायादिति वचनाद्विमुखत्वमस्म-दिष्टमिति विशेष इति । रागात् प्रवृत्तिरित्यंशं खण्डयति तन्नेति ।

कारणाभावात् स्नानविधिरेव निरोद्धुमुचित इति वाच्यम् ; तत्र विधेर-श्रवणात्, स्मृति(स्तुति ?)मात्रतयापि साधनतोक्तिसम्भवात्। काम्यस्य चानुष्ठेयत्वनियमासिद्धेः। न चाकामोपनिबन्धविधिप्रत्ययवती काचित् स्मृतिर्मीमांसां विधत्ते, अदर्शनात्। दर्शनेऽपि तस्याः स्मृतेर्न्यायमूलत्व-श्रुतिमूलत्वसन्देहे तन्निबन्धनावसरक्लृप्तययोगात्। "अधीत्य वेदान् सांगांस्तु यो विचारमुपेक्षते। स्वप्रयासञ्च विस्मृत्य प्रभ्रष्टस्स्यात् प्रयोज-नात्॥" इति ह्यत्र न्यायो मूलं भवति। न चानेनैव न्यायेनावसरक्लृप्तिः शक्या, वचनविरोधेन (विरोधे) न्यायस्यानवतारात्।

अतो वेदाध्ययनात्पूर्वमनधिकारात्, पश्चात् गुरुकुलवासादिनिवर्तक-स्नानविध्यवरोधात्, ततःपरमपि तत्तद्धर्मनैरन्तर्यात् सर्वदाऽनवसरतया, सांगाध्ययनादेवापेक्षितज्ञानाच्च मीमांसाशास्त्रमनारम्भणीयमिति ॥

(सिद्धान्तः)

**सिद्धान्तस्तु**—अमीमांसितेऽर्थे तावत् संशयादिसम्भवान्न यथा-वदर्थनिश्चयसिद्धिः। ततश्च यद्यपि रागप्राप्ता मीमांसा, तथापि न स्नान-विधिना तदवसरोपरोधः, क्त्वाश्रुतौ अव्यवहित[स्वरूप ?]नैरन्तर्यस्या-शाब्दत्वात्, स्वारस्यमात्रस्य मीमांसाश्रवणजन्यज्ञानसापेक्षोत्तरकालभा-वितत्तद्विध्यनुज्ञातरागादेव निरासात्। विधिर्हि स्वोपयोगिद्रव्यार्जना-देरिव मीमांसाश्रवणस्याप्यवसरं दातुमर्हति ; तदभावेऽर्थज्ञानासिद्धेः। तेन विना चानुष्ठानासम्भवात्।

**वैधेऽप्यधीतवेदस्य गुरुगेहान्निवर्तने।**
**इत्थं विधिरसौ प्रोक्तो मीमांसावसरप्रदः ॥ ६ ॥**

यदा तु न्यायतः प्राप्ता समावृत्तिस्तदा तु नः ।
न्यायेन प्रबलेनायं समुत्कृष्येत दुर्बलः ॥ ७ ॥

अतो राग एवाध्ययनविधिनाप्यनुज्ञातस्सन् पूर्वसिद्धां गुरुकुलस्थितिं धारयति । तत एव न स्थित्यन्तरप्रयुक्तिप्रसंगः । यद्यपि पूर्वैव स्थितिरनुवर्तते, तथापि तदनुवृत्तेरध्ययनप्रयुक्तत्वाकारापगमेन अर्थप्राप्तस्थित्याद्यतिरिक्त-धर्मान्तरनिवृत्तिः । अध्ययनविधेरक्षरग्रहणोपायनियमार्थत्वात् तदनुबन्धिधर्मनियमानाञ्च तद्गुणावधिकत्वात् । अधीतात् वेदात् स्वयमेव जायमानस्यार्थज्ञानस्य अध्ययनानन्तभाविनः तद्धर्मप्रयोजकत्वे प्रमाणाभावात् । उदकाहरणादिनिवृत्तावपि ख्यातिलाभार्थं गुरोः प्रवृत्त्युपपत्तेश्च । एवंच स्नातस्यापि स्थितिः सम्भवत्येव । न च स्नातस्यानन्तरमेव दारक्रियाविधानादनवसर इति वाच्यम्; अलब्धदाराणां केषाञ्चित् केवलस्थितिसम्भवात् । कृतदारमप्यविचारितकर्माणमविद्वत्त्वेनानधिकारिणम् अग्निहोत्रादिविधयो न सहसाऽधिकुर्वन्ति, अपि तु स्वसिद्ध्यर्थम् द्रव्यार्जनादिकमिव कर्मविचारमप्यनुमन्यन्ते । यस्तु दारक्रियातः पूर्वमेव विचारितकर्मा पुरुषः, तमधिकृत्यैव, "दशमेऽहन्यादधीत" इत्यादिनियमः । यथा दृष्टसामग्र्यन्तररहिते नायं नियमः, तद्वदत्रापि ।

(गुर्वलाभेनाविचारेऽनुष्ठानालोपः)

यद्वा ब्रह्मचारिधर्मवत् हितैषिवाक्यानुसारेण भवतु अविचारितकर्मणोऽपि प्रथममग्निहोत्रादिप्रवृत्तिः ॥ हितैषिवाक्यादनुष्ठाने अपशूद्रनयविरोध इति चेन्न; अगृहीतमन्त्रादेरनधिकारात्; तत्परिग्रहस्य च त्रैवर्णिकविषयोपनयनाङ्गकाध्ययनसाध्यत्वात् । 'न शूद्राय मतिं

दद्यात्' इत्यादिनिषेधाच्च। सूत्रितं च शारीरके, "श्रवणाध्ययनार्थप्रतिषेधात्" इत्यादि। अन्योक्त्या अनुष्ठानेऽपि न मीमांसानारम्भः; उत्तरोत्तरानुष्ठानेषु परनैरपेक्ष्यश्रद्धया ख्यात्याद्यर्थप्रवचनादिरागेण च पश्चादपि विचारोपपत्तेः। श्रावयितृवच्च तस्याप्यवसरसम्भवात्। न हि ब्रह्मचारिणः श्रावकत्वम्; तस्य श्रोतृदशापन्नत्वात्। अन्यस्य तु यदि श्रावणावसरः, कस्तस्य श्रवणे विरोधः। वृत्त्यर्थं तस्याध्यापनादिकं विहितमिति चेत्, तर्हि श्रोतुरपि यदृच्छालब्धैः कुलक्रमागतैर्वा धनादिभिर्लब्धवृत्तेः स एवावसर इति न कश्चिद्विरोधः। अतः सांगवेदाध्येतुः स्नानात्पूर्वं, स्नातमात्रस्य, कृतदारस्य, आहिताग्नेश्च यथायोगमवसरसम्भवादारम्भणीया मीमांसेति।

चतुर्वर्गफलोपायविचारोऽध्ययनादनु।
तत एव बुभुत्सातः प्राप्तोऽवसरलाभतः॥
विचारात्पूर्वमेवात्र प्राप्तमध्ययनं विधेः।
अतोऽनधीतवेदस्य विचारः शास्त्रबाधितः।
क्रमो विंशतिलक्षण्यां न वैधः किंतु लौकिकः॥
अतो व्युत्क्रमचिन्तायामनौचित्यं प्रशिष्यते॥

(भाट्टमतम्)

ये पुनराहुः 'स्वाध्यायोऽध्येतव्यः' इति विधेः स्ववाक्ये फलादर्शनात्, कामाधिकारत्वे च प्रवृत्तिशैघ्र्येण कस्यचित् फलस्यावश्यम्भावात् अपुरुषार्थस्याध्ययनस्य विध्यवरुद्धया भावनया भाव्यत्वेनान्वयानुपपत्तेः,

---

भाट्टमतपूर्वपक्षसिद्धान्तौ दूषयितुमारभते ये पुनराहुरिति।

स्वाध्यायार्थबोधयोस्तु भाव्यत्वे विध्यानर्थक्यप्रसंगात् विश्वजिन्न्यायेन स्वर्गं वा भाव्यं परिकल्प्य, शब्दभावनायाः स्तुतिरूपोपकारजनकतया अध्ययनचोदनालिंगकातिदेशागतजपाध्ययनार्थवादोक्तपितृदेवतृप्तिद्वारकं सार्वकाम्यं [वा ?] फलमुपादाय—फलभावनाकरणाध्ययनार्थस्य

---

परिकल्प्य, उपादायेत्युभयोः पूर्वपक्षं कृत्वेत्यत्रान्वयः। शब्देत्यादेरयं भावः—आर्थवादिके फले स्थिते स्वर्गभाव्यकत्वकल्पनमयुक्तम्। न च स्वाध्यायोऽध्येतव्य इत्यत्र नार्थवाद इति वाच्यम्—तथापि तदतिदेशात्। अध्ययनं हि त्रिविधम्, ग्रहणं धारणं जपश्चेति। तत्र जपाद्यध्ययनेऽर्थवादः, 'यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्। आ हैव स नखाग्रेभ्यः परमं तप्यते तपः" इति। यंयं क्रतुमधीते तेनतेनास्येष्टं भवतीत्यारभ्य, नित्यं स्वाध्यायवान् द्विजः इति च। 'यत् ऋचोऽधीते पयसः कुल्याः अस्य पितॄन् स्वधा अभिवहन्ति। यत् यजुः, आहुतिभिरेव तद् देवांस्तर्पयति। ते पितरो देवाश्चैनमध्येतारं तृप्ता आयुरादिभिस्तर्पयन्ति' इति च, अहरहः स्वाध्यायमधीयीतेत्येतद्विषये। एवञ्च ग्रहणरूपे आद्ये अध्ययने नैव क्वापि फलश्रुतिः, अथापि लभ्यते। तदुच्यते। सर्वत्र विधिवाक्ये शब्दगता प्रवर्तनाख्या भावना पूर्वा। फलोद्देश्यक-प्रवृत्तिरूपा चोत्तरा। तत्र शब्दभावनायाः प्रवर्तकत्वं स्तवनरूपेति-कर्तव्यतासापेक्षम्। स्तवनञ्च विधिसमीपगतार्थवादैः क्रियते। तत्र जपाद्यध्ययनविधिरूपशब्दभावनायाः अर्थवादः संनिहितः। ग्रहणाध्ययनविधौ तु तदभावेऽपि स्तुतेरपेक्षितत्वात् ग्रहणाध्ययन-विधेः अध्ययनविधित्वेन रूपेण जपाध्ययनविधिसादृश्यसत्त्वात् प्रकृतिविकृतिस्थले सादृश्यमूलकातिदेशरूप-चोदनालिंगकातिदे-शस्य सर्वेष्टत्वात् अत्र तेन हेतुना स्तुतिरूपेतिकर्तव्यतासमर्पणाय

स्वाध्यायस्यार्थपरत्वासम्भवेन विषयप्रयोजनाभावादनारभ्यं शास्त्रमिति पूर्वपक्षं कृत्वा, व्युत्पन्नार्थाविरोधेन तव्यप्रत्ययावगतकर्मभावस्य स्वाध्यायस्यैव भाव्यताप्रतीतेः, अर्थज्ञाने दृष्टे सम्भवति अदृष्टकल्पनायोगात् तस्य क्रत्वनुप्रवेशकल्पनया विधिवैयर्थ्याभावाच्च स्वाध्यायस्यार्थपरत्वे निश्चिते सति विषयप्रयोजनसद्भावादारम्भणीयं शास्त्रमिति—

(भाट्टमतविमर्शः)

तान् प्रति ब्रूमः—यदि फलभावनाकरणाध्ययनार्थः स्वाध्यायः, कथं तावन्मात्रेणाःविवक्षितार्थता स्यात्। न ह्यन्यत्र विनियोगेन स्वशक्तिरपैति। अन्यथा कृत्स्नस्यापि वेदस्यार्थज्ञानव्यतिरिक्तफलान्तरार्थे जपादौ विनियुक्तस्य कथमर्थपरतां सिद्धांतयिष्यसि। किंच अयं पूर्वपक्षी किमध्ययनविधिं विवक्षितार्थं मन्यते, अविवक्षितार्थं वा? न प्रथमः; स्ववचनविरोधात्, तदविशेषेण कृत्स्नस्यापि विवक्षितार्थत्वप्रसंगाच्च। नापि द्वितीयः; फलभावनाकरणाध्ययनविध्यसिद्धेरेव, मूलाभावेन पूर्वपक्षानुत्थानात्। ननु पूर्वपक्षिण एवायमाशयः—अध्ययनविधेर्विवक्षितार्थत्वे कृत्स्नस्यापि विवक्षितार्थत्वप्रसंगः, अविवक्षितार्थत्वे तु अध्ययनाभावादेव तन्मूलसमस्तासिद्धिरिति॥ तन्न, दत्तोत्तरत्वात्-न हि फलार्थमप्यध्ययनं वस्तुशक्तिं प्रतिरुणद्धि। मंगलार्थमारोपितस्यापि हि दीपस्य न प्रकाशकत्वमपैति। तथा च भाष्यम्—"अध्ययनगृहीतस्य स्वाध्यायस्य

---

पूर्वोक्तार्थवादेष्वतिदिष्टेषु तत्र फलश्रवणात् उपस्थितमार्थवादिकं फलमस्यापि सुलभम्। एवञ्च फलोद्देश्यकभावनायाः करणमध्ययनम्, तच्छेषभूत एव स्वाध्याय इति नार्थज्ञानार्थमिति।

स्वभावत एव प्रयोजनवदर्थाववोधित्वदर्शनात्" इति। अन्यथा प्रसञ्जकप्रसञ्जनीययोर्व्याघातस्तद्विपर्ययश्च ॥ नन्वयमनुयोगस्तवापि समानः—अमीमांसितस्यानुष्ठानस्यासम्भवात्, तदर्थं मीमांसापेक्षायां च तदनारम्भपक्षानुत्थानादिति ; मैवम्—आपातप्रतीत्यैव अवसरोपेतस्य स्फुटतरप्रतीतेः तत्र मीमांसानपेक्षणादिति।

यच्च सिद्धान्ते अर्थज्ञानमध्ययनफलत्वेनोपादाय विवक्षितार्थत्वं साधितम्, तदप्यध्ययनविधेरक्षरग्रहणपर्यवसायित्वस्थापनेन निरस्तम्।

---

अन्यथा—अर्थाववोधित्वानंगीकारे। प्रसञ्जकप्रसञ्जनीययोरिति। यद्यर्थज्ञानोद्देश्यकत्वं विवक्षितार्थकत्वं वा स्यात् अध्ययनविध्यानर्थक्यं स्यात् इति यत् प्रसञ्जकं प्रसञ्जनीयञ्च, तयोर्व्याघातः। अर्थस्यैव वाच्यत्वाभावे अर्थज्ञानेत्युक्तिरेव न भवेत्। अध्ययनविधिसार्थक्यञ्च न भवेत्। अध्ययनविधेः स्वार्थतत्परत्वादेव तद्विधिसार्थक्यम्। एवञ्च अर्थपरत्वाभावविपर्ययः अर्थपरत्वमेवेति। अयमनुयोगः—पूर्वपक्षानुत्थानमिति प्रश्नः। यद्युच्येत, नास्माकमर्थपरत्वाभावे नैरर्थक्यम्, पूर्वपक्षे अर्थज्ञानोद्देश्यकत्वाभावे, सिद्धान्ते च तदुद्देश्यकत्वे इति—तदापि स्वर्गफलकत्वपूर्वपक्षकल्पनम् अर्थज्ञानोद्देश्यकत्वसिद्धान्तकल्पनञ्चायुक्तमेव। स्वरसिद्धाक्षरराशिग्रहणार्थत्वं पूर्वपक्षे सिद्धान्ते च स्वीकृत्यैवास्मद्रीत्या पूर्वोत्तरपक्षवर्णनसंभवात्। एवञ्च भाट्टप्राभाकरोक्तसिद्धान्तन्यायावनूद्य दूषयित्वा अध्ययनविधेरक्षरराशिग्रहणार्थत्वस्थापनपूर्वकं पूर्वपक्षी अधीत्य स्नायादिति विधिबलात् मीमांसानारम्भं शंकते, सिद्धान्ती च परिहरतीत्यस्मत्पक्षपरिष्कारः। अयमर्थः, यदिच-तदापीत्युपरितनवाक्याभिप्रेत इति ध्येयम्।

यत्तु "स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तत इति श्रवणस्य प्राप्तत्वात्" इति भाष्यम्, तदपि नानर्थपरत्वपूर्वपक्षाभिप्रायम्, अपितु अर्थपरत्वं सिद्धं कृत्वा श्रवणस्य पूर्वपक्षसिद्धान्तसाधारण-विधिनिरपेक्षत्वज्ञापनपरम्। यदि च व्याघातमवधीयार्थिविवक्षायां विवादस्ते रोचते, तदापि विधेरक्षरग्रहणपर्यवसायितया अर्थविवक्षां पूर्वपक्षे प्र[प्रति?]क्षिप्य विधिनिरपेक्षया स्वशक्त्यैवार्थपरत्वं सिद्धान्तयितव्यम्।

(प्रभाकरमतनिरासः)

एतेन गुरुमतमपि लघूकृतम्। अपिच आचार्यकरणार्थाध्यापनविधिप्रयुक्तिमुपजीव्य हि तदर्थतया स्वाध्यायस्यार्थपरत्वाभावः पूर्वपक्षितः। तत्राध्यापनविध्यसम्भवादेव तदनुत्थानम्। तथाहि—अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्" इत्यत्र, "द्वादशाहेन प्रजाकामं

---

एतेन-अविवक्षितार्थकत्वस्य अर्थपरत्वाभावस्य तन्मते कथनेनैव। गुरुः-प्रभाकरः। तथाहीति। आचार्यककामः माणवकोपनयनपूर्वकाध्यापने विनियुज्यते। अतः उपनयनमध्यापनाङ्गम्। अध्यापनविधिप्रयुक्तमध्ययनमित्याह। भट्टस्तु कुमारिलः स्वाध्यायोऽध्येतव्य इति स्वविधिप्रयुक्तमध्ययनमिति। उपनयनञ्चाध्येतृसंस्कारकत्वेन स्वसंबन्धमिति अध्ययनाङ्गमेवेति। उभाभ्यामपि पूर्वपक्षे वेदस्यार्थपरत्वाभावोऽभिमतः। तत्राविवक्षितार्थत्वं विनैव पूर्वपक्षवर्णनमस्मदिष्टम्। अध्यापनस्य विधेयत्वं गुरुस्वीकृतं गुरुभूतम्। अनधीयाना व्रात्या भवन्तीति निषेधबलात् अध्ययनस्य विधेयत्वे आवश्यके सति, अध्यापनविधिं स्वीकृत्य तत्प्रयुक्तत्ववर्णनं क्लिष्टम्। विधिमन्तरैवाध्यापनप्रवृत्तिसंभवात्। प्रभाकरो गुरुनाम्ना व्यवहृतत्वात् गुरुत्वमाचार्यकं विधिफलं रोचयतीव। अतो गुरुमतं नेष्यते।

याजयेत्" इति यजनविधिवत् वृत्त्याद्यर्थप्राप्ताध्यापनानुवादेनाध्ययनविधावेव तात्पर्यात् । न च कामपदश्रुत्यभावाद्विशेषः, 'निषादस्थपतिं याजयेत्' इत्यत्र तदभावेऽपि यजनपरतयैव योजनात् । तेन 'अष्टवर्षो ब्राह्मण उपनीतोऽधीयीत' इति विधीयते । उपनयनं च, ब्राह्मणमिति द्वितीयाश्रुत्या माणवकसंस्कार इत्युभयसम्मतम् । अतस्तच्छेषभूतमुपनयनमन्तरंग(त्व?)लिंगात् तद्गताध्ययनांगमिति युक्तम् ॥ "उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥" इति क्त्वाश्रुत्या लिंगबाध इति चेन्न ; अनुवादसरूपतया स्मृतिगततया च विलम्बद्वयसहितया क्त्वाश्रुत्या श्रुतिगतलिंगबाधायोगात् । किंच—

क्त्वाश्रुत्या तुल्यकर्तृत्वं तेन चैकप्रयोगता ।
तया त्वंगांगिभावः स्यादित्यपि स्यात् विलम्बनम् ॥

न हि क्त्वाश्रुतिरंगांगिभावं साक्षादाचष्टे, द्वितीयाश्रुतिस्तु माणवकस्योपनयनं प्रति प्राधान्यं साक्षादेवाभिदधाति । सा च द्वितीयाश्रुतिर्न केवलं श्रुतिगता, 'उपनीय तु यःशिष्यम्' इति स्मृतावपि दृष्टत्वात् । तेन भवदुक्ता स्मृतिरप्यास्माकं पक्षमुत्तम्भयति, द्रव्यनिष्ठस्य भावार्थस्य द्रव्यशेषत्वस्यैव न्याय्यत्वात् ।

---

क्त्वाश्रुत्येति । उपनयनव्यापारस्याध्यापनव्यापारसामानाधिकरण्यात् अन्तरङ्गत्वमध्यापनाङ्गत्व एवास्तीति शंकितुराशयः । विलम्बद्वयमन्यदुदर्शयति अनन्तरश्लोकेन । तमुपनयीतेति द्वितीयाश्रुत्या माणवकांगत्वं प्रथममवगतमिति भावः । भावार्थस्य—उपनयनफलभूतस्य उपनेयासत्तिरूपभावार्थस्य । उपनयनरूपव्यापारस्तु आचार्यनिष्ठः । परं तत्फलभूतोपनेयासत्त्यर्थः ।

(उपनयनफलस्याकर्त्रभिप्रायत्वम् ।)

न च उपनयीतेत्यात्मनेपदं कर्त्रभिप्रायार्थम्, येनोपनयनमुपनेतृगताध्यापनांगं स्यात् । अकर्त्रभिप्रायार्थेन "सम्मानन" इत्यादिसूत्रेण ह्येतदात्मनेपदम् । न च वाच्यम्—कर्त्रभिप्रायत्वं कर्तर्येव फलान्वयः । नियमनिवृत्त्यर्थं तु, सम्माननादिसूत्रम् । अतः कर्तर्यकर्तरि च फलान्वयसम्भवेनोपनयन[फल ?]स्योपनेतृगतत्वसम्भवात् 'उपनयनमुपनेतृगताध्यापनांगम्' इति; "अग्नीनादधीत" इत्यादौ स्वरितेत्यादिसूत्रविहितेऽप्यात्मनेपदे फलस्य कर्तर्यकर्तरि चान्वयदर्शनेन तस्य नियमार्थत्वायोगात् । चेतनान्तरे फलान्वयनिवृत्त्यर्थो नियम इति चेत्—तन्न; "ऋत्विजो वृणीते" इत्यादौ कर्तर्यकर्तरि च चेतने फलान्वयदर्शनात् ।

(भवनाथोक्ताकर्त्रभिप्रायत्वनिरासः)

यत्तु भवनाथेनोक्तं—क्रियाफलं तदुच्यते, यत् कारकावस्थायां जातमीप्सितं च । न चोपनयनात् कारकावस्थायामाचार्यकरूपफलोत्पत्तिः, उपनेये तु कारकावस्थायामेव संस्कारः, ईप्सितश्चासाविति कर्मगतमेवात्र फलमित्यकर्त्रभिप्रायत्वेति— तदप्यसत्—"अग्नीनादधीत" इत्यत्र कारकावस्थायां जातस्येप्सितस्य च संस्कारस्याग्निगतत्वेन स्वरितेत्यादिनैवात्मनेपददर्शनात् । अतो व्यवहितमव्यवहितं वा फलं यत्र कर्त्रभिप्रायम्, तत्र स्वरितेत्यात्मनेपदम् । तदुभयनिवृत्तावेव सम्माननेत्यादिना । उद्देश्यस्य प्रधानफलस्य कर्तृगामित्वे कर्त्रभिप्राय-

---

कर्त्रभिप्रायेति । एतदर्थः श्रुतप्रकाशिकायां (30-31) द्रष्टव्यः । तत्र तदन्ते उक्तं च भवनाथोक्तखण्डनरूपतयाऽत्र विवृतम् ।

त्वम्, तस्याकर्तृगामित्वे पुनः अकर्त्रभिप्रायत्वमिति वचनं परेषामेव विपरीतफलम्; सम्माननादिसूत्रविहितात्मनेपदविषयोपनयनफलस्य कर्तृनिष्ठस्य स्वयमेव साधनात् इत्येषा दिक् ॥

(प्राभाकरपूर्वपक्षसिद्धान्तनिष्कर्षायोगः)

भवतु वा अध्यापनविधिसम्भवः, तथाप्याचार्यकार्थत्वेऽप्यध्ययनस्य नार्थपरता स्वाध्यायस्य भज्यते, प्रागुक्तन्यायेन स्वशक्तेरनपायात्। अबाधितप्रत्ययोत्पत्तावनपेक्षत्वलक्षणप्रामाण्यस्य वक्ष्यमाणत्वाच्च।

यच्च सिद्धान्ते अध्यापनविधिप्रयुक्तावप्यध्ययनस्य तदंगत्वं प्रतिक्षिप्य अपूर्वार्थत्वोपपादनेन अर्थज्ञानमपि विधिनाऽनुज्ञाप्य विवक्षितार्थत्वमुक्तम्, तदपि अपूर्ववादस्य निराकरिष्यमाणत्वादपास्तम्। किंच अध्ययनसाध्यमपूर्वं किं स्वतः पुरुषार्थभूतम्, उतान्यसाधनम्; नाद्यः; अर्थज्ञानकटाक्षणासम्भवात् ॥ अथ स्वसिद्ध्यर्थमेवार्थज्ञानमनुजानीयात्—तन्न—स्वाध्यायस्यार्थज्ञापनशक्त्यभावे तदनुज्ञाया एवासम्भवात्। स्वतः शक्तौ सत्यां किमन्यानुज्ञया। न हि विधिमन्तरेणादित्यो विश्वं न प्रकाशयति। न चान्यार्थविनियोगोऽन्यविषयां वस्तुशक्तिं प्रतिरुणद्धीत्युक्तम्। नापि द्वितीयः—अध्ययनसाध्यापूर्वस्य

---

सिद्धान्ते प्राभाकरोक्तः अध्ययनस्यापूर्वार्थत्वपक्षः पूर्वपक्षे भाट्टोक्तस्वर्गार्थत्वपक्षखण्डनरीत्या खण्डनीयः। विशिष्य चाह किंचेत्यादि। नन्वक्षरराशिग्रहणस्याध्ययनं विनोपायान्तरेणापि संभवात् तन्नियमः किमर्थं इति चेत्—एवमधीतवेदपुरुषलाभेन शान्ताकां-

स्वर्गादिफलान्तरसाधनत्वेन त्वदनभ्युपगमात् । अर्थज्ञानादेस्तु दृष्टफलस्या-पूर्वमन्तरेण स्वसामग्र्यैवोत्पत्तेः विषयफलत्वेन भवद्भिरपि स्वीकारादिति ।

(स्वमते सौत्रैकैकपदस्वारस्योपपादनम्)

विवक्षितार्थदा(ता?) युक्तिः परेषां कल्पिता परम् ।
अथेत्यवसरोद्देशात् सौत्रमस्मदभीप्सितम् ॥ १२ ॥
विधिसामर्थ्यमाश्रित्य हेतुताऽध्ययनस्य वः ।
स्वसामर्थ्यैक्षयाऽस्माकमिति शैघ्र्यमतःपदे ॥ १३ ॥
योग्यावसरसम्पत्तेर्विशेषे च बुभुत्सनात् ।
नाकार्या धर्मचिन्तेति शुद्धा नः सूत्रयोजना ॥ १४ ॥

---

स्त्वात् क्रतुविषयः नान्यं कर्तारं गृह्णन्तीति मीमांसकोक्तमेवास्तु । किञ्च अध्ययनस्य नित्यतया अकरणे प्रत्यवाय इति तत्परिहाराय कृतेनाध्ययनेनाक्षरराशिग्रहणरूपफलप्राप्त्या नोपायान्तरान्वेषण-प्रसक्तिः ।

दृष्टफलस्येति । दृष्टफलकेऽप्यपूर्वस्वीकारे गामानये-त्यत्रापि स्यादिति । विषयेति । धात्वर्थस्याध्ययनादेर्गुरुमते विषय-शब्दवाच्यता, कृतिविषयत्वात् ।

चतुर्भिः श्लोकैः चतुर्णां सौत्रांशानां क्रमेण स्वपक्षे स्वारस्य-माह विवक्षितेति । विवक्षितार्थतेति पाठ्यम् । परपक्षे विवक्षितार्थ-कत्वं सिद्धान्तयुक्तिः । तत्सूचकं पदं नास्ति । अस्माकं तु विचाराव-सरसद्भावः सिद्धान्तयुक्तिः ; सोऽथशब्देन गमित एवेति भावः । मी. पा. 23 श्लोको द्रष्टव्यः । अतश्शब्दबलमाह विधीति । अर्थ-ज्ञानोद्देश्यकत्वरूपविधिसामर्थ्यं तद्धेतुः । अर्थावबोधनस्वभाव-शब्दराश्यध्ययनस्य वृत्तत्वादिति अस्मदिष्टः । उत्तर एव अतःपदे सुलभः । धर्मज्ञानपदस्वारस्यं दर्शयति योग्येति । बुभुत्सा-सद्भावादध्ययनानन्तरं धर्मचिन्ता स्वरसतो भवतीति सम्प्रत्ययेन-

सत्प्रयोगश्च भवतां विफलोऽस्मन्मते पुनः ।
सोपयोगो विचारस्य रागप्राप्तत्वसूचनात् ॥ १५ ॥
(इति धर्मजिज्ञासाधिकरणम् । अथ धर्मलक्षणाधिकरणम् ।)
॥ सू—चोदनालक्षणोऽर्थो धर्मः ॥ १-१-२.
(आर्थश्रौतार्थद्वयम्)

मीमांसाशास्त्रमारम्भणीयमित्युक्तम् । तदिदानीमारभ्यते । कर्मोपासनात्मक-कर्तव्यरूप-कृत्स्नशास्त्रप्रधानार्थस्वरूपप्रतिज्ञा हीयम् । कोऽसौ जिज्ञास्यतया प्रतिज्ञातो धर्मः, किं च तत्र प्रमाणमिति तत्स्वरूपप्रमाणयोर्बुभुत्सायां स्वरूपप्रश्नोत्तरमेव प्रमाणकोडीकारेण प्रवृत्तमिति श्रुत्यर्थाभ्यामुभयमिह सूत्रितम् । अन्तरङ्गत्वात् स्वरूपप्रश्नोत्तरमेव श्रौतम्, इतरत्तु आर्थमिति विवेकः । तदभिप्रायेण चोक्तं शाबरे—"को धर्मः कथंलक्षण इत्येकेनैव सूत्रेण व्याख्यातम्" इति । प्रमाणप्रश्नोत्तरत्वे तु—"चोदनालक्षणो धर्मः, नेन्द्रियलक्षणः, अर्थश्च धर्मः, नानर्थः" इति

---

ज्ञाप्यत इति अनन्तरश्लोकेन वक्ष्यते । भवन्मते वैधत्वात् विचारस्य रागप्राप्त्यभावात् सन् व्यर्थः । एवं पुरुषस्वरसप्रवृत्तिं दर्शयता सूत्रेण बाधकान्तरोपक्षेपेणैतद्भङ्गो न कार्यः; भवति चिन्तेति ज्ञाप्यते । अकार्या न भवति चिन्ता किं तु भवत्येव, बाधकाभावेन कलृप्तसामग्रीसत्त्वादित्युच्यते । भवन्मते तु विचारस्य वैधत्वात् स्वतः प्रवृत्तपुरुषाप्रवृत्तिचिन्तावारणरीति र्दुर्वचेति भावः ।

शाबर इति । प्रथमसूत्रभाष्यान्ते । एकेन सूत्रेणोभयं साक्षादुच्यते चेत्, वाक्यभेदः स्यात् । अत्र एकस्य श्रौतत्वम् अन्यस्यार्थत्वञ्चाभिमतमिति भावः । स्वरूपप्रश्नस्य प्रथमत्वात् स्वरूपमेव श्रौतम् ।

वाक्यभेदमाशंक्य, पौरुषेयतया अन्यतोऽवगतार्थविषयस्य सूत्रस्य भिन्नयोरेव वाक्ययोरिमावेकदेशौ एकदेशान्तरसूचकाविति क्लिष्ट-निर्वाहानाश्वासादाह, "अथवा अर्थस्य सतश्चोदनालक्षणस्य धर्मत्वमुच्यत इत्येकार्थ[त्व]मेवेति" इति ॥

(चोदनाशब्दार्थः चोदकलाभश्च)

चोदनेति विधिनिषेधात्मकः श्रौतो विध्युद्देशः संगृह्यते । स हि ईश्वराज्ञारूपतया प्रवृत्तिनिवृत्तिरूपपुरुषव्यापारप्रयोजकत्वात् तदाकार-विवक्षया चोदनेत्युच्यते । तथाच शाबरमुत्स्वप्नायितम्—"आचार्य-चोदितः करोमीति हि दृश्यते" इति । आह च भगवांश्चोदकः स्वय-

---

ननु द्वितीयसूत्रभाष्यान्ते, अज्ञातार्थं प्रतिपादके वैदिकवाक्य एव वाक्यभेदो दोषः, न लौकिके, ज्ञातार्थानुवादत्वादिति वदन् प्रमाणा-न्तरवारकत्व-अनर्थस्वरूपवारकत्वोभयपरत्वमाह । तेन लक्षणस्व-रूपोभयस्य श्रौतत्वमस्तु इत्यत्राह प्रमाणेति । उक्तशंकानिवृत्त्यर्थः तुशब्दः । प्रमाणप्रश्नोत्तरत्वे वाक्यभेदमाशंक्य क्लिष्टनिर्वाहं कृत्वा तदनाश्वासादेवोपरि एकपरत्वमेवाह अथवेतीति भावः । क्लिष्टत्वञ्च कोधर्म इत्यादिजिज्ञासाशमनार्थस्य वाक्यस्यानुवादत्वायोगात्; अध्याहारादिगौरवाच्च । तथाच धर्मस्वरूपनिरूपणार्थे तल्लक्षणे चोदनाप्रमाणकत्वार्थत्वोभयनिवेशस्याऽऽवश्यकतया स्वरूपमेव श्रौतमिति । दलद्वयावश्यकत्वं दर्शयति चोदनेतीति । ईश्वराज्ञात्वं शाबराद्यनभिमतमपि स्वीकर्तव्यमित्यत्र किं प्रयासान्तरेण । शाबर-वाक्यस्यैवावशसमुत्पन्नस्य तद्दर्शित्वादित्याह उत्स्वप्नायितमिति । यथा स्वानुभूतार्थमुत्क्रम्य स्वप्नो भवति तस्य दृष्टादृष्टसाधारणत्वात्, तथा तत्परिचितं निरीश्वरत्वपक्षमुत्क्रम्य वाक्यं प्रवृत्तमित्यर्थः ।

मेव—"श्रुतिस्मृतिर्ममैवाज्ञा" इति । तथाच भाष्यम्—"स्वशासनावबोधि शास्त्रञ्च प्रदिश्य" इति । उक्तं चानेकाभिप्रायं शासनमभियुक्तैः—, "आज्ञा ते सनिमित्तनित्यविषयः स्वर्गादिकाम्यद्विधिस्सोऽनुज्ञा शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः । सर्वा यस्य समस्तशासितुरहो श्रीरंगराजस्य (सर्वस्व!) ते रक्षाकृतनिवेदिनी श्रुतिरसौ त्वन्नित्यशास्तिस्ततः" (2-26.) इति । अत्र साक्षाच्छास्तिः श्रुतिः । तदनुविधानात्तु स्मृतिरपि तदन्तर्गतैव। नित्यं श्रुतिमुखेनैवेश्वरो नियुङ्क्त इति नित्याऽपि श्रुतिस्तदाज्ञा। श्रुत्यर्थोपदेशरूपतया गीतादेरपि प्रवृत्तिः ।

लक्ष्यते प्रमीयते येन, तत् **लक्षणम्**; प्रमाणमित्यर्थः । चोदना लक्षणं यस्य स **चोदनालक्षणः** प्रवृत्तिनिवृत्त्यात्मकः । उभयमपि चोदनयैव कर्तव्यतया बोध्यते ।

---

लोके आचार्यवत् वेदेऽपि कश्चित् प्रथमाचार्य आचारस्थापक एषितव्य इति हि ततो ज्ञायत भावः। अभियुक्तैः—भट्टपराशरपादैः। अवश्यकर्तव्यशासनमाज्ञा। अनिषिद्धफलानुभवसंमतिपूर्वकशासनमनुज्ञा काम्यविषया। निषिद्धफलार्थविषयशासनमापातानुज्ञा। नन्वेकस्यैव वाक्यस्य राजतद्भृत्यादिप्रयुक्तत्वेऽपि तद्वाक्यप्रणेतृपुरुषनियोगपरत्वमेव तत्तत्यलिङ्गादेर्वक्तव्यम् । न चापौरुषेयस्य वेदस्येश्वरः प्रणेता । तत् कथं तच्छासनत्वमित्यत्राह नित्यमिति । अयं भावः—राज्ञा पुनः पुनस्तस्यैव वाक्यस्य प्रयोगेऽपि द्वितीयादिवाक्यव्यक्तिष्वपि तच्छासनरूपत्वमिष्टम् । अतः स्वभिन्नपुरुषनिरपेक्षयद्वाक्यप्रयोक्ता यः. तस्य तस्य तच्छासनरूपत्वम्। तत्र श्रुतेर्नित्यत्वात् नित्यतदाज्ञाप्रकाशकत्वमिति न दोष इति ।

(अर्थशब्दकृत्यम्)

अर्थग्रहणमनर्थानुबन्धव्यवच्छेदार्थम् । ततश्च प्रभूतानर्थानुबन्धि-श्येनादिव्यवच्छेदः । यद्यपि-श्येनादयोऽपि चोदिता एव, तत एवार्थ-साधकाश्च—तथापि क्वचिद्विषये प्रयुज्यमानानां तेषां प्रभूतानर्थहेतु-तयाऽनर्थत्वमित्येके ।

(उक्तकृत्यनिरासेन कृत्यान्तरम्)

अन्ये त्वाहुः कथं विहितस्यानर्थत्वमिति ॥ निषिद्धसंस्पर्शादिति चेन्न ; तदसिद्धेः । न तावत् तदङ्गपशुहिंसानिषेधः ; अग्नीषोमीयतुल्य-त्वात् । अग्निषोमीयादेश्च सांख्यापादिताशुद्धियोगः, "अशुद्धमिति चेन्न शब्दात्" इति शारीरके परिहरिष्यते । न च श्येनादिस्वरूप-निषेधः; श्येनादि न कुर्यादित्यश्रवणात् । न चाभिचारनिषेधात् सामा-न्यतस्तन्निषेधः, अभिचारमात्रस्य निषिद्धत्वाभावात् । "षट्स्वनभिचरन् पतेत्" इति हि तदकरणे पतनं स्मरन्ति । न हि तत्करणे तदकरणे च पतनमिति शास्त्रार्थः सम्पद्यते । न च श्येनादिरभिचारशब्दार्थः, श्येने-नाभिचरन् यजेतेति तत्फलत्वेन तन्निर्देशात् । न च फलद्वारा निषेधः, फलस्य निषेधादधर्मत्वेऽपि स्वरूपस्य विहिततया धर्मत्वात् । अतोऽर्थशब्दो न श्येनादिव्यवच्छेदार्थः; अपितु निषिद्धहिंसादिव्यवच्छेदार्थः। निषिद्धानां

---

सौत्रपदं स्वाभिमतरीत्या व्याख्याय प्राभाकरोक्तमनुवदति निरासाय अर्थग्रहणमिति । श्येनादयः श्येनाख्ययागादयः । नन्वग्नीषोमीयादे-रप्यशुद्धत्वं सांख्येष्टम् तत्राह अग्नीति । परिहरिष्यत इति लृट्-प्रयोगः एतदेकशास्त्रोत्तरभागत्वात् तस्य । क्वचित् विषये शास्त्र-निषिद्धाभिचारादिफलोद्देशेन । शबरे तु श्येनपदं तत्फलपरम् ।

चोदनालक्षणत्वमस्त्येव, निषेधचोदनया अनर्थसाधानत्वेन लक्षितत्वात्। न हि निषिध्यमानस्यानर्थसाधनत्वमन्तरेण निषेधचोदना प्रवर्तेत। तेन श्येनादिष्वपि फलमात्रं व्यवच्छिद्यते। न च प्रभूतानर्थसाधनभूतस्य फलस्योपायोपदेशो रक्षाकूतविरोधीति वाच्यम्, अन्यथा तदर्थिनस्तदुपायेषु दृष्टेषु स्वतःप्रवृत्तेः ; तेषां चातिशयितानर्थपर्यवसानात्। श्येनादिना तु परहिंसायां प्रत्यवायलाघवात्। लघुप्रायश्चित्तोपदेशात्। "अभिचारानुव्यवहारौ अपतनीयौ" इत्यपि हि केषांचिन्मतं

---

फलमात्रमिति। फलम् अभिचारः मारणम्। आततायिषु षट्सु अभिचारोऽपि धर्मः। श्येनादेरपि लक्ष्यत्वात् तद्वारणायोगात् साक्षात्परम्परासाधारण्येनानर्थसाधनभिन्नत्वमर्थपदविवक्षितमिति न वक्तव्यमिति भावः। अथेति शाबरेऽपि, प्रमाणपरत्वे अर्थपदवैयर्थ्यात् स्वरूपपरत्वे दुर्लङ्घयत्वात्तद्यकत्वाच्च स्वरूपपरत्वमिष्टम्। तदेवम् अर्थः - फलसाधनम्। चोदनालक्षणत्वं प्रवर्तकवाक्यप्रमाणकत्वं फलेऽप्यस्तीति तदुक्तिः। तथा यागादिक्रियायाः प्रत्यक्षदृश्यतया चोदनैकगम्यत्वं न भवतीत्येतदर्थमपि तत्। तेन अर्थस्सन् चोदनालक्षणः, फलसाधनं सन् चोदनागम्यः- चोदनावगम्यश्रेयस्साधनताक इत्युक्तं भवतीति। चोदनाशब्दस्य प्रवर्तकवाक्यमात्रार्थकत्वे प्रवर्तकवाक्यबोध्यत्वं नाम कर्तव्यत्वेन वेदबोध्यत्वमेव। तन्न फलेऽतिव्याप्तम्, नापि यागाद्यव्याप्तमित्याशयेन तदुपेक्षा। चोदनाशब्दस्य निवर्तकवाक्यसाधारण्याच्च। तथाच अर्थत्वं साक्षादनिष्टासाधनत्वम्। इदमेव शाबरविवक्षितमप्यस्तु॥ तदुपायेषु दृष्टेषु—दृष्टविधया तत्फलसाधनव्यापारेषु।

महर्षयः पूर्वपक्षयन्ति। अतः श्येनादिषु धर्मलक्षणाक्रान्तेष्वपि फलतः प्रभूतानर्थपर्यवसानादधर्मत्वोपचारः। मुमुक्षुं प्रति तु पुण्यविशेषाणामपि पापानामिवालौकिकानिष्टफलसाधनत्वाविशेषादधर्मत्वम्। यथोक्तं भाष्ये, "ज्ञानविरोधि च कर्म पुण्यपापरूपम्, ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम्" इति।

धृतिः-प्रीतिः, तत्साधनम् इष्टसाधनं धर्म इत्यर्थः। न चातिप्रसंगः, शास्त्रैकवेद्ये श्रेयस्साधने रूढत्वात्। तदभिव्यक्त्यर्थमेव हि सूचितम् [शाबरम्?], चोदनालक्षणस्य सतोऽर्थस्य धर्मत्वमिति।

(अर्थात् प्रतिज्ञाद्वयलाभः)

इह च अर्थात् चोदनालक्षण इति समासेन, धर्मे चोदनैव प्रमाणम्, प्रमाणमेव चोदनेति प्रतिज्ञाद्वयमन्तर्गतम्। सति सामर्थ्ये तस्य चात्र विशेषणविशेष्यभावमुखेन परस्परव्यवच्छेदपर्यवसानात्। तत्र चोदनैवेति प्रतिज्ञा प्रत्यक्षसूत्रे (1.1.4.) समर्थयिष्यते। प्रमाणमेवेति त्वौत्पत्तिकसूत्रादौ (1.1.5)। न चात्र चोदनैवेति प्रतिज्ञया अर्थवादादीनामपि व्यवच्छेदः स्यादिति भ्रमितव्यम्; तेषां चोदनाङ्गतया तन्मूलतया च धर्मे प्रामाण्यस्य वक्ष्यमाणत्वात्। इह चावधारणस्य तुल्यजातीयविषयतया चोदनावत् स्वातन्त्र्येण धर्मे प्रमाणीबुभूषतां प्रत्यक्षादीनामेव व्यवच्छेदात्। न हि देवदत्त एवात्र तिष्ठतीत्युक्ते वसनाभरणादेर्व्यवच्छेदः, अपितु तत्तुल्यस्य पुरुषान्तरस्य।

---

धर्मत्वाधर्मत्वे पुरुषभेदादेकनिष्ठे, 'स एव धर्मः सोऽधर्मस्तं तं प्रति नरं भवेत्' इति वचनादित्याशयेनाह मुमुक्षुं प्रति त्विति।

(प्राभाकराद्युक्तनिरासः)

एतत् सूत्रं प्रतिज्ञामात्रपरमित्येके । तत्तु मन्दम् ; न्यायनिबन्धनात्मके शास्त्रे सर्वत्र कस्यचित् न्यायस्यावश्यं सूचनीयत्वात् । ये तु कार्यमात्रव्युत्पत्तिसमर्थनं पुरस्कृत्य कार्यरूपो वेदार्थ इति सूत्रवाक्यार्थमाहुः, तेषां तु सूत्राक्षरवैघट्यम् ; (मी. पा. 82) अन्यासिश्च; सिद्धार्थ-

---

एक इति। उत्तरसूत्रे शाबरे, 'तत् प्रतिज्ञामात्रेणोक्तम्' इत्यनुवादात् शास्त्रदीपिकायां प्राभाकरखण्डनपूर्वकं, 'तदिहावधारणद्वयं प्रतिज्ञायते' इत्युक्तत्वात् प्रतिज्ञामात्रमिति मन्यन्ते। तन्न युक्तम्। तथा सति अङ्गपञ्चकसंपत्त्यभावात् पृथगधिकरणत्वं न स्यात्। अवधारयितुं शक्यते न वेति विचारोऽस्तु इति चेत्, न; वेदातिरिक्ते प्रमाणत्वाभावस्य, वेदे अबोधकत्वाभावस्य चोपरि निरूपयिष्यमाणत्वात्। अतो मुखान्तरेण शंकापरिहारौ वक्तव्याविति भावः। आज्ञानामन्वयैव तात्पर्यम्। प्राभाकरपक्षमनुवदति येत्विति। सूत्राक्षरवैघट्यमिति। यत् कार्यं स धर्म इत्युक्तौ अर्थपदवैयर्थ्यम्। गवानयनादेर्लौकिकस्यापि धर्मत्वापत्तिश्च। वेदप्रमाणककार्यं धर्म इति चोदनाशब्दस्वारस्याल्लभ्यत इति चेत्—कार्यमिति किमर्थं वक्तव्यम्? सिद्धवस्तुनः आत्मादेर्वारणायेति चेत्—तस्य धर्मत्वं न केनापि शंक्यते। दध्यादेर्धर्मत्वानापत्तिश्च। चोदना विधिशब्दः तल्लक्षणः तदर्थोऽपूर्वमेव धर्म इत्यर्थ इति चेत्-यागहोमादेर्धर्मत्वपरबहुप्रमाणविरोधः। चोदनायाः अपूर्वस्य, लक्षकः-ज्ञापको धात्वर्थादिर्धर्मः; अपूर्वसाधनं धर्म इति चेत्—अधर्मादप्यपूर्वभावात् सोऽपि धर्मः स्यात्। अपूर्वसाधनं विहितं धर्म इति चेत्—प्रथमदलं व्यर्थम्। विहितशब्दस्य च न भवन्मतेऽन्योऽर्थः। विधिर्ह्यपूर्वमेव। धर्मशब्दस्य वेदार्थपरत्वं भवदुक्तमिति सर्वस्य कार्यरूपत्वं न भवति

व्युत्पत्त्या तत्र तात्पर्यसम्भवेन सिद्धरूपस्यापि ब्रह्मणो वेदार्थत्वस्य शारीरके समर्थयिष्यमाणत्वात् ।

(विचार्यांशव्युत्पादनम्)

तदिह चायं विचारः । योऽसौ कृत्स्नवेदार्थानुबन्धी जिज्ञास्यतयोद्दिष्टो धर्मः, तस्य च केनचिल्लक्षणेन विविक्तप्रतिपत्तौ सत्यामेव हि परीक्षा घटेत । न ह्यसौ इक्षुक्षीरादिवत् निर्विवादस्फुटप्रतीतिविषयः, येनाधर्मव्यवच्छेदे लक्षणान्तरापेक्षा न स्यात् । प्रतिसमयमन्यमन्यमेव च धर्ममभिलपन्ति । यथा अन्तःकरणवृत्तिविशेष इति **सांख्याः** । शुभा चित्तवासनेति **सौगताः** । पुण्याः पुद्गला इत्यार्हताः ; गतिमतां गतिभूतो जगद्व्यापीति वा । विहितक्रियासाध्यः पुंगुणविशेष इति **वैशेषिकाः** । धर्मशब्दश्च चैत्यवन्दनादावपि तत्तत्सामयिकैः प्रयुक्तो दृष्टः । अतः सामान्येन धर्मजिज्ञासायां प्रतिज्ञातायां कस्य परीक्षा वर्तिष्यत इति न विद्मः । अथाध्ययनानन्तरं तत एव हेतोर्धर्मजिज्ञासा कर्तव्येति प्रतिज्ञाते अर्थात् ज्योतिष्टोमादीनामेव विचार्यत्वमापतितमिति मन्यसे—तन्न ; धर्मशब्दार्थे निश्चिते सति तदपेक्षपूर्वपक्ष(वृत्त?) निष्कर्षः, तेन च तन्निष्कर्ष इत्यन्योन्याश्रयणात् । अतो धर्मविवेकार्थं तल्लक्षणं वक्तव्यम् ।

---

च । सूत्राक्षरतः स्पष्टमपूर्वाप्रतीतेस्तद्वैघटयश्चेति । कार्यमात्रे व्युत्पत्तिं साधयता ह्येवमुक्तम् ; तदेव नेरयाह अव्याप्तिश्चेति । शास्त्रदीपिका च द्रष्टव्या । पुद्गलाः - उपचयापचयार्हद्रव्याणि । पूर्वपक्षनिष्कर्ष इति । वेदाध्ययनानन्तर्यरूपार्थपक्षनिष्कर्ष इत्यर्थः । पूर्ववृत्तेति स्यात् ।

(अधिकरणरचना)

ततश्च धर्मो लक्षणेन व्यावृत्ततयाऽवगन्तुं शक्यते, न वेति संशयः। तदर्थं विचार्यते, धर्मशब्दस्य निरुक्त्या रूढ्या अन्यतो वा किंचित् तल्लक्षणं सम्भवति, न वेति। किं प्राप्तम्? न सम्भवतीति। तथाहि—यदि धृतिसाधनं धर्म इत्युच्येत, तदा लौकिकानां प्रीतिसाधनानामपि धर्मत्वं स्यात्; तथाचानुत्थानं निषेधशास्त्रस्य। अथानर्थपर्यवसानात् तेषामधर्मतेति मन्यसे—तन्न; अविहिताप्रतिषिद्धेषु तदभावात्, श्येनादेः स्वरूपतोऽप्यधर्मत्वप्रसंगाच्च। न चायमिष्टप्रसंगः, अधर्मस्य त्रिध्यसम्भवात्। अथ चोदनालक्षणत्वे सति धृतिसाधनं धर्म इति रूढिराश्रीयेत; तन्न, रूढेः प्रयोगशरणत्वात्। प्रयोगस्य च आसंसारमनुवर्तमानैस्तत्तत्सिद्धान्तैर्विगानात्। स्मृत्याचारप्राप्तश्रेयस्साधनेषु, ईश्वरप्रत्यक्षमूलपञ्चरात्रधर्मादिष्वव्याप्तेश्च। न च पञ्चरात्रादिषु चोदनाशब्दमुपचरन्ति। एवं "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्" इत्यादिमहर्षिवाक्यैरपि न धर्मस्य लक्षणं किञ्चित् प्रतीमः। अतो धर्मस्य लक्षणासम्भवान्न व्यावृत्तप्रतीतिरिति।

(सिद्धान्तः)

तत्रेदमुत्तरम्-'चोदनालक्षणोऽर्थो धर्मः' इति। अयमभिप्रायः-चोदनालक्षणत्वविशेषितमेवार्थसाधनत्वं धर्मलक्षणम्, तत्रैव च धर्म-

---

अविहिताप्रतिषिद्धेषु—भोजनादिषु।

अयमभिप्राय इति। वेदगम्यश्रेयस्साधनताकत्वं धर्मलक्षणम्। बाह्यमतारम्भात् प्रागपि धर्मशब्दव्यवहारदर्शनेन अनादेर्वेदस्य गमकत्वं ह्यावश्यकम्। तद्वत् बुद्धागमादेरप्यस्त्विति चेत्—सादेस्तस्यागमस्य किं मूलम्, येन श्रेयस्साधनत्वमवगम्य स आगमः कृतः

शब्दस्य रूढिः । न चान्यत्र बाह्यैः प्रयोगस्तत्र रूढिं विहन्ति । न हि भ्रान्तैः शुक्त्यादिषु रजतादिशब्दः प्रयुक्त इति रजतादौ तस्य रूढिर्विहन्येत । अयं चार्थोऽन्यप्रमाणकत्वव्युदासेन सेत्स्यति । स्मृत्यादिकं तु मूलश्रुत्यनुमानेन धर्मे प्रमाणमिति तत्रापि चोदनालक्षणत्वसत्त्वान्नाव्याप्तिः । ये पुनरीश्वरप्रत्यक्षमूलपञ्चरात्रधर्माः, तेऽपि श्रुत्यर्थतया चोदनालक्षणा एव । यथाऽऽह भगवान् व्यासः—"इदं महोपनिषदं चतुर्वेदसमन्वितम् । सांख्ययोगकृतान्तेन पञ्चरात्रानुशब्दितम् । इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् । ऋग्यजुस्सामभिर्जुष्टमथर्वांगिरसैस्तथा ॥ भविष्यति प्रमाणं वै एतदेवानुशासनम्" इति । तथा "वेदपाठेषु पठितं व्रतमेतत् सुदुश्चरम्" इति । तथा—"महतो वेदवृक्षस्य मूलभूतो महानयम्" इति । किंच "यं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च । गृणन्ति सत्यकर्माणम् सत्यं सत्येषु सामसु" इति वदन् पाञ्चकालिकधर्मासाधारण-निषद्-वाकसंज्ञितनिगमभागमन्वमंस्त । तथाच "अलाभे वेदमन्त्राणां पञ्चरात्रोदितेन वा" इति स्मृतिः श्रुतिमूलैवाभ्युपगन्तव्या । तत एव च धर्मोऽपि श्रौत एव फलितः । तत्र शास्त्रे श्रुत्यर्थतैवोच्यते, यथा—"वेदान्तेषु यथासारं संगृह्य भगवान् हरिः । भक्तानुकम्पया विद्वान् संचिक्षेप यथासुखम्" इति । "श्रुतिमूलमिदं

---

स्यात् । निरपेक्षमूलान्तरादर्शनात् भ्रान्तिर्वा विप्रलम्भो वा मूलमिति तदीयेषु धर्मेषु धर्मत्वमारोपितमेव, न वास्तवमित्युक्तं भवति । एवञ्चावैदिकासंदिग्धलघुधर्ममूलः फललाभ इति मतिनिरास एतदधिकरणफलम् । निषद्वाकेति । एकायनशाखायामेवं विभागः ।

तन्त्रं प्रमाणं कल्पसूत्रवत्" इति च । आगमान्तरोक्तधर्मास्तु श्रुतिमूलतया न तत्कर्तृभिरुच्यन्ते, न तत्सैद्धान्तिकैः, नापि महर्षिभिरिति विशेषः। सांख्यादिधर्मेष्वप्यविरुद्धांशः चोदनार्थ एव । अतो नाव्याप्तिः।

तदेवं धर्मस्य लक्षणसिद्धेस्तस्य व्यावृत्तिप्रतीतिः सिद्ध्यतीति ।

एवमुपादेयस्य धर्मस्य लक्षणकथनेन हेयस्याधर्मस्यापि लक्षणं सूचितं भवति, अर्थपदस्य व्यवच्छेद्यतया तत्प्रतीतेः । शास्त्रैकवेद्य-मनर्थसाधनमनर्थ(मधर्म ?) इत्युक्तं भवति ।

(सौत्रपदचतुष्कसूच्यार्थाः)

सूचितश्चोदकः कश्चिच्चोदनापदलक्षणात् ।
यदभिप्रायभेदेन धर्माधर्मौ फलिष्यतः ॥ १६ ॥

प्रमाणे लक्षणपदं प्रयुञ्जानेन सूचितम् ।
विशेषणमुपादाय लक्षणं च तदेव नः ॥ १७ ॥

अर्थसाधनमत्रार्थशब्देन प्रतिपादयन् ।
फलतुल्यमुपायं च नैःश्रेयसमसूचयत् ॥ १८ ॥

---

सौत्रपदानां चतुर्णां स्वारस्यं क्रमेण चतुर्भिः पद्यैराह सूचित इत्यादिना। यदभिप्रायेति। चोदकेश्वरसंकल्पेत्यर्थः । तत्प्रसाद-निग्रहेति वा । चोदनाप्रमाण इत्यनुक्त्वा लक्षणपदप्रयोगात् प्रतिपादकतासंबन्धेन चोदनैव लक्ष्यस्य धर्मस्य लक्षणं भवतीत्यपि ज्ञाप्यत इत्यर्थः। अर्थशब्दः फलवाची, फलसाधनेत्यनुक्त्वा तथा प्रयोगः उपासनस्य प्रीतिरूपापन्नस्य फलत्वज्ञापकः। धर्मपदं धृति-साधनवाचि। धृतिः प्रीतिः। अत्र पाठान्तराभावेऽयमर्थः-धर्मपदेन

चतुर्वर्गफलोपायविषयैश्चान्यदीदृशम् ।
धृतिसाधनशब्देन मोक्षेऽपि प्रीतिमक्षताम् ॥ १९ ॥

इति धर्मलक्षणाधिकरणम् 1-1-2.

### 3. धर्मे प्रमाणपरीक्षाधिकरणम् ।

**सू—तस्य निमित्तपरीष्टिः ॥ १-१-३ ॥**

प्रस्तुतयोः स्वरूपप्रमाणयोः स्वरूपं प्रमाणमुखेनैवान्वेष्टव्यम् । तदर्थमिदमध्यायार्थविभजनम् । यथा वक्ष्यमाणेष्वध्यायेषु पृथक्पृथक् तत्तदध्यायार्थप्रतिज्ञा क्रियते, तद्वदत्रापि । अन्यथा कस्यांशस्य सदादिसूत्रैर्हेतुर्वक्ष्यत इति न ज्ञायेत । **तस्य**-धर्मस्य **निमित्तं**—प्रमाणम् । तत्प्रमानिमित्तत्वात् **निमित्त**मित्युपचर्यते ; परम्परया वा तन्निमित्तत्वम् । **परीष्टिः**—पर्येषणा । इषु गतावित्यस्माद्धातोः 'इषेरनिच्छार्थस्य' इति युचि, 'परेर्वा' इति परिपूर्वात् तस्मात् क्तिन्युचोर्विकल्पोऽनुशिष्यते । तेन युचि पर्येषणेति रूपम्, क्तिनि तु परीष्टिरिति । धर्म-

---

धृतिसाधनवाचिना चतुर्वर्गफलोपायाः ये स्वविषयाः वाच्याः तैस्सह अन्यत् स्वयंप्रयोजनं निष्कामकर्माप्यसूचयत्, भगवत्प्रीतेस्तत्रोद्देश्यत्वात् । एवं धर्मसाध्ये मोक्षे फले आनन्दरूपत्वात् प्रीतिरप्यस्ति, न पाषाणप्रायत्वादि इत्यपि ॥ 2 ॥

उक्तं चोदनालक्षणत्वमुत्तराधिकरणैरुपपाद्यते । तत्र मध्ये किमर्थमिदं निमित्तसूत्रमित्याशङ्कायाम्, यथा उत्तरोत्तराध्यायेषु अध्यायार्थप्रतिज्ञा, अथातश्शेषलक्षणमित्यादिरूपा, तथा प्रथमाध्यायार्थप्रतिज्ञेत्याह अध्यायार्थविभजनमिति । न्यायनिबन्धनात्मकत्वादधिकरणस्यात्राप्यधिकरणरचनाक्रमोऽस्तीति न प्रतिज्ञामात्र-

प्रमाणस्य परीक्षणमस्मिन्नध्याये कर्तव्यमित्यर्थः। इदमपि सूत्रं न केवलं प्रतिज्ञापरम्; अपितु प्रमाण[मात्र]स्यापरीक्षणीयत्वपूर्वपक्षप्रतिक्षेपार्थम्।

तथाहि—किं धर्मे प्रमाणं परीक्षणीयम्, उत स्वरूपमेवेति संशयः, तदर्थं विचार्यते—किं प्रमाणनिरूपणमन्तरेण धर्मस्वरूपनिरूपणं युज्यते, न वेति। तत्र युज्यत इति प्राप्तम्। लोके तावत् प्रत्यक्षादिप्रमाणनिरूपणमन्तरेण मधुराम्ल-सितरक्त-शीतोष्णादिविभागमवधार्य हानोपादानादिव्यवहाराः पुंसां प्रवर्तन्ते। तद्वदिहापि शब्दान्तराभ्यासश्रुतिलिंगादिभिः भेद-अंगांगिभावादिनिरूपणमुखेन धर्मस्वरूपमेवानुष्ठानार्थं निरूपणीयम्, किं तदर्थेन प्रमाणपरीक्षणेनेति।

तत्र प्रतिपद्यते **तस्य निमित्तपरीष्टिरिति**। [तस्येति?] प्रकृतपरामर्शोऽत्र हेत्वभिप्रायः। तस्य—धर्मस्य प्रमाणपरीक्षणं कर्तव्यम्, अलौकिकार्थत्वात् तस्य। न हि मधुराम्लादिविभागवत् ज्योतिष्टोमादेः, चैत्यवन्दनादेश्च विभागमुपलभामहे। येन इतरप्रहाणेनेतरमुपाददीमहि। अतो यावत् धर्मे चोदनानां प्रामाण्यमितरेषाञ्चाप्रामाण्यं नावधारितं भवति, न तावत् धर्मविशेषोपादानं युज्यते। प्रमाणमविचार्य चेत् प्रवर्तेत, अन्धवदनर्थे पतेत्, अर्थं वा न विन्देत्। अतो वेदस्यैव धर्मे

---

सेति वक्ष्यति। परम्परया वेति। धर्मस्योत्पत्तिराचरणात्, आचरणं ज्ञानात्, ज्ञानं शास्त्रादिति परम्परया धर्मनिमित्तत्वेत्यर्थः।

नहिमधुरेति। न हि नीलं कञ्चित् प्रति अनीलमिति न्यायेन यत् सर्वैरप्येकरूपं व्यवह्रियते, तत्र प्रमाणनिरूपणमनपेक्षितम्। धर्मस्तु न तथा। बुद्धार्हतलौकिकवैदिकभेदेन भिन्नभिन्नविषये धर्मशब्दप्रयोगात्। एकेनान्यस्य तथात्वानिष्टेश्च। अतः किं प्रमाणम्,

प्रामाण्यमवधार्य तदर्थस्यैव धर्मत्वे निश्चिते सति तद्भेदाभेद-तदाराध्यादि-चिन्तावकाश इति । विंशतिलक्षण्यां द्वितीयाध्यायमारभ्य क्रमशो यद्यत् प्रतिपाद्यम्—कर्मदेवताब्रह्मतदनुबन्धिभेदभिन्नम्, तत् सर्वं प्रमाणेनैव निरूपणीयतया स्वायत्तसर्वार्थि(र्थ ?)प्रमाणलक्षणमेव प्रथमं प्रवर्तते ।

(प्रमाणपरीक्षणे पूर्णरीतिप्रदर्शनम्)

एवं च[ चै ]तत्परीक्षाक्रमः(मी. पा. 88)—लोकायतमतेन, धर्मे न किंचित्प्रमाणमस्तीति; सत्त्वेऽपि सांख्याद्युक्तविषयानुरूपफलप्रदान-रूपालोचनविकल्पाभिमानाध्यवसायादिनयेन, न्यायोक्तसंप्लववादेन च किं चोदना अन्यच्चेति समुच्चयोऽस्ति न वेति; असमुच्चयेऽपि

---

को वास्तवो धर्म इति विचार्य निर्णेयमिति भावः । तस्येति लौक-पदस्य यावत्परिकरविशिष्टस्य धर्मस्य विचार आरब्धः, तावत्परि-करविशिष्टधर्मस्येत्यर्थः । तथाचायं प्रमाणाध्यायः एकोनविंशतेरध्या-यानामुपजीव्य इति भावः ।

एवञ्चेत्यादि । निमित्तपरीक्षणं कर्तव्यमिति तृतीयेऽत्राधिकरणे साधितम् । एतदनुरोधेन निमित्तपरीक्षणमेव कृत्स्नोऽयमध्यायः । तत्रेयमाशंका - निमित्तपरीक्षणप्रकाराः केचित् कथं त्यक्ता इति । के ते इति चेत्—लोके न्याय्यान्याय्यविभागो मा भूत्, मा वा । धर्माधर्मादिकं नास्त्येव । तत्तन्मतस्थैरन्यथाऽन्यथा तदभ्युपगमाच्च तदभाव एव प्रतीयते । अतः कस्य निमित्तं परीक्ष्यमिति लोकायत मतस्थितिः । अन्यैर्धर्मस्य स्वीकारात् प्रमाणचिन्ता भवति, प्रत्यक्ष-मनुमानमागम इति त्रीण्यपि प्रमाणानि; उत आगममात्रम् । आद्ये किं प्रमाणानि सर्वाणि संभूय धर्मप्रमां जनयन्ति, उत प्रत्येकम् । इत्यादयः ॥ सर्वेषामत्रोक्तिः सिद्धेति समाधिः एवञ्चेत्यादिनोच्यते ।

(?)संशयसारसंवित्तेरन्वयादलौकिकार्थेषु कालभेदेन वा तद्भेदमन्तरेणापि प्रमाणभेदप्रवृत्तिदर्शनेन वा किं चोदना अन्यद्वेति विकल्पोऽस्ति न वेति ; अविकल्पेऽपि सौगतादिमतेन किं प्रत्यक्षादिकमेव उत चोदनैवेति ।

तदेवं नियम-विकल्प-समुच्चय-उभयापलापेषु प्रत्यक्षसूत्रे तु चोदना-व्यतिरिक्तानां धर्मे प्रामाण्यनिरासात् समुच्चय-विकल्प-चोदनेतरनियमानां प्रतिक्षेपः, औत्पत्तिकसूत्रादिना तु पादशेषेण चोदनाप्रामाण्य-समर्थनादुभयापलापपक्षः प्रतिक्षिप्यते । त्रिपाद्या(द्यां ?)तु अर्थवाद-पादेन मन्त्रार्थवादानां विध्युपयोगेन प्रामाण्यप्रकारकथनम् । स्मृति-पादे च आप्तस्मृति-शिष्टाचारमात्रप्राप्ताष्टकादिकर्तव्यतामूलभूत-देश-कालान्तराधीतवेदोपपादनम् । नामधेयपादे तु उद्भिदादिनामधेयानां

---

कतिपय पदार्थस्तु-मतेन - मतानुसारेण । विषयानुरूपफलप्रदा-नम्-हेयोपादेयोपेक्ष्यरूपविषयानुरूप हेयत्वादिज्ञानजननम् । सांख्या वदन्ति—एकैकस्मिन् करणचतुष्टयं कार्यकरम् । तद् यथा आलो-चनं व्यापार इन्द्रियाणाम्, विकल्पस्तु मनसः, अभिमानोऽहङ्कारस्य, अध्यवसायो बुद्धेरिति । तदर्थस्तावत्-प्रथमत इन्द्रियेण गवादि यथावत् दृश्यते, अथपुनः पूर्वानुभूतजातीयतया चिन्तयति । अथ मदिष्टसाधनमित्यादि देहात्माभिमानिस्वसंबन्धेन ग्रहणम्, अथो-पादेयं हेयमित्यध्यवसायश्चाहंकारबुद्धितत्त्वाभ्यामिति । संप्लवः—समुच्चयः । संशयसारसंवित्तेरिति दृश्यते । संशयफलभूतनिर्णय-स्येत्यर्थः । संशयात्मकज्ञानस्येति वा । कदाचित् एकमूलकज्ञानस्य संशयात्मकत्वात् अन्यमूलापेक्षेति भावः । उभयापलापः - प्रमाणमेव नास्तीति लोकायतपक्षः । त्रिपाद्येत्यत्र त्रिपाद्यामिति स्यात् ।

नामधेयतयैव स्थित्वा विशेषसमर्पणमुखेन, 'चाटुना राजानं प्रीणयेत्' इतिवत् यजिनिर्दिष्टदेवताराधनसामान्यस्य विशेषतोऽवच्छेदात् विध्युपयोगः समर्थ्यते। इति कृत्स्नेनाध्यायेन धर्मे प्रमाणमेव परीक्ष्यते।

एवमयोगान्ययोगव्यवच्छेदेन धर्मे चोदनैव प्रमाणमित्युपदिष्टे, तदर्थस्यैव धर्मस्य निरूपणं भेदलक्षणादिषु वक्ष्यति। अतो धर्मे प्रमाणं परीक्षणीयमिति स्थितम्।

(नपरीक्ष्यमिति सूत्रार्थनिरासः)

यत्तु-**उपवर्षवृत्तौ**—तस्य निमित्तपरीष्टिर्न कर्तव्येति नञम् अध्याहृत्यातिमहता क्लेशेन व्याख्यात(न?)म्-तदप्यनेन निरस्तम्; निमित्तपरीक्षाभावे प्रत्यवायस्य दर्शितत्वात्। यच्चापरीक्षणीयत्वे प्रमाणस्य प्रसिद्धत्वं हेतुरुक्तः, तदपि संशयविपर्ययाक्रान्तत्वप्रदर्शनेन निरस्तम्। अतः यद्यपि प्रमाणस्य स्वत एव विषयोपस्थापनसामर्थ्यम्-तथाप्यपवादशंकानिराकरणाय कारणदोष-बाधकप्रत्ययनिरासः कर्तव्य इति युक्त तस्य परीक्षणीयत्वमेव।

यत्तु प्रमाणपरीक्षायामनवस्थानमुक्तम्—प्रमाणं परीक्ष्यमाणमन्येन परीक्ष्येत, तच्चान्यत् ततोऽन्येनेति—तदपि मन्दम्; सन्दिग्धविषये परीक्षाप्रवृत्तेः। उत्तरोत्तरेषु च सन्देहनियमानभ्युपगमात्।

---

चाटुनेति। प्रीणनं प्रीत्यनुकूलव्यापारः। चाटुनेति तद्विशेषसमर्पणम्। (न्याय प. श. 2)॥ अवच्छेदः—व्यावर्तनम्।

नञमध्याहृत्येति। परीष्टिरित्यत्र काकुस्वरकल्पनोपलक्षणमिदम्। प्रत्यवायस्य - अन्धवदनर्थे पतेदित्यस्य। कारणेति। कारण भूतेन्द्रियादौ दोषस्य, बाधकप्रत्ययस्य वा सत्वे हि प्रामाण्यभंग

आशंकायाश्च व्याघातावधिकत्वात् । यावदाशंकमेव च तर्कप्रवृत्तेः । स्वपरनिर्वाहके वा कस्मिंश्चित् प्रमाणादौ विश्रमात् । न चात्र प्रथमे पर्वणि निस्सन्देहत्वे तत् युक्तम् । अन्यथा सौगतादयोऽपि वैयात्यात् इमामेवानवस्थां पुरस्कृत्य यदि स्वाभिमतैर्ग्रन्थैरपरीक्षितप्रामाण्यैः चैत्यवन्दनादिकं धर्ममेव परीक्षणीयमुपक्षिपेयुः—तदा कस्ते निस्तारः ।

(उपवर्षवादस्य विदग्धोक्तिता)

अतः–भगवानप्युपवर्षोऽपरीक्षणीयत्वपूर्वप्रक्षमन्वारुरोह भक्त्या चोदनाप्रामाण्ये प्रसिद्धिमनुसृत्य; प्रसंगाच्छिष्यशिक्षणार्थं प्रत्यक्षतदभासा-

---

इति भावः । आशंकायाश्चेति. इदं न्यायकुसुमाञ्जलिस्थम् । कारिका च तत्र, 'व्याघातावधिराशंका तर्कः शङ्कावधिर्मतः' इति । व्याघातावधिका व्याघातदर्शनपर्यन्ता शंका । शंकाया अवधिः निवर्तकस्तर्क इत्यर्थः । यावत् शंकानुवृत्तिः, तावत् उपर्युपरि तर्कप्रवृत्तिः । शंकैवान्ते व्याघातदर्शनान्नोदेतीति । स्वपरनिर्वाहक इति । यथा अग्निमान् धूमादित्युक्तौ, धूमः कथमिति शंकायां दृश्यमानत्वादित्युच्यते । अथ दर्शने किं प्रमाणमिति न शंक्यते । कुतः । ज्ञानस्य स्वयंप्रकाशतया स्वपरनिर्वाहकत्वादिति ।

एवमुपवर्षव्याख्यानमितरमीमांसकवत् निरस्य तस्मिन् गौरवात् स्वयमन्वारोहपक्षमाह अत इति । अत इत्यस्य मन्यामह इत्यत्रान्वयः । मीमांसापादुकायां छेकोक्तिः स्यादित्युक्तम् । प्रसिद्धिमनुसृत्यान्वारुरोहेत्यन्वयः । यथा—अनारम्भणीयत्वशंका धर्मलक्षणानिष्कर्षाधीनशंका, उपरि सर्वत्र विषयवाक्येष्वर्थानिश्चयाधीना च शंका वैदिकगोष्ठ्यामेव भवति, तथा वेदस्याप्रामाण्यशंकायाः अध्येतृगोष्ठ्यामसंभवात् कथं परीक्षिसुत्रमिति आस्तिकेन

देरपि प्रसिद्धिं दर्शयन् तल्लक्षणादिकमपि व्याचकारेति (मी. पा. 90) मन्यामहे। अन्यथा कथमपरीक्षणीयत्वमपि केनचित् प्रमाणेन समर्थयेत् ? तस्याप्यपरीक्ष्यत्वाय प्रमाणान्तरापेक्षयाऽनवस्थाप्रसंगात्। अथ यदि प्रसिद्धत्वेन स्वपरनिर्वाहकेणानवस्थां प्रतिनिभन्त्ससि, तदा प्रमाण-परीक्षणेऽपि एवंविधमिदं प्रमाणं भवितुमर्हतीति साधयतः प्रमाणस्या-प्येवंविधत्वोपाध्याक्रान्ततया तद्वदेव समाधिं कटाक्षय। यदि तस्य तदुपाधिज्ञानाय अन्यापेक्षा, तदा प्रसिद्धत्वस्यापि प्रसिद्धत्वपरा-मर्शायान्यापेक्षेति तुल्यम्। किंच यदि प्रसिद्धत्वादपरिक्षणीयत्वमेवात्र विवक्षितम्–तदा शब्दनित्यत्व-वेदापौरुषेयत्व-अर्थवादोपयोगादिप्रतिपाद-नार्थो वृथैवायं ग्रन्थविस्तरः स्यात्। ततोऽपरीक्षणीयत्वमुखेनापि

---

पृष्टः अपरीक्ष्यत्वारोहेणैव समादध इति भावः। तर्हि उपरिसूत्रद्वयं किमर्थमित्यत्राह प्रसंगादिति। सूत्रत्रयस्योपवर्षवर्णितोऽर्थः शाव-रादौ द्रष्टव्यः। ईषदर्थभेदेऽपि तत्कृतविचारघोरण्या उपयुक्तत्वा-देव भाष्यादौ तद्विस्तरः। वेदे यद्यत्फलसाधनत्वेन यद्यद्विहितम्, तस्यतस्य ताद्रूप्यं प्रत्यक्षानुमानागम्यमिति सुनिश्चितम्। अतः किं परीक्षणीयमिति तदाशय इति प्रसंगादित्युक्तम्। अन्यथा-अनवस्था-परिहारायापरीक्ष्यत्ववर्णनमिति, उक्तान्वारोहासंमतौ। अपरीक्ष्य-त्वाय-अपरीक्ष्यत्वसमर्थनाय। अनवस्थाम्—अपरीक्ष्यत्वसमर्थने अनवस्थाम्। एवमन्वारोहेणोक्तावपि तस्याप्यभिमतोऽर्थः परीक्ष्यत्व-मेवेति निगमयति तत इति। ननु - निमित्तसूत्रे परतःप्रामाण्यशंका-याम्, परतः प्रामाण्यं न, अनवस्थानादित्युक्त्वा, प्रासङ्गिकप्रत्यक्षादि-विचारान्ते, प्रमाणमनपेक्षत्वादिति तदेव स्वतःप्रामाण्यमुपवर्षो निगमयामासेत्यस्तु ॥ नैवम्; पृथक्पृथगधिकरणविषयस्य यथा-वत्संभवात्।

सामर्थ्यात् परीक्षणमेव क्रियत इति तज्ज्ञान(ज्ञापन?)मेव, अध्याहारादि-दोषाभावात् अध्यायार्थविभजनादिना सोपयोगत्वाच्च युक्तमुत्पश्याम इति।

सर्वः समञ्जसोऽर्थः स्यात् प्रमाणे परिशोधिते ।
अतः प्रमाणवृत्तान्तपरिचिन्तनमर्थवत् ॥ २० ॥
धर्मप्रमाणचिन्तेति सामान्येनाभिधानतः ।
मन्त्रार्थवादस्मृत्यादिचिन्ताऽप्यन्तर्भविष्यति ॥ २१ ॥
निषेधचोदनारूपधर्ममानस्य चिन्तने ।
निषेध्याधर्ममानस्य चिन्ताऽप्यन्तर्गतैव हि ॥ २२ ॥
ननु स्वरूपविश्रान्तब्रह्मवाक्येषु केषुचित् ।
न धर्ममानता; तेषामिह न स्याद्विचिन्तनम् ॥ २३ ॥
मैवम्; वेदार्थमानस्य जिज्ञासाप्रक्रमादिह ।
कृत्स्नवेदप्रमाणत्वमुपक्षेपाद्यमादितः ॥ २४ ॥
अतो धर्मप्रमाणस्य वक्तृदोषाद्यभावतः ।
मानत्वे ब्रह्मवाक्येऽपि सामान्यान्मानता स्थिता ॥२५॥

---

धर्ममानस्येति । ननु न सुरां पिबेदित्युपदेशः निषेधचोदना भवतु; तस्य धर्ममानत्वं कथमिति चेत्—नेक्षेतोद्यन्तमादित्य-मित्यादौ यत्र निवृत्तिसंकल्परूपं व्रतं विधीयते, तत्र धर्ममानत्वम्। तद्विषयनिवृत्तिप्रतियोगिनश्चाधर्मत्वं तत्र चिन्तनीयं भवति । तद्रीत्या सुरापानादेरधर्मत्वसिद्धिरिति । वेदार्थेति। चोदना-शब्दस्य सामान्येनोपदेशपरत्वात् सर्ववेदार्थो धर्मशब्दार्थ इति भावः। शारीरके उपनिषदां मानत्वं न स्थाप्यते। अत्रैव स्थित-त्वात्। कया विधया मानत्वमिति तु तत्र विचारः।

स्वरूपमात्रविश्रान्तिर्वाच्या शारीरके परम् ।
तदुक्तावपि ह्यत्र प्रामाण्यं साधयिष्यते ॥ २६ ॥
तावता विधिशेषत्व-स्वरूपातत्परत्वतः ।
उत्थानमाप्यते पश्चात् ; न तु मानत्वसाधनम् ॥२७॥

इति धर्मप्रमाणपरीक्षणाधिकरणम् । ३

4. अन्यप्रमाणकत्वनिरासाधिकरणम् ।

**सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ १ - १ - ४ ॥**

अप्रमाणकत्वान्यप्रमाणकत्वादिमुखेन धर्मपर्येषणायां प्रक्रान्तायां चोदनालक्षणेत्यंशसमाससामर्थ्यसिद्धावधारणद्वयक्रमानुसारेण प्रथममिह अन्यप्रमाणकत्वं निरस्यते । तदत्र किं[प्रत्यक्षं?] धर्मे प्रमाणं सम्भवति नेति विचारः । किं युक्तम्? सम्भवतीति । तथाहि—इह तावत् धर्मशब्दाभिलप्याः द्रव्यक्रियागुणादयः प्रत्यक्षसिद्धा इति सर्वसम्मतम् । तेषां श्रेयस्साधनत्वं तु यद्यप्यस्मदादीनां सहसा दुर्दर्शम्(1) तथापि रत्नतत्त्वमिव ताच्छील्यशालिनां संस्कारोपचयसहकृतेन प्रत्यक्षेण सुग्रहम्। (2) कामातुरकामिनीसन्दर्शनादिष्विव भावनाप्रकर्ष एव वा प्रत्यक्षां धियमुत्पादयितुमलम् । (3) काकोलूकगृध्रादिषु च इन्द्रियप्रकर्षतारतम्यं दृश्यते । तारतम्यवतां च काष्ठाप्राप्तिरुपलब्धा । ततश्च,[चाक्षुषादि?]प्रकर्षतारतम्यं

---

अवधारणद्वयेति । चोदनैव प्रमाणमिति प्रथमावधारणम् । चोदना प्रमाणमेवेति द्वितीयम् । द्रव्येति । 'द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते' इत्यादि कुमारिलः । ताच्छील्यशालिनां—तत्परिशीलकत्वशालिनाम् ।

क्वचिद्विश्रान्तं तारतम्यरूपत्वात् परिमाणतारतम्यवदित्येवं प्रतीन्द्रियं वा, प्रत्यक्षप्रकर्षतारतम्यमिति सामान्येन वा प्रयोक्तव्यम् । एवंस्थिते तद्विश्रमस्य सर्वविषयतामन्तरेणानुपपत्तेरतीन्द्रियं सर्वं कस्यचिदैन्द्रियकमिति सिद्ध्यति। प्रकृते विशेषतश्च तदेवानुमातुं शक्यम्—धर्मादयः कस्यचिदिन्द्रियग्राह्याः प्रमेयत्वात् करतलवदिति । तस्यामेव वा प्रतिज्ञायां मीमांसकानां प्रत्यक्षत्वादस्मत्सुखादिवदिति ।(4)महर्षीणां योगिनां च धर्मवीर्यप्रसूतं प्रत्यक्षं महर्षिभिरेवोच्यते। "तत् सर्वं धर्मवीर्येण यथावत् सम्प्रपश्यति" इत्यादि ।

अतः प्रत्यक्षग्राह्यत्वं धर्मस्य युक्तम् । एवमानुमानिकत्वमपि । सेवाध्ययनादिदृष्टहेत्वविशेषे फलभेदो न निमित्तान्तरमन्तरेण घटेत। तदेवं प्रत्यक्षानुमानगम्य एव धर्मे अर्थशास्त्रायुर्वेदादिवत् पौरुषेयागमोपि [हि] सम्भवत्येव । अतो यद्येभिः प्रमाणैश्चोदनार्थ एव धर्मतयोपस्थाप्येत, तदा बह्वायासग्राह्यचोदनानैष्फल्यम् ; चोदनैवेत्यवधारणानुपपत्तिश्च । अथ चोदनानुक्तः कश्चित् तदविरुद्धोऽर्थः, तदा चोदनैवेति प्रतिज्ञा न स्यात्। यदि पुनः सौगताद्यर्थवत् तद्विरुद्ध एव कश्चित्, तदाऽपि तद्बाधात्, चोदना प्रमाणमेवेत्यवधारणानुपपत्तिः ।

इति सर्वथा, "चोदनालक्षणोऽर्थो धर्मः" इत्येतत् दुर्वचमिति ।

---

मीमांसकानामिति । मीमांसकान् प्रति प्रतिज्ञायां सुखादिः दृष्टान्तो भवति, न स्वस्मान् प्रति। अस्मन्मते सुखादेर्ज्ञानावस्थात्मकतया स्वयंप्रकाशत्वेन इन्द्रियग्राह्यत्वाभावात्। तन्मते ज्ञानं न दृष्टान्तः, तस्य ज्ञाततालिङ्गकानुमानगम्यत्वात्। सेवेति। सेवादिफलानि दृष्टहेत्वन्यहेतुसापेक्षाणि । दृष्टहेत्वविशेषेपि विचित्रत्वादिति ।

(सिद्धान्तः)

तदेतत् परिहरति **सत्संप्रयोग** इत्यादिना । अत्रायमन्वयक्रमः—धर्मे **प्रत्यक्षमनिमित्तम्** । कुतः । **विद्यमानोपलम्भनत्वात्** । वर्तमानार्थग्राहकत्वादित्यर्थः । एतदपि कुत इत्याकांक्षायामुच्यते ....॥ तत् खलु....? इन्द्रियाणां प्रयोगः । तद्भवतु प्रत्यक्षम् । ततः कथं धर्मे...?...नापि निमित्तम् । विद्यते हि धर्मः क्रियमाणः कृतश्च यावत्फलम् । ततस्तदुपलम्भनं प्रत्यक्षं भवतु ॥ मैवम् । यदि तावत् अयं घट इतिवत् अयं धर्म इति द्रव्यादिस्वरूपं धर्मतया प्रत्यक्षेण दृश्यते, तत्र च यत्फलसाधनतया योऽर्थो निर्दिष्टः तदनन्तरमेव तस्योत्पत्तिं यदि नियमेनोपलभेमहि—तदा भूयोदर्शनसहकृतेन प्रत्यक्षेण श्रेयस्साधनमिदमिति निश्चिनुमः(नुयाम?) । स्वर्गादेः फलस्य देहान्तरभावितयेदानीमुपलम्भायोग्यत्वान्न तत्साधनमिति ग्रहीतुं शक्यम् । न च यावत्फलानुभवं क्रिया तिष्ठति । क्रियासाध्यमपूर्वं स्थिरमपि नास्मदादिप्रत्यक्षम् । तद्धि देवतानुग्रहात्मकम् । न हि पराभिप्रायः परस्य प्रत्यक्षतामियात् । अतः फलदशायां कर्मणोऽभावात् कर्मदशायां फलस्याभावादुभयनिष्ठस्य साध्यसाधनभावसम्बन्धस्यास्माभिर्ग्रहीतुमशक्यत्वात्, प्रत्यक्षस्य धर्मग्राहित्वाभावे विद्यमानोपलम्भनत्वं हेतुरिति साधीयः ।

---

उच्यत इत्येतदनन्तरं सूत्रखण्डोपादानतद्विवरणादिकं भ्रष्टमिति ज्ञायते । तद्घटककतिपयपदानि तु संहृत्य मुद्रितानि । अयं सूत्रार्थः—सति - वर्तमाने पुरुषस्य तत्तदिन्द्रियस्य-संप्रयोगे विषयसंनिकर्षे बुद्धेर्जन्म । संनिकर्षवर्तमानता च विषयवर्तमानतां विना न भवतीति विद्यमानविषयक एवोपलम्भ इति । तदित्यस्य तस्मादित्यर्थः । विद्यमानोपलम्भनत्वेऽयं हेतुः । तच्चानिमित्तत्वे हेतुः ।

(रत्नदृष्टान्तायोगः)

एतेन—रत्नतत्त्वदृष्टान्तोऽपि निरस्तः, न हि सहस्रशश्शीलितेपि रत्नतत्त्वे गुरुत्वं चक्षुषा गृह्यते। वर्णादिवैषम्यं तु पूर्वं सादृश्यतिरस्कृतमैन्द्रियकतया पश्चान्निपुणनिरूपणेन प्रकाशत इति युक्तम् ॥

(भावनाप्रकर्षस्य प्रत्यक्षाहेतुत्वम)

यत्तु—भावनाप्रकर्ष एव प्रत्यक्षयतीति—तदसत्, न हि भावनया प्रत्यक्षं जायते, अपितु स्मृतिवैशद्यमात्रमेव। संस्कारोपचयो हि स्मृतावेव पाटवमादधीत। कामातुरकामिनीसन्दर्शनादिष्वपि न पूर्वगृहीताभ्यधिकं किञ्चित् प्रकाशते। यच्च-"वृक्षेवृक्षे च पश्यामि चीरकृष्णाजिनाम्बरम्। गृहीतधनुषं रामं पाशहस्तमिवान्तकम् ॥"इत्यादिष्वधिकं प्रकाशते, तत्तु अन्यथावभासान्न प्रत्यक्षम्; अपितु तदाभासः।

(तारतम्यत्वहेतोरसाधकत्वम्)

यत्तु—इन्द्रियप्रकर्षतारतम्यादेर्विश्रान्तिसाधनम्, न तेनाप्येकस्येन्द्रियस्य सर्वविषयता सिध्यति, किन्तु तदिन्द्रियग्राह्यजातीयत्वे सति तत्सम्प्रयुक्तसर्वविषयत्वम्। न हि लोके प्रकृष्यमाणमिन्द्रियपाटवमिन्द्रियान्तरविषयेषु मात्रयापि प्रवर्तमानं दृष्टम्; स्वविषये वा भूते भविष्यति वा। असन्निकृष्टस्य च नैन्द्रियकत्वमित्युक्तम्। यच्च प्रमेयत्वादिना धर्मादीनामैन्द्रियकत्वसाधनम्, तदपि [विपक्षे ?] बाधकाभावेन निरस्तम्। अन्यथा—धर्मादयो रूपादयश्च कस्यचिद्घ्राणग्राह्याः प्रमेयत्वात्, गन्धवदित्यपि किं न साध्येत ॥ विषयविशेषनियततया तच्छक्तिनिश्चयादिति चेत्; प्रकृतेऽप्येतदनुसन्धत्स्व ॥ घ्राणादेरपि क्वचित् सर्वविषयत्वमिच्छाम इति चेन्न; उक्तोत्तरत्वात्। इच्छामात्रेण च तदसिद्धेः।

(योगिप्रत्यक्षस्य धर्मे प्रत्यमूलत्वम्)

यत्तु–धर्मवीर्यप्रसूतमृषीणां योगिनां च प्रत्यक्षं शास्त्रबलादभ्युपगतम्, तत् न तेषामनुष्ठानार्थम्, आगमावधारितानुष्ठानजन्यत्वात्, आगमार्थतयैव धर्मादिप्रत्यक्षीकरणात्। नाप्यस्मदादीनामनुष्ठानार्थम्, परप्रत्यक्षस्य परानुष्ठानानुपकारित्वात्। तदुपदेशस्य तु आगमायमानस्यापि पौरुषेयतया श्रोतॄणां मूलपरामर्शसापेक्षत्वेन धर्मवीर्यप्रसूतप्रत्यक्षमूलत्वपरिशेषे तस्मिन् धर्मे प्रमाणान्तरमन्वेषणीयम्। तच्च नान्यत् शास्त्रात्। यद्यपीश्वरनित्यप्रत्यक्षमूले पञ्चरात्रशास्त्रे [1]श्रुत्यर्थविषयेऽपि न मूलश्रुत्यपेक्षा, तथापि नित्यप्रत्यक्षविशिष्टोऽयमीश्वर इति तत्स्वरूपसिद्धौ तन्मूलवक्तृदोषनिराकरणे च श्रुतिरेव शरणमिति श्रुतिप्रामाण्यमुपजीव्यैव तत्प्रामाण्यं निरुपपादि(निरपवादम् ?)। [2]चोदनार्थोऽयमित्येव च भगवता तदर्थ उपदिश्यत इति श्रीविष्णुस्मृतिगीतादिन्यायेन तदुक्तार्थेपि चोदनाप्रामाण्यमायातम्।

(अनुमानादेरप्रमाणता)

तदेवमस्मदादिभिर्धर्मस्य श्रेयस्साधनरूपेणाध्यक्षयितुमशक्यत्वात् अन्वयव्यतिरेकसापेक्षमनुमानमपि धर्मे न प्रमाणमिति सिद्धम्।

---

ऋष्यादिसमवेतं लौकिकप्रत्यक्षविलक्षणं तत्कृतभावनाप्रकर्षमूलकविशदस्मृतिरूपप्रत्यक्षविलक्षणमतीन्द्रियविषयकं धर्मवीर्यप्रसूतं यत्, तत् प्रत्यक्षं तत्कर्तृकानुष्ठानहेतुर्वा अस्मत्कर्तृकानुष्ठानहेतुर्वा। नाद्य इत्याह नतेषामिति, नान्त्य इत्याह नाप्यस्मदिति। अस्मत्कर्तृकोपदेशान्तरं दृष्टान्तयति श्रीविष्णुस्मृतीति।

1 श्रुत्यर्थविषयेऽपि-श्रुत्यर्थविषयकत्वे सत्यपि।

2 पञ्चरात्रे चोदनामूलकत्वाभावेऽपि तद्धर्मस्य चोदनाप्रमाणकत्वमक्षतमित्याह चोदनेति।

यत्तु सेवाध्ययनादितुल्यत्वेपि फलभेददर्शनादतीन्द्रियनिमित्त-भेदकल्पनमिति—तदपि न ; सूक्ष्मस्य सेवाध्ययनादिभेदस्य दृष्टस्यैव सम्भवेन निमित्तान्तरनैरपेक्ष्यात् । सामान्यतश्च कल्पिते निमित्तभेदे किं तत् दर्शनादिसिद्धमुत चोदनादिसिद्धमिति विवेकासि[1]द्धेरनुष्ठानं प्रत्यनुपकारित्वात् । ततश्च सेतिकर्तव्यताकधर्मानुष्ठाने श्रुतिरेव शरणम् ।

तदेवम्-प्रत्यक्षानुमानयोर्धर्मप्रमाणत्वनिरासेन तन्मूललौकिकागमस्यापि न धर्मप्रमाणतासिद्धिः। उपमानार्थापत्तिसम्भवादीनि तु प्रमाणान्तराणि न सन्त्येव, यथायथं त्रिष्वन्तर्भावादिति न्यायपरिशुद्धौ तत्त्वमुक्ताकलापे च समर्थितमस्माभिः। वहिर्भावेपि तुल्यन्यायतया धर्मविषयत्वाभाव एव।

तदेवम् चोदनाव्यतिरिक्तैः प्रमाणैः कैश्चिदपि तन्निरपेक्षैश्चोद-नोक्तस्य तदन्यस्य तद्विरुद्धस्य वा कस्यचित् धर्मत्वेनाग्रहणात् चोदनैवे-त्यवधारणमुपपन्नमिति ।

(सौत्रपदजातसूचितार्थजातम्)

अनुष्ठातृदशापन्नपुरुषापेक्षया त्विदम् ।
सत्सम्प्रयोगजन्यत्वम् ; ऐशाध्यक्षादि सुस्थितम् ॥२८॥

---

1 असिद्धेरिति पञ्चमी। अनुपकारित्वादिति । सामान्यतः कल्पितस्येति शेषः।

सौत्रपदसूचितान् अर्थविशेषान् दर्शयन् आदौ नेदं सर्व-प्रत्यक्षलक्षणमित्याह अनुष्ठात्रिति । अस्य लक्षणपरत्वाभावा-देव न शुक्तिरजतप्रत्यक्षेऽतिव्याप्तिरुद्भाव्येत्याहुः । वस्तुतः तत्र रजतत्वेन सह संनिकर्षाभावात् न प्रत्यक्षप्रमालक्षणहानिः । तद्गतसंनिकर्षजन्यं चेत् तद्विषयकप्रत्यक्षप्रमेति । उपवर्षपाठोऽत्र

प्रत्यक्षमस्मदादीनां पक्षोऽत्राभिमतस्ततः ।
न भागासिद्धता नापि बाधो हेत्वोरिहोक्तयोः ॥ २९ ॥
पुरुषस्येन्द्रियाणामित्येकानेकत्वकीर्तनात् ।
देहेन्द्रियादिसंघातादन्य आत्मा प्रदर्शितः ॥ ३० ॥
अक्षैरपघनैर्वाऽर्थान् उपलब्धान् पृथक्पृथक् ।
य एकः प्रतिसन्धत्ते स [2]तान्येवेति दुर्वचम् ॥ ३१ ॥
संघातिनोऽधिकं तत्त्वं संघातो नाम नेष्यते ।
न चावयवसंघातादन्योऽस्त्यवयवी पुनः ॥ ३२ ॥
नचात्र ग्रामवद् बोद्धृनानात्वमुपलभ्यते ।
न च पाणिरहं चक्षुरहमित्यभिलप्यते ॥ ३३ ॥
प्राणाख्यात् पवनस्कन्धादप्यन्यत्वमवस्थितम् ।
प्रत्येकसमुदायादिविकल्पानुपपत्तितः ॥ ३४ ॥
व्यतिरिक्ता (क्त ?) मतिश्चास्ति कायप्राणेन्द्रियादिषु ।
पुरुषस्येति सम्बन्धकथनात् तच्च सूचितम् ॥ ३५ ॥

---

तत्सत्पक्षयोर्व्यत्यासेन । नभागेति । प्रत्यक्षसामान्यस्य पक्षत्वे संप्रयोगजत्व - विद्यमानैकविषयकत्वरूपहेत्वोरीश्वरादिप्रत्यक्षेऽभावात् भागासिद्धिः, अनिमित्तत्व - विद्यमानैकविषयकत्वरूपसाध्ययोस्तत्र बाधश्च स्याताम् । न तु अस्मदादिप्रत्यक्षमात्रस्य पक्षत्वे इत्यर्थः । अक्षैरिति गोलकाद्यतिरिक्तेन्द्रियपक्षे । गोलकादिशरीरावयवेन्द्रियपक्षे अपघनैरिति । कायप्रतीकाङ्गैरित्यर्थः । संघातिन इति । व्रीह्यादिराशाविव घटपटाद्यवयविस्थलेऽपि

2 तान्येव—इन्द्रियादीन्येव ।

बुद्धितो व्यतिरिक्तत्वमतएव च सूत्रितम् ।
तद्धर्मित्वेन सकलैः प्रमाणैरुपलम्भनात् ॥ ३६ ॥
बुद्धिजन्मेत्यनेनैव बुद्धेर्जन्मप्रदर्शनात् ।
अजातः प्रतिसन्धाता प्रोक्तः पुरुषशब्दतः ॥ ३७ ॥
श्रुत्या धीनित्यभावेपि सूचितैवात्र तद्भिदा ।
नामान्तराभिलापार्हविकारसदसत्त्वतः ॥ ३८ ॥
देहादिभ्योऽतिरिक्तस्य परलोकफलार्थिनः ।
वेदितुः स्थापने धर्मप्रमाणान्वेषणं क्षमम् ॥ ३९ ॥
अतोऽन्यपरवाक्येऽपि कृत्स्नशास्त्रोपयोगिनम् ।
अधिकारिणमात्मानमादावेव(वं?)न्यवीविशत् ॥ ४० ॥
स्वर्गयागादिवाक्येऽपि परीचिक्षिपिते पुनः ।
प्रत्यक्षप्रतिरुद्धत्वं परिहर्तुमिहेप्सितम् ॥ ४१ ॥
पारलौकिकतामात्रमिह तावदपेक्षितम् ।
शारीरके तु नित्यत्वं वाच्यं नित्यफलार्थिनः ॥ ४२ ॥
प्रत्यक्षलक्षणाद्यं तु वक्तव्यं न्यायविस्तरे ।

---

नातिरिक्तं द्रव्यमित्यर्थः । बुद्धिजन्मेति पदं न धर्मभूतज्ञाननित्यत्वबाधकमित्याह श्रुत्येति । अवस्थाविवक्षार्थमेव जन्मपदमधिकं प्रयुक्तमिति भावः । अन्यपरवाक्ये—प्रत्यक्षादेर्धर्मानिमित्तत्वार्थे वाक्ये । शारीरके आत्मनित्यत्वादिकथनमेकशास्त्रे पुनरुक्तमित्यत्र, परलोकगामित्वरूपस्थिरत्वमात्रमत्र विवक्षितमित्याह स्वर्गेति । न्यायविस्तरः लक्षणपरः । इदं तु अनुमानादाविव तदुपजीवि भवितुमर्हतीत्याह प्रत्यक्षेति ॥

**इह तत् सूच्यतां मा वा पारम्पर्योपयोगतः ॥ ४३ ॥**
**प्रत्यक्षमनिमित्तश्चेत् अनुमानादिकं तथा ।**
**इति पश्यन्नुपारंस्त किमेतत्कीर्तनश्रमात् ॥ ४४ ॥**

इति अन्यप्रमाणकत्वनिरासाधिकरणम् । 4.

5. अथ वेदप्रमाणकत्वाधिकरणम् ।

**सू—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्च अर्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ १-१-५**

धर्मस्यान्यप्रमाणकत्वं निराकृतम्, अथाप्रमाणकत्वमाशंक्य निराक्रियते पादशेषेण। तत्रास्मिन् अधिकरणे चोदनानामप्रामाण्यद्वाराणि बहूनि विकल्प्य कश्चिदंशो निराक्रियते । तदयं विचारः । किं चोदनानां धर्मे प्रामाण्यं सम्भवति न वेति ? तदर्थं च किं तासां प्रामाण्यं प्रमाणान्तरसापेक्षं न वेति ? सापेक्षत्वे तदभावस्योक्तत्वादप्रामाण्यम्, निरपेक्षत्वे तदभावस्याकिंचित्करत्वात् प्रामाण्यमिति ।

तत्रैवं पूर्वपक्षी मन्यते—यदि प्रमाणान्तराणि धर्मे न प्रमाणम्, कथं तत्र शब्दः प्रमाणं भविष्यति । स हि नियमेन स्वप्रामाण्ये प्रमाणान्तरसापेक्षः, तथा दर्शनात् । अन्यथा बालोन्मत्ताप्रबुद्धादिवाक्यानामपि प्रामाण्यप्रसंगात् । प्रमाणान्तरसापेक्षत्वाभ्युपगमे तदभावस्योक्तत्वात् कथं तदधीनं प्रमाण्यम् । निरपेक्षत्वाभ्युपगमस्तु दृष्टव्याप्तिविरोधादशक्यः । अतो धर्मे चोदनानां प्रामाण्यं न सम्भवतीति ।

---

अत्र मीमांसककृतः सर्वप्रमाणविचारविस्तरो व्यर्थ इति भावः। (4)

**राद्धान्तस्तु-असामर्थ्यादधीदृष्टे बाधनादफलत्वतः ।**
**परतन्त्रतया वा स्यादप्रामाण्यं श्रुतेर्न तत् ॥ ४५ ॥**

तथाहि—चोदनानामप्रामाण्यं वदतः, प्रमाणान्तरासम्भवे (1) पदानां पदार्थेन सम्बन्धायोगात् किं बोधनसामर्थ्यमेव न स्यादित्यभिप्रेतम्, (2) उत सामान्यतस्तत्सद्भावेपि प्रकृतार्थे चोदनावाक्यात् प्रत्ययो न जायत इति, (3) जातोऽपि बाध्यत इति, (4) अबाधितोपि वा निरर्थक इति, (5) सार्थत्वेपि वा प्रामाण्यहेतुरहित इति । तत्र प्रथमं दूषयति औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति । अयमर्थः-पदस्य स्ववाच्येन सह वाच्यवाच[1]कसम्बन्धः औत्पत्तिकः नित्यः । उत्पत्तिः स्वभावः, औत्पत्तिकः— स्वाभाविकः । अतः पदपदार्थयोर्वाच्य-

---

असामर्थ्यादिति । समर्थत्वं - संश्लिष्टार्थप्रतिपादकत्वम् । लोके अप्रामाण्यमसामर्थ्यादिपञ्चकमूलकं भवति । तत्र श्रुतेर्न भवतीत्यर्थः । कारिकार्थमेव विस्तरेणाह तथाहीति । निरर्थकः— निष्फलकः । प्रामाण्यहेतुरहित इति । प्रामाण्यकारणाभावात् प्रामाण्यं न जायते, न च ज्ञायत इत्यर्थः । अस्मिन् सूत्रे पञ्च वाक्यानि । पञ्चभिः पञ्च शंकाः परिह्रियन्ते । पञ्चमांशप्रधानं सूत्रम् । उत्पत्तिः—कञ्चित् कालमतिक्रम्य पत्तिः - प्राप्तः ; पूर्वकालासम्बद्ध-विशिष्टसत्त्वम् । तस्यार्थस्यात्रासंभवात् लक्षणया स्वभाव इति व्याख्यानं यथाशाबरम् । मीमांसकमते शब्दो नित्यः । जातेरेवार्थ-त्वात् अर्थोऽपि नित्य इति तदाशयः । अस्मन्मते शब्दार्थयोरनि-त्यत्वात् तदुभयोत्पत्तिप्रभृति संबन्धसत्त्वात् औत्पत्तिकत्वम् ; अ॰ दे

---

1 वाच्यवाचकेति-वाच्यवचनोपयोगीत्यर्थः ।

वाचकसम्बन्धस्यैव स्वाभाविकत्वान्न सम्बन्धान्तरविरहेणासमर्थत्वमित्यभिप्रायः। यद्वा—शब्दार्थयोरुत्पत्तिदशासिद्ध इत्यौत्पत्तिकः संबन्धः। न ह्यसावसंबन्धतयोत्पन्नयोः पश्चादीश्वरादिभिः संकेतान्निर्वर्त्यत इति **शब्दाधिकरणे** समर्थयिष्यते।

(2) द्वितीयं दूषयति **तस्य ज्ञानमुपदेश** इति। **तस्य** प्रत्यक्षाद्यगोचरस्य। **उपदेशः**—हिताहितप्राप्तिपरिहारोपायविषयश्चोदनात्मा[2] नित्यः परमात्मोपदेशो यः। ज्ञानं—ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानकरणमित्यर्थः। ज्योतिष्टोमादिवाक्यपाठे प्रत्ययोत्पत्तिर्दुरपह्नवा। अन्यथा प्रत्यक्षादिष्वपि धाष्ट्र्यात् प्रतिपत्त्यपह्नवप्रसंग इति।

---

न लक्षणेत्याशयेनाह यद्वेति। 'शब्द इति चेन्नातः प्रभवात्' इति ब्रह्मसूत्रोक्तरीत्या, 'स भूरिति व्याहरत् भुवमसृजत', 'नामरूपे व्याकरवाणि' इति तयोरुत्पत्तिकालत एव संबन्धः, न तु वधूवरयोरिव पश्चादिति भावः॥ अस्तु संबन्ध औत्पत्तिकः। अथापीश्वरेच्छारूपसंकेत एव संबन्धः लौकिकजनकल्पितसांकेतिकनामस्थल इव स्यात्; परं तदिच्छा नित्येति विशेष इति चेत्—उच्यते। ईश्वरेच्छा किमाकारिका। अस्माच्छब्दादयमर्थो बोद्धव्य इति बोध्यबोधकविषयिण्येव वक्तव्या। तद्घटकस्य बोध्यबोधकभावस्यैव संबन्धत्वसंभवे किं संकेतसंबन्धकल्पनेनेति। निरीश्वरपक्षसाधारण्येनैव व्यवहारस्य निर्वाह्यत्वादपि ईश्वरेच्छाघटनमयुक्तम्। किञ्च पदपदार्थसंबन्ध एवेश्वरेच्छारूपस्तार्किकेष्टः; न वाक्यवाक्यार्थसंबन्धः। अस्माभिस्तु तत्तदुत्पत्तिकालप्रभृति सत्त्वमुभयस्य संबन्धस्योच्यते। अन्विताभिधानपक्षे अन्विते शक्तिः, अभिहितान्वयपक्षे प्रत्येकमर्थे इति भेदः। अत्र सूत्रे प्रथमवाक्येन

तृतीयं दूषयति **अव्यतिरेकश्चेति** । प्रमाणान्तरेणास्यार्थस्य व्यतिरेकश्च नास्ति । व्यतिरेकः-अन्यत्वं प्रतीयमानादाकाराच्छुक्तिकारजतादिवद्विरुद्धाकारान्तरयोगित्वमित्यर्थः । यद्वा अव्यतिरेकश्चेत्युपदेशो विशेष्यते । व्यतिरेकः स्वार्थानन्वयः, प्रमाणान्तरेणापहृतविषयत्वम् । तद्रहित इत्यर्थः ।

तथाहि—प्रत्यक्षं तावत् ज्योतिष्टोमादीनां देहान्तरानुभाव्यस्वर्गादिश्रेयस्साधनत्वं नास्तीति न प्रतिपादयति, अलौकिके फले साध्यसाधनभावग्रहणवत् तदभावग्रहणस्याप्यशक्यत्वात् । नाप्यनुमानम् । तत् किम् साक्षाज्ज्योतिष्टोमादीनां श्रेयस्साधनत्वं प्रतिषेधति यथा—विगीतं न श्रेयस्साधनं क्रियात्वात् गमनक्रियावत् इति, विप्रतिपन्ना हिंसा न धर्मः हिंसात्वात् ब्राह्मणहिंसावदित्यादि । अथ वा-चोदनाप्रामाण्यप्रतिषेधद्वारेण ; यथा—विगीतं न प्रमाणं प्रत्यक्षाद्यवगतार्थवाक्यत्वात्

---

पदस्यान्विताभिधायकत्वाभावो वा पदार्थे शक्त्यभावो वा न भवतीत्युच्यते । द्वितीयवाक्येन तत्तद्वेदवाक्यस्य तत्तद्विवक्षितार्थावोधकत्वं नास्तीत्युच्यत इति विवेचनीयम् ।

तस्य ज्ञानमुपदेश इत्यस्य उपदेशभूतं सत् तस्य ज्ञापकमित्यर्थः । सामान्ये क्लीबनिर्देशः । निमित्तेति पूर्वसूत्रपदोपस्थितेश्च । उपदेशपदेन लौकिककार्यस्थलेऽपि आरोग्यकाम औषधं सेवेतेत्यादौ प्रेर्यपुरुषकर्तृक कर्मणा फलोपधानं भाव्येव, न तदातनम् । अतस्तत्काले तदभावमात्रेण न बाध इति सूच्यते । तस्येति न शब्दार्थसंबन्धस्येत्यर्थकम्; अनतिप्रयोजनकत्वात् ।

विप्रतिपन्ना हिंसेति वेदविहिताग्नीषोमीयादिहिंसेत्यर्थः ।

अवगतार्थेति । सत्त्वेन बाध्यत्वेन वाऽवगतार्थेत्यर्थः ।

बुद्धादिवाक्यवत्; आप्ताप्रणीतवाक्यत्वात् बालोन्मत्तादिवाक्यवदि-त्यादि। तत्र तावत् ज्यतिष्टोमादीनां लौकिकश्रेयोपेक्षया साधनत्वं निषिध्यते, अलौकिकापेक्षया वा, सामान्यतो वा? नाद्यः, सिद्धसाधन-त्वात्। न द्वितीयः; अलौकिकश्रेयस्सिद्ध्यसिद्धिभ्यां तत्साधनत्व-निषेधस्याशक्यत्वात्। न तृतीयः, भोजनक्रियादिभिरनैकान्त्यात्। यच्च हिंसात्वादधर्मत्वसाधनम्। तदपि न, अधर्मत्वस्य हि व्यापकस्य ग्रहणं धर्मतया कस्यचिद्ग्रहणमन्तरेण न घटते। तद्ग्रहणञ्च प्रागुक्त-रीत्या न चोदनातोऽन्यतःसिद्ध्यतीति व्याप्तिग्राहकप्रमाणबाधः। ततश्च चोदितत्वं धर्मत्वे प्रयोजकं पाप्मत्वे निषिद्धत्वमिति सोपाधिकता च।

(सांख्यसंमतसंकरनिरासः)

यत्तु सांख्यैरुच्यते—हिंसाविधिनिषेधयोर्नास्ति विरोधः, आल-म्भनवाक्यं हि हिंसायाः क्रतूपकारकत्वं बोधयति, निषेधवाक्यं तु हिंसायाः प्रत्यवायसाधनत्वम्। अतो वैधी हिंसा पुरुषस्य दोषमावक्ष्यति,

---

व्याप्तिग्राहकेति। अधर्मत्वप्रतियोगिधर्मत्वग्राहकेत्यपि बोध्यम्। विधिवाक्यात् धर्मत्वसिद्धिः कथमित्यत्र चोदितत्वमेव हि प्रयोजक-मिति प्रतिवदन् उपाधिमाह ततश्चेति। प्रकृतहिंसा अधर्मः हिंसा-त्वादित्यत्र निषिद्धत्वमुपाधिः। पक्षे विहिते निषिद्धत्वाभावात् साधनाव्यापकत्वम्। न हिंस्यादिति निषेधश्रुतेर्विहितव्यतिरिक्त-विषयकत्वात् निषिद्धत्वाभावात्। विहितव्यतिरिक्तविषयकत्वं कुत इति चेत्—मिथोविरोधात् विधिनिषेधयोरेकत्रायोगात्।

सांख्यास्तु अग्नीषोमीयहिंसाविधेः क्रत्वर्थत्वात्, हिंसानिषे-धस्य च पुरुषार्थत्वात् विधिनिषेधयोरिह विरोधो नास्तीति वदन्ति।

क्रतोश्चोपकरिष्यति। न च प्रत्यवायहेतोर्विधानानुपपत्तिः, दुःखस्पर्शस्य भेषजादेरिव प्रभूतसुखसाधनतया विध्युपपत्तेः। उक्तं च पंचशिखाचार्यैः—"स्वल्पः संकरः सुपरिहरः सप्रत्यवमर्षः(र्शः)।" इति। निषिद्धत्वं साधनव्यापकमिति—तदसत्, शास्त्रैकवेद्ये सुखे दुःखे च किं प्रभूतमिति नियामकाभावात्॥ विधिबलात् सुखाधिक्यं कल्प्यत इति चेत्—निषेधबलात् दुःखाधिक्यं किं न कल्प्येत॥ अल्पदुःखसाधनेपि सुखाधिक्यात् लोके विधिर्दृश्यत इति चेत्—अल्पसुखसाधनेऽपि दुःखाधिक्यान्निषेधोपि। अतो यावत् निषेधाविषयत्वं न साध्यते, न तावदयं विधिर्जीवति। तदविषयत्वं च

---

तन्मतरीत्या निषिद्धत्वं नोपाधिः; पक्षेऽपि तत्सत्त्वेन साधनव्यापकत्वादिति शंकामनुवदति सांख्यैस्त्विति। स्वल्प इति। अग्नीषोमीयाद्यनुष्ठाने पुण्येन स्वल्पपापसंबन्धोऽस्ति। स प्रायश्चित्तेन सुखं परिहर्तुं शक्यः। प्रायश्चित्ताकरणे तु प्राप्तस्य दुःखानुभवस्य प्रत्यवमर्षः सहनं कार्यमित्यर्थः। तदुक्तं सांख्यतत्त्वकौमुद्याम्, "मृष्यन्ते हि पुण्यसंभारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्" इति। अतः प्रत्यवमर्ष इति पदं पाठ्यम्। न तु प्रत्यवमर्श इति शकारान्तम्। प्रत्यवमर्शेति पदस्यैव प्रसिद्धत्वे, प्रत्यवमर्शः प्रतिसंधानं स्मरणम्, यागे स्वपीडितपश्वादिभिः परलोके पीड्यमानेन पूर्वस्वकृतपापप्रतिसंधानमिति तत्पूर्वकदुःखानुभवसहितमित्यर्थः स्यात्। दुःखाधिक्यान्निषेधोऽपीति। विधिगम्यं बलवदनिष्टाननुबन्धित्वम्, निषेधगम्यं बलवदनिष्टानुबन्धित्वम्। एकत्र द्वयोर्विरोधात् उत्सर्गापवादनयसञ्चार इति भावः। "अशुद्धमिति चेन्न शब्दात्" इत्यत्र

चिकित्सकशल्यादिप्रयोगन्यायेन यथाश्रुति हिंसालक्षणानाक्रान्तत्वाद्वा, तल्लक्षणयोगेऽपि, "अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः", इति संकोचाद्वा। अतो नास्य व्यापकत्वम्।

यच्च प्रमाणत्वप्रतिषेधायोक्तम्, प्रत्यक्षाद्यवगतार्थविषयवाक्यत्वात्, आप्तप्रणीतवाक्यत्वादिति—तदपि कारणदोषस्योपाधित्वान्निरस्तम्। न हि बुद्धादेरुन्मत्तादेर्वा वाक्यं दोषमन्तरेणान्यतः कुतश्चिदप्रमाणं जातम्; स्वभावाद्वा। 'न चात्र कारणदोषः' इति वक्ष्यते। अतः ईदृशानि अनुमानानि असन्दिग्धाविपर्यस्तज्ञानजनकेन अनेनैवागमेन बाधमर्हन्ति, न तु तैस्तद्बाधः; अन्यथा प्रत्यक्षस्यापि कैश्चिदाभासैर्बाधमसङ्गात्॥

---

अस्मत्कृतभाष्यार्थदर्पणो द्रष्टव्यः। अग्नीषोमीयादौ हिंसात्वमेव नास्तीति श्रीभाष्यकृदाहृतं पक्षमाह चिकित्सकेति। यथाश्रुतीति। स यदि मातरं पितरं वोपक्रोशेत् मातृहा पितृहेत्याहुरिति उपक्रोशकारिण्यपि हन्तेति प्रयोगात् वेदनाजनकव्यापारो हिंसा। बलवदिष्टोदर्कस्तु स व्यापारो हिंसा न भवति; शस्त्रचिकित्सादौ तदप्रयोगात्। अतोऽतिशयितसुखानुदर्कवेदनाहेतुव्यापार एव हिंसा। अग्नीषोमीयपश्वादेस्तु स्वर्गभाक्त्वात् न हिंस्यत्वमिति। अन्ये तु मरणानुकूलव्यापार एव हिंसा, उपक्रोशकारिणि तत्प्रयोग औपचारिक इति मन्यन्ते। तन्मते न हिंस्यादिति विहितव्यतिरिक्तविषयकम्, यथा न सुरां पिबेदिति, सौत्रामण्यां विहितसुरापानातिरिक्तविषयम्, तथेति। अत उत्सर्गापवादन्यायस्याऽऽवश्यकत्वान्नापि संचार इति। सर्वथा निषिद्धत्वस्याग्नीषोमीयादावभावात् साधनाव्यापकत्वमस्तीति हिंसात्वरूपहेतुः सोपाधिक इत्युक्तं भवति। असंदिग्धाविपर्यस्तज्ञानेति। संदेहविपर्ययानात्मकज्ञानेत्यर्थः।

अस्त्वेम् ; तथापि योगाचारमाध्यमिकादिभिरभ्युपगम्यते । एवमपि चोदनानां न प्रामाण्यं सिद्ध्यतीति चेत्—तदपि न ; बाह्यविषयप्रतीत्युदयस्य स्वारसिकबाधाभावस्य च दुरपह्नवत्वात् । स्तम्भादिप्रत्ययो निरालम्बनः, प्रत्ययत्वात्, स्वप्नादिप्रत्ययवत् इत्यादीनां स्ववचनविरोध-बाध - अनैकान्त्य - सोपाधिकत्व - साध्यविकलत्व-वादानधिकारप्रसंगादिभिर्निर्मूलत्वात् । तदेतत् अविरोधलक्षणे तर्कपादे प्रपञ्चयिष्यते । न्यायविस्तरे प्रत्यक्षादेरागमस्य च प्रामाण्यसिद्धेरिहोदास्महे ।

एवमागमेनापि न चोदनानां बाधः ; बौद्धाद्यागमानां सहेतुकपरिग्रहाणां सम्भवद्वक्तृदोषाणां चोदनाभिः स्पर्धितुमशक्तेः । चोदनामूलानां तु मन्वाद्यागमानां तदविरोधात् । विरुद्धांशे च दुर्बलतया तत एव बाधात् । स्मृत्यागमयोस्तु कार्यविषययोर्मीमांसाविरोधे(?) (सकृत्सम्मितत्वे) विकल्पात् । तत्त्वविषययोस्तु तात्पर्यभेदेन निर्वाहात् ।

---

प्रत्यक्षमपि विपर्ययात्मकमेवेति बौद्धपक्षेण शंकते अस्त्वेवमिति । तथापीति । ज्ञानसामान्यं विपर्ययात्मकमिति पक्षोऽप्यस्तीत्यर्थः । स्ववचनविरोधेति । स्तम्भाद्यलंबनत्व—निरालंबनत्वयोर्विरोधः । बाध्यमानत्वमुपाधिः । दृष्टान्ते निरालम्बनत्व वैकल्यम् । अविरोधलक्षणे—शारीरकद्वितीयाध्याये । विरुद्धांश इत्युक्तम् ; तत्र विशेषमाह स्मृत्यागमयोरिति । तयोः कार्यविषयकत्वं वा, तत्त्वविषयकत्वं वा । आद्ये, क्रियाविकल्पस्य श्रुतिभेदेन स्मृभेदेन च तत्रतत्र दर्शनात् प्रत्यक्षश्रुतिविरुद्धक्रियापर-स्मृतिमूलभूतश्रुतेरपि संभावितत्वात् विकल्प एव । परं विकल्पितस्थले यथारुचि अनुष्ठानात् प्रत्यक्षश्रुतमेव रोचयन्त इत्यन्यदेतत् । मीमांसा-

एवमौपनिषदसर्वज्ञानुभवमूलागमस्यापि श्रुत्यैकार्थ्यस्थापनात् । प्रमाणान्तरैस्तु सद्भिरपि तुल्यन्यायतया न बाधः । असद्भिस्तु नतराम् । तदेवमव्यतिरेकः सिद्धः ।

(4) चतुर्थं दूषयति **अर्थेऽनुपलब्धे तत् प्रमाण**मिति । श्रेयस्साधनतया प्रत्यक्षादिभिः प्रागुक्तन्यायेनानुपलब्धे **अर्थे**-धर्मे । तदिति प्रमाणशब्दानुसारेण नपुंसकनिर्देशः । **ज्ञान**शब्दनिर्दिष्टं शास्त्रं वा परामृश्यते । तदेवं तव प्रमाणान्तरज्ञातविषयत्वाधीनं नैष्फल्यं नास्तीत्यभिप्रायः । **अर्थेऽनुपलब्धे** इत्येतावतैव वा प्रकृतपरिहारः ।

(5) पञ्चमं दूषयति **अनपेक्षत्वा**दिति । अयमभिप्रायः-व्युत्पत्त्या हि शब्दानां बोधकत्वं गृह्यते । न च प्रमाणान्तरदृष्टत्वमपि वाच्यतया व्युत्पत्तिसिद्धम्, येन तदपेक्षा स्यात् । न च प्रमाणान्तरमेतज्ज्ञसयुत्पत्त्योः कारणमिति । अत्रैवाधिकरणस्य निर्भरः । शिष्टं तु पूर्वोत्तराधिकरणैस्सामान्यतो न्यायविस्तरेण च सिद्धं प्रतिपत्तिसौकर्यायोपस्थापितमिति मन्तव्यम् ।

---

**विरोधे इति । मीमांसनेन विरुद्धार्थकत्वे सिद्धे इत्यर्थः । तात्पर्यभेदेनेति । लक्षणया स्मृतिनयनमिति भावः । नचैवं कार्यस्थले । 'न विधौ परः शब्दार्थः इति न्यायात् लाक्षणिकार्थादृष्टोत्पत्तेरनिश्चयत्वात् । तुल्यन्यायतयेति । अविरोधादित्यर्थः । दृष्टत्वमपीति । यथा प्रकृतपरामर्शितच्छब्दादौ प्रकृतत्वादिकमुपलक्षणीकृत्य व्युत्पत्तिः शिक्ष्यते, तथा सर्वेषां शब्दानां प्रमाणान्तरदृष्टत्वमुपलक्षणतयाऽपि न कश्चित् व्युत्पादयतीत्यर्थः ।**

(प्रामाण्यपरतस्त्वशंका)

नन्वत्र प्रमाणान्तरानपेक्षत्वं प्रामाण्यस्यासिद्धम्। तद्धि लोके कारणगुणादेव जायते, संवाद-कारण-गुण-अर्थक्रियाज्ञानैश्च ज्ञायते। अत उत्पत्तिज्ञप्त्योः पराधीनं प्रामाण्यम्। नित्ये तु वेदे कर्तृगुणस्तावत् नेष्टः। प्रमाणान्तरागोचरार्थविषयतया च न संवादः। न च—कालान्तरभाविस्वर्गादिसाधनेष्वर्थक्रियाज्ञानम्। न च कारीर्यादिदृष्टान्तेन आश्वासः, तेष्वपि फलनियमादर्शनात्॥ कर्मकर्तृसाधनवैगुण्यात् कदाचित्फलानुत्पत्तिरिति चेत्—को जानाति फलोत्पत्तिर्यदृच्छया वा; फलानुत्पत्तिर्वैगुण्याद्वेति। किं च—चित्रादीनामवहितैरनुष्ठितानामपि मर्दनादिजन्यसुखवत् समनन्तरमेव न पश्वादिकं फलं पश्यामः। न च चित्रादिफलं कालान्तरेऽपि सम्भवतीति वाच्यम्, लोके क्रियाफलस्यानन्तरभावित्वनियमदर्शनात्। नापि राजसेवादिवत् आराध्यदेवताप्रीत्यादिद्वारा कालान्तरे फलं भविष्यतीति वाच्यम्; तथात्वस्य शास्त्रप्रामाण्यसमर्थनात् पूर्वं वक्तुमशक्यत्वात्। पश्वादीनां च दृष्टफलानां तदानीमेव सम्भावितानां साधनत्वेन चोदिताश्चित्रादयः, शास्त्रार्थनिश्चयदशायामेव देवताप्रीत्याद्यपूर्वप्रणाडीसमाश्रयणे कराणाभावात् स्वरूपेणैव साधनतया शास्त्रेण समर्प्यन्त इति निश्चीयते। यच्च कालान्तरे

---

अर्थक्रिया - कार्यनिष्पत्तिः; सफलप्रवृत्तिकत्वम्। कर्मेति। न्यायदर्शने पुत्रेष्ट्यादेः फलं क्वचिन्न भवतीति शास्त्राप्रामाण्यं 'न कर्मकर्तृसाधनवैगुण्यात्' इत्युक्तम्। कर्मवैगुण्यम्, कतिपयांगलोपात्, कर्तृवैगुण्यमनधिकारात्, साधनवैगुण्यं द्रव्यस्य शास्त्रविहितरूपत्वाभावादिति।

पश्चादिफलं जायते, तत्र प्रतिग्रहादिदृष्टकारणदर्शने कथं चित्रादि-साध्यत्वम् अध्यवस्येम । अतो दृष्टफलार्थचोदनानां विसंवादे स्वर्गादि-फलार्थचोदनास्वपि सुगमम् (सुतराम् ?) । न केवलं चित्रादिष्वर्थक्रिया-विरहमात्रात् तुल्यन्यायता, अपितु, "स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति" इत्याद्यर्थवादपर्यालोचनया विरुद्धार्थक्रियैवोपलभ्यते । "स एष यज्ञायुधी यजमान" इति यज्ञायुधसंयोगि शरीरमेव ह्युच्यते ; न त्वात्मा । न च धर्मं निष्प्रमाणमातिष्ठमानैः कार्यकारणसंङ्घातातिरिक्तः कश्चिदात्मा अभ्युपगम्यते ; यद्यपि यजमानशब्दश्चेतनपर्यन्तः—तथा-ऽप्यत्र, "रावणो निहतः शेते" इत्यादाविव तत्पर्यन्तत्वासम्भवात् शरीरमात्रवचनः । न ह्यत्रात्मनि यज्ञायुधसंयोगः । न च तत्स्वामित्वमात्रं विवक्षितम्, पात्रचयनस्तुत्यर्थत्वात् वाक्यस्य । न हि प्रागपि सिद्धेन स्वामित्वेन पात्रचयनं स्तुतं भवति । अतः संयोगवचन एवायं यज्ञा-युधिशब्दः । स च संयोगः शरीरस्थ एव । तच्च शरीरं तदानीं न स्वर्गं गच्छत् पश्यामः । न च पश्चाद्वा गमिष्यति, तद्विरुद्धभस्मसाद्भावदर्श-नात् । यास्यतीत्यनिर्देशाच्च । अतो न केवलं चोदनानां संवादाभावमात्रम्, योग्यत्वे सति अनुपलम्भात् विपरीतोपलम्भाच्च विसंवाद एव इति अपौरुषेयीणां चित्रादिचोदनानामप्रामाण्ये तुल्यन्यायतया स्वर्गाद्यलौ-

---

यज्ञायुधीति । आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चेति यज्ञसाधनपात्राणां मृताग्निहोत्रिशरीरे चयनं दाहात् प्राक् क्रियते । तत्र शरीरे पात्रसंयुक्ते यज्ञायुधीति प्रयोगः। अत एव चित्रगुरितिवत् न स्वामित्वपरः । चयनात् प्रागपि तत्सत्त्वात् । अत एव यज्ञरूप-मायुधं स्वर्गसाधनं तद्वानिति मीमांसकव्याख्यानमप्ययुक्तम् ।

किकफलसाधनचोदनास्वप्यनाश्वासः। अतः प्रामाण्यस्योत्पत्तौ ज्ञप्तौ च कारणाभावात् विपरीतदर्शनाच्च कथं चोदनाः प्रमाणं भवेयुरिति।

अत्राप्युत्तरं **अनपेक्षत्वादि**ति। प्रामाण्योत्पत्तिज्ञप्त्योर्न परापेक्षा।

इह तावत् प्रामाण्यमप्रामाण्यं चेत्युभयं स्वत इति **सांख्याः**। उभयं परत इति **वैशेषिकादयः**। अप्रामाण्यं स्वतः, प्रामाण्यं परत इति **बौद्धाः**। तद्विपर्ययेण **मीमांसका** इति चत्वारः पक्षाः।

(सांख्यमतनिरासः)

तत्र उभयं स्वत इति पक्षस्तावन्न सम्भवति, विरोधात्। न हि विरुद्धमुभयम् एकस्य स्वभावस्स्यात्। तथासति प्रमाणाप्रमाणविभागो न स्यात्। अथ विज्ञानभेदेन प्रमाणाप्रमाणव्यवस्थेति ब्रूयात्, तदा कस्यां विज्ञानव्यक्तौ प्रामाण्यम्, कस्याञ्च इतरदिति दुर्निरूपम्; ज्ञानस्वभावव्यतिरिक्तस्यान्यस्य नियामकस्याभावात्। भावे वा पराधीनत्वप्रसक्तेः॥ स्वतोऽसतः कथं साध्यत्वमिति चेत्—स्वतस्सतो वा कथम्? सत्त्वमेव हि साध्यत्वविरुद्धम्॥ अभिव्यक्तिमात्रं तत्रेति चेत्?

---

इह तावदिति। 'मात्वामात्वे स्वतः सांख्याः परतस्तार्किका उभे। अप्रामाण्यं स्वतो बौद्धाः प्रामाण्यं तान्त्रिकाः स्वतः॥' इति नस्संग्रहश्लोकः। प्रामाण्यं प्रमात्वम्। विज्ञानभेदेन—तत्तद्विज्ञानव्यक्तिभेदेन। पराधीनत्वेति। स्वस्योभयसाधारणतया नियामकभेदप्रयुक्तमेव क्वचित् प्रामाण्यमन्यत्राप्रामाण्यञ्चेति परतस्त्वपक्ष एव प्राप्त इत्यर्थः। ननु पूर्वं व्यक्तिभेदेन स्वस्मिन् स्थितस्यैव मानत्वादेः परतोऽपि साध्यत्वात् स्वत इत्युक्तमिति शंकामनुवदति स्वतोऽसत इति। स्वत इति। साध्यत्वोक्तौ असत्त्वमपि स्वीकर्तव्यमिति भावः। अभिव्यक्तीति। सत्कार्यवादित्वात् सांख्यानां साध्यत इत्यत्र सिद्धिः

साऽप्यभिव्यक्तिः स्वतस्सती चेत्-न साध्या। असती चेत्-काऽन्यत्र वस्सती। असतः शशविषाणादेः साध्यत्वं न दृष्टमिति चेत्-सतो वाऽऽत्मनः किं दृष्टम्। अतः पूर्वमसत एव मृदादिषु घटत्वपटत्वाद्यवस्थाविशेषस्य दण्डचक्रादिभिः साध्यत्वंदर्शनात्, दृष्टे चानुपपत्त्यभावात्, अन्यथा स्ववचनविरोधादिदोषप्रसंगात्, प्रागसतां केषाञ्चित् द्रव्यावस्थाविशेषाणां हेतुवशात् पश्चात्सत्तेति दुष्परित्यजोऽयमर्थः। सांख्यवैशेषिकाभिहितौ सदसत्कार्यवादौ आरम्भणाधिकरणादिषु विस्तरेण निराकरिष्येते।

(तार्किकनिरासः। आदौ प्रमाण्यस्योत्पत्तौ परतस्त्वनिरासः)

अस्तु तर्ह्युभयं परतः; द्वयोरपि कारणगुणदोषान्वयव्यतिरेकानुविधानदर्शनात्; तथा च प्रयोगः—(न्या-कु--2स्त) विगीता प्रमा सम्यङ्मिथ्यावबोधसाधारणकारणात् अतिरिक्तसहिताज्जायते, कार्यत्वे

---

उत्पत्तिर्न भवति, किंत्वभिव्यक्तिरित्याशयः। अभिव्यक्तिरुत्पद्यते व्यज्यते वेति विचारे सत्कार्यवादाविरोधाय अभिव्यक्तिरप्यस्त्येव प्रागिति वक्तव्यम्। तदा कारकव्यापारवैयर्थ्यम्। अतोऽसती चेत्-प्रामाण्याभि व्यक्तिरेवासतीति किम्। घटादि सर्वपदार्थाभिव्यक्तिरप्यसत्येव। तथाच सत्कार्यवादविरोध इत्यर्थः। सांख्यवैशेषिकेति। द्रव्यं सदेवाभिव्यज्यत इति सांख्याः। असदेव नवनवं द्रव्यमुत्पद्यते इति वैशेषिकाः। द्रव्यमेकमेव। तत् सत्, असतीरवस्था भवत इति वेदान्तिनः।

एवं व्यक्तिभेदेन प्रमात्वाप्रमात्वनियामकान्तरान्वेषणात् परत इति तार्किकपक्षोत्थानम्। उदयनाचार्यसंमतमनुमानं दर्शयति विगीतेति। ईश्वरप्रमायामनैकान्त्यवारणाय कार्यत्वेसतीति दलम्। नित्यत्वात् तत्र न कार्यत्वघटितहेतुरिति।

सति तद्विशेषत्वात्, अप्रमावत् । यदि ज्ञानकारणादेव प्रमा स्यात्, अप्रमाऽपि प्रमैव भवेदिति ॥ तदप्यसत् । कार्यत्वे इति विशेषणं प्रयुञ्जानेन ईश्वरज्ञानस्य प्रमात्वमभ्युपगतम् । तच्च तस्य स्वाभाविकम् । अन्यथा कथमप्रमात्वं तस्य न स्यात् ॥ दुष्टकारणप्रसूतत्वाभावादिति चेत्—तर्हि गुणवत्कारणप्रसूतत्वाभावात् प्रमात्वमपि न स्यात् ॥ उभयपरित्यागे–'परस्परविरोधे हि न प्रकारान्तरस्थितिः' इति(न्या-कु-३) न्यायेन निस्स्वभावत्वप्रसंग इति चेत्—तद्विरुद्धोभयपरिग्रहे वा किंस्वभावस्स्यात् । किं विशेषाभावे सति अन्यतरस्वभावपरिग्रहः शक्यः॥ धर्मिग्राहकात् तस्य नित्यस्य प्रमात्वेनैव सिद्धिरिति चेत्—तर्हि सिद्धं तस्य स्वाभाविकं प्रमात्वम् । ततश्च तद्दृष्टान्तेनेतरास्वपि प्रमात्वं स्वाभाविकमनुमीयताम् । अतस्सप्रतिसाधनस्तद्धेतुः । एतेन—प्रमा सम्यङ्मिथ्या[त्वा] ववोधसाधारणकारणातिरिक्तजन्या, कार्यत्वात्, घटवदिति प्रयुञ्जानोऽपि प्रत्याख्यायि । सेश्वरस्य सर्वप्रमापक्षीकारेण प्रयोगे भागासिद्धेः । विगीतत्वेन विशेषणे, प्रत्यनुमानादेर्दुर्वारत्वात् । एवं निरीश्वरस्यापि मुक्तधीपक्षीकार—वहिष्कारयोरुक्तदोषानतिवृत्तिः । विपक्षेबाधकसदसद्भावाभ्यां विशेषः ।

---

विशेषाभावे—एकतरपरिग्रहनियामकाभावे । धर्मिग्राहकादिति—सर्वजगत्कर्तृतयेश्वरसाधकादनुमानादित्यर्थः । न हि भ्रान्तो जगत् कर्तुं प्रभवेदिति भावः । सप्रतिसाधनः—सत्प्रतिपक्षितः । प्रत्याख्यायि—निराकृतः । सेश्वरस्य-ईश्वरांगीकारिपक्षे । उक्तदोषेति । यथासंख्यं भागासिद्धि—प्रत्यनुमानेत्यर्थः । उभयोर्मिथस्सत्प्रतिपक्षितत्वेऽपि स्वपक्षे बलमाह विपक्ष इति ।

यत्तु—तावन्मात्राधीनत्वाभावस्योभयसम्मतत्वात् अप्रामाण्य-स्वतस्त्वस्य च त्वयापि निरासात्, तावत एव निमित्तान्तरसम्भेदेन विजातीयारम्भकत्वस्यात्रापि सिद्धिरिति—तत् निमित्तान्तरानिर्वचनादयुक्तम्। अप्रामाण्यनिमित्ताभावो निमित्तमस्त्विति चेन्न—कार्यान्तर-हेत्वभावस्य कार्यान्तरेण हेतुतयाऽपेक्षणेऽतिप्रसंगात्। व्यभिचारा-दर्शनात् तद्धेतुत्वाभ्युपगमेऽपि चोदनाजनितबुद्धौ कारणदोषाभावमात्रेण प्रमात्वस्य दुस्त्यजत्वात्। कारणगुणनिरपेक्ष तत्प्रामाण्यसमर्थनार्थो ह्ययं संरम्भः॥ दोषाभावोऽपि भावान्तरं भवतः, अभावाभाववत् अभावान्तराणमपि विरोधिभावान्तरमात्रत्वस्वीकारादिति चेत्-सत्यम्; तथापि कारणदोषाभावस्य कारणगुणैकरूपत्वायुक्तेः अवक्तृकेषि वेदे दोषाभावः सिद्धः। यथा कारणाभावदशायां कारणदोषाभावे कारण-गुणस्याप्यभावो गुणव्यतिरिक्त भावान्तरात्मा, न पुनः कारणदोषात्मा। श्रद्धेयं चैतत् नित्यप्रमायामिति॥ चार्वाकादेः प्रकृतप्रयोगे का वार्तेति चेत्—एषैव, विपक्षे बाधकाभावादिमयी।

(स्वतः प्रामाण्यं तर्कग्रन्थेऽपि)

किञ्च भवत्पक्षपक्षपातिना **वाचस्पतिना न्यायवार्तिकतात्पर्य-टीकादिषु** प्रामाण्यस्थापकानुमाने स्वपरनिर्वाहकसमाधिस्वीकारात् स्वतः प्रामाण्यमाश्रितम्। तच्च "वाचस्पतेर्वचसि नः खलतो यथैते"

---

अतिप्रसंगादिति। नहि घटं प्रति शरावहेत्वभावोहेतुः। चार्वाकेति। ईश्वरानंगिकारितत्पक्षे कार्यत्वे सतीतिहेतुविशेषणं न देयम्। अत एव भवता ईश्वरज्ञानदृष्टान्तीकरणेन गुणनिरपेक्षत्वशंका न कर्तुं शक्येति भावः। अभावादीति। अप्रयोजको हेतुः। दोषाभावेनैव सिद्धसाध-

इति वदता **तात्पर्यशुद्धिकारेणापि** स्वीकार्यम्, गत्यन्तराभावात्। स्वपरनिर्वाहगतेः सर्वविद्वत्परिगृहीतत्वाच्च। अन्यथा प्रमाणलक्षणतर्कादिव्यवहाराणां कर्कशवृत्तित्वेन विश्वापलापप्रसंगादिति। तेन कारण-दोषाभावादे**र्विना** प्रामाण्य(दोषाभावादेव नाप्रामाण्य ?)मिति भवताप्यंगीकार्यम् ॥ तर्हि गुणान्वयव्यतिरेकौ कथमिति चेन्न—दोष-निराकरणार्थत्वात्। यथा नित्ये कारणाभावाद्दोषनिरासः, तथा कारणगुणादप्यनित्ये तन्निरास एव, अनुवृत्तस्य दोषाभावस्यैव प्रामाण्य-प्रयोजकत्वदृष्टेः, अन्यथासिद्धसन्निधेश्च हेतुत्वायोगात्। अत एव न विपरिवर्तप्रसंगः शक्यः।

ननु स्वर्गयागादिसाध्यसाधनभावप्रमा न नित्या जन्यत्वात्। अतस्तत्र दोषनिराकरणाय गुणापेक्षेति चेन्न;–अवक्तृकत्वेनैव वक्तृदोष-निवृत्तेः, तदतिरिक्तस्य गुणनिराकरणीयस्य दोषस्यात्रासम्भवात्। अवक्तृकत्वस्य च वक्ष्यमाणत्वात्। ईश्वरस्येव जीवानामपि नित्यं ज्ञानं स्वतश्च सर्वविषयम्, प्रमात्मकं च तत्तत्कर्मादिदोषवशात् संकुचितविषयम्, संशयविपर्ययाद्यवस्थायोगि च भवति, सर्वत्र दोषनिवृत्तौ तु स्वाभाविकेन सर्वविषयप्रमात्वेनावतिष्ठत इत्यौपनिषदोऽयं घण्टापथः। अतोऽन्यथा-सिद्धान्वयव्यतिरेकाणां गुणानां न प्रामण्यं प्रति कारणत्वम्। यथा

---

नञ्चेत्यर्थः। तात्पर्यशुद्धिकारः उदयनः। तेन तद्ग्रन्थारम्भे तात्पर्यटीकाव्याख्यातुः स्वस्य मनोवाक्स्खालित्याभावः वाचस्पतौ विशेष-बहुमानात् सरस्वतीसकाशात् प्रार्थ्यत इति तावद्भक्तिकेन वाचस्पत्युक्तं स्वपरनिर्वाहकत्वं दुस्त्यजम्। अन्यथा व्याख्यास्खालित्यं स्यादिति भावः। दोषाभावादेर्विना प्रामाण्यमिति। दोषाभावाद्य-

प्राक्जावयविनि रसस्योत्पत्तौ अन्वयव्यतिरेकवतोऽप्यवयवरूपस्याकारणत्वं युष्माभिरेवोक्तमिति ।

भवतु वाऽत्र गुणधीनं प्रमाण्यम् । वेदे तु न स्यात् । यथा हीश्वरज्ञाने कारणाभावात् प्रामाण्यस्य न कारणगुणापेक्षा, एवं वेदेपि वक्तुरभावादेव वक्तृगुणानपेक्षा स्यात् । तावतैव वक्तृदोषनिवृत्तेः । इन्द्रियादिगत काचादिवत् शब्दस्वरूपगतदोषासम्भवाच्च ॥ तथापि दोषाभावो गुण एवेति गुणाधीना प्रामाण्यसिद्धिरिति (न्या-कु. 2.स्त.) चेत्, किमतः ? न ह्येतावता वेदस्याप्रामाण्यं स्यात् । प्रामाण्यार्थश्चेदानीं विवादः । गुणाभावोऽपि दोष एव स्यादिति नित्यप्रमा अप्रमैव स्यात् । अहेतोरपि, गुणनित्यत्वस्याश्रयनित्यतावत् नियामकत्वोपपत्तिरिति ।

(बौद्धमतस्याप्रामाण्यस्वतस्त्वस्य निरासः)

अतएवाप्रामाण्यं स्वत इति पक्षोपि निरस्तः ॥ अवस्तुत्वाद प्रामाण्यं न हेतुसाध्यमिति स्वाभाविकत्वमिति चेन्न;–अवस्तुत्वमिति किं अभावत्वमभिप्रेतम् उत तुच्छत्वम् ? नाद्यः, प्रध्वंसे व्यभिचारात् । अहेतुकविनाशस्य च तर्कपादे परिहरिष्यमाणत्वात् । न द्वितीयः, असिद्धेः ।

---

भावे भवत्यप्रामाण्यमित्यर्थः । एवं वेदेऽपीति । जीवतारतम्यस्य कर्माधीनत्वे स्थिते, आगमान्तराणां सादितया कर्मप्रामाणत्वे सिद्धे, तदर्थतया स्वीक्रियमाणः प्रमाणत्वेनैव स्वीकार्य इति तत्र दोषाभावमात्रं पर्याप्तमिति भावः ।

एवं गुणानपेक्षत्वसाधनात् दोषाभावविशिष्टज्ञानसामग्रया ज्ञाने प्रामाण्यमुत्पाद्यत इति स्थापितम् । अथ बौद्धोक्तमप्रामाण्यस्य स्वतस्त्वं निरस्यति अत एवेति । अप्रमायाः दोषरूपकारणानु-

न ह्यप्रामाण्यमप्रमाणे तुच्छम् अपितु प्रामाण्यम्; यन्निष्ठाभावप्रतियोगी यः स तत्र तुच्छ इति तत्त्वम्। निरुपाधिनिषेधश्च तत्रैव परिहरिष्यते। वेदादुत्पन्ने च ज्ञाने निश्चयात्मके च दृश्यमाने विपर्ययत्वसाधनार्थं हि स्वतोप्रामाण्यं सिसाधयिषसि। न च विपर्ययत्वमवस्तु, अयथार्थप्रकाशनरूपत्वात् तस्य। न च यथावत्प्रकाशनाभावो विपर्ययत्वम्; घटादिषु तत्प्रयोगाभावात्, घटज्ञानस्य च पटं प्रति विपर्ययत्वापाताच्च। अतो विपर्ययत्वसंशयत्वयोर्भावत्वेन अहेतुसाध्यत्वं त्वयापि वक्तुं न शक्यम्। ज्ञानोत्पादनशक्त्यभावस्तु तददर्शनादेव निरस्त इति तस्याहेतुसाध्यत्वेपि नात्र विरोधः। **तस्यज्ञानमुपदेश** इति ह्युक्तम्। किंच संविदां स्वात्माकारे स्वाभाविकं प्रमात्वं तैरेवाभ्युपगम्यते, न हि तत् अधिपतिसहकार्यालम्बनादिकारणगुणेन जन्यते, तद्दोषेण वाऽपोद्यत इति ब्रुवते। अत एव ह्यपवर्गदशायां स्वात्ममात्राभासशुद्धसंवित्सन्तानानुवृत्तिरिष्यते॥

---

विधानदर्शनादेवेत्यर्थः। अभावत्वं—किञ्चित्प्रतियोगिकाभावरूपत्वम्। तुच्छत्वम् अभावप्रतियोगित्वम्। तत्रैव—शारीरके तर्कपादे एव माध्यमिकनिराकरणावसरे। हेत्वसाध्यत्वेन भवदिष्टम् अप्रामाण्यमिदं विपर्ययत्वं वा संशयत्वं वा यथावत्प्रकाशनाभावो वेति विकल्प्य दूषयति वेदादित्यादिना। बौद्धमते अपसिद्धान्तदोषमप्याह किञ्चेति। अधिपतीति। अधिपतिः इन्द्रियम्। सहकारि आलोकादि। आलम्बनं विषयः। आदिना समनन्तरप्रत्ययापरपर्याय—अव्यवहितपूर्वज्ञानपरिग्रहः। इमे चत्वारो हेतवः प्रत्यक्षं प्रति तदुक्ताः। सर्वं ज्ञानं स्वस्वरूपे प्रमाणमेव, विषयांशे तु अप्रामाण्यविचारः।

समनन्तरप्रत्ययगुणात् तत्सिद्धिरिति चेन्न ;-स्वरूपातिरिक्तगुणानभ्युपगमात्। स्वरूपस्य च कारणमात्रत्वात्। उक्तञ्च बौद्धैरेव, "अनुपप्लवभूतार्थस्वभावस्य विपर्ययैः। न बाधो यत्नवत्त्वेपि बुद्धेस्तत्पक्षपाततः" इति। अतोऽप्रामाण्यं स्वत इति न तैरभ्युपगन्तुं शक्यम्। अतः पक्षान्तरासम्भवात् परिशेषात् प्रामाण्यं स्वत इति सिद्ध्यति।

(स्वपक्षे उपपत्यतिशयः)

किंच यस्य य आकारः प्रचुरतयोपलभ्यते, स तस्य स्वभावः। यस्तु तद्विरुद्धः काचित्कः स त्वौपाधिक इति सार्वलौकिकः पक्षः। यथा मल्लिकापुष्पादेः वैशद्यादिकं स्वभावः, किंशुकसंसर्गविशेषाद्युपाधिना तु रागादिकमिति। एवमिहापि ज्ञानानां प्रचुरं प्रमात्वं स्वभावः, इतरत्तु औपाधिकमिति युक्तम्। प्राचुर्यञ्च प्रमात्वस्याप्रमास्वप्यधिष्ठानाद्यंशे याथार्थ्यदर्शनेन सिद्धम्। निरधिष्ठानभ्रमाद्यसम्भवस्तु **तर्कपादे** वक्ष्यते। अतः प्रामाण्यस्य कारणगुणानपेक्षत्वादपौरुषये वेदे प्रमाजननाय वक्तृगुणापेक्षा नास्तीति सिद्धम्।

---

अनुपप्लवेति। निरुपप्लवा क्षणिकचित्सन्ततिर्मुक्तिरिति तन्मतम्। विषयावगाहनमुपप्लवः। भूतार्थस्वभावस्य यथावस्थितज्ञानतत्त्वस्य। विपर्ययैः-विपरीतज्ञानैर्विषयबाध एव क्रियेत। न ज्ञानस्वरूपनिषेधः। तत्पक्षपातत इति। सर्वस्या अपि बुद्धेर्विषयापेक्षया स्वरूपेऽभिनिवेशात्। विषयनिषेधेऽपि, न मे ज्ञानं जातमिति हि न कश्चिदाह। किञ्चाप्रामाण्यं स्वत इति पक्षे किमपि कर्तुं न शक्यते। ज्ञानाप्रामाण्ये, विषयासत्यत्वे हानोपादानाद्ययोगात्। इदमुपरि किञ्चेत्यादिवाक्ये अर्थसिद्धम्। बौद्धैरप्रामाण्यं स्वतो जायत इत्युच्यते, उत ज्ञायत इति, सर्वथा प्रवृत्तिनिवृत्त्यादिकं यथावन्न स्यात्।

(प्रामाण्यज्ञप्तौ परतस्त्वनिरासः)

यत्तु प्रामाण्यज्ञप्तौ संवादाद्यपेक्षेति। तदसत्। तथाहि–प्रामाण्यनिश्चये संवादादित्रिकं किं सर्वथापेक्षितम्, उत नियमेनान्यतमम्? नाद्यः, असम्भवात्। न हि प्रामाण्यनिश्चये संवादस्य सार्वभौमत्वम्, स्वात्ममात्रसाक्षिकसुखादौ तदसम्भवात्। संवादज्ञानेषु संवादान्तरापेक्षयाऽनवस्थानाच्च। न च परस्परसंवादादाश्वासः, शुक्तिकारजतधारावाहिकबुद्ध्यादावप्याश्वासप्रसंगात्। चोदनावाक्ये च बहुशः पठ्यमाने जायमानानां बह्वीनां संविदां मिथस्संवादस्य सुलभत्वात्। कारणान्तरजनितसंवित्संवादस्तु न गन्धादौ सुखादौ च शक्यः। पुरुषान्तरधीसंवादः चोदनास्वपि सिद्धः। एवं कारणगुणज्ञानव्याप्ते (नं न व्याप्तं?) ईश्वरज्ञानस्य नित्यस्य प्रमात्वनिश्चये। कारणगुणज्ञाने तद्धेतौ कारणस्य निर्दोषताज्ञानाधीने निर्दोषताज्ञानमात्रेणात्राप्रामाण्यशंकानवकाशेन प्रतीतेर्याथार्थ्यसिद्धौ किं गुणै र्विदितै रन्यत् कार्यम्। अत्र च कारणस्य वेदस्य वक्तृदोषासम्भव उक्तः। अर्थक्रिया च न व्याप्ता, अशक्यार्थक्रियेष्वनादरपदेषु च प्रतीतेषु पुरुषप्रवृत्त्यभावेन तन्मूलार्थक्रियाऽभावात्। अर्थक्रियाज्ञानस्य वा प्रामाण्यनिश्चयार्थार्थक्रियाज्ञानान्तरा–

---

उत्पत्तौ ज्ञप्तौ च प्रामाण्यं परतः। ज्ञानकारणेषु गुणरूपसहकारिमेलनादुत्पत्तिः। ज्ञप्तेः परतस्त्वञ्च संवादादिबलादेव तन्निश्चयादिति तार्किकाः। तत्र प्रथमं निरस्तम्। द्वितीयमपि निरस्यति यत्तु इति। संवादाद्वा कारणगुणज्ञानाद्वा अर्थक्रियाकारित्वज्ञानाद्वा प्रामाण्यमनुमेयमिति तदुक्तं क्रमेण निरस्यते। अर्थक्रिया - फलनिष्पत्तिः। तत्र त्रयसमुच्चयं खण्डयति नाद्य इति।

पेक्षाप्रसंगात् । क्वचित् स्वतःप्रमाणत्वे सर्वत्राप्युपगन्तव्यत्वात् । अविदिताप्रामाण्येन वा अभिमतसिद्धौ प्रकृतेपि चोदनाऽप्रामाण्यज्ञापकाभावमात्रेणाभिमतसिद्धेः ।

तत एव नापि द्वितीयः, कारणदोषबाधकप्रत्ययाभावमात्रेण अप्रामाण्यनिराकरणे तेष्वन्यतमस्याप्यनपेक्षणात् ।

(दोषाभावातिरिक्तगुणानधीनत्वम्)

ननु भावान्तराभाववादिनां भवतां दोषाभावो गुण एवेति चेन्न; - अनुष्णाशीतस्पर्शवत् दोषगुणविरहात्मकभावान्तरसद्भावात् । वेदे च दोषासम्भवस्योक्तत्वात् ॥ तथाप्यप्रामाण्यस्याभावः प्रामाण्यमेव, परस्परविरोधे प्रकारान्तरस्थित्यभावात् । अतोऽऽप्रामाण्यनिराकरणार्थमन्यापेक्षणे प्रामाण्यसिद्ध्यर्थमन्यापेक्षेत्युक्तं भवतीति चेत्- सत्यम् - तथापि कारणदोष-बाधकप्रत्ययाभावातिरिक्तं संवादादिकं नापेक्षितमित्येतावता स्वतस्त्वं ब्रूमः ।

किञ्च-यथा यथावत्प्रतीयमाने सम्यग्रजते कस्यचित् कदाचित् अरजतत्वशंका जायते । सा च कारणदोषाद्यभावपरामर्शेन निराक्रियते, तथापि पूर्वप्रतिपन्नं रजतमेव स्थितं भवति—एवमिहापि स्वतःप्रतीयमानेऽपि प्रामाण्ये कस्यचिदप्रामाण्यशंकायां कारण-दोषाद्यभावेन तन्निरासे पूर्वप्रतीतमेव प्रामाण्यं प्रतिष्ठितं भवति ।

---

संवादाद्यन्यतममिति विकल्पपक्षं प्रतिक्षिपति नापि द्वितीय इति । परतस्त्वं प्रामाण्यस्य न निषेद्धुं शक्यम् । अप्रामाण्यशंका-स्थले संवादादिना सर्वैः प्रामाण्यानुमानात् । स्वतस्त्वमप्यस्तीति

(स्वतोग्राह्यत्वाभावशंकापरिहारौ)

ननु - कथं स्वतः प्रामाण्यप्रतीतिः ? न हि अयं घट इति वा, घटमहं जानामीति वा प्रतियद्भिः पुरुषैस्तदानीमेव ज्ञानं प्रमाणमित्यपि प्रतीयते इति चेन्न—ज्ञानं हि स्वतः परतो वा प्रकाशमानं प्रथममेव घटादिसद्भावप्रकाशात्मकं दृश्यते, घटोऽस्तीति विषयाव-

---

क्तव्यम् । तत् कथम् अशक्यत्वादिति पृच्छति नन्विति । अयंघट इति ज्ञानाकारस्तार्किकाणाम् । घटमहं जानामीति पूर्वोत्तरमीमांसकानाम् । स्वतः परतो वेति । अयं भावः-परतःप्रामाण्यवादिनामाशयस्तावत्—ज्ञाने गृह्यमाणे तद्गतप्रामाण्यमपि गृह्यत इति न ; प्रामाण्याविषयकज्ञानमात्रविषयकज्ञानसंभवादिति । स्वत इति वादिनां तु ज्ञानेन सह प्रामाण्यमपि गृह्यत एवेति, ज्ञानग्राहकं किमिति चेत्—ज्ञानस्य स्वयंप्रकाशतया स्वमेव स्वग्राहकम् । स्वेनैव स्वप्रामाण्यमपि गृह्यते । यथा सेश्वरपक्षे ईश्वरज्ञानेनैकेनैव सर्वविषयवत् स्वस्यापि स्वप्राम०स्यापि ग्रहणमिति प्राभाकरा वेदान्तिनश्च । ज्ञानं ज्ञाततयाऽनुमीयते, न तु प्रत्यक्ष्यते, न वा स्वयं प्रकाश्यत इति, तयाऽनुमित्या ज्ञानेन सह प्रामाण्यस्यापि नियमेन ग्रहणमिति भाट्टाः। अयं घट इति ज्ञानानन्तरभवे घटमहंजानामीति अनुव्यवसायनामकप्रत्यक्षे ज्ञानेन सह प्रामाण्यस्य विषयभाव इति मुरारिमिश्रो नाम मीमांसकः। तथाच ज्ञानग्राहकयावत्सामग्रीग्राह्यत्वं प्रामाण्यस्य तार्किकेतरसर्वपूर्वोक्तवादिसंमतम् । तदभावस्तार्किकेष्ट इति । अतोऽत्र परत इति अनुमित्यनुव्यवसाययोर्ग्रहणम् । इति स्वतःपरतःपक्षविवेकः ।

(अत्र स्वपरमतनिष्कर्षः)

सद्भावप्रकाशात्मकमिति । अयं भावः—ज्ञानस्य प्रामाण्यं नाम यथा यो विषयोऽस्ति तथा तद्विषयकत्वम् । इममहं घटं जानामीत्यादिरूपे इदमित्थमिति विषयविशिष्टज्ञानविशेषणतया

-च्छेदमन्तरेण तत्प्रकाशासिद्धेः। पश्चादारोपितेन अनारोपितेन वा अर्थत्वेना(र्थतत्त्वेना ?)वच्छिन्नं भासते, तत्रारोपितत्वशंका दोषाद्यभावेन निराक्रियत इति स्थिते – चोदनाजनितसंविदपि श्रेयस्साधनार्थप्रकाशा-त्मिका कारणदोषबाधकप्रत्ययाभावादनपोदितप्रामाण्या अवतिष्ठत इति।

---

विषयस्य तत्र घटत्वस्य च स्थितस्य ग्रहणात्, यत्र घटत्वमस्ति, तद्वि-शेष्यकत्व घटत्वप्रकारकत्वयोर्ग्रहणात्, प्रामाण्यस्य स्वतस्त्वम्। न चैवं शुक्तौ, इदं रजतं जानामीति ज्ञाने, रजतत्वाभाववती या शुक्तिः तद्विशेष्यकत्व रजतत्वप्रकारकत्वयोर्ज्ञाने भानात् अप्रामाण्य-मपि स्वतो गृह्येतेति शंक्यम्—शुक्तिविशेष्यकत्व रजतत्वप्रकार-कत्वयोरिव शुक्तौ रजतत्वाभावस्यापि ग्रहणे सत्येव हि अप्रामाण्य-ग्रहणम्। वास्तवरजतज्ञानभाने च तत्तद्विषयकत्ववत् रजते रज-तत्वस्यापि भासमानत्वात् प्रामाण्यग्रहणमिति विशेषः। प्रामाण्य-मप्रामाण्यं च हि ज्ञानस्य विषयस्य च प्रमाणप्रमेयभाव - तद्विपरीत-भावरूपः संबन्धः। तत्र प्रमाणत्वग्रहणे प्रमेयत्वमपि गृहीतम्। प्रमेयत्वञ्च ज्ञानविशेष्यं ज्ञानविशेषणधर्मसत्त्वम्। अप्रमाणाप्रमेय-भावे चाप्रमेयत्वं ज्ञानविशेष्ये तद्विशेषणाभावः। अतः तद्धर्मसत्त्व-तदभावग्रहणमपि भवति चेत्—प्रामाण्याप्रामाण्यग्रहणं भवतीति विवेक्तव्यम्। अतएव प्रामाण्यं नाम धर्मिणि धर्मसत्त्वमित्युक्तं न्यायरत्नमालायाम्। तार्किकास्तु तद्वद्विशेष्यकत्वविशिष्टतत्प्रकार-कत्वं प्रामाण्यम्। किञ्चिद्विशेष्यकेति भानेऽपि तद्वद्विशेष्यकेति न भासते अनुव्यवसायादाविति परतस्त्वं वदन्ति। तदुक्त-मस्माभिर्न्यायकुसुमाञ्जलिविस्तरे। तथा तद्वत्त्वभानमनपेक्षितम्; विशकलितभानस्यैव पर्याप्तत्वादिति सिद्धान्ताशयः। अत एव

(चित्रादिवाक्यप्रामाण्यसमर्थनम्)

ननु - यद्यपि कारणगुणाद्यनपेक्षा, यद्यपि वेदे कारणदोषो न दृष्टः, तथापि दर्शितो बाधकप्रत्ययश्चित्रादिवाक्ये । अतः सापवादं चोदनाप्रामाण्यमिति । तत्रापीदमुत्तरं सूत्रकृतैवोच्यते **अव्यतिरेकश्चेति** । चित्रादिचोदनास्वपि न व्यतिरेकः, चित्रायाः फलसाधनत्वमात्रवचनेनानन्तर्यस्याचोदितत्वात् । दृष्टफलार्थराजसेवादिवदेव कालान्तरेऽपि फलसम्भवात् ।

ननु साध्यसाधनभावे गृहीते कालान्तरे कर्माभावात्, पश्वादिफलस्य च तत्कालेऽपि सम्भवोपपत्तेरदृष्टद्वारकल्पने प्रमाणाभावात्, लोके च मर्दनादिक्रियानन्तरमेव फलदर्शनेन सामर्थ्यादनन्तरमेव फलेन भवितव्यमिति स्यादिति चेत्—मैवम् ; लोके तावत् क्रियानन्तरमेव फलमिति न नियमः, शरप्रयोग-कृष्यादिषु, राजोपकारकराजद्विष्टयोश्चावान्तरव्यापारद्वारा द्राघीयसा कालेन फलाविनाभावात् । अतः कालान्तरे कर्माभावेऽपि फलस्य तदानीमेव सम्भवेऽपि श्रुतसाध्यसाधनभावानुगुण्याय द्वारकल्पनमविरुद्धम् ।

ननु-शास्त्रार्थावधारणपूर्वकमनुष्ठानं अनुष्ठानानन्तरं फलानुपलब्धेर्द्वारक्लृप्त्या शास्त्रार्थावधारणमिति [अन्योन्याश्रय इति?] चेन्न;-परानुष्ठा-

---

तद्वति तत्प्रकारकं वा तदभाववति तत्प्रकारकं वेति संशयसंभवात् कारणदोषाभावादिना पश्चात् तदपोहनम् अप्रामाण्याभावबोधनम् । तथाच प्रामाण्यं नाम विशेष्यप्रकारोभयसंसर्गसमुचितं तदुभयविषयकत्वम्, अप्रामाण्यं नाम विशेष्यप्रकारोभयासंसर्गसमुचितं तदुभयविषयकत्वमिति विमृश्यम् ।

नानन्तरं फलानुपलम्भात् स्वयं शास्त्रार्थनिश्चयदशायां द्वारकल्पनोपपत्तेः, साक्षात्साधनत्वभ्रमेण वाऽनुष्ठाय पश्चात् फलविळम्बेन द्वारं कल्पयिष्यतीति न तावता शास्त्रप्रामाण्यस्यापायः ; तत्स्वातन्त्र्यस्य दर्शितत्वात् । अव्यवहितत्वमात्रं तु स्वभ्रमसिद्धं बाध्यते ।

(शास्त्रार्थग्रहणकाले एव द्वारावश्यकत्वधीः)

किंच-चित्रा तावत् न क्षणमात्रभाविन्येका क्रिया, किंतु सांगप्रधानकर्मक्षणनिचयात्मिका क्रिया। क्षणानां च क्रमेण चोदितानां न यौगपद्यम् । तस्माददृष्टद्वारमन्तरेण न पश्चाद्युत्पत्तिसम्भवः । न च पश्चादेरूत्पत्तिमात्रं फलमभिसन्धायोपाय उपदिश्यते ; अपितर्हि स्वोपभोगार्थम् । स चोपभोगश्चिरकालतः । अतो यावदुपभोगकालं स्थास्नुना राजप्रीत्यादिवत् क्रियातिरिक्तेन केनचिद्भवितव्यमिति शास्त्रार्थश्रवणवेळायामेवानुष्ठाता अध्यवस्यति । न चात्र किंचिद्द्वारं कल्पनीयम्, द्वारस्य देवताप्रीत्यादेः शब्देनैवोपस्थापितत्वात् । तथाच शारीरके वक्ष्यते-"फलमत उपपत्तेः", "श्रुतत्वाच्च" इति । अतः सपरिकरविधिवाक्यपरामर्श एव प्रत्यक्षमिव विसंवादं प्रशमयति । न च देवताप्रीत्यादिरपि तदानीमेव फलं जनयत्विति वाच्यम् ; राजप्रीत्यादिवदेव देशकालावस्थादिनियतफलप्रदानोपपत्तेः । यदा च प्रतिबन्धरहितं सगुणं कर्म भवति, तदा अनन्तरमेव फलं दृश्यत एव । यथा कारीर्यादौ, यथा चाभिचारादौ । न च तत्र यादृच्छिकं फलमिति वक्तुं शक्यम्, भूयसा दर्शनात् । अतस्ते नैवान्यत्र कर्मकर्तृसाधनवैगुण्यमाश्रीयते ।

(चित्रादेरन्यथासिद्धत्वाभावः)

यच्च कालान्तरे प्रतिग्रहादि कारणान्तरं दृश्यत इति—न तावन्मात्रेणादृष्टस्य फलहेतुताभंगः, उभयोरपि हेतुतायाः प्रमाणद्वयसिद्धत्वेनान्यतरपरित्यागायोगात् । सर्वत्र सामग्र्यामनेककारणसन्निपातात् । क्षुच्छान्तिकामो देवदत्तगृहं गच्छेदित्यत्र भोजनादिवत् । यत्र चात्यन्तोत्कटमदृष्टम्, तत्र हेत्वन्तरोपनयनमन्तरेण स्वयमेव फलति । इदं च महर्षिप्रभृतीनां वृत्तान्तेषु सुगमम् ।

यत्तु यज्ञायुधिवाक्ये प्रत्यक्षविरोध इति—तदपि न, अपरेष्वर्थवादवाक्येष्विवात्रापि मुख्यार्थबाधस्यादोषत्वात् । तात्पर्यविषयभूतस्य तु अर्थस्याविरुद्धत्वात् । स्वर्गकामो हि चेतनविशेषो यजमानः । तस्य स्वर्गाख्यफलसिद्धिरिह विधिवाक्यसिद्धोऽनूद्यते; न तु निष्प्राणस्याचेतनस्य शरीरस्य । न चात्मनोऽकर्तृत्वात् यजमानशब्दवाच्यत्वं नास्तीति वक्तुं शक्यम् । न हि वयं वदाम आत्मनोऽत्यन्ताकर्तृत्वम्; "कर्ता शास्त्रार्थवत्त्वात्" "परात्तु" इति च शारीरके तत्कर्तृत्वव्यवस्थापनात् । अतो विशेष्यवाचिनि यजमानशब्दे चेतनमभिदधाने यज्ञायुधिशब्दः शरीरविषयोऽपि चेतनाधिष्ठितपरित्यक्तसंघातमेवाभिप्रैति ।

---

व्रीहिभिर्यजेतेत्यादिवाक्यानुरोधेन सर्वत्र साधनत्वस्य साक्षात्परम्परासाधारण्ये गृहीते मार्थवादिकदेवताप्रीत्यादितः परम्परयेति निश्चय इह सुलभ इत्यत्र लोकनिदर्शनमप्याह क्षुदिति ।

अत्यन्तोत्कटमिति । दृष्टसामग्रीद्वाररूपविलम्बासहनेन शीघ्रकार्यनिष्पत्त्यौपयिकसंकल्पविशेषरूपमित्यर्थः ।

चेतनाधिष्ठितपरित्यक्तेति । यज्ञायुधिशब्दः यज्ञायुधचयनार-

अत एव "एष" इत्यपरोक्षनिर्देशोऽपि न विरुद्धः ।

एवं यत्रार्थवादेषु प्रत्यक्षादिविरोधः तत्र सर्वत्राप्यौपचारिकार्थग्रहणेन समाधानं वक्ष्यते ।

(देहाद्यतिरिक्तनिषेधायोगः)

यत्तु धर्मे प्रमाणमनिच्छद्भिर्देहातिरिक्त आत्माऽपि नेष्यत इति न तन्मूलं समाधानं शक्यमिति–तत् किमनिच्छामात्रेणाऽऽत्मा न स्यात् ? स तु प्रत्यक्षानुमानागमैरध्यवसीयमानो नापह्नोतुं शक्यः । तथाहि—

(प्रत्यक्षस्य देहाद्यतिरिक्तात्मविषयकत्वम्)

प्रत्यक्षं तावत् देहेन्द्रियमनःप्राणधीभ्योऽन्यमेव प्रत्यगात्मानं प्रकाशयति । योऽसौ प्रतिक्षेत्रम् अहमित्युपलभ्यते, स न तावत् देहः, प्रत्येकसमुदायविकल्पानुपपत्तेः । न ह्यत्र पाणिपादादयः प्रत्येकमहमर्थः, पाणिरहम्, पादोऽहमित्यादिसामानाधिकरण्यादृष्टेः । पादे मे वेदना, शिरसि मे सुखमिति व्यतिरेकप्रत्ययदार्ढ्याच्च । नापि समुदायः,

---

भूतशरीरस्वामीत्यर्थको न भवति। आत्मनः प्रागेव निष्क्रान्तत्वात् स्थितस्य विकृतस्य सिद्धान्ते तच्छरीरत्वानभ्युपगमात् । अतश्चयनाधारसंघातपूर्वस्थितावस्थद्रव्यशरीरक इत्यर्थः। इनिप्रत्ययेनैव तादृशसंबन्धो विवक्षितुं शक्यते; स्वकर्तृकयज्ञायुधसंबन्धी यजमान इत्येव वाक्यार्थ इति । एष इति पदस्य दृश्यमानशवशरीरसंबन्धीत्यर्थस्य वाच्यतया च स संबन्धः सुग्रहः । अधिष्ठितं परित्यक्तञ्च संघातमित्यर्थः ।

स्वर्गादिफलसंपत्तिस्थापनाय आत्मनो देहेन्द्रियमनःप्राणधीभ्योऽन्यत्वमत्र पूर्वमीमांसायां स्थापनीयम् । तदधिकस्य स्वरूपगुणादेर्निरूपणं शारीरके भविष्यतीत्याशयेन प्रकृते वक्तव्यं सूत्रविवक्षितमिति अत्रैव तस्य देहेन्द्रियादिभेदं प्रपञ्चयति यत्तु इत्यादिना ।

अहमर्थस्य चेतनत्वात् पाण्यादिसमुदायस्य शरीरस्य चैतन्यसमवायायोगात् । न हि प्रत्येकमसतश्चैतन्यस्य समुदाये सम्भवः, तन्त्वादिष्वसतो रूपादेस्तत्समुदायेऽप्यदर्शनात् । न चावयवाः प्रत्येकं चेतयन्ते, प्रत्येकम् अहम्बुद्ध्यभावस्योक्तत्वात् । अनेकचेतनोपलम्भाभावात् । एकस्यैव सर्वावयवावच्छिन्नस्य सुखादिप्रतिसन्धानात् । परस्परपीडाद्यनभिज्ञतया परस्परोपकारभंगप्रसंगात् । एकैकावयवच्छेदे तत्तदनुभूतप्रतिसन्धानानुपपत्तेः । न ह्युपदेशादिरत्र हेतुः । नापि वासनासंक्रमः, अन्यगुणस्यान्यत्र संक्रमणायोगात् । न च संसर्गात् तज्जातीयवासनोत्पत्तिः, मातुर्वासनया गर्भेऽपि तदुत्पत्तिप्रसंगात् । न च प्रत्येकमसतः संयोगस्येव समुदाये सम्भवः, अनेकाश्रितत्वानुपलम्भात् ।

(अवयवातिरिक्तावयव्यभावः)

न चैकोऽवयवी चेतयतामिति युक्तम्; व्यतिषंगविशेषवदवयवसंघातातिरिक्तावयव्यसम्भवस्यारम्भणाधिकरणे वक्ष्यमाणत्वात् । तत्सम्भवेऽप्यवयवगतविशेषगुणमन्तरेणावयविनि विशेषगुणोत्पत्त्ययोगात् । न चात्र चित्रन्यायः, तत्रापि प्रत्येकावयवगतानां सितरक्तपीतादीनां विशेषगुणानामेव चित्रारम्भकत्वात् । सितादीनां चित्रस्य च अवान्तरवैजात्येऽपि रूपत्वेन गुणावान्तरजात्या समजातीयत्वात् । इह चावयवेषु तथाविधविशेषगुणासंभवात् । न च चूर्णहरिद्रासंसर्गजरागवत् प्रत्येकमसतोऽपि संसर्गवशादुत्पत्तिरिति वाच्यम्, चूर्णहरिद्राद्योः प्रत्येकमविद्यमानस्यापि संसर्गवशात् प्रत्यवयवं पाकजरागोत्पत्तेः । इह चावयवे चैतन्यासम्भवस्योक्तत्वात् । अतो यदुक्तं **लोकायते**—"पृथिव्यप्तेजो-

वायषस्तत्त्वानि, तेभ्यश्चैतन्यं किण्वादिभ्यो मदशक्तिवत्" इति, तदपि प्रत्युक्तम् । किण्वादिभ्योऽपि प्रत्यवयवं परिणामविशेषवशात् मदशक्त्युत्पत्तेः । भूयस्त्वाल्पत्वादिभिर्विकारतारतम्योपपत्तेश्च ।

अतो योऽसौ प्रतिक्षेत्रमहमित्युपलभ्यते, स एवात्मा पाण्यादेस्तत्संघाताच्च विलक्षणः । एवंस्थिते, देवोऽहं मनुष्योऽहं कृशोऽहमित्यादिदेहधर्मोपष्टम्भेन योऽसावहम्प्रत्ययः, स पीतशंखादिनयेन निर्वाह्यः, संसर्गिणि गृह्यमाणे देहे कर्मादिदोषविशेषेण भेदकधर्माग्रहात् तद्धर्मारोपोपपत्तेः । स्वप्नादिषु चात्मानं व्याघ्रादिरूपमभिमन्यन्ते । एवमत्यन्तदवीयस्स्वर्यमाणारोपसम्भवे पृथक्सिद्ध्यनर्हप्रत्यक्षीक्रियमाणप्रातिस्विकदेहारोपस्य क इवासम्भवं मन्यते । गृहादिष्विव मम देह इति च व्यतिरेकप्रत्ययः सार्वलौकिकः । न वाऽसौ ममात्मेतिवत् स्वरूपविषयः, आत्मशब्दस्य तत्र स्वरूपपर्यायत्वात्, देहशब्दस्य तदभावात् । शिलापुत्रकस्य शरीरमितिवत् स्यात्, यदि गत्यन्तरं न स्यात् । इह तु देहे चैतन्यासम्भवेन गत्यन्तरं दर्शितम् ।

(आत्मनो मनआदिभिन्नत्वमपि)

एवमयम् अस्मदादीनामपि देहाद्व्यतिरेकेणोपलभ्यमान आत्मा निरुद्धबाह्यकरणार्थस्य प्रत्यक्ष(क्षं ?)कर्तृत्वेनोपलम्भान्मनसोऽप्यन्यः। मनसा स्मरामीति च समनस्काः प्रतिपद्यन्ते । एवं धियोऽप्यतिरिक्त आत्मा, प्रत्यक्षं जनानामिति (जानामीति ?) धर्मधर्मितया प्रतीतेः । क्षणिकज्ञानसन्तत्यात्मत्वपक्षस्य ज्ञानस्या(ज्ञानव्य ?)तिरिक्तमिथ्यात्वादेव (देश्च ?) तर्कपादे निराकरिष्यमाणत्वात् । तत एवाहमर्थात्मक(त्व ?)स्याबाधितप्रत्यक्षादिसिद्धस्य दुरपह्नवत्वात् ।

तदेतत् सर्वमभिप्रेत्य सूत्रितमित्यभ्यधिष्महि पूर्वस्मिन् सूत्रे, पुरुषस्येन्द्रियाणां बुद्धिजन्म इति ।

एवं प्रत्यक्षेणास्याऽऽत्मनो देहातिरेकसिद्धेः, अनुमानैरप्यसम्भवद्विरोधैः प्रागुक्तनयेन विपक्षे बाधकवद्भिः, असम्भवदुपाधिगन्धैर्व्यतिरेकः सुसाधः । यथा—शरीरं न चेतनं भूतत्वात्, नश्वरत्वात्, सावयवत्वात्, घटवदित्यादि । नापि मनःप्रभृतीनीन्द्रियाणि ; करणत्वात्, कुठारादिवत् । न च बुद्धिः ; क्रियात्वात् प्रमाणा (प्राणना ?) [रूपा] दिवत् । सांख्यैरपि संगृहीतम्, "संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात् । पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थप्रवृत्तेश्च ॥" इति । वीतरागजन्मादर्शनाच्चाऽऽत्मनो भवान्तरं सिद्धम् ।

तदेवं विसंवादाभावात् संवाद-कारणगुणादेश्चानपेक्षितत्वात् चोदनानां स्वतःप्राप्तं प्रामाण्यमनपोदितमिति । एवमनेनैव सूत्रेण चोदनाप्रामाण्यस्य स्वरूपावशेषितो भारः ।

(स्वतः प्रामाण्यस्य सांप्रदायिकत्वम्)

अत्र स्वोक्तस्य सकलस्यार्थस्य साम्प्रदायिकतां सिद्धान्ततां च ज्ञापयितुं स्वाचार्याभिमतिं दर्शयति बादरायणस्येति । न ह्येतत् मतान्तरद्योतनार्थम्, उक्तस्य प्रामाणिकत्वात्; स्वमतस्यावचनाच्च । जैमिनेर्व्यासशिष्यत्वं बादरायणस्य च मीमांसाप्रधानभूतशारीरकसूत्रकृत्त्वेन न्यायसिद्धार्थेऽनुविधेयवचनत्वञ्च महाभारतादिप्रसिद्धम् । "सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् । प्रभुर्वसिष्ठो वरदो वैशम्पायनमेव च ॥ वेदान् अध्यापयामास महाभारतपञ्चमान् ।

संहितास्तैः पृथक्त्वेन भारतस्य (?) प्रकीर्तिताः ॥" इत्यादिना जैमिनेर्व्यासशिष्यत्वं प्रसिद्धम् । "द्वीपे बदरिकामिश्रे बादरायणमच्युतम् । पराशरात् सत्यवती पुत्रं लेभे परन्तपम् ॥" इति बादरायणत्वं सहेतुकमुक्तम् । बादरायणस्य शारीरकशास्त्रकृत्त्वं सर्वसंमतम् । तदेवं जैमिनिबादरायणयोरेकाशयत्वस्योपक्रमादिसिद्धत्वात् बादरायणमतविरुद्धैरर्थैर्जैमिनिसूत्राण्युपवर्णयन्तः प्रत्युक्ताः ।

उभयाभिप्रायवेदी भगवान् **बोधायनो** विंशतिलक्षणीं मीमांसां परस्परसंगमार्थं विस्तरेण व्याख्यादिति वृद्धाः विदामासुः । तथा च—स्वयमेवाह—"संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति ।

(प्राभाकरोक्तार्थखण्डनम्)

यत् पुनः आहुः, "कार्यव्युत्पत्तिस्तु पूर्वाधिकरणे, इह तु मानान्तरवेद्यार्थताप्रत्युक्तितो वेदः स्वार्थे प्रमाणमित्युक्तम् । अतो वेदो वेदार्थे अपूर्वे प्रमाणम्, नान्यत्" इति । तानिह भौतकल्पान् दूषयितुमप्यपत्रपामहे, चोदनासूत्रस्यान्यपरत्वस्थापनात् । अपूर्वाधिकरणे च पूर्व-(अपूर्व ?) व्युत्पत्तेर्निराकरिष्यमाणत्वात् । अत एव प्रभाकरशिरःशृंगायमाणे पर[म ?]हितापूर्वे वेदस्य परानपेक्षप्रामाण्यवर्णनस्याशक्यत्वादिति ।

---

उपवर्णयन्त इति । शबरकुमारिलादयोऽर्वाचीनाः । स्वयमेवेति । बोधायन एवेत्यर्थः । अनूदितमिदं श्रीभाष्ये । भौतकल्पान् भौतिकाचेतनसदृशान् भूताविष्टजनसदृशान् वा । अपत्रपामहे इति । तादृशानां शिक्षणीयत्वासंभवात् ।

अनुभूतित्वमात्रञ्च प्रामाण्यं वदतामिह ।
व्यर्थं वेदप्रमाणे च स्वतःप्रामाण्यसाधनम् ॥ २८ ॥
विपर्ययत्वशंकायामनुभूतित्वसाधने ।
अनुस्मृतित्वात् बुद्ध्या किं (किं बुद्ध?)वाक्यजा
धीर्निरस्यते (मी-पा 135) ॥ २९ ॥
सर्वानुभूतिर्मानं चेत् तत्तुल्यविषया मतिः ।
यथार्थैवं(व?) भवेत् सर्वा सा किमर्थं निरस्यते ॥ ३० ॥
स्वतो विशिष्टधीः प्राप्ता दोषाद्भेदाग्रहो यदि ।
कथं तत्रोपकुर्वीत त्वदुक्तं मानलक्षणम् ॥ ३१ ॥
इह चानुपलब्धेऽर्थे प्रामाण्यं यदसूत्रयत् ।
तन्नापूर्वैकविषयमीश्वरादौ समत्वतः ॥ ३२ ॥

---

अयमेव प्राभाकरः धारावाहिकज्ञानेऽपि प्रमात्वरक्षणाय अनुभूतित्वमात्रं प्रमात्वमित्याह ; तत् खण्डयति अनुभूतीति । कतिपयानुभूत्यप्रामाण्यप्रसक्तौ किल तद्विचारो युक्त इति भावः । नन्वसन्मते विपर्ययः स्मृतिरूपः; विपर्ययत्वशंकायां वेदजज्ञानस्यानुभूतित्वसाधने स्मृतित्वरूपविपर्ययत्वं निवर्तितं भवतीत्यत्राह विपर्ययेति । तर्हि बुद्धादिवाक्यजन्यज्ञानस्याप्रामाण्यं स्मृतित्वादिति वक्तव्यम्, तत् अनुभवानारूढम् । किञ्च मन्वादिस्मृतेरप्यप्रामाण्यं स्यात् । एवञ्च तत्रानुभूतित्वं मानत्वं याथार्थ्यं सर्वं स्यादिति निरासः कथमित्याह सर्वेति । ननु बुद्धादिवाक्ये विशिष्टधीरेव नास्ति ; भ्रमस्थलेस्वीकृतो भेदाग्रह एवेति शंकायामाह स्वत इति । बुद्धादिवाक्येऽपि यत् ज्ञानं जायते, नहिंस्यात्, सत्यं वदेदित्यादौ, तत्र प्रमात्ववारणं कथमिति भावः। ननु तस्यापूर्वबोधकत्वाभावादप्रमात्वमित्यत्राह इहेति ।

अतीन्द्रियेऽर्थे प्रामाण्यमनुमि(म ?)त्यैव चिन्त्यते ।
शारीरके तु सिद्धार्थविशेषे मानता गिराम् ॥ ३३ ॥

इति वेदप्रामाण्याधिकरणम् ॥ ५ ॥

अथ (शब्दनित्यताधिकरणम्)

## ६. संबन्धानादित्वाधिकरणम्

सू—कर्मैके तत्र दर्शनात् ॥ १-१-६ ॥ पू.

"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति शब्दार्थसम्बन्धस्यानादित्वमुपक्षिप्तम् । तत्र च न कश्चिद्धेतुरुक्तः । तुशब्दोऽप्यवधारणं-वैलक्षण्यं पूर्वपक्षव्यवच्छेदं च द्योतयेत्, न तु हेतुम् । अनपेक्षत्वादिति तु हेतुः स्वतःप्रामाण्यार्थः । न चानेकं तत्र साध्यम्, अधिकरणभेद-प्रसंगात् । न च कथंचित् तदर्थविचारानुप्रवेशः; वेदाधिकरणादे रप्येकीकरणप्रसंगात् । अत एतदधिकरणसिद्धस्य तत्रानुवादमात्रमेव ।

---

अतीन्द्रिय इति । अनुपलब्धे इति सूत्रखण्डार्थोऽयम् । (5)

मीमांसकैरिदमधिकरणं वर्णानां नित्यत्वस्थापकतया व्याख्यातम् । तदस्माभिर्नेष्टम् । वर्णानां तदा तदोत्पद्यमानत्वात् । तैर्वर्णनित्यत्व-स्थापनं कृतमपि वाच्यवाचकसंबन्धस्य स्वाभाविकत्वस्थापनार्थमेवेति तदेवाधिकरणकृत्यमस्तु । किमप्रामाणिकवर्णनित्यत्वस्थापनेन । यद्यपि नयद्युमणुक्तरीत्या वर्णनित्यत्वेऽपि सृष्ट्यारम्भे शब्दतन्मात्र-हेतोस्तामसाहंकारात् सर्वे वर्णाः जाता आप्रलयमवतिष्ठन्ते । तेषामेव तत्तत्पुरुषोच्चारणादिना अभिव्यक्तिमात्रं सृष्टिमध्ये । तथा च वर्णानां व्यङ्ग्यत्वस्थापकसूत्रादेर्न विरोध इति वक्तुं शक्यम्-अथापि तस्यापि पक्षस्य सविवादत्वात् तत्साधनसंपाद्यस्य कस्यचिद्दाभावाच्च वर्ण-व्यङ्ग्यत्वस्थापनपरतयाऽधिकरणं नेष्टम् । सूत्राणि तु सामान्यतो

(सांकेतिकत्वपूर्वपक्षः)

तदिहैवमुत्थानम्—अकारणत्वेन हि वेदस्य स्वतःप्रामाण्यापवादशंकानिरासः। अकारणत्वं चासम्भावितम्, शब्दार्थसम्बन्धस्य सांकेतिकत्वेन सांकेतिकशब्दसमुदायस्य वेदस्य सङ्केतात्पूर्वं सद्भावायोगात्। तदेतदभिप्रेत्याह **कर्मैके तत्र दर्शनादिति**। **एके**—वादिनः। **शब्दस्य अर्थेन सम्बन्धम्**, शब्दस्येति निर्दिष्टं वाचकत्वमेव वा **कर्म**–कार्यं, सांकेतिकम् आहुः। **तत्र दर्शनात्**। **तत्र**—संकेते सति, वाचकत्वदर्शनात्। यदि गवादिशब्दानां सास्नादिमत्पिण्डादिभिः सम्बन्धः स्वाभाविकः स्यात्, तदा तेषामेव शब्दानां वस्त्वन्तरेषु संकेताद्वाचकत्वं न पश्येम। न हि दाहकस्वभावो वह्निः पुरुषेच्छया सेचनक्रियायां विनियुज्येत। न च रूपग्रहणे शक्तं चक्षुः शब्दग्रहणसाधनतया संकेत्येत। तथा सति अन्धबधिराद्यभावप्रसंगात्। तच्चिकित्सानैरपेक्ष्यप्रसंगात्, अयत्नतः सर्वेषां सार्वज्ञ्यप्रसंगाच्च। अतोऽन्यबोधकस्वभावश्चेत् शब्दः, न तदन्यबोधकतया कल्पयितुं शक्यः। अतो न शब्दानां स्वतः केनाप्यर्थेन सम्बन्धः। तथापि संकेत एव तत्र

---

न वर्णविषयकाणि; किं तु वाचकशब्दविषयकाणि। वाचकानां पुरुषोत्पादितत्वतदभावविचारः वाचकत्वरूपधर्मस्वाभाविकत्वशेषतया क्रियत इति बोध्यम्। अस्मिन्नधिकरणे प्रायः सूत्राणां मीमांसकोक्तादन्य एवार्थः।

स्वतः प्रामाण्यापवादः—कारणदोषः। सूत्रे तत्रेति पदस्य एके इत्येतदनन्तरं प्रयोगात् हेतुघटकत्वावगमात् पूर्वसूत्रादनुषंगेण पक्षलाभं दर्शयति शब्दस्यार्थेन संबन्धमिति। अतः इति एकस्यानेकबोधकत्वस्वभावायोगादित्यर्थः।

तत्रार्थे धियमादधाति। न हि दृष्टेऽनुपपन्नं नाम। आर्यम्लेच्छादिभाषादिषु चैकस्यैव शब्दस्यानियतिर्दृश्यते।

(संबन्धान्तरनिरासः)

किञ्च - यदि शब्दार्थयोः स्वाभाविकस्सम्बन्धः, तदा व्युत्पत्तेः पूर्वमपि शब्दोऽर्थं गमयेत् ॥ सम्बन्धज्ञानाभावात् सत्यपि सम्बन्धे धूमादिवन्न गमयिष्यतीति चेत्? तत्र कोऽसौ सम्बन्धः? न तावत् कार्यकारणभावादिकम्, असम्भवात्। नाप्युपश्लेषलक्षणः, अदर्शनात्। न च तुल्यवद्व्यपदेशेन तदवगमः, प्रत्यक्षतो वर्णाद्यात्मना सास्नादिमदात्मना च भेदावगमेन तदसम्भवात्। यदि च शब्दार्थयोरुपश्लेष इष्यते, क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्।

(स्फोटनिरासः)

नापि स्फोटाख्यः शब्दः [अर्थात्मना?] वर्णाद्यात्मना च विवर्तत इति तादात्म्यं सम्बन्धः, वर्णातिरिक्ते त्वदभिमते शब्दे प्रमाणाभावात्। न तावत् गौरिति शब्दोच्चारणे गकारौकारविसर्जनीयातिरिक्तं कंचन शब्दं शृणुमः ॥ शब्दादर्थं प्रतीम इत्येकवचननिर्देशात्, एकं पदमिति कण्ठोक्तेः अनेकेभ्यो गकारादिभ्योऽधिकं शब्द मुपलब्ध वन्तो व्यवहर्तार इति चेत्–तन्न; परिषदा सम्भावितोऽहम्, एकेयं परिषदित्यादिष्वपि पुरुषाद्यतिरिक्त–परिषदादितत्त्वपरिकल्पनप्रसंगात् ॥ योग्यानुपलब्ध्या तद्बाध इति चेत्–तुल्यम् ॥ अयोग्यस्तर्ह्यसाव

1 अनुमाने कार्यकारणभावादिः संबन्धः प्रसिद्धः; स इह नास्तीत्याह न तावदिति।

स्त्विति चेत् ? तर्हि परिषदादितत्त्वमपि तथाविधं कल्पय । कथं वा अयोग्यमुपलब्धम् ॥ प्रत्येक-समुदाय-यौगपद्यादिविकल्पानुपपत्त्या वर्णानां वाचकत्वासिद्धौ गत्यभावात् तदतिरिक्तः कश्चिदर्थप्रत्ययहेतुः कल्प्य इति चेत्— तत्र, अर्थं प्रत्याययिष्यन् किमिति वर्णान् उच्चारयसि । अर्थप्रत्यायकस्फोटाभिव्यक्त्यर्थमिति चेत् ? स्फोटमभि व्यञ्जयन्तो वर्णाः किमेकैकशः समुदायतो वा क्रमेण युगपद्वेति परावृत्य पश्य । अतो यादृशैर्वर्णैः स्फोटस्ते अभिव्यक्तुमिष्टः, तादृशैरर्थ एवाभिव्यज्यताम्, किमन्तर्गडुना स्फोटेन। तदेतत् मन्दाकिनीमनादृत्य मरीचिकानुधावनम्, यत् सकललोकप्रत्यक्षां वर्णात्मिकां वाचं विहाय अत्यन्तापरिदृष्टस्यानुपयुक्तस्यार्थ(?)[प्रत्यायने ?]तुल्ययोगक्षेमस्फोटाख्यशब्दस्य कल्पनम् ।

(प्रमाणानां स्फोटपरत्वाभावः)

यद्यपि वैखर्यतिरिक्तमवस्थात्रयमासग्रन्थेष्वभ्यधायि, तथापि वाचकत्वे तन्नोपयुज्यते । भावनादिभेदे तदुपयोगात् । यत्तु "स्फोटस्त्वं वर्णसंश्रयः (संघस्थः)" इति महाभारतवचनम्, तेनापि न प्रत्यक्षविरुद्धं प्रत्यस्तमितसमस्तवाचकविकल्पोपप्लवस्त्वदभिमतः स्फोटोऽभिहितः;

---

यौगपद्यादीत्यत्र आदिपदं क्रमपरम् । ननु परा पश्यन्ती मध्यमा इति वैखरीरूप श्रूयमाणवर्णप्राक्स्थिताः अवस्थाः प्रमाणसिद्धाः । अतोऽनुपलम्भेऽपि स्फोटः सा परैव वा तद्वत् अन्यो वा स्यान्नामेति चेत्-तदापि वाचकत्वमसिद्धमित्याह यद्यपीति । स्फोटशब्दस्यैव वाचकत्वशक्तिमानित्यर्थं इति चेत्—त्वदभिमतवस्तुनस्तद्धर्मवत्त्वे प्रमाणं न किञ्चित् । तदप्याह यत्त्विति । वर्णसंश्रयः—वर्णव्यंग्य इति वैयाकरणमतोऽर्थः । यथायथं एकानेकवर्णनिष्ठ इति वास्तवार्थः । विरुद्धमिति पदम् अभिहित इति क्रियाविशेषणम् ।

अपितर्हि वर्णाश्रयार्थस्फुटीकरणशक्तिः। अन्यथा वर्णाध्यासाधिष्ठानभूतो निर्विशेषः स्फोट इत्युक्ते कथं देवता तमात्मानमभिमन्येत। वर्णानां वाचकत्वशक्तिः त्वदधीनेति तु [तद्व्याख्यानं?] समञ्जसम्। अत एकेन वक्त्रा क्रमनियमेन समुच्चार्यमाणा वर्णा एव पदम्। न च तद्वा तदर्थो वा क्वचिद्ध्वंस्तः; अबाधितत्वात्। न च तयोः संकेतमन्तरेण संबन्धं पश्यामः। न च बोध्यबोधकभाव एव सम्बन्धः, तन्निमित्तभूतसम्बन्धप्रश्ने स एवेत्युक्तावात्माश्रयप्रसंगात्। प्रत्यक्षानुमानयोश्च बोधकयोः बोधकत्वातिरिक्तस्य सम्बन्धस्य दर्शनात्। अतः परिशेषात् संकेत एव देवदत्तादिशब्देषु बोधनौपाधिकतया दृष्टोऽन्यत्रापि स्वीकर्तव्य इति। अत एव तद्ग्रहणात्पूर्वमर्थप्रत्यायकत्वासम्भवात्, 'अस्य शब्दस्यायमर्थ इति व्युत्पादय देवदत्त' इति संकेतमेव पुरस्कुर्वन्ति। प्रयोगश्च भवति—विप्रतिपन्नाः शब्दाः सांकेतिकाः, वाचकत्वात्। डित्थादिशब्दवदित्यादिः।

(सूत्रस्यार्थान्तरम्)

यद्वा तत्र दर्शनादित्यस्यायमर्थः-तत्र-कर्मत्वे दर्शनात्—श्रुतेः। तथा हि उत्पन्नस्यार्थस्य पश्चान्नामकर्म समामनन्ति। यथा—

---

कथमभिमन्येतेति। निर्विशेषत्वेन निन्दनात् प्रत्युत कुप्येदिति। नामधेयेहीति। एतन्नयेन डित्थादिनामवत् देवमनुष्यादिचेतनाचेतननामानि सर्वाणि सांकेतिकानीति श्रुतिसिद्धम्। नामरूपे व्याकरवाणि इत्यादि च मानमिति। एवं प्रातिपदिकानां सांकेतिकत्वे आख्यातादीनां परमन्यथात्वं कुत इत्याशयेन निगमयति अत इति।

"अनपहतपाप्मा वा अहमस्म्यनाहितनामा नाम मे धेहि" (शतपथब्रा) इति । अतः पदपदार्थसम्बन्धः पौरुषेयः । (6)

इतश्च-सू—अस्थानात् ॥ १-१-७ ॥ पू.

"तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इति रूपाणामिव नाम्नामपि अस्थानं प्रळयः श्रूयते । न ह्यत्र वर्णस्वरूपप्रळय उच्यते, नामशब्दस्य वाचकाकारे रूढत्वात् । तदाकार[क]शब्दस्य च प्रळयो वाचकत्वप्रळय एव । नचात्र वाच्यप्रळयाद्वाचकप्रळयोक्तिः, घटादिषु विनष्टेषु तन्नामप्रध्वंसादर्शनात् । विनष्टेषु नरेषु नामशेषत्वप्रसिद्धेः । अविनष्टे च पुरुषे नामान्तरकरणेन पूर्वस्य नामधेयस्य गतत्वव्यपदेशात् । अतो नाम्नः प्रळयः तस्य पूर्वाभिधेयपरित्याग एव । (7)

इतश्च-सू—करोतिशब्दात् ॥ १-१-८ ॥ पू.

"नामानि कृत्वा" इति करोतिशब्दश्च दृश्यते । न चैष प्राक्तनस्य नाम्नः प्रयोगमात्रे घटादिषु दृष्टः ; अपितु देवदत्तादीनां संकेतकरणे । तथोपबृंहणेऽपि, "नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥" इति रूपनाम्नोरविशेषेण करोतिशब्दः प्रयुक्तः । उपबृंहणान्तरेऽपि, "निर्ममे" इति

---

तद्धेति । इदं--जगदात्मकं ब्रह्म, तर्हि--प्रळये, अव्याकृतं-नामरूपव्याकरणरहितं प्रलीननामरूपप्रकृत्यात्मकमासीदित्यर्थः । नामरूपव्याकरणप्रागवस्थापन्नमित्यर्थस्येव पूर्वकल्पनामरूपव्याकरणविलयावस्थापन्नमित्यर्थस्यापि संभवात् ।

अकरोदित्यर्थकम् । ततश्च यथा रूपेषु जगत्कर्तुः स्वातन्त्र्यम्, तथा नामस्वपीति सकृ(असकृ ?)दुच्चारितात् करोतिशब्दान्निश्चिनुमहे । अपिच, "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वा" इति क्त्वा-प्रत्ययबलेन समानकर्तृकत्वं पौर्वापर्यञ्च ज्ञायते । तस्मादौत्पत्तिकः सम्बन्ध इत्ययुक्तम् । (8)

इतश्च-सू—सत्त्वान्तरे च यौगपद्यात् ॥ १-१-९ ॥ पू

**सत्त्वं**—जन्तुः । गौरित्येवैकः शब्दः सास्नादिमद्द्रव्ये ततोऽन्यस्मिंश्च वागादौ युगपत् बुद्धिं जनयति । यद्यपि पदान्तरसमभिव्याहारे प्रतिनियतविषया धीर्जायते, तथाऽप्येकपदोच्चारणदशायां तावन्मात्रश्रवणदशायां वा न विशेषो निर्धार्यते । तत् कस्य हेतोः ? अर्थस्य सम्बन्धनियमस्तस्यास्तीति ॥ नन्वेकं पदं शृण्वन् अनेकार्थान्न प्रतिपद्यत एवेति चेत्—तत् किं वर्णक्रमनिर्देशवन्मन्यते, अनेकपदश्रवणे वाऽन्यतोऽर्थमवगच्छति । स्मरत्यर्थमिति चेत् ? किमहेतुकं स्मरति । अतोऽभिधत्ते वा स्मारयति वाऽनेकानेवार्थान् एकपदम् । संकेतोपाधेश्च नियमो दृष्टः । तस्मात् सर्वत्र भवितव्यं संकेतेन ।

अथवा सकृदुच्चारितः शब्दः पदान्तरसमभिव्याहारपरामर्शे युगपदनेकार्थमभिधत्ते । यथा—"शर्करां पादजिह्वाभ्यामक्षिरोगी विवर्जयेत्"

---

**पौर्वापर्यं**—रूपोत्पादनानन्तरोत्पाद्यमानत्वम् । नित्यत्वे अपरत्वं न स्यादिति । (8)

**सत्त्वं जन्तुरिति शब्दार्थः । अर्थान्तरे इत्येव सूत्र विवक्षितम् । इदमेव दर्शयितुमुपरि वागादौ इत्युक्तम् । शब्दनित्यत्वे नानादेशस्थनानाप्राणिनिष्ठत्वं न भवति एकत्वादिति मीमांसकार्थवर्णनं**

इत्यादि । कथमन्यथा श्लेषकाव्यं कवयितारः परिष्कुर्युः । यद्वा–यदा गां दोग्धीति कश्चित्प्रयुंक्ते तदैवान्यो गां कृषतीति । तदयमेक एव गो-शब्दो युगपत् परस्परं विरुद्धेष्वर्थेषु प्रयुज्यते । यद्येकेन सत्त्वेनास्य प्रबोधकत्वलक्षणस्सम्बन्धः स्वाभाविकः स्यात्, न तद्विरुद्धे प्रयुज्येत । अस्वाभाविकत्वे तु एकत्र बहुषु वा यत्रयत्र संकेतः, तावत्सु प्रयोगो युक्तः । एकमेव च नाम अनेकेषु संकेत्यमानमन्यदपि पश्यामः । आर्य-म्लेच्छभाषासु च नियमम् । (9)

इतश्च—प्रकृतिविकृत्योश्च ॥ १-१-१० ॥ पू

दधिशब्दस्य इकारो दध्यत्रेति विक्रियत इत्यन्वशिष्यत्(त ?) । ततो दधिशब्दस्य वर्णविकारेणान्यथाकरणं दृष्टम् । अन्यथाकरणं च नाम्नः पौरुषेयत्वम् । न चात्र गावीगोण्यादिवत् विकृतिरवाचिकेति वाच्यम्, प्रकृतिविकृत्योर्द्वयोरपि यौगपद्यात् । अभियुक्ता एव हि केचित् अत्र दधीति प्रकृतिं प्रयुञ्जते, तत्रैवार्थे दध्यत्रेत्यपरे तदानीमेव विकृतिम् ।

---

दुरुपपादम् । कृषतीति प्रयोगः कुतः साधीयान् । कर्षतीत्यस्य आकर्षणार्थकत्वात् । न हि भूमेराकर्षणम् । आर्यम्लेच्छेति । पीलु-शब्दो वृक्षविशेषवाची आर्याणाम्; गजवाची म्लेच्छानाम् । तथा यवशब्दो दीर्घशूकविशिष्टवाचीति, प्रियङ्गुवाचीति भेदः । (9)

अनुशासनादित्यध्यहारापेक्षया यौगपद्यादिति पदानुषंगो युक्त इत्याशयेनाह द्वयोरपि यौगपद्यादिति । इकारान्तदधिशब्दवत् यकारान्तदध्यशब्दस्यापि वाचकत्वमस्तीति भावः । दध्यादिशब्दा-नामित्यत्र दध्यू आदिर्येषामिति विग्रहः ।

तदत्र संस्कृतयोनीनां प्राकृतादिभाषाणामिव दधिशब्दप्रकृतीनां दध्यादि-शब्दानामनादित्वं दुर्वचम् ।

इतश्च-सू—**वृद्धिश्च कर्तृभूम्नाऽस्य ॥ १-१-११ ॥** पू

न केवलं वर्णान्तरभावलक्षणं वैकृतम् ; अपि [प्रकृतितयाऽभिमत-स्य] **अस्य** - विकृतिशब्दस्य, **कर्तृभूम्ना**, वृद्धिलक्षणोपि विकारो दृश्यते । बहुभिः प्रबलेन वा केनचिदुच्चार्यमाणः प्रकृतित्वेनाभिमतश्शब्द उपचितताकार उपलब्धः । ततश्च व्यापारेणोपचितो यः, सोऽनुपचिताद्भिन्न इति ततो धीर्न शक्तिहेतुका, गाव्यादिवत् सादृश्यमात्रेणाप्युपपत्तेः । तत् तन्न्यायेन चा[न्य ?]त्रापि न स्वाभाविकः सम्बन्ध इति ।

---

(11) अपीति । अपि तु इतिवत् केवलः अपिशब्दोऽपि युज्यते । न केवलमिति केवलशब्दार्थप्रत्यनीकतया समुच्चयस्यैव वक्तव्यत्वात् । भूमशब्दार्थौ बहुत्वं संख्याया अतिशयो वेत्याशयेन, बहुभिः प्रबलेन वेत्युक्तम् ।

न शक्तिहेतुकेति । ननु यथा पूर्वसूत्रे अभियुक्तप्रयुक्तत्वाविशेषात् उभयस्यापि वाचकत्वम्, तथाऽत्रापि वृद्धशब्दस्य मन्दशब्दस्य चाभियुक्तप्रयोगाविशेषाद्वाचकत्वं वक्तव्यम् । तत्र वर्धितशब्दस्यानित्यत्वात् तत्र संकेतमूलमेव वाचकत्वमिति तथैव मन्देऽप्यस्तु इत्येव सूत्रार्थवर्णनसंभवात् किमिति गाव्यादितौल्यवर्णनमिति चेत्—यदि, ततोधीरित्यादिः पूर्वपक्षग्रन्थः, उपरि अभियुक्तप्रयोगाविशेषपुरस्कारेणसिद्धान्तग्रन्थश्च नष्ट इत्युन्नीयते, तर्हि तथैवास्तु । अन्यथापुनः एवंनिर्वाहः—अनुशासनानुसार्यभियुक्तप्रयोगतः प्रकृतिविकृतिस्थले वाचकत्वाविशेषसमर्थनं युक्तम् । नात्र । उपचयस्य स्वतन्त्रपुरुषकृतत्वात् । अबुद्धिपूर्वगाव्यादिशब्दस्यै-

(सिद्धान्तारम्भः)

षण्णां क्रमात् षड्भिः परिहारमाह—

**६. सू-समं तु तत्र दर्शनम् ॥ १-१-१२ ॥ (सि)**

तुशब्दः परिहारपरः पक्षस्य व्यावृत्त्यर्थः। **तत्र**—संकेते। यत् यथाभिमतार्थवाचकत्वदर्शनम्, तत् कस्मिंश्चिदर्थे स्वाभाविकसम्बन्धसदसद्भावयोः समम्। न हि सहकारिविशेषादापद्यमानमर्थक्रियान्तरं सहकारिनिरपेक्षाम् अन्यत्र शब्दशक्ति प्रतिरुणद्धि। यथा रेखाविशेषस्य संकेतात् वर्णविशेषबोधकत्वेऽपि स्वतः परज्ञापनशक्तिर्नापैति, तथेहापि। तेन न दहनदृष्टान्तः। प्रकृते च यथोपलम्भं स्वभावसहकार्यादिनियमात्। अत एव आर्यम्लेच्छादिभाषासु वाचानियतिरपि निर्व्यूढा।

यत्पुनः उक्तम्—शब्दार्थसम्बन्धस्य स्वाभाविकत्वे व्युत्पत्तेः पूर्वमपि बोधकत्वप्रसंग इति—तदसत्, सम्बन्धज्ञानस्य सहकारित्वात्।

---

वावाचकत्वे बुद्धिपूर्वमन्यथा कृते कथं वाचकत्वम्। माभूदुपचिते वाचकत्वम्; अविकृतशब्दमात्रस्य वाचकत्वे किं नश्छिन्नमिति चेत्-अभियुक्तार्यप्रयुक्तानामसाधुत्वापत्तिः। अतः शब्दभेदेन संकेतभेदात् संबन्धभेद इति न कुत्रापि स्वाभाविकतेति पूर्वपक्ष्याशय इति। अत्र शब्दानां तत्तत्कर्तृभेदादिना वृद्धिह्रासदर्शनात् ऐकरूप्याभावात् एकस्वाभाविकसंबन्धकल्पना न भवति। विनिगमकाभावाच्च नैकत्र; स्वरतारतम्यात् सर्वस्यैव विकृतत्वप्रतीतेरिति संकेतप्रयोजकशब्दानित्यत्वमात्रे एतत्सूत्राशयपर्यवसानं स्यादिति। वाचानियतिः। वाङ्नियतिः। वाचेति प्रातिपदिकम्। वाचामिति पाठो वा।

अन्यथा सांकेतिकत्वेऽपि क्लृप्तसंकेतः शब्दः संकेतज्ञानात्पूर्वमेवार्थं गमयेत्। अन्वयव्यतिरेकाभ्यां तज्ज्ञानस्य सहकारित्वं निश्चितमिति वचनं तुल्यम्॥ कोऽत्र सम्बन्धः, कथं चात्र ज्ञानस्यान्वयव्यतिरेकाविति चेत्—बोध्यबोधकभाव एव सम्बन्धः। तज्ज्ञानस्य सहकारित्वं व्युत्पत्ति-पर्यालोचनया सिद्धम्। सा व्युत्पत्तिः कार्यार्थे सिद्धार्थे वा। प्रथमं तावत् ज्ञायमानशब्दस्य अर्थविशेषबोधकत्वज्ञानात्पूर्वमर्थविशे प्रतीतिर्न जायते, बोधकत्वग्रहणात् पश्चात्, उपदेशादिना वा अयं शब्दोऽस्यार्थस्य बोधक इत्येवंरूपेण तज्ज्ञानसमनन्तरं व्युत्पन्नस्य परप्रयुक्तात् तस्मादेव शब्दात् तदर्थप्रतीतिर्जायते। इन्द्रियलिंगयोरिव सम्बन्धान्तरं च किंचिन्न दृश्यते, अतो बोधकत्वग्रहणमेवार्थज्ञानौपयिकमन्वयव्यतिरेकावसितम्।

(संकेतज्ञानस्यानपेक्षितत्वम्)

सांकेतिकेषु असांकेतिकेषु वा शब्देषु अस्य शब्दस्यायमर्थ इति व्युत्पादयद्भिरपि न संकेतः क्रियते, ज्ञाप्यते वा; अपि त्वयं शब्दोऽस्य बोधक इति व्यपदिश्यते। अन्यथा स्वेच्छया संकेतकरणे सर्वस्य शब्दस्य सर्वत्र प्रयोगप्रसंगात्। तस्य च लोकैर्निवार्यमाणत्वात्। बहूनां च यथायथं संकेते लोकस्य परस्परवार्तानभिज्ञत्वप्रसंगाच्च। तथा—अयं गोशब्दवाच्य इति वदन्तः पूर्वममुकेन संकेतित इत्यपि न वदन्ति। तथाविधस्य कस्यचित् संकेतयितृत्वाप्रसिद्धेः। स्वयं चापरि-

---

बोधकत्वग्रहणात् पश्चादिति। व्यवहारादित्यादिः। इयमादिमा व्युत्पत्तिः। पक्षान्तरम् उपदेशेति। अयं शब्दः......इत्येवंरूपेण उपदेशादिना तज्ज्ञानसमनन्तरं वेत्यन्वयः। इयं द्वितीया। संबन्धान्तरं बोधकत्वातिरिक्तः तदुपयोगी संबन्धः।

ज्ञानात् । सांकेतिकेष्वपि भाषाशब्देषु वृद्धप्रयोगमात्रमेव व्युत्पाद्यम्; न तु सन्नपि संकेतः; तज्ज्ञानमन्तरेणापि उत्तरोत्तरेषां व्युत्पित्सूनामर्थप्रतीतिदर्शनात्; अविरोधाच्च । तदेवम् आदिमां द्वितीयां च व्युत्पत्तिं पर्यालोचयद्भिर्बोधकत्वग्रहणमेव शब्दस्य स्वार्थप्रत्यायने सहकारीति निश्चीयत इति ततः पूर्वमर्थानवगतिः परस्ताच्चावगतिरुपपद्यते ।

(सांकेतिकत्वानुमानदूषणम्)

यत्पुनः सर्वशब्दानां सांकेतिकत्वसाधनमनुमानम्; तत् किं प्रत्युच्चारणं संकेतं साधयति, उत प्रतिमर्त्यं, यद्वा साधारणेन(ण्येन ?) आदौ कदाचित् केनचित्पुरुषेण संकेतः कृत इति । नाद्यः; अशक्यत्वात् । संकेतकरणार्थशब्दप्रयोगस्यापि संकेतापेक्षत्वात् । अत एव न द्वितीयः; भाषाणां बहुपुरुषसाधारणत्वभंगप्रसंगाच्च । नापि तृतीयः, जगदादिसद्भावे प्रत्यक्षानुमानयोरप्रवृत्तेः । शास्त्रतस्तत्सिद्धौ तत एव शब्दार्थसम्बन्धानादित्वस्यापि सिद्धेः ।

नन्वेवं सति म्लेच्छादिभाषासु का वार्ता । न हि तत्रापि प्रत्युच्चारणप्रतिमर्त्यादिसम्भवः । अतः सर्वभाषानादित्वं सर्वसांकेतिकत्वं वा प्रसक्तमिति चेन्न;—सर्वभाषानादित्वे, अस्मदिष्टस्य साधुभावात् । परेष्टस्य वा पौरुषेयबुद्ध्यादि(बौद्धादि ?)प्रामाण्यस्यासिद्धेः । पैशाचमागधादिभाषा भवत्वनादिः, आदिमती वा; तन्मयस्तु बौद्धार्हताद्युपदेशग्रन्थस्तत्तत्कर्तृकृत इति तैरेवोक्तं प्रसिद्धं च । न चेह तथेति वक्ष्यते ।

(संस्कृतस्य भाषान्तरतो विशेषः)

वस्तुतस्तु विशेषं ब्रूमः । संस्कृतयोनितयैव तावत् प्राकृतादीनि

अभियुक्तैरनुशिष्यन्ते । न चैवं संस्कृतस्य काचित् योनिर्दृश्यते । प्रादेशिकानि, पामरपरिगृहीतानि च तानि । इदं तु सार्वत्रिकं सत्परिगृहीतञ्च ; अपभ्रंश इत्येव तेषां व्यवहारः, अस्य तु संस्कृतमित्येव । तदा [था] हुः—"शास्त्रेषु संस्कृतादन्यदपभ्रंशतयोदितम्" इति । न चात्र कश्चित् संकेतयिता स्मर्यते । तेषु तु सन्नपि न स्मर्यताम् ; अवान्तरापभ्रंशपारम्पर्येण स्वरूपनिष्पत्तिरुपपद्यते । इह तु यदि संकेतयिता स्यात्, तन्मयस्य वेदसन्दर्भस्यापि स एवान्यो वा कश्चित् कर्ता अवश्यम्भावी, स च स्मर्तव्यत्वे सति अस्मरणान्नास्तीति वक्ष्यामः । एवमनादौ संस्कृते वर्तमाने अन्यासां उदयविलयभाजां भाषाणां सम्भवः । नचैवमिहापि तत्तत्पदविशेषाणामुदयनविलयनसद्भावात् कालक्रमेण वेदसन्दर्भस्यापि विप्लव इति शंकनीयम् ; सर्वतस्सम्प्रदायाविच्छेदात्, व्याकरणाद्यंगोपांगैः सुरक्षितत्वाच्च । अन्तिमयुगवैयाकुली च न वेदमत्यन्तायाऽऽस्कन्दति । [1]विशिष्टदेशवासिभिश्च महर्षिभिर्युगान्तरे पुनर्यथावत् वेदः प्रवर्त्यत इति न कश्चिद्दोषः । अतोऽन्यत्र संकेतेन बोधकत्वदर्शनेऽपि वृद्धव्यवहारपारम्पर्यव्युत्पन्नस्य संकेतयितृपुरुषसम्भावनारहितस्य संस्कृतशब्दराशेर्न सांकेतिकत्वमुत्प्रेक्षणीयमिति ।

### (रुद्रादिनामकरणनिर्वाहः)

यच्च नाम्नः कर्तृदर्शनमुदाहारि—तदपि तत्तन्नामादिमत्त्वानादित्वयोः समम् ; न त्वादिमत्त्वैकान्तम् । यथाभूतसंस्थानविशिष्टस्य

---

1 विशिष्टेति । मलय-महेन्द्र-विन्ध्य-हिमवत्प्रभृतिदेशविशेषवर्तिनः अगस्त्य - पराशरापस्तम्ब—व्यासादिमहर्षयोऽनुसंदधानाः कृतयुगारम्भे यथापूर्वं प्रवर्तयिष्यन्तीति परमतभङ्गे उक्तम् ।

पूर्वस्मिन् कल्पे यन्नाम, उत्तरस्मिन्नपि कल्पे तथाभूतसंस्थानविशिष्टस्य तदेव नाम क्रियते । तत्र यद्यपि संस्थानादिनिबन्धनास्ते ते शब्दाः, तथापि शोधन(ने ?) संस्कार[ रेपि ]विशेषलाभात् "अनपहतपाप्मा वा अहमस्म्यनाहितनामा नाम मे धेहि" इत्याम्नातम् । स च संस्कारः पूर्वपूर्वरुद्रादि(दौ ?) प्रयुक्तेनैव नाम्ना निर्वर्त्त्यत इति नापूर्वनामकरणम् । स्मृतिरपि वेदशब्देभ्य एव नामरूपव्याकरणं व्याचष्टे, "सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥" इति । वाचकानुसन्धानपूर्विका च वाच्यसृष्टिराम्नायते—"स भूरिति व्याहरत्, स भूमिमसृजत" इति । अतः श्रौतं नामकरणदर्शनमपि तत्तन्नाम्नां प्रवाहानादितयाऽप्युपपद्यमानं नैकान्ततः सांकेतिकतां स्थापयितुमलम् ।

यत्तु नाम्नः प्रळयः श्रूयत इति, तत्राह—

**६. सू-सतः परमदर्शनं विषयानागमात् ॥ १-१-१३ ॥ (सि)**

प्रळयदशायामपि तज्जातीयवाचकतयेश्वरबुद्धौ सत एव नाम्नः केवलमदर्शनम्, वाच्यस्य तदानीमनारम्भात्, यदा तु—कल्पान्तरे पुनस्तज्जातीयं वाच्यमारभ्यते, तदा तस्यैव नाम्नः पुनर्दर्शनं स्यात्; यथा कुण्डले विलीने कुण्डलनाम न दृश्यते, पुनः कुण्डले कृते तदेव नामाऽऽगच्छति, एवमिहापि । यत्तु घटध्वंस इति, तत् किं घटनाम तदानीं तस्मिन् द्रव्ये वर्तते ॥ निमित्तव्यावृत्त्या तदपि व्यावृत्त-

---

13. घटध्वंस इतीति । घटध्वंसे तन्नामलयो नाम तद्वाचकत्वलय एवेत्यनित्यत्वशंकायाः पूर्वकृताया अनुवादः। परिहारस्तु,

मिति चेत्-किं तावताऽतिरिक्तमधीमहे। रूपविभागे हि नामविभागः। तदभावे तत्र तत्र प्रयुज्यते—इत्यभिप्रेत्य, "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत" इत्याम्नातम्।

करोतिशब्दं निर्वहति—

## ६. सू—प्रयोगस्य परम् ॥ १-१-१४ ॥ (सि)

केवलं प्रयोगस्य वाचकोऽयम्, "नामानि कृत्वा" इत्यादौ करोति-शब्दः। 'वेदशब्देभ्यो नामानि चकार' इत्युपबृंहणात्। वाचकप्रति-सन्धानपूर्वकवाच्यसृष्ट्याम्नानस्योदाहृतत्वाच्च। न चामुख्यः स्यात्, स्वतन्त्रस्य यथापूर्वकरणेपि कर्तृत्ववाचोयुक्तेरनपायात्।

---

नाम्न इव तद्वाचकत्वस्याप्यलेय एव। अर्थेन सह नाम्नोऽतिरिक्त-संबन्धाभावात् अर्थाभावात् अर्थोपादानाद्युपयोगिव्यवहाराभाव एव नामलयो विवक्षित इति।

14. करोतिरिह प्रयोगमात्रवाचकः, न तूत्पादनवाचक इति सूत्रार्थः। वाचोयुक्तेरिति। ननु पुरुषान्तरकृतत्वेनगृहीतं यत् वाक्यम् तदुच्चारणे हि कर्तृत्वं न भवति। वेदस्य तु तदभावादीश्वरेण स्वतन्त्रकर्त्रा प्रयोगात् कर्तृत्वमस्त्विति चेन्न—पूर्वकल्पेऽप्यस्य वेदस्य स्थिततया ईश्वरस्येदानीं तत्कर्तृत्वायोगात्। एवं प्रतिपूर्वकल्पम्। एवमेव संकेतः कदा कृत इत्यस्य दुर्वचत्वात् संकेतोऽपि नेष्यते। नन्वीश्वरेच्छां विना न किमपि भवति। अतः संकेताधीनत्वमेषि-व्यमिति चेत्—सर्वत्रैव कार्ये तत्सत्त्वादत्र को विशेषः। तज्ज्ञानास्या-नावश्यकत्वञ्चात्रापि तुल्यम्। बोधकत्वज्ञानस्यैव पर्याप्तत्वादि-त्यलम्।

यत्तु अनेकार्थशब्दानां नानार्थप्रत्यायनादियौगपद्यम्, तत्राह—

**६. सू—आदित्यवत् यौगपद्यम् १-१-१५ ॥ (सि)**

यथैकस्याऽऽदित्यस्य प्रभारूपशक्त्या युगपदेव तत्सम्बन्धिनानार्थप्रकाशनम्, तथैकस्यैव गोशब्दस्य सम्बन्धसादृश्यपुरस्काराभावेन अनन्यथासिद्धप्रयोगवशादनेकेष्वर्थेषु शक्तिभेदसिद्धेर्यथाविवक्षं तत्तदर्थेषु बोधजननं न विरुद्धम्। न ह्येकस्य युगपदनेकसम्बन्धमात्रं विरुद्धम्, सर्वत्र दर्शनात्। न चानेकसम्बन्धनियमः, आर्द्रेन्धनदहनादिभिरनेकै धूमादेस्सम्बन्धनियमोपलम्भात्। अत एव नाप्यनेकबोधनम्, धूमादेः आदित्यचक्षुरादेश्च युगपदनेकबोधकत्वप्रसिद्धेः। तद्वदेव विरुद्धानेकबोधकत्वमपि न विरुद्धम्।

ननु—सामग्रीभेदात् तत्र स्यात्, अत्र तु न तदिति चेन्न ;—अत्रापि तत्तद्वि[षय ?]वर्तिपदान्तरसमभिव्याहारादिसामग्रीविशेषमुपजीव्य तत्तदर्थविशेषबोधनात्। यदा त्वेकं पदं श्रूयते, तदा अनेकार्थे शब्दे विवक्षितविशेषानिश्चयात् सन्देग्धि पुरुषः। न हि वह्निमुपाददाने कस्मिंश्चित् पार्श्वस्थः प्रथमं पाकार्थं प्रकाशार्थं मशकार्थं वेति सन्देग्धीति तावता वह्नेः स्वाभाविक्यस्तास्ताः शक्तयः पराधीनाः स्युः।

---

15 वर्णनित्यत्वविभुत्ववादिभिर्मीमांसकैरेवमर्थो वर्णितः—नानादेशस्थैः पुरुषैर्यथा युगपदादित्य उपलभ्यते, तस्यैकस्यापि तावद्देशव्यापित्वात्, तथा वर्णोऽपि विभुः। तस्य दूरस्थतया परिच्छिन्नतया ग्रहणम्, वर्णस्य तु तत्तत्र ध्वनिव्यंग्यत्वादिति। वाचकत्वविचारस्यैवात्र क्रियमाणत्वात् तस्यार्थस्यायोगाद्व्याख्यान्तरमाह यथेत्यादिना। नियमः इत्यत्र विरुद्ध इति, बोधनमित्यत्र विरुद्धमिति चानुषङ्गः।

विष्फारिताक्षाश्च युगपदेकयैव सामग्र्या प्रदेशभेदनियतान् घट-तदभावादीन् विरुद्धान् जानन्ति । न च तत्र सामग्रीभेदः; तद-सिद्धेः; युगपदनेकेषां ज्ञानानामनुत्पत्तेश्च । सम्बन्धग्रहणाग्रहणाभ्याञ्च पुरुषभेदेन नियतानेकबोधनमनुमानेऽपि दृष्टम् । अतो न साङ्केतिकत्वं-निबन्धनमिदं यौगपद्यम् । (15)

यत्तु विकृतिपदानांमनादित्वं नोपपन्नमिति—तत्राह ।

**६. सू—शब्दा [वर्णा] न्तरमविकारः ॥ १-१-१६ ॥ (सि)**

यो विकारत्वेन निर्दिष्टो दध्यादिशब्दः, स तु दधिशब्दात् शब्दान्तरम् । एतदुक्तंभवति—दधिशब्दो दध्यशब्दश्च द्वाव [दधिदध्यशब्दाव] प्यनादी । तत्प्रयोगश्च प्रतिनियतविषयः । ततश्चानन्तानां प्रतिपदोपादानस्य दुश्शकत्वात् सौकर्यायौत्सर्गिकापवादकल्पनया प्रकृतिविकृतिवदनुशिष्टम् (?) । एवं पदान्तरेष्वपि । अत एव व्याकरणान्तरेण प्रकृतिविकृतिवैपरीत्यमपि न शंकनीयम् । सौकर्योपायभेदेन हि नानाव्याकरणोत्थानम् । न च सादृश्यात् प्रकृतिविकृतिभावः शक्यः; वैपरीत्यस्यापि प्रसंगात् । सदृशेष्वपि [1]दधिकुन्दादिषु तद भावात्, असदृशेष्वपि गोमयवृश्चिकादिषु तत्सद्भावात् । (16)

यत्तु वृद्धिरूपविकारदर्शनम्, तत्राह—

**६. सू—नादवृद्धिः परा ॥ १-१-१७ ॥ (सि)**

---

1 दध्नः कुन्दपुष्पस्य च धावल्यादिसादृश्येऽपि न हि प्रकृतिविकारभावः ।

17. नादवृद्धिः परा-दूरस्थाःशब्दगत वाचकत्वेनासंबद्धा । तीव्रत्वादेर्वाचकतावच्छेदक कोटावप्रवेशादिति सूत्रार्थः ।

अयमभिप्रायः—न ह्यत्र वाचकस्वरूपान्यथाभावलक्षणा वृद्धिः प्रत्यक्षेणोपलभ्यते, अपि तु रसादिष्विव तीव्रत्वादिलक्षणा। सा च नादशब्दाभिधेया वर्णेष्वेव सामग्रीविशेषाद्भवति। न च तावता बोधकाकारे कश्चिद्विशेषः; मन्दतीव्रादिभावानादरेण वर्णविशेषक्रमनियमादिभिरेव वाचकाकारव्यवस्थापनादिति। (17)

तदेवं षण्णां षड्भिरुत्तरं दत्तम्। अथ वाचकापौरुषेयत्वे हेतव उपन्यस्यन्ते—

**६. सू-नित्यस्तु स्यात् दर्शनस्य परार्थत्वात्॥ १-१-१८॥ (सि)**

वाचकश्शब्दो **नित्यस्स्यात्**, न तु सांकेतिकः। कुतः? **दर्शनस्य परार्थत्वात्**। दर्शनं-प्रयोगः। वाचकप्रयोगस्य परप्रत्ययार्थत्वादित्यर्थः। एतदुक्तं भवति—पुरुषो हि समयं कुर्वन्, 'अस्मिन्नर्थेऽयं शब्दो मया संकेतितः' इति परं प्रत्याययेत्। तत्र संकेत्यमानशब्दव्यतिरिक्तैः सर्वैः शब्दैः प्रागेव संकेतितार्थैर्भवितव्यम्, संकेत्यानामिव तेषामपि बोधकत्वात्; एवं तद्व्युत्पादनार्थशब्दान्तरेष्वपीत्यनवस्था। अतो न कदाचिदपि परप्रत्ययो जायेत। अत्र[तो] (अथ?) वृद्धव्यवहारे(रः?) व्युत्पन्नशब्दान्तरं पुरुषं प्रति कश्चिच्छब्दः संकेत्येत, कथं तत्र विवदेत, अविरोधात्। न च वृद्धव्यवहारे संकेतग्रहः, बोधकत्वग्रहणमात्ररूपत्वादित्युक्तम्। एवं पूर्ववृद्धानामपि इति वाचकः, न सांकेतिकः।

---

18. सूत्रे दर्शनस्येत्यस्य शब्दप्रदर्शनस्येत्यर्थः। प्रदर्शनं श्रवणानुकूलव्यापारः, प्रयोग एव। कथं विवदेतेति। बोधकत्वस्य स्वाभाविकत्वे कथं विवाद इत्यर्थः।

भवतु केषांचिच्छब्दानामनादिर्व्यवहारः, केषांचित् संकेतः सम्भवति, तदुभयसंवलनं च वेदे शंकितुं शक्यम्; तत्राह—

## ६. सू—सर्वत्र यौगपद्यात् ॥ १-१-१९ ॥ (सि)

सर्वत्र—देशे काले च सर्वेषां शब्दानाम्। न ह्येतस्मात् कालात् परमयं शब्दः प्रवृत्त इति वयमनुस्मरामः। न च केनचित् संकेतितस्यैकस्य शब्दस्य सर्वदेशवर्तिभिर्ग्रहणमुपपद्यते, येन सर्वत्र प्रयुज्येत।

अथ स्यात्, सांकेतिकेषु शब्देषु लिंगवचनविभक्तिकृत्तद्धितसमासादयोऽनुशिष्यन्ते; प्रयुज्यन्ते च वृद्धैः। अतः सांकेतिकासांकेतिकसंवलनं शक्यमिति, तत्राह—

## ६. सू—संख्याऽभावात् ॥ १-१-२० ॥ (सि)

न ह्येते शब्दा नित्याः एते तु सांकेतिका इति लौकिकैः, परीक्षकैः, पाणिनिकात्यायनपतञ्जलिप्रभृतिभिर्वा शब्दमनुशासद्भिः संख्यानं क्रियते। यच्च सांकेतिकेष्वपि शब्देष्वप्रकृतिभूतेषु प्रत्ययाद्यनुशासनम्, तदपि तथैव वृद्धव्यवहारपारम्पर्यमुपजीव्य। तच्च यथादर्शनं लोकमात्र एव द्रष्टव्यम्।

ननु पाणिन्यादय एवाचार्याः मतभेदेन देशभेदेन शब्दान् कांश्चिद्विकल्पयन्ति, "लोपश्शाकल्यस्य", "एङ् प्राचाम् [देशे]" इत्यादिषु। अतः केषांचिच्छब्दानां पुरुषमतिभेदमूलत्वात् काचित्कत्वात्

---

20. उपजीव्येति। प्रकृतेरिव प्रत्ययान्तसमुदायस्यापि सांकेतिकत्वं लोकव्यवहारादिष्टमिति ज्ञापनाय प्रत्ययघटनकल्पनेति भावः। असांकेतिकेष्वपि हि तथैवेति।

सांकेतिकत्वमुन्नयामः, ततश्च सर्वानाश्वास इत्यत्राह—

६. सू-अनपेक्षत्वात् ॥ १-१-२१ ॥ (सि)

विकल्पानुशासनस्य संकेतानपेक्षत्वात्। न ह्यत्र शाकल्यादेः सङ्केत उपदिश्यते, अपितु मतम्। तच्चानादित्वेऽपि वैकल्पिकेषु केषुचिदभिमतेरुपपद्यते। पूजार्थं च क्वचिदाचार्यान्तरकीर्तनम्। देशभेदोपाधिकोपि प्रयोगोऽनादिरेव ज्ञाप्यते; विपर्यये प्रमाणाभावात्। प्राचां देशाभिधानस्य(?) यस्य पदस्य अचामादिरेङ् भवति, तत् वृद्धसंज्ञं भवति। तत्र "वृद्धाच्छः" इति छप्रत्ययः, तेन च भोजकटीय इत्यादिपदनिष्पत्तिः। तच्च पदं तदर्थविवक्षया सर्वत्र प्रयुज्यते, न केवलं प्राचां देशे। एवमितरत्रापि। अतो नानेन सांकेतिकसंवलनशंका। (21)

अथ स्यात्-योगिनां नानाशरीरपरिग्रहः कीर्त्यते-"आत्मनो वै शरीराणि बहूनि मनुजेश्वर। प्राप्य योगबलं कुर्यात् तैश्च सर्वां महीं चरेत्" इत्यादिभिः। ततश्च कश्चिद्योगी वा महायोगेश्वरो हरिरेव वा अनन्तानि शरीराणि परिगृह्य अद्यतनप्रयोज्यप्रयोजकवृद्धादिवत् स्वयं व्याजहार, व्यवजहार च। तत्राद्यतना बाला इव जगदादिसम्भवाः सर्वाः प्रजा व्युत्पाद्यन्ते। एवमयमीश्वरोपज्ञं प्रवृत्तः सर्वशब्दव्यवहारः। ते च(तथा च ?) न्यायाचार्याः, "मायावत् समयादयः" (न्यायकु.2.) इति। तत्राह—

६. सू-प्रख्याऽभावाच्च योगस्य ॥ १-१-२२ ॥ (सि)

---

21. अर्वाचीनसंकेतं परित्यज्य आदिपुरुषीयसंकेतोक्तौको दोष इति पृच्छति अथस्यादिति।

ईदृशस्य योगस्य, **प्रख्याऽभावात्** । प्रकृष्टा ख्यातिः–**प्रख्या** । प्रत्यक्षादिभिः प्रसिद्धिरित्यर्थः । न ह्यर्वाचीनेषु नानादेहपरिग्रहपर्यवसितं कञ्चित् योगं पश्यामः । अनुमानञ्च योगिनामीश्वरस्य च नास्तीत्युक्तम्; समर्थयिष्यते च **शारीरके** । अतः परिशेषात् तथाविधातिशये शास्त्रमेव प्रमाणं स्यात् । तच्चेच्छास्त्रं प्रमाणम्, कृतं प्रामाण्यार्थेन सांकेतिकत्वसंरम्भेण । अथाप्रमाणम्, कृतं प्रत्यक्षाद्यगोचरासम्भावितादृशातिशयमूलसांकेतिकत्वोत्थानेन ।

यस्तु परमास्तिकपरिग्रहादेव वेदप्रामाण्यं तन्मूलञ्च पारमेश्वरं योगातिशयं पुरस्कृत्य सर्वशब्दानां सांकेतिकत्वं ब्रूयात्, न तावत् तेन सह वेदप्रामाण्यादौ विवादः । सांकेतिकत्वं तु प्रमाणाभावात्, विपर्यये प्रमाणसद्भावाच्च प्रतिषेधामः ।

इतश्च–६. **सू-लिंगदर्शनाच्च** ॥ १-१-२३ ॥ (सि)

साक्षात् नित्यत्वे लिंगदर्शनात् । "तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् ।" इति अन्यपरमपि नित्यत्वमनुवदति । तदेतत् संकेताभावे लिङ्गं भवति । न हि वर्णमात्रं वाक्छब्देन उच्यते; कचटतपादिनिर्देशस्यार्थप्रत्यायकत्वाभावात्, तेन रूपेण

---

22. **तच्चेच्छास्त्रमिति । अस्मिन्नधिकरणे सांकेतिकत्वपूर्वपक्षो हि वेदाप्रामाण्यसमर्थनायारब्धः । प्रमाण्ये स्वीकृते किमर्थं पूर्वपक्षः । तदस्वीकारे च योगिमूलकेदृशपूर्वपक्षः कथमित्यर्थः । पूर्वकल्पेष्वेषामेव पदानां प्रयोगस्य शास्त्रतोऽवगमात् सर्गादिपुरुषसंकेतोऽपि दुर्वच इति हृदयम् ।**

यस्त्वित्यादि । 29 **सूत्रे** पतदर्थो विशदः ।

वाचकत्वाभावे वाक्छब्दावाच्यत्वात् ; अनन्वयप्रसंगाच्च । अतोऽर्थ-प्रत्ययजनकं पदं वा वाक्यं वा वाचेति परामृश्यते । तत्राऽऽद्यपक्षे सिद्धः संकेताभावः । द्वितीये तु पदस्य सांकेतिकत्वे वाक्यनित्यत्वा-सम्भवादाक्षिप्तः ।

ननु—श्रुतिप्रामाण्ये सिद्धे तदर्थयाथात्म्यनिबन्धनपूर्वपक्षो-त्थानम्, ततश्च तदप्रामाण्यसाधनमिति व्याघातः ; श्रुतिप्रामाण्य-मनभ्युपगच्छतः श्रुत्यैवोत्तरं दीयत इत्यात्माश्रयश्च ॥ मैवम् ; युक्ति-विशेषमूले पूर्वपक्षे प्रमाणतया सिद्धान्त्यभ्युपेता श्रुतिरपि संवादिनी इत्यनुग्राहकतया श्रुत्युदाहरणात् । [श्रुतिविरोधशंकायां ?] तत्परिहारार्थं च सिद्धान्ते श्रुत्युपपादनात् । एवमन्यत्रापि द्रष्टव्यम् । नचात्म-निर्वाहे विशेषः, वेदाधिकरणपूर्वपक्षे एतदधिकरणसिद्धान्ते च परैरपि श्रुत्यनुप्रवेशभाषणादिति ।

(अर्वाचीनशाबरादिव्याख्यानिरासः)

ये तु वर्णनित्यतापरमिदमधिकरणं वर्णयन्ति, तेषां निरर्थकमिद-मधिकरणम् । वर्णानामनित्यत्वेऽपि पूर्वपूर्वपुरुषोच्चारितक्रमसजातीय-क्रमेणैवोत्तरेषामुच्चारणमिति पुरुषस्वातन्त्र्यरहितानादिव्यवहार उपपद्यते। यथा वाच्यस्य घटादेरनित्यत्वेपि तज्जातिसंगृहीताकारेणानन्य(आनन्त्य?) व्यभिचारपरिहारः, तथा वाचकेऽपि तत्तद्वर्णादिजातीयसंगृहीताकारेण व्युत्पत्तिरविरुद्धा । ननु–वाच्ये वाचके च संस्थानातिरिक्ता जातिर्भ-वद्भिर्नाभ्युपगम्यते, तत् कथं दृष्टान्तो दार्ष्टान्तिके गतिरिति ॥ उच्यते। यादृशेन संस्थानादिना परेषां जातिरभिव्यज्यते, तादृशेनैव सांदृष्टिकेन

तत्तद्व्यवहार इति किमत्र दुष्यति। यस्य तु जातिः संस्थानातिरेकिणी, स कथं तयैव संग्रहे वर्णनित्यतामभिनिविशते। तत्तज्जातीयवर्णानां यथाव्युत्पत्ति तदर्थ(तत्तदर्थ ?) बोधकत्वमिति नार्थप्रत्ययेऽपि वर्णनित्यतोपकरिष्यति। सिद्धान्ते च वर्णस्वरूपनित्यत्वोपपादनमपि न वाचकानादित्वोपपादकम्। म्लेच्छादिभाषासु अद्यतनैश्च यथारुचि क्रियमाणेषु सांकेतिकेषु शब्देषु वर्णानादित्वमिच्छतामपि पुरुषस्वातन्त्र्यानुप्रवेशस्याभ्युपगमात्। शब्दस्वरूपोत्पत्तिविनाशयोश्च सृष्टिप्रळयप्रकरणादिषु बहुशः प्रपञ्चितत्वेन दुस्त्यजत्वात्।

यच्चेदं **परेषामाक्षेपवार्तिकम्**, "यद्यनित्यत्वपक्षोऽपि शब्दादेवावगम्यते। अनादिव्यवहारश्च नित्यत्वं किं न साध्यते॥" इति— न तस्याद्यापि सम्यञ्चं समाधिं पश्यामः, "क्रमः क्रमवताम्" इत्यादेः प्रतारणायमानत्वात्।

ननु महाप्रळयेन वेदानित्यतां परिचोद्य, परिहृतं **शारीरके**— "समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो दर्शनात् स्मृतेश्च" इति। तत्र कथं न वर्णानित्यतां परिहरिष्यतीति मंस्यते॥ उच्यते। न हि तत्र वर्णानित्यतामात्रेण वेदानित्यत्वं शंकितम्; अपि तर्हि प्रवर्तकस्य प्रजापतेः प्रळयात् प्रवर्तनीयस्याचित्परिणमविशेषगुणभूतस्य वेदाख्यशब्दराशेः स्वाधारपरिणतिविशेषविलयेन प्रवर्तयितुमशक्यत्वाच्च वेदानित्यत्वं परिचोदितम्। ईश्वरेण पुनस्तज्जातीयतत्त्वादिसृष्ट्या समाहितमिति।

**संकेतादर्शनादन्यकालेऽन्यत्रापि सम्भवात्।**
**धातुर्यथापुरं सर्गाच्च सांकेतिकता गिराम्॥**

सजातीयेषु वर्णेषु विजातीयक्रमान्वयात् ।
व्युत्पत्तिर्दृश्यते तत्र नित्यानित्यकथा वृथा ॥
सांकेतिकेषु शब्देषु वेदानां पौरुषेयता ।
नान्तरीयकसिद्धेति तन्निरासोऽयमर्थवान् ॥
पदनित्यतया वेदनित्यत्वं न प्रशास्महे ।
तदनित्यतया प्राप्ता निषेद्धव्या त्वनित्यता ॥ १६ ॥

इति संबन्धस्वाभाविकत्वाधिकरणम् ॥ ६ ॥
शब्दनित्यत्वाधिकरणम्

## अथ वेदस्यार्थप्रत्यायकताधिकरणम् ।

७. ॥ सू-उत्पत्तौ चावचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥
॥ १-१-२४ ॥ पू.

पदपदार्थसम्बन्धे पुरुषापेक्षा निराकृता । पदसमुदायरूपसन्दर्भे तु तदपेक्षा निराकरिष्यते । इह तु पदानां पदार्थेषु स्वाभाविकशक्ति-

---

विजातीयक्रमेति । सर, रस इति वन, नव इत्यादि द्रष्टव्यम् । तदानुपूर्वीविशिष्टस्य त्वन्मते अनित्यत्वात् कथं वर्णनित्यताप्रयुक्त-वाचकत्वनित्यत्वमिति ।

24. पदेत्यादि । औत्पत्तिकसूत्रेऽर्थत्रयमुक्तम् । तत्रान्तिमस्य प्रामाण्यस्य हेतुपुरस्सरं स्थापनं तदधिकरणकार्यम् । अथ 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति प्रथमांशस्य स्थापनं सांकेतिकत्व-निरासेन पूर्वाधिकरणे कृतम् । अथ 'तस्य ज्ञानमुपदेशः' इति द्वितीय-स्या तत्रोक्तस्य स्थापनमत्र क्रियते वेदस्यार्थज्ञापकत्वायोगनिरासेनेति भावः । विन्ध्याटव्यां मदमुदित इति वाक्यं स्वांगीकृतं श्रीभाष्य-दर्शितम् । अतन्निमित्तत्वात्-तद्भिन्नकिञ्चिन्निमित्तकत्वादित्यपि ।

सद्भावेपि लोकदृष्टविजातीये अर्थे प्रमित्युत्पादनशक्तिर्नास्तीत्याशंक्य परिह्रियते। यद्यपि—पदपदार्थयोरौत्पत्तिकः सम्बन्धः। स च वृद्धव्यवहारेऽध्यवसितः। शब्दप्रामण्यं च सामान्येन प्रतिष्ठितम्। न च प्रामाण्ये संवादाद्यपेक्षा। अत एव च वेदे पदपदार्थज्ञानं च जायत एव। न च साक्षाद्बाधादिकमपि दृष्टम्—तथापि वेदवाक्यानां लोकोत्तरेष्वर्थेषु प्रामाण्यं न सम्भवति, विवक्षितविपरीतव्याप्त्यपहतत्वात्। तथाहि—यद्यपि कर्त्रादेः शरीरादिमत्त्वदर्शनादशरीरकर्त्रनुमानेपि विशेषविरोधादिदोषः, तथापि कर्मणां साध्यसाधनभावः आनन्तर्येण वा दृष्टेन वा केनचित् द्वारेणेति नियमसिद्धौ नापूर्वद्वारफलसाधनत्वं युक्तम्। यथा शशस्य निर्विषाणतयैवोपलम्भात्, विन्ध्याटव्यां शशाः श्रृंगवन्त इति वाक्यं साक्षात्प्रत्यक्षादिबाधादर्शनेऽपि विपरीतव्याप्त्या[ना]स्पदं भवति (भजति ?)-तथाऽत्रापि। न हि विन्ध्याटव्यां मदमुदितो मातंगगणस्तिष्ठतीतिं वाक्यमिव, तत्र श्रृंगवन्तः शशाः संचरन्तीति वाक्यं विश्वसिमः।

अथ राजसेवादिनयेन देवताप्रीतिद्वारा फलप्रदत्वं सम्भावितमपि ब्रूषे, तत्रापि उक्तन्यायेन देवताशब्दितानां चेतनविशेषाणामलौकिकमतिशयं शब्दः प्रतिपादयितुं न शक्नोति। न हि शशविशेषस्य विषाणवत्त्वादौ पुरुषविशेषस्य सहस्रनेत्रत्वादौ सर्वज्ञत्वादौ वा कञ्चन विशेषं पश्यामः। न हि शुक्तिविशेषेषु मुक्तासम्भव इव कैश्चित् दृष्टपूर्वोऽयमर्थः, येन तत्प्रत्ययादाश्वासः स्यात्। तस्मादयोग्यपदसमभिव्याहाररूपाणि वेदवाक्यानीति अनपेक्षत्वलक्षणं प्रामाण्यमनुभवितुं नार्हन्तीति पूर्वः पक्षः। तदेतदभिप्रेत्याह **उत्पत्तौ चावचनाः स्युरर्थस्या-**

तन्निमित्तत्वादिति । उत्पत्तौ च-सम्बन्धौत्पत्तिकत्वादौ सत्यपि । यद्वा ज्ञानोत्पत्तौ सत्यामपि । अवचनास्स्युः-शब्दास्तएव सन्तोऽपि वेदवाक्यरूपसमुदाये लोकोत्तरस्यार्थस्य न प्रमापकास्स्युः। अर्थस्यातन्निमित्तत्वात्-शब्दार्थस्य शब्दमात्रनिमित्तत्वाभावादित्यर्थः । यदि शब्दार्थस्य शब्दमात्रमेव निमित्तं स्यात्, तदा शृंगवन्तः शशा इति शब्दोऽपि शशशृङ्गसत्तानिमित्तं स्यात्। अथ तत्र शशान्तरदृष्टव्याप्तिरनुसरणीयेति अलौकिकोऽतिशयो न वक्तुं शक्यः, तर्हि शब्दस्य दृष्टानुसारोऽप्यपेक्षणीय इति अनपेक्षत्वलक्षणप्रामाण्यासम्भवादयुक्तम्, चोदनालक्षणोऽर्थो धर्म इति।

तत्र राद्धान्तमाह—

**७. सू-तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्**
**॥ १-१-२५ ॥ (सि)**

**तद्भूतानां**-तस्मिन्नर्थे भूतानां, संकेतासम्भवात् बोधकतयैव लब्धसत्ताकानाम् **क्रियार्थेन** अलौकिकचतुर्वर्गरूपश्रेयस्साधनक्रियार्थेन **समाम्नायः**-समुच्चारणं सपरिकरक्रियारूपार्थबोधनार्थमेव समुच्चारणम्।

---

25. तद्भूतानामिति । भू प्राप्ताविति धातुग्रहणं तमर्थं भूतानां - प्राप्तानाम् । तदर्थवाचिनामित्यर्थोऽपि वर्णयितुं शक्यते । अभेदार्थपरतया घटभूतः पटभूत इतिवत् तद्भूता इति प्रयोगो वा ; तथाभूतानां ; वाच्यतयास्थितानामित्यर्थः । क्रियापदेन साध्यावस्थकथनात् भूतपदेन सिद्धावस्थकथनमिति क्रियातिरिक्तसिद्धवस्तुवाचिनां लौकिकवाक्य इव क्रियावाचिनाऽन्वयादित्यपि स्यात् । सिद्धानां साध्यान्वय इति साध्यप्राधान्यं शाब्दमर्थादत्र। अथापि मीमांसकोक्तस्यार्थस्यादुष्टत्वात् स एवात्रानूदितः । शिष्टमुपरि ।

उच्चार्यमाणा हि वैदिकाः शब्दा अलौकिकचतुर्वर्गरूपश्रेयस्साधनरूपक्रिया-चचना उपलभ्यन्ते। **अर्थस्य तन्निमित्तत्वात्**-विलक्षणस्य वाक्यार्थस्य शब्दैकनिमित्तत्वात्, व्याप्तिपरामर्शनिरपेक्षत्वादित्यर्थः।

तथाहि—वाक्यादर्थप्रत्यये व्याप्तिपरामर्शापेक्षाऽस्तीति वदता किं तदभावे बोध एव नोत्पद्यत इत्यभिप्रेतम्, उतोत्पन्नोपि व्यापक-निवृत्त्या बाधितविषय इति। नाद्यः, दिनकरबिम्बचौर्यवत् अशक्यत्वात्। त्वदुक्तं वाक्यमपि न किंचिद्दूषणं बोधयतीति वैयात्यस्य दुर्वारत्व-प्रसंगाच्च। शशविषाणवाक्यादपि बोधो जायत एव। नापि द्वितीयः, असम्भावितकारणदोषस्य दृढोत्पन्नस्य ज्ञानस्य [वस्त्वन्तरदृष्टासाधारण-स्वभावाभाववद्वस्तुविषयतामात्रेण बाधे पावकौष्ण्यप्रत्ययस्यापि भंग-प्रसंगात्। सर्वभावानामपि हि शक्तयः प्रातिस्विकप्रमाणसामर्थ्यसिद्धाः नापह्नवमर्हन्ति॥ शशविषाणवाक्ये तर्हि का वार्ता॥ वह्निशैत्यवाक्य इव दृष्टबाधः। अदृष्टे तु–यदि वक्ता नाप्तः, तदा कारणदोषशंकाग्रस्त-तया दृष्टव्याप्त्या बाध्येतैव। यदि तु वक्ता प्रत्ययितः, तदा कस्तत्र ब्रूयात् तद्विषयाप्तवचन[ा]भावादेव तत्परित्यागम्। अन्यथा मुक्ताशुक्ति-वृत्तान्तमपि दूरस्थो बाधेतैव।

एवं तर्ह्यशरीरकर्तृत्वविषयं सामान्यतोदृष्टमपि जीवेदिति चेन्न;–व्याप्तिपरामर्शमूलत्वादनुमानस्य, व्याप्तेश्च वैपरीत्यग्रस्तत्वात्। वाक्ये तु

---

25. अपरिदृष्टार्थविषयेऽपि प्रामाण्ये तार्किकोक्तं जगतः अशरीरपुरुषकर्तृकत्वानुमानमपि प्रमाणं स्यादित्यत्र व्याप्तिसापेक्ष-प्रमाणत्वात् तत् व्याप्तिभंगादप्रमाणमित्याह एवमित्यादिना।

आकांक्षा-सन्निधि-योग्यतानामेव परामर्शनीयत्वात् तावतैव विशिष्ट-ज्ञानोत्पत्तौ बहिरंगेनानुमानेन बाधायोगात्। अन्यथा प्रत्यक्षेऽपि बाधप्रसंगस्य दर्शितत्वात्। ज्वालैक्यप्रत्यक्षादिकं तु सम्भवद्दोषजातीयतया बाध्यते।

ननु—योग्यतैव विपरीतव्याप्तौ न सिद्ध्यति, यथा-अग्निना सिञ्चेदित्यादौ, इति चेन्न ;—तत्र प्रत्यक्षेणैव बाधात्। इह तु तदभावात्। यत्र च बाधो दृश्यते यूपादित्यादौ, तत्र च अयोग्यत्वं बाधं चेच्छामः। तात्पर्येण तु प्रामाण्यं वक्ष्यामः। एतदुक्तं भवति—यत्र साक्षात्प्रत्यक्षेण बाधः, यत्र वा भिन्नमभिन्नमित्यादाविव भावाभावात्मना साक्षाद्विरोधः, न तस्य प्रमाणता। यत्र तु तथाविधायोग्यत्वरहिते विलक्षणस्वभावे सिद्धे कार्ये वा वस्तुनि शब्दाद्बुद्धिजन्म, न तत्रानुमानेन बाधः। प्रत्युत तेनैव तस्य बाधो युक्तः। अत एवाऽऽगमबाधितमनुमानाभासोदाहरणमिति।

अथ शशविषाणवाक्यप्रतिबन्दीमुद्धरति—

**७. सू-लोके सन्नियमात्प्रयोग[ः] सन्निकर्षः स्यात्**
**॥ १-१-२६ ॥ (सि)**

---

भावाभावात्मनेति। एतद्विवरणं श्रुतेस्तुशब्दमूलत्वादित्यत्र श्रीभाष्ये, तद्वाक्यविवरणे अस्मदीये आचार्यभाष्यतात्पर्ये च द्रष्टव्यम्।

26. काशिकाव्याख्यानुसारात् प्रयोगः इति सूत्रे प्रथमान्तपाठ आदृतः। प्रथमान्ततया विपरिणाम इत्यनुक्तेः। पूर्वेण निर्देशोक्तिस्तु लोकेप्रयोग इति विशिष्टोद्देश्यलाभाय। अविसर्गपाठनिर्बन्धे तु लोके सद्विषय एव व्यवहारनियमात् प्रयोगस्य—प्रयुज्यमानानां

योऽयं लोके **सन्नियमात् प्रयोगः**–असद्भूतशशविषाणादिवर्जनेन प्रयोगः ; सः **सन्निकर्षस्स्यात् ;** सन्निकर्षमूलत्वात् । सन्निकृष्यत इति वा [संनिकर्षः ?] सन्निकृष्टं वस्तु । प्रत्यक्षादिदृष्टविषयो हि लोके वाक्य-प्रयोगः । शशविषाणादिकं तु न केनचित् दृष्टं सदिति न तद्विषयः प्रयोगः । वक्तुः श्रोतुर्वा योग्यानुपलम्भनिराकृतविषयतया शशविषा-णादिवाक्यमप्रमाणम् , न तु विपरीत [मात्र] [व्याप्ति?] बलेनेत्यभिप्रायः।

यत्तु–परैर्भाषितम्–"पदसंघातात्मानो वेदाः, पदसंघाताश्च पुरुष-कृता दृष्टाः, यथा नीलोत्पलाद्यर्थविषयाः, अत एतेऽपि कृत्रिमा इति तद्विशेषप्रदर्शनार्थमिदं सूत्रमिति । तत्र तावदस्मिन्नधिकरणे सूत्रमिद-मसंगतं स्यात् , न ह्यत्र पदसंघातस्य पौरुषेयत्वशंकयोत्थानं परैर[प्यु ?] भ्युपगतम् । तादर्थ्ये निवेशश्च न स्पष्टः । तथा च सति वेदाधिकरणमप्यत्र निवेशयितव्यम् । व्यवधानं पदद्वयविपरिणामश्च परैरेव कण्ठोक्तः । तथा च **काशिका**–"**सन्नियमा**दिति पदव्यवहितः **प्रयोग**शब्दो लोक

---

पदानामर्थानां वा संनिकर्षः—अन्वितत्वमावश्यकमित्यर्थोऽस्तु ॥ अन्यैः सर्वैस्तु प्रयोगसंनिकर्ष इति निर्विसर्गपाठः कृतः । अर्थस्तु विपरिणामादिक्लेशेन परेषामिति वक्ष्यति । तन्मते एतत्सूत्रकृत्य-मस्मदुक्तरीतिमन्तरेणान्यन्न भवति । अतः सन्नियमात् प्रयोग इति शशविषाणाद्यसद्व्यावर्तकमिति स्वरसार्थमाह योऽयमित्यादिना । परेष्टं खण्डयितुमाह यत्तु परैरिति । तादर्थ्ये निवेशश्चेति । प्रधानार्थ-शेषतया फलफलिभावकल्पनया तदर्थविचारान्तर्भावश्चेत्यर्थः ।

26. तथा च काशिकेति । सुचरितमिश्रकृता श्लोकवार्तिकव्याख्या काशिका । तत्र प्रथमसूत्रे 55 श्लोकव्याख्याने स्थितमिदं वाक्यम् । पूर्वं यत्तुपरैर्भाषितमित्युक्त्वाऽनूद्यमानं पदसंघातेत्यादि वाक्यमपि

इत्यस्यानन्तरं सम्बन्धनीयः। तदयमर्थः—लोके प्रयोगः, सन्नियमः—सम्यङ्निबन्धनात्मको युक्तः, चक्षुरादिसन्निकर्षात्; न तु वेदे, अतीन्द्रियार्थत्वात्। इदं च विपरिणामव्यवहितकल्पनयोः साधारणमप्युदाहरणं विपरिणामस्योक्तत्वात् व्यवधानमात्रोदाहरणत्वेनोक्तमिति वेदितव्यम्" इति। अध्याहारानन्त्य(नन्तर्य?)गुणकल्पनादिकं कथञ्चित् सहामहे। विपरिणामं तु सूत्रान्यथाकरणरूपं कथं मृष्येमहि। न च नियमशब्दो निबन्धे प्रसिद्धः। सन्निकर्षशब्दस्य च समनन्तरसूत्रे, अत्र च प्रयुक्तस्य विरूपार्थकल्पनमयुक्तम्, तत्र—"सन्निकृष्टाः—कालार्वाचीनाः" इति व्याचख्युः, इह तु "लौकिकेष्वर्थेषु प्रत्यक्षेणार्थमुपलभ्य" इति चक्षुरादिसन्निकर्षविवक्षां प्रत्यविन्दन्। असदुक्तयोजनायां तु उपचारमात्रं सह्यमिति।

---

तत्स्थलस्थितमेव। भाष्येऽपि। वेदाधिकरणेहीत्यस्य तु पदसंघातेत्यादिकं तत्र लिखितं न सत्, अत्रैव भाष्ये एवं सत्वात्। उक्तत्वादिति। वार्तिके 'विप्रकर्षात् पशोश्चेति विभक्तिः परिणस्यते' इत्यर्थेन उदाहरणान्तरे तस्योक्तत्वादित्यर्थः। आनन्त्येत्यत्र आनन्तर्येति स्यात्। व्यवहितस्याव्यवहितत्वकल्पनमित्यंशस्य तत्र प्रपञ्चनात्। व्यवधानकल्पनापदेन तैर्विवक्षितमेव विमृश्य आनन्तर्यपदेनात्रोच्यते। कथं मृष्येमहीति। एवञ्च 'पशोश्च विप्रकर्षः' इति सूत्रे विपरिणामं विनैवार्थो वक्तव्य इत्याशयः। तच्च सूत्रं 12-2-32. तत्र शास्त्रदीपिकायां तदधिकरणान्तिमवाक्यदर्शने तदर्थ एवं समञ्जसो भवति। योऽयम् अनूयाजानां विप्रकर्षः आग्निमारुतादूर्ध्वम् सः पशुसंबन्ध्यनूयाजानामेव, न प्रातः पुरोडाशसंबन्धिनाम्। सायंपशुतन्त्रमध्यगतत्वादिति रीत्या भाव्यम्। चक्षुरादिसंनिकर्षेति।

(भाट्टरचनानिरासः)

ये पुनरिह पदतत्संघातपदार्थप्रभृतीनां वाक्यार्थप्रत्ययं प्रति हेतुत्वानुपपत्त्या सांकेतिकी वा अमूला वा वाक्यार्थप्रतीतिरिति पूर्वपक्षेण वेदाप्रामाण्यमाशंक्य; पदैरभिहिताः पदार्थाः वाक्यार्थं बोधयन्तीति वाक्यार्थस्य समूलतया वेदप्रामाण्यमाहुः। तेषामिदमधिकरणं मीमांसाशास्त्रात् बहिष्ठमेव स्यात्, न्यायविस्तरसाध्यत्वादस्यार्थस्य। तथाहि—अष्टादशसु विद्यास्थानेषु धर्मविद्यास्थानानि चतुर्दश। अत्रापि द्वादश उपदेशशास्त्राणि। मीमांसा, न्यायविस्तर इत्युभे हेतुशास्त्रे। तयोरपि न्यायविस्तरः सामान्येन लोकव्यवहाराविरुद्धसपरिकरप्रमाणचिन्तायामधिकृतः। आत्मादिप्रमेयचिन्तनं तु शारीरककृत्यमपि शास्त्रस्य परमप्रयोजनप्रदर्शनाय क्रियते। तेनैव प्रत्यक्षादिवत् आगमाख्यमपि प्रमाणं साधनीयम्। तदर्थं वाक्यार्थस्य समूलतापि वक्तव्या। एवं स्थिते धर्माधर्मेश्वरादिप्रमेयेषु वेदाख्यशब्दस्य प्रवृत्तिप्रकारो न्यायविस्तरसिद्धसामान्यलक्षणैस्तर्कविशेषैः मीमांसया साध्यः। ततश्चास्मिन् प्रमाणलक्षणे सामान्येन शब्दप्रामाण्ये स्थितेऽपि

---

प्रमाणान्तरसंबन्धेत्यर्थे पर्यवसानं कृतम्। प्रथमेऽस्मिन् सूत्रे तथोक्त्या समन्तरसूत्रेऽपि एतदुपरिशंकया प्रवृत्ते संनिकर्षपदस्य एतदर्थवर्णनमेवादृतमिह भाष्ये; न तु कालसंनिकर्षरूपक्लिष्टार्थः।

भाट्टाधिकरणरचनां खण्डयितुमाह ये पुनरिति। न्यायविस्तरेति। एवं पूर्वपक्षस्य लौकिकवाक्येष्वपि संभवात् वेदमात्रविषयकप्रकृताधिकरणेन तदसिद्धेः तत्र न्यायविस्तरमूलकत्वमेव वाच्यम्। तद्वदत्रापि। तस्य शास्त्रस्य प्रमाणैदम्पर्यादपि तथेत्याह तथाहीति।

वेदस्याप्रामाण्यं यथा स्यात् तथैव पूर्वपक्षो वक्तव्यः। सिद्धान्तेऽपि वेद-प्रामाण्योपयुक्तं वक्तव्यम्; न त्वनधिकृतं सामान्यं शब्दप्रामाण्यादिकम्। यदि परम्परयोपकारमात्रेण तदप्यत्र साधनीयं स्यात्, तदा (?)पृथक्पृथक्-संख्यातं न्यायविस्तराख्यं विद्यास्थानं निर्विषयमेव स्यात्; प्रमाणसामा-न्यादेरपि परम्परयोपकारिणोऽत्र चिन्तनीयत्वापातात्। किंच कार्यकारण-भावाद्यभावे श्रेयस्साधनत्वादिकं सर्वं दुर्वचम्। अतस्तदर्थमप्यधिकरणानि कल्प्यानि स्युरिति। अत इदमधिकरणं न वाक्यमात्रप्रामाण्यार्थम्। तथाचोक्तं **तत्त्वरत्नाकरे मीमांसाप्रस्तावे**—"तत्र च प्रथमाध्याये पादे च सर्वप्रामाण्येन अन्येषु च न्यायविस्तरप्रामाण्योपजीवनेन वैदिकेषु वाक्यविशेषात्मकेष्वपौरुषेयत्वनिबन्धनं प्रामाण्यं यथा वर्णितम्; तथा शब्दे प्रादीदृशाम" इति। स्थापितश्चायमर्थोऽस्माभि**र्न्यायपरिशुद्धौ**।

**(प्राभाकररचनानिरासः)**

अन्ये त्वाहुः—शब्दसम्बन्धस्य वृद्धव्यवहारसिद्धत्वेऽपि न वैदिकः पदसमुदायो वृद्धव्यवहारे व्युत्पन्नः, पदसमुदायान्तरस्यैव वृद्ध-व्यवहारे व्युत्पन्नत्वात्। न चान्यत्र व्युत्पन्नोऽन्यत्रार्थं बोद्धुमलम्। यद्यपि च पदानामावापोद्वापवशात् पदार्थेषु शक्तिनिष्कर्षः, तावतैव आकांक्षादिवशात् समुदायान्तरेऽप्यन्वितप्रतीतेः; तथाप्याकांक्षादि-

---

**सर्वप्रामाण्येन**—प्रत्यक्षादिप्रामाण्यस्यापि स्वीकृतत्वेन। **अन्येषु**—प्रत्यक्षानुमानलौकिकदृष्टार्थवाक्येषु। अपौरुषेयत्वनिबन्धनमिति। आप्तप्रामाण्यात् प्रामाण्यं तदुक्तमनंगीकृत्येति भावः।

अभिहितान्वयवादो भाट्टानाम्। अन्विताभिधानवादः प्राभा-कराणाम्। तदनुसारेण प्राभाकरेणोक्तमपि निरसितुमाह **अन्ये** इति।

निरूपणे प्रमाणान्तरमन्वेषणीयमिति प्रमाणान्तरागोचरार्थविषयवैदिकपद-समुदायस्य विशिष्टधीजननासामर्थ्यात्, प्रमाणान्तरगोचरत्वे च पौरुषेयतादिशंकाग्रस्तत्वादनपेक्षत्वलक्षणं प्रामाण्यं न सम्भवतीति पूर्वः पक्षः। सिद्धान्तस्तु—लोकव्युत्पत्तिमूलैव वेदेऽपि वाक्यार्थावगतिः—पदपदार्थयोरनन्यत्वात्; यद्यपि च आवापोद्वापवशात् पदार्थस्वरूपमात्रे शक्तिनिश्चयः, तथाप्यन्विताभिधायिपदसमुदायान्तर्गतानां पदानामन्वितैकदेशभूतपदार्थेषु शक्तिनिश्चय इति लौकिकानामेव पदानां वैदिकेपि वाक्ये स्थितानां कार्यान्वितबोधनमविरुद्धमिति।

अयमपि पक्षो दत्तोत्तरः। तथा हि—शब्दप्रामाण्ये सामान्यतः स्थिते वेदप्रामाण्यमात्रमेव ह्यत्र पूर्वपक्षे प्रतिक्षेप्तुं युक्तम्। न च तदत्र शक्यते। यदि व्युत्पन्नसमुदायात् समुदायान्तरत्वमात्रेणावोधकत्वमिति शंक्यते, तदा प्रतिव्यवहारं पदानामावापोद्वापभेदेन समुदायान्तरत्वसिद्धेः परस्परवार्तानभिज्ञो लोकः स्यात्। अथ व्युत्पन्नपद समुदायैकदेशतया प्रागेवावापोद्वापवशाद्गृहीतशक्तीनां पदानां समुदायान्तरेऽप्यन्वितबोधकत्वमिति लोकव्यवहाराविरोधं मन्यसे, वेदेप्ययं न्यायः केन वारितः॥ प्रमाणान्तरायोग्यार्थविषयत्वादिति चेन्न; लोकेऽपि श्रोतुः प्रमाणान्तरागोचरं द्वीपान्तरविशेषं यदि कश्चित् ब्रूयात्, अन्वितप्रतीतिर्न स्यात्। अथ तत्र प्रमाणान्तरयोग्यत्वमस्ति, वक्तुश्च प्रमाणान्तरसिद्ध

---

दत्तोत्तर इति। शब्दादर्थप्रतीतौ अभिहितान्वयो वा अन्विताभिधानं वा किमप्यस्तु। सर्वं न्यायविस्तरकार्यं लौकिकसाधारण्यात्। वेदमात्रविषयविशेषशंकापरिहार एव मीमांसाकार्यं इति भावः।

इति ब्रूषे ? तन्न, अनुपकारकत्वात् । न हि व्युत्पन्नानां पदानां स्वशक्त्या अन्वितप्रतिपादने श्रोतुर्वक्तुर्वा प्रमाणान्तरयोग्यत्वादिकं क्वचिदुपयुज्यते॥ अकांक्षासत्तियोग्यतार्थं लोके प्रमाणान्तरम्, वेदे तु तन्नास्तीति चेत्-लोकेऽपि श्रोतुः प्रमाणान्तराप्रतिपन्नेऽर्थे कथमाकांक्षादिनिश्चयः॥ पदानां पदार्थानां च प्राचीनत्वादिति चेत्—तुल्यं वेदेऽपि ।

अथ मतम्-अलौकिकं कार्यमपूर्वाख्यं वेदवाक्यप्रातिपादितम्। तत्र न लोके व्युत्पत्तिः, क्रियाकार्यमात्रविषयत्वात् तस्याः ; अतोऽन्विताभिधानशक्तानामपूर्वकार्यान्वितस्वार्थाभिधानं न लोके व्युत्पत्तिसिद्धमिति अबोधकत्वमेव वेदस्येति । एव तर्हीदृशस्य पूर्वपक्षस्यानुत्तरमेव। सिद्धान्तः (न्ते?) देवतानुग्रहादतिरिक्तस्यापूर्वस्य कल्पने प्रमाणाभावात् । तत्कल्पनेऽपि तद्वाच्यत्वक्लृप्तेर्निरर्थकत्वात् । लिङादीनां च तत्र व्युत्पत्तौ पदान्तराणां तदन्वितप्रतिपादनाविरोधात्, अव्युत्पत्तौ तु तदन्वितशक्तिविचारस्यानुत्थानात् । अत्रैव च तद्व्युत्पत्तावन्योन्याश्रयणात् । 'अन्वयवैघट्यपरिहारायापूर्वाख्यवाच्यक्लृप्तिः, ततस्तद्व्युत्पत्तिसमनन्तरमेव तदन्विताभिधानमिति अपूर्वव्युत्पत्तिरपूर्वाधिकरणे' इति भवद्भिरेवोक्तम् । अतोऽत्र अस्मदुक्तावेव पूर्वपक्षसिद्धान्तौ ।

सिद्धे शब्दप्रमाणत्वे लोकोत्तीर्णेषु वस्तुषु ।
तदसम्भवमाशंक्य साधिता श्रुतिमानता ॥
कृत्स्नवेदप्रमात्वाय सामान्यादिह साधितः ।

---

भवद्भिरिति । तथा चान्विते प्रतिपत्तिसंभवात् एतदधि-

न्यायः शारीरके क्वापि प्रतिसंस्क्रियते पुनः ॥
न्यायविस्तरसाध्यं तु नात्र सूत्रयितुं क्षमम् ।
न च तादर्थ्यमेतेषु सूत्रेषु स्पष्टमिष्यते ॥
समुदायान्तरत्वादिशंकाऽत्यन्तलघीयसी ।
अतोऽस्मदुक्त एव स्यात् विचारोऽत्र समञ्जसः ॥

इति वेदस्यार्थप्रत्यायकताधिकरणम् ॥ ७ ॥

## (८) अथ वेदापौरुषेयताधिकरणम् ।

**८. सू-वेदांश्चैके सन्निकर्षं पुरुषाख्या[ः] ॥ १-१२७ ॥ (पू १)**

पदानां पदार्थेषु स्वाभाविकीं शक्तिमुपपाद्य पदद्वारकपौरुषेयत्वशंका वेदानां निराकृता । पदानामेव यथाव्युत्पत्ति समभिव्याहारविशेषेण वाक्यभूतानां लोकोत्तरार्थप्रमितिजननशक्तिः स्थापिता । इदानीं वाक्यद्वारकपौरुषेयत्वशंका निराक्रियते ।

तत्रैवं विचार्यते–किं वेदवाक्यानि पौरुषेयाणि उत नेति । तदर्थं काठकादिसमाख्याविशेषादयः किं सकर्तृकत्वैकान्ताः, उतान्यथासिद्धा इति ।

एवमिह पूर्वपक्षः—यद्यप्यस्मदादीनां परतन्त्रतयोच्चारणात् न वेदकर्तृत्वम् ; यद्यपि चान्यः कश्चित् कर्ता न दृष्टः–तथापि वचनान्तरसामान्यात् कर्ता तावत् सामान्यतस्संप्लवते । वेदवाक्यानि पौरुषेयाणि,

---

करणं व्यर्थमिति भावः। क्वापीति। समन्वयाधिकरणे क्रियानन्वितसिद्धपरत्वेऽपि प्रामाण्यमिति निरूप्यत इत्यर्थः। समुदायान्तरत्वेति गुरुमतनिरासः संग्रहः।

वाक्यत्वात्, रथ्यापुरुषवाक्यवदिति। न चात्र स्मर्तव्यस्य कर्तुरस्मरणेन बाधः, कणादप्रभृतिभिः कैश्चित् स्मरणेन सर्वैरस्मर्यमाणत्वासिद्धेः। स्मरन्ति चैके महर्षयः–"प्रतिमन्वन्तरं चैषा[षां] श्रुतिरन्या विधीयते" इति। श्रुतयश्च—"तस्मात् यज्ञात् सर्वहुतः। ऋचस्सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्मात्। यजुस्तस्मादजायत", "तस्य हवा एतस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदः", "विश्वामित्रस्य सूक्तं भवति" "नम ऋषिभ्यो मन्त्रकृद्भ्यः" इत्यादिकाः। काठकं कालापकं पैप्पलादकमित्यादयः समाख्याविशेषा दृश्यन्ते। न चैते "तेन प्रोक्तम्" इति प्रवचननिमित्ताः, बहुषु प्रवक्तृषु सत्सु विशेषनिर्देशासम्भवात्। असाधारणेन हि विशेषणं युक्तम्। नाप्याद्यप्रवचननिमित्ताः, नित्यत्वपक्षे तदयोगात्। नाप्यन्यशाखाप्रवचनव्यवच्छेदार्थाः, महर्षीणां शाखान्तरप्रवचनाभावे प्रमाणाभावात्। अद्यापि केषुचिदनेकशाखाप्रवचनं दृश्यते। अतः परिशेषात्, 'कृते ग्रन्थे' इति कर्तृविशेषनिमित्ता इति निश्चीयन्ते। कृतेश्चासाधारण्यं युक्तम्। यः, यथा पुरुषान्तरोच्चरितम्, अहमपि तथैवोच्चारयामीत्यभिसन्धिमन्तरेण स्वातन्त्र्येण स्वेष्टक्रमेण पदानि वाक्यतया निबध्नाति, स हि वाक्येषु कर्तेत्युच्यते। न

---

27. वेदांश्चेति। लोके इत्युक्तलौकिकशब्दराशीनिव वेदानपीत्यर्थः। ननु कथं कृतकत्वं प्रमाणान्तरासंनिकृष्टार्थविषयकत्वस्योक्तत्वादित्यत्राह संनिकर्षं पुरुषाख्येति। आख्याः इति बहुवचनं परेष्टम्। एकवचनमन्तिमसूत्रानुरूपम्। काठकाद्याख्या पुरुषगृहीतत्वमर्थानां ज्ञापयतीत्यर्थः। तद्ग्रहणं प्रमाणमूलं तेषामस्माकमिव न भवत्येव। अतो भ्रान्तप्रत्यक्षादिमूलकत्वमेवेति निगूढ

चेदृशस्वातन्त्र्यमेकस्मिन् वाक्येऽनेकेषां दृष्टम् । यदृच्छया सम्भवदपि न महति ग्रन्थराशौ । अतः कर्तृविशेषणं युक्तम् ।

तदयं सूत्रार्थः-**एके**-वादिनो महर्षयः । **वेदान्**—वेदानपि । **कर्मे**त्याहुः । "कर्मैके तत्र दर्शनात्" इति पदानां पौरुषुयत्वप्रक्रमात् समुच्चेयशक्त्या चानुषंगो ज्ञायते । **पुरुषाख्या च, सन्निकर्ष**-पुरुषेन्द्रियादिसन्निकर्षं वेदार्थस्य ज्ञापयति । सन्निकर्षमूलत्वात् **सन्निकर्षः** । कृतक इत्यर्थः । स च काकाक्षिनयेनोभयत्रान्वेतव्यः । सन्निकृष्यत इति वा **सन्निकर्षः** । तेन अर्वाचीनत्वमर्थलब्धम् ।

## ८. सू-अनित्यदर्शनाच्च ॥ १·१·२८ ॥ (पू.)

**अनित्याः**-उत्पत्तिविनाशवन्तः वेदार्थतया श्रूयन्ते । तथा च "बबरः प्रावाहणिरकामयत", "कुसुरुविन्द औद्दालकिरकामयत" इत्येवमादयः। प्रवाहणस्यापत्यं प्रावाहणिः, उद्दालकस्यापत्यं औद्दालकिरिति शब्देनैव अमीषामुत्पत्तिः प्रतीयते । अत एव चानित्यत्वमर्थलब्धम् । तदिहौद्दालकिप्रभृतीनां जन्मनःपूर्वमयं ग्रन्थो न विद्यते चेत्, कथमयं नित्यस्स्यात् । विद्यते चेत्, कथमयं वाक्यार्थः सम्पत्स्यते । न हि तदुत्पत्तेः पूर्वं सः, **अकामयते**ति निर्दिश्यते । न च अकामयतेत्यस्य कामयिष्यत इत्यर्थः। तथात्वेऽपि वा तदुत्पत्तेः पश्चात् अर्थव्याघातः। न च कालभेदेन शब्दस्यार्थभेदक्लृप्तिर्युक्ता । तदेवमनित्यार्थसंयोगश्रवणादनित्या वेदाः ।

---

आशयः । संनिकर्षमिति वेदविशेषणतयाऽप्यन्वियादिति कृत्वा त्तःर्थद्वयमाह संनिकर्षमूलेति ।

(पूर्वपक्षिणा आक्षेपपरिहारः)

नन्वस्तु वेदानामनित्यत्वं सकर्तृकत्वञ्च, तथापि महाजनपरिग्रहनिमित्तभूताप्तप्रामण्येन वेदानामप्रामाण्यशंका निराक्रियतामिति चेत्—नैवम्; शास्त्रमन्तरेण आप्तप्रणीतत्वे प्रमाणाभावात्। शास्त्रप्रामाण्यनिश्चयपूर्वकत्वाच्चाऽऽप्तप्रामाण्याध्यवसायस्य। न ह्येवंविधेऽर्थे अर्वाचीनानामुपलम्भशक्तिरस्तीति सम्भावयामः। प्रत्युत विप्रलम्भाद्यभिप्रायमूलतयैव(तैव?) सम्भाव्यते। तत एव परिग्रहोऽपि भ्रान्तिमूल एव स्यात्। ईश्वरस्य चानुमानागोचरत्वं शारीरके वक्ष्यति। अतो यद्यपि वेदवाक्यात् वाक्यार्थप्रत्ययो जायते, यद्यपि च प्रत्ययानां स्वतःप्रामाण्यम्, तथापि सकर्तृकेषु वेदेषु तत् कर्तृदोषशंकया बाध्यत इति कथं चोदनालक्षणोऽर्थो धर्म इति ॥ तत्राह—

८. सू—उक्तं तु शब्दपूर्वत्वम् ॥ १-१-२९ ॥ (सि-१)

यत्तावत् वाक्यत्वात् पौरुषेयत्वानुमानम्, तत् विपक्षे बाधकाभावेन निरस्तम्। यदि वेदवाक्यानि अपौरुषेयाणि, किं तत्रापहीयते।

---

नन्वस्त्वित्यादिग्रन्थः नोत्तरसूत्रावतरणरूपः किं तु सूत्रद्वयविवक्षितार्थनिष्कर्षार्थशंकादिरूपः। किमिति नित्यानित्यविचारः क्रियते। अनित्यत्वेपि आप्तप्रमाण्यादेव लौकिकवाक्य इव प्रामण्यसंभवादिति शंका। तथा महाजनपरिग्रहादेव वेदप्रामाण्यमुदयनाचार्योक्तमिति च॥ आप्त एव वक्तेत्यत्र प्रमाणं वेदश्चेत्, अन्योन्याश्रयः। महाजनपरिग्रह इत्यत्र महत्त्वञ्च किम्। न बहुत्वम्। वेदप्रामाण्यविस्रम्भतदर्थानुष्ठायित्वं चेत्—तत्र किं मूलम्। आपातविस्रम्भो बौद्धादिवाक्ये तदनुयायिनामपीति निष्कर्षः। अधिकरणपूर्वपक्षं निगमयति कथमिति। सिद्धान्तमारभते तत्राहेति।

कर्तारमन्तरेण रचना कथं स्यादिति चेन्न ;-अध्ययनरूपस्य पारतन्त्र्येण रचनस्याद्यत्ववत् सर्वस्योपपत्तेः। स्वतन्त्रपुरुषबुद्धिरचनायाः सिसाधयिषितत्वेन तदभावस्य प्रसञ्जनीयत्वासम्भवात्। प्रमाणसिद्धस्य हि परित्यागः प्रसञ्जनीयः॥ महाजनपरिग्रहाभावस्तस्य प्रसज्यत इति चेत्-अप्रामाण्यं विवक्षतो महाजनपरिग्रहमूलतया कर्तरि साधिते कथं विवक्षितं सिद्धम्।

यस्तु प्रामाण्यमिच्छन् आप्तप्रणीतत्वमन्तरेण बहुजनपरिग्रहो न स्यादिति मन्यते; तं प्रति ब्रूमः-यदि अनादितयैव वक्तृदोषशंका निवर्तते, अत एव च परिग्रहः सेत्स्यति, किमनेनाऽऽप्तेन कल्पितेन। न हि

---

वेदाः सकर्तृकाः वाक्यत्वादित्यत्र वाक्यत्वं हि शब्दसंदर्भरूपत्वं रचनारूपत्वम्। यदि स्वतन्त्रकर्तृकत्वं न स्यात्, रचनात्वं न स्यादिति शंकते कर्तारमन्तरेणेति। अद्यत्ववदिति। अद्यत्वे यत् गुरुसकाशादध्ययनं तत्रापि आनुपूर्व्युच्चारणात् रचनात्वमस्ति, न तत्र स्वतन्त्रकर्तृकत्वमित्यनैकान्त्यम्। प्रत्युत सर्वं वेदोच्चारणं न पूर्वोच्चारणरहितवाक्यविषयकं वेदरचनात्वादद्यतनवदित्यपि स्यादिति भावः। ननु रचनात्वं न स्यादित्यस्य स्वतन्त्रपुरुषप्रणीतत्वरूपरचनात्वं न स्यादित्यर्थ इति शंकते स्वतन्त्रेति। तादृशरचनात्वस्य हेतुत्वोक्तौ हि तदभावः आपादनीयः। तस्यैव साध्यत्वात् कथं हेतुत्वमिति भावः। ननु स्वतन्त्रकर्तृकत्वाभावे महाजनपरिग्रहो न स्यादित्यापादनं शंकते महेति। प्रमाणेति। अयं भावः—इदमापादनं वेदप्रामाण्यं स्वीकृत्य, अस्वीकृत्य वा। आद्य एवं सकर्तृकत्वानुमानेऽपि तेन प्रकृताधिकरणविवक्षितं न सिद्ध्यति। तार्किकवद्भावात्। अप्रामाण्यवादिना च महाजनपरिग्रहो दुर्वच इति।

अस्तु प्रामाण्यम्; सकर्तृकत्वानुमानं सुस्थं किलेति शंकते यस्त्विति। यदि स्वतन्त्रकर्तृकत्वं न स्यात्, महाजनपरिग्रहो न स्यात्

चोदनावाक्यान्न जायते प्रत्ययः। न च संशयात्मा । न च प्रत्यक्षादिभि-र्बाधसम्भवः । अतः कारणदोषशंकामात्रमेव निराकर्तव्यम् । तत्र वक्तुरभावादेव यदि वक्तुर्दोषा न स्युः, किमनेन वक्तृदोषेण कल्पितेन । यथा हि कारणाभावादेव तद्दोषरहिता परमेश्वरबुद्धिः प्रमेति वः सिद्धान्तः, एवं वक्तुरभावादेवासम्भवद्वक्तृदोषाः वेदाः प्रमाणमिति किं न पश्यसि । एनया दिशा विपक्षेबाधकं नास्ति, अस्ति तु पक्षे बाधकम् । न ह्यसौ कर्ताऽस्मदादिभिरुपलभ्यते । बुद्धादिग्रन्थे तु परम्परया स्मर्यते । न च जीर्णकूपारामादिवत् अनुपयोगात् कर्तु-रस्मरणमिति वाच्यम् ; प्रमाणान्तरागोचर-कालान्तरभाविफलसाधन-बहुवित्तव्ययकायक्लेशादिपूर्वकप्रवृत्तिसाध्ये वक्तृप्रत्ययमन्तरेण प्रेक्षाव-तामनुष्ठानासम्भवात् । जीर्णकूपादिषु तु देशोच्छेदादिना पुरुषविच्छे-

---

इति वक्तुं न शक्यते । तादृशकर्त्रभावेऽपि दोषाभावादेव महाजन-परिग्रहोपपत्तेः । परिग्रहात् प्रामाण्यानुमानम् ; प्रामाण्यं गुणाधीन-मिति गुणानुमानम् ; गुणाश्रयतया आप्तसिद्धिरिति परम्पराऽप्यत एव निरस्ता । स्वतः प्रामाण्यात् गुणस्यानपेक्षणात् । तत्र दृष्टान्तमाह यथाहीति ।

ननु वेदाः साक्षात् परम्परया वा स्वतन्त्रकर्त्रधीनोत्पत्तिकाः रचनात्वादित्यनुमानेन अद्यतनाध्ययनेपि साध्यस्य साधनीयतया न दोष इति चेन्न—अप्रयोजकत्वात् । तदाह एनयेति । बाधितमनु मानमित्यप्याह पक्षे इति । कर्त्रभावबोधकवाक्यसत्त्वादिति भावः । तस्य बाधितार्थकत्वं न सुवचमित्याह न हीति । एवमस्मर्यमाणकर्तृक-त्वादकर्तृकमित्यपि बाधकं विवक्षितम् । अस्मर्यमाणकर्तृकत्वमुपाधि-रिति पक्षेपि उपाधेः सत्प्रतिपक्षविधया दूषकत्वे इव व्यभिचारोन्नाय-

द्रात् प्रयोजनाभावाच्च कर्तृस्मरणम् । इह त्वनन्तैः पुरुषैः अस्खलितमात्रास्वरवर्णसन्दर्भमध्येतृपरम्परयाऽधीयमाने सति प्रयोजनवति च कर्तुर्विस्मरणं न युक्तम् । अतोऽवश्यस्मर्तव्यस्य कर्तुरस्मरणादवगम्यते नासावस्तीति । यत्तु वैशेषिकादिस्मरणम्, न तत् अनुष्ठानौपयिकमहाजनस्मरणम् । [तदनुष्ठानोपेतं महाजनस्मरणम् । ] न ह्यध्येतृपरम्परया कर्तृविशेषस्य स्मरणं तैरपि वक्तुं शक्यम्, अपितु केनचित् सामान्यतोदृष्टेन अनुमितः कर्ता यौक्तिकैस्तदनुसारिभिश्च कैश्चिदनुस्मर्यते । अतएव हि तेषां कर्तृविशेषविवादः प्रजापतिर्वा पशुपतिर्वा हिरण्यगर्भो वेति । परम्परया सर्वत्र स्मर्यमाणो हि कर्ता बुद्धादिवत् मन्वादिवच्च न विही(गी ?)येत । अतो द्दश्यादर्शनबाधितमेवेदमनुमानम् ।

यत्तु महर्षयः स्मरन्तीत्युक्तम्, तत्तु विपरीतम् । सर्वैरपि महर्षिभि र्वेदस्य नित्यत्वमेव घुष्यते । तदाह मनुः–"अनादिनिधना ह्येषा वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः (प्रसूतयः) ॥ " इति ।

अत एव "प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत" इत्येतदपि अनन्तेषु वेदेषु तत्तत्कालानुरूपधर्मभेदोचितवेदांशविशेषप्रकाशनाभिप्रायम् । धर्मश्च कालादिभेदेन मात्रया भिद्यत इति स्मरन्ति—

---

कत्वेऽपि बाधकत्वमेव । वेदाध्ययनं सर्वं गुर्वध्ययनपूर्वकम् अध्ययनत्वादित्यनुमानं तु मीमांसकोक्तं नेच्छामः। ईश्वरमूलचतुर्मुख–कर्तृकाध्ययने साक्षात्कारितपस्विकारिते आद्याध्ययने च साध्याभावात् व्यभिचारात् । सृष्टिप्रलयश्रुतिविरुद्धत्वाच्च ।

"अन्ये कृतयुगे धर्मास्त्रेतायां चापरे तथा। अन्ये च द्वापरे धर्मास्तथा चान्ये कलौ युगे ॥ "इत्यादि। अतो महर्षयोऽपि कर्तारं न स्मरन्ति; किन्तु प्रतिषेधन्ति। कृतज्ञाः सत्यवादिनश्च महर्षयः परमोपकारकं वेदवक्तारं सन्तमपि निषेधन्तीति साहसमिदम्।

यत्पुनः——वेदा एव वेदानां सकर्तृकत्वमाहुरित्युक्तम्, तदप्यसत्। "अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंम्भु अभ्यानर्षत्" इति वेदनित्यत्वश्रुतेः। अत एव "ऋचस्सामानि जज्ञिरे" इत्यादिकमपि तत्तद्वेदाभिमानिदेवतोत्पत्तिपरम्, तादात्विकप्रादुर्भावपरं वा। न खल्वीश्वरस्य शक्तस्यापि क्रमान्तरकल्पने प्रमाणमस्ति। प्रत्युत "यथापूर्वमकल्पयत्" इति न्यायः सर्वत्र सञ्चारणीयः, प्रागुक्तश्रुतिस्मृत्यनुसारात्। अत एव ऋषीणां सूत्र-काण्ड-मन्त्रकृत्त्वमपि प्राचीनकर्मानुगुणं प्रजापतिप्रदत्तशक्तिविशेषाणां तत्तदधिकारानुगुणम् अनधीतवेदभागसाक्षात्करणमेव। तदेवं न वेदकर्तेति सर्वदा परतन्त्रपुरुषपरम्पराधीता एव वेदाः।

तदेतत् सर्वमभिसन्धाय सूत्रितम्——**उक्तं तु शब्दपूर्वत्वम्** इति। तुशब्दः पक्षव्यावर्तकः। सर्वेषामध्येतॄणां वेदोच्चारणप्रवाहस्य पूर्वपूर्वोच्चारणरूपशब्दपूर्वत्वमुक्तम्। अस्मर्यमाणकर्तृकत्वादीनां [निरासस्य ?] पदस्य सांकेतिकत्वप्रतिक्षेपनयेन दूषणमुक्तप्रायमित्यर्थः।

**अथवा** अस्मरणबाधितस्य कर्तुरनुमानासम्भवात् जगत्कर्तारमुपस्थापयन्ती श्रुतिरेव कर्तृसद्भावेऽपि प्रमाणमिति स्यात्। ततश्च

वेदकर्तृसम्भवं साधयता वेदाख्यशब्दस्य **पूर्वत्वम्**—अनादित्वम् उक्तं स्यादिति स्ववचनविरोधः।

**यद्वा** याभिः श्रुतिभिर्वेदानां सकर्तृकत्वं सिसाधयिषसि, ताभिरेव तत्कर्तृतयाऽभिमतेश्वरव्यापारस्य वेदशब्दपूर्वकत्वमुक्तम्। यथा—"वेदेन रूपे व्याकरोत् सतासती प्रजापतिः", "स भूरिति व्याहरत्; स भूमिमसृजत। स भुव इति व्याहरत्; सोऽन्तरिक्षमसृजत" इत्यादि। तथा—"सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक्। वेदशब्देभ्य एवादौ देवादीनां चकार सः॥" इति। (29.)

यत्तूक्तं काठकादिसमाख्याविशेषाः कर्तृनिमित्ता इति, तत्राह—

**८. सू–आख्या प्रवचनात्॥ १–१–३०॥ (सि)**

काठकादिसमाख्या **प्रवचनात्**–प्रकृष्टात् वचनात् निमित्तादेव। प्रकृष्टं हि वचनमध्यत्व इव कस्यचिदेव भवतीति असाधारण्यात् तेन निर्देशः। न हि योग्यानुपलब्धिनिराकृतसद्भावं कर्तारम् अन्यथाऽप्युपपन्ना श्रुत्याद्यपेक्षया दुर्बला च समाख्या साधयितुमलमिति भावः। किंच कार्तयुगाः पुरुषाः शक्त्यतिशयात् सर्वान् वेदान् अधीतवन्तः। ततः कालक्रमेणापचीयमानशक्तीन् पुरुषान् आलोक्य वेदान् वैदिकं च धर्ममभिरक्षितुकामेन वैयासिकीं व्यक्तिमातिष्ठता भगवता वासुदेवेन व्यस्तशाखाः वेदाः शिष्यान् अध्यापिताः। एवं प्रतिद्वापरम्। ततश्च यो वेदांशो येनाधीतोऽध्यापितश्च, स तेन विशिष्य समाख्यायत इति व्यासवृत्तान्तविदां सुगमोऽयमर्थः। तेनात्र **शाबरमपि** संगतम्, यथाह—"स्मर्यते च वैशम्पायनः सर्वशाखाध्यायी। कठः पुनरिमां

केवलां शाखामध्यापयांबभूव इति। स बहुशाखाध्यायिनां सन्निधौ एकशाखाध्यायी अन्याः (न्यां) शाखा (म) अनधीयानः तस्यां प्रकृष्टत्वात् असाधारणमुपपद्यते विशेषणम्।" इति। एवंच व्यासादिवत् कठादिप्रवाहोऽप्यनादिरिति नित्यं तेन तेन ससोंशो निर्दिश्यते।

यत्तु कठादिशब्दाश्चरणविशेषवाचिनः, तत्तच्चरणैः पुरुषैरधीयमानाः शाखाः काठकं कालापकमित्यादिसमाख्यया निर्दिश्यन्त इति कैश्चिन्निर्व्यूढम्। तत्रापि तस्य चरणविशेषस्य कठादिसंज्ञकपुरुषविशेषप्रवाहविकारेण कठादिशब्दोपचार इति इतिहासपुराण—प्रामाण्यमिच्छद्भिरभ्युपगन्तव्यम्। (30)

यत्तु—समाख्यायाः कर्तृनिमित्ततामुत्तम्भयितुं प्रावाहणिः, औद्दालकिरित्याद्यनित्यार्थसंयोगप्रदर्शनम्, तत्राह—

८. सू-परं तु श्रुतिसामान्यमात्रम् ॥ १-१-३१ ॥ (सि)

प्रावाहणिरित्यादयः शब्दा यद्यप्यपत्यार्थाः, तथापि नानित्यार्थ-

---

30. सः कठादिः असाधारणमुपपद्यते विशेषणम्—असाधारणत्वात् विशेषणं भवितुमर्हतीत्यर्थः।

31 श्रुतिसामान्यमात्रम्—शब्दसाम्यमात्रम्; तस्य तस्यार्थस्तु प्रसिद्धात् अपत्याद्यर्थात् विलक्षण इति सूत्रं मीमांसकपक्षे स्वरसमिति चेन्न--बबरादितदुक्तार्थपरत्वे अकामयतेत्याद्यनन्वयादिदोषस्य वक्ष्यमाणत्वात्। परं मात्रमित्यनेकं किमर्थमिति चेत्-तत् तत्पक्षेऽपि तुल्यम्। अस्तु वा परमित्यस्य प्रावाहण्यादिपदविवक्षितमित्यर्थः। तत्परादिशब्द इव। श्रुतिसामान्यमात्रम् प्रवाहनित्यानां प्रावाहणीनां यदनुगतं सामान्यं श्रुतिप्रमाणगम्यम्, तन्मात्रम्। कादाचित्क-

संयोगः, प्रवाहणोद्दालक-तदपत्यप्रवाहस्याप्यनादित्वात्। तत्र, **परं श्रुति-सामान्यमात्रम्**-यथा कौमुदगन्ध इत्यादयः शब्दा अनित्येष्वर्थेषु प्रयुज्यन्ते, तथा प्रवाहनित्येष्वपि तेषु तेषु पुरुषेषु तत्तदपत्यविशेषात् प्रावाहणिरौद्दालकिरिति केवलं श्रुतिसामान्यमात्रम्। एवं श्रुतिसिद्धेषु सर्वेष्वर्थेषु रूपेष्वपि केनचिन्निमित्तेन व्रीह्यादिष्विवैकशब्दनिवेशोऽनुसन्धेयः।

**(शाबराद्यर्थनिरासः)**

यत्तु परैर्भाषितम्—प्रवह(वाहय?) तीति प्रावाहणिः। ववर इति शब्दानुकृतिः। तेन यो नित्योऽर्थः, तमेवेमौ वदिष्यतो वायुम्, अत उक्तं, परं तु श्रुतिसामान्यमात्रमितीति। एषा योजना ह्यर्धचार्वाकेभ्य एव रोचते। अन्यथा कथम् **अकामयते**त्यस्याप्यन्वयः। तत्रापि चेत्, अर्थान्तरं कल्प्यते, किं सर्वत्रैवं न कल्प्येत। अर्थवादानामपि प्रत्यक्षाद्यविरुद्धानां गुणवादमन्तरेण यथाश्रुतार्थे प्रामाण्यमुपपादयिष्यामः।

किञ्च "भृगुर्वै वारुणिः वरुणं पितरमुपससार", "श्वेतकेतुर्हारुणेय आस। तं ह पितोवाच" इत्यादिष्वपत्यार्थतैव स्वीकर्तव्या। कथमन्यथा पितृपदसमभिव्याहारः, संवादोदाहरणं वा। तद्वदत्राप्यपत्यार्थत्वे को दोषः। अत एकरूपं समाधिं पश्यताम् उभयत्र प्रवाहनित्यतया वा सर्वत्रार्थवादतया वा अन्यपरत्वेन वा [1]निर्वाह इत्यपत्यार्थविवक्षाभंगोऽनुपपन्नः। **शारीरकदेवताधिकरणे** तु "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्", "अत एव च नित्यत्वम्" "समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो दर्शनात् स्मृतेश्च" इति

---

देवदत्तादेः श्रुत्यर्थत्वव्यवच्छेदाय मात्रपदम्। श्रुतिप्रचारपूर्वभाविव्यक्तिग्रहणेनार्थबोधः। 1. निर्वाहः अनित्यार्थसंयोगः।

सूत्रत्रयेणानित्यार्थसंयोगपरिहारः, सूत्रकाण्डमन्त्रकृत्त्वाद्यविरोधः, कल्पान्तरेपि तस्यैव वेदसन्दर्भस्य प्रवर्तनञ्च एतदधिकरणाभिप्रेतमेव प्रसंगात् विवरिष्यत इति न किञ्चिदनुपपन्नम् । (31)

कथं चोदनाप्रामाण्यम्, "वनस्पतयः सत्रमासत" इत्याद्युन्मत्तवाक्यप्रायशब्दराशिमध्यस्थत्वाच्चोदनानाम् । न हि वनस्पतिशब्दनिर्दिष्टाः मूलसंघातविशेषाः सत्रमासीरन्, तदभिमानिनो वा भवद्भिस्तथासंज्ञिताः । अतः कथं तत्संज्ञाश्चेतनाः सत्रमासीरन्निति सम्भावयाम । अतो जरद्गवादिवाक्यवत् उन्मत्तादिवाक्यमिति, तत एव तदेकराशिचोदनावाक्यमपीति । तत्राह—

८. सू-कृते वा(चा?)विनियोगः स्यात् कर्मणः समत्वात् (संबन्धात्) ॥ १-१-३२ ॥ (सि)

(च:?)वः(वाकारः?)शंकानिवृत्त्यर्थः । बालोन्मत्तादिकृते चोदनावाक्ये सति, अविनियोगः स्यात् । विनियोगोऽत्र आकांक्षायोग्यतासन्निधिभिः परस्परेण सम्बन्धः । एवमिव हि चोदनावाक्यमुपलभामहे—इदं कर्तव्यम्, एभिः करणैः, एतदर्थम् इति । न ह्यत्राग्निना सिंचेदित्यादिवत् लोकतो विरोधं पश्यामः । न चालौकिके कालान्तरभाविफलसाधनत्वे

---

32. पूर्वपक्षयुक्तमनित्यदर्शनं परिहृतम् । अयोग्यार्थदर्शनं शंकते कथमिति । जरद्गवेति । "जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मत्तकानि । तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः" इति शाबरे । इदं कर्तव्यमिति । शाब्दबोधे शाबरोक्तमिदमवधेयम् मीमांसकोक्ताकांक्षान्वयविलक्षणम् ।

बाधसम्भावनाऽपि । तदेवं परस्परसमन्वितार्थे पदसमुदाये यद्युन्मत्तादिकृतत्वशंका, अयमबाधितो विनियोगो न स्यात् । 'तदेवमन्वितार्थचोदनावर्गसन्निधियोगे, रुमाप्रक्षिप्तकाष्ठलवणभावन्यायेन "वनस्पतयः सत्रमासत" इत्यादीन्यपि प्रमाणीकृत्य, अग्निष्टोमादिना सत्रकर्मणस्समत्वात् तत्स्तुत्यर्थं, 'वनस्पतयोऽपि नाम अचेतनास्सत्रमासत, किंपुनरितरे विद्वांसो ब्राह्मणाः' इत्युच्यत इति शाबरः समाधिः ।

(वनस्पत्यादिवाक्यस्य स्वाभिमतोऽर्थः)

अस्माभिस्तु बादरायणीयमभिप्रायमनुसन्दधानैरुच्यते— "तत्तेज ऐक्षत", "ता आप ऐक्षन्त", "तं पृथिव्यब्रवीत्" इत्येवमादीनामभिमानिदेवताविषयत्वम्—"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्" इति सूत्रितम् । तदेवमिह, "वनस्पतयः सत्रमासत" इत्यादिष्वपि वनस्पत्याद्यभिमानिन्यो देवता एव सत्रकर्तारः प्रशंसार्थमुदाह्रियन्ते । देवताभिरप्यनुष्ठितोऽयमर्थः, किंपुनरर्वाचीनैरित्युक्ते हि स्तुतिरतिशयिता भवति । वनस्पतिमात्रोदाहरणं तु स्तुतौ मन्दम् । अयथार्थेन प्ररोचना चायुक्ता । देवतानां तु विग्रहादियोगः अर्थित्वं सामर्थ्यमधिकारश्च शारीरके समर्थयिष्यते । अतः 'कर्मणस्समत्वात्' इति सूत्रखण्डो देवतानां मनुष्याणां च सत्रादिकर्मसाम्यमाह । एवं सति एषैवास्मदुक्ता प्ररोचना ।

(अथ सूत्रस्य सर्ववेदविषयत्वेन योजनान्तरमपूर्वम्)

यद्वा तिष्ठत्वियमर्थवादाधिकरणसाध्या । पौरुषेयत्वानुमानस्य प्रतिकूलतर्क एवानेन सूत्रेणोच्यते । वेदे कृते, प्रेक्षावतां स्वानुष्ठान-

प्रमित्यंगतया तस्याविनियोगः स्यात् ; हेतुदर्शनशून्यैर्ग्रहणधारणार्थानुष्ठानादिर्न स्यादित्यर्थः । कर्मणस्समत्वात्, अग्निहोत्रादिकमेव हेतुदर्शनरहिता महान्तो जनाः परिगृह्णन्ति । तदवश्यं न कृतो वेदः । अतस्तदन्तर्गतानां चोदनानामपि वक्तृदोषासम्भवात् प्रामाण्यं सुस्थितमिति सुप्रतिज्ञातोऽयं चोदनालक्षणोऽर्थो धर्म इति ।

60 आख्याया अन्यथासिद्धेः स्मर्तव्यस्मृत्यभावतः ।
श्रुतिस्मृत्यादिभिश्चात्र पौरुषेयानुमा हता ॥

61 वेदांश्च प्रहिणोतीति श्रूयते परमः पुमान् ।
क्रमान्तरविनिर्माणकल्पना च गरीयसी ॥

62 कालभेदे च मन्त्राणां न शक्तिरपहीयते ।
यतस्तत् (तान् ?) संपरित्यज्य सृजेन्मन्त्रान्तरं प्रभुः ॥

63 अत ईश्वरमिच्छद्भिरनिच्छद्भिश्च वादिभिः ।
इदम्प्रथमता वेदेष्वनुमातुं न शक्यते ॥

---

1 अविनियो इति । कृतत्वस्याविशिष्टत्वात् गीताविष्णुस्मृत्यादिषु वेदोपजीवनमपि न स्यादिति च भावः। समत्वादित्यत्र संबन्धादिति मीमांसकपाठः । तत्र विनियोग इत्येव पदच्छेदः अस्मत्पक्षेऽपि कर्मणि वनस्पत्याद्यभिमानिदेवतया कृते सति अर्थवादस्य कर्मसंबन्धात् स्तुतिसमर्पकत्वात् विनियोगः स्यादित्यर्थः संभवति प्रथमयोजनायाम् । एवञ्चैतदन्तिमसूत्रस्पर्शपूर्वकमर्थवादाधिकरणोत्थानम् । द्वितीययोजना तु अधिकरणे सम्यक्संगता । तदापि संबन्धादिति पाठे अर्वाचीनविश्वामित्रादिसंबन्धादिति व्याख्येयम् ।

64 श्रूयते नित्यमित्येव श्रुतिशब्दोऽत्र रूढिमान् ।
आहुश्च सर्वे निगमा न कृत्रिमसरस्वतीम् ॥

65 अनितरपरिदृष्टेष्वस्तबाधेषु वस्तु-
ष्वखिलनिगमवाचो बुद्धिमुत्पादयन्त्यः ।
सहजमनपवादं मानभावं दधानाः
समजनिषत विष्णोः शाश्वतं शासनं नः ॥

इति वेदापौरुषेयताधिकरणम् ॥ ८ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु
सेश्वरमीमांसाख्ये धर्ममीमांसाभाष्ये
प्रथमस्याध्यायस्य
प्रथमः पादः ॥

—:○:—

## स्वेश्वरमीमांसायां प्रथमाध्याये

## द्वितीयः पादः ।

### १. अर्थवादप्रामाण्याधिकरणम् । १-२-१

66 यदाज्ञाव्यतिषंगेण यद्वा यस्मिन् समन्वयात् ।
प्रामाण्यमर्थवादादेः तमीश्वरमुपास्महे ॥

९. सू—आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १-२-१ ॥ (पू)

सशिरस्कवेदप्रतिपाद्यकर्मोपासनात्मकधर्मसमुदाये चोदनानां प्रामाण्यमुपपादितम् । तदर्थोपक्षिप्त-कारणदोषाद्यभावाविशेषेणार्थवादानामपि प्रामाण्यमुपन्यस्तम् । तदिदानीं मुखान्तरेणाक्षिप्य समाधीयते । यद्वा वेदानामप्रामाण्यं बाह्यहेतुमूलकं निरस्यते । प्रागुक्तास्तु नैगमिक्यः पूर्वपक्षयुक्तयो बाह्यहेत्वनुग्राहकत्वेन प्रदर्शिता इति मन्तव्यम् । किंच उद्भटापराधोपेक्षायोगात् पौरुषेयत्वादयः स्पष्टतरा दोषाः पूर्वं परिहृताः, अथ तथैव स्पष्टास्पष्टतरशंकाः परिह्रियन्त इति क्रमः ।

तत्रास्मिन् पादे विध्युद्देशव्यतिरिक्तस्य कृत्स्नस्य वेदभागस्य सप्रयोजनार्थबोधनेन प्रामाण्यमुपपाद्यते । नामधेयानां तु विध्युद्देशान्तर्गततया पादान्तरीयता । तत एवानित्यदर्शनादिभिः प्रस्तुतत्वादर्थवादा-

---

श्लो: । यदाज्ञाव्यतिषङ्गेण—यस्येश्वरस्याज्ञारूपविधिवाक्यैकवाक्यतया कर्मकाण्डार्थवादानाम्, यस्मिन् साक्षादेवान्वयात् उपनिषद्रूपसिद्धार्थवाक्यानाञ्च प्रामाण्यमित्यर्थः ।

नाम्, विधिविश्रमेण विधिपरतया च प्रकृतमनुवदन्त्यर्थवादाः [इति ?] तानधिकृत्य विचार्यते—किं ते प्रमाणं न वेति ।

### (शास्त्रदीपिकोक्तप्रक्रियानिरासः)

यदत्र कैश्चिदुक्तम्–अस्मिन्नधिकरणेऽपि विध्यतिरिक्तानां सर्वेषामानर्थक्यं पूर्वपक्षीक्रियते, सिद्धान्ते च स्वाध्यायविधिवशेनार्थवत्तया भवितव्यमित्येतावत् साधारण्येनाभिधास्यते । पश्चात् क्रमेण स्तुत्याद्युपयोगविशेष इति वेदितव्यम् । तत्र प्रथममर्थवादेषु सिद्धान्तकथनात् तावदेवोदाहृत्य चिन्त्यते–इति । तदसत्, न हि सामान्येन दूषणानुयोगे विशेषविषयमुत्तरं प्रक्रम्येत । विशेषविषयानुयोगे तु सामान्यतः समाधानं सम्भवेदपि । ततश्च **अतदर्थाना**मिति सामान्यनिर्देशोऽपि विशेषार्थ एव । अन्यथा सामान्यविशेषचिन्ताभ्यामधिकरणभेदप्रसंगात् । अध्ययनविधिबलेन [सर्वविषयतया ?] सिद्धान्तस्थापनं वारयिष्यते । ततोऽर्थवादा एवाक्षिप्य समाधित्सिताः । असाधारणैस्तु हेतुभिः पश्चात् मन्त्रनाम्नोराक्षेपसमाधाने प्रवर्त्स्यतः ।

यच्चान्यैरुक्तम्–यो हि परमते वेदान्तानां सिद्धोऽर्थः, सोऽप्यात्मज्ञान चोदनैकवाक्यतया कार्यप्रधानक इति–तत् समन्वयसूत्रे निराकरिष्यते ।

### (अस्याधिकरणस्य वेदान्तादिसर्वार्थवादविषयकता)

यत्पुनरुक्तम्–न वेदान्तानां चोदनैकवाक्यता; न चास्मिन् शास्त्रे तत्प्रामाण्यप्रतिज्ञा, "अथातो ब्रह्मजिज्ञासा" इति शास्त्रान्तर एव सिद्धेरिति—तत् प्रागेवैकशास्त्र्योपपादनेन निरस्तम् । अयं च कबन्धमीमांसकपक्षो राहुमीमांसकपक्षवदुपेक्षणीयो वेदविद्भिः । आह च

वेदार्थसंग्रहे, "सर्वमेकं शास्त्रमिति वेदवित्सिद्धान्तः" इति । अतोऽत्रैव लक्षणे कृत्स्नस्य वेदस्य प्रामाण्यं समर्थनीयमिति शास्त्र(सिद्ध ?)स्वरूपादि-विषयाणामपि वाक्यानां प्रामाण्यं समर्थनीयम् ।

नन्विहैव यदि तेषां प्रामाण्यं साध्यते, न भवितव्यं चतुः-सूत्र्या, अथ किन्निमित्तस्तर्हि शास्त्रभेदमन्तरेण प्रमाणलक्षणादीति ॥ उच्यते, न शारीरके अर्थवादविशेषाणां प्रामाण्यं साध्यते, अपि तु प्रामणानां सतां ब्रह्मणि प्रामाण्यमात्रसाधनम् ॥ अनिर्धारितविषयविशेषं प्रामाण्यं कथं प्रसाधनीयमिति मा वोचः, सर्वत्रैवानुयोगप्रसंगात् । सिद्ध एव प्रामाण्ये संशय-पूर्वपक्ष-सिद्धान्तास्तदर्थविशेषेषु वर्तिष्यन्ते । तत् यदि विषयविशेषनियतमेव प्रामाण्यमिह साध्येत, कथं पुनस्संशयसम्भवः।

नन्वेवमपि विध्येकवाक्यतया अत्रार्थवादानां प्रामाण्यमुपपाद्यते विधिना त्वेकवाक्यत्वादित्यादिना । 'तत्तु समन्वयात्' इति प्रवृत्ति-निवृत्तिपरत्वमन्तरेण स्वरूपे विश्रमः साधयिष्यते । अतः पूर्वापरविरोधो वा तेषामिहानिरूपणं वा प्राप्तमिति ॥ मैवम् । इह हि निष्प्रयोजन-मृषावादरूपतयाऽर्थवादानामप्रामाण्ये प्रसक्ते सप्रयोजनसत्यार्थविषयतया प्रामाण्यं वक्तव्यम् । तत्र केषांचित् विध्येकवाक्यतया स्तुत्याद्यर्थत्वेन, केषांचित् स्वतः प्रयोजनभूतब्रह्मप्रतिपादनेनैव सार्थकत्वमिति विभज्योत्तरे वक्तव्ये, गूढाभिप्रायः सूत्रकारः प्रामाण्यं यावता सर्वत्र कथयितुं शक्यम्-तदिहासूत्रयत् । विध्येकवाक्यतया तावत् केषांचित्प्रामाण्ये

---

प्रमाणलक्षणादीति । ब्रह्मण उपनिषत्प्रमाणत्व—तल्लक्षणवि-चारादीत्यर्थः ।

वक्तव्यम् ; इतरेषांतूपासनविध्येकवाक्यतया भिन्नवाक्यतया[वा ?]प्रामाण्यानुवचनम्, तत्र यदि एकहेलया वेदाप्रामाण्यवादी निराकर्तुं शक्यः, किमस्य सहसा ब्रह्मणोपदिष्टेनेति मन्वानो विध्येकवाक्यत्वमुखेन सार्थकतां समर्थितवान् । अतो न विरोध इति ।

तदिहैवं पूर्वपक्षः—यद्यपि प्रमाणानां स्वतःप्राप्तं प्रामाण्यम् ; शब्दार्थसम्बन्धश्च स्वाभाविकः ; पदानि च लोकोत्तरमर्थं प्रतिपादयितुं शक्नुवन्ति; वक्तृदोषोऽपि वेदे दुर्लभः—तथापि तदेकदेशभूतेष्वर्थवादेषु प्रामाण्यं दुरुपपादम् ; निष्प्रयोजनमृषावादप्रायत्वात् । तथाहि—"सोरोदीत् । यदरोदीत्, तद्रुद्रस्य रुद्रत्वम्", "स आत्मनो वपामुदखिदत्", "देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्", "वायुर्वै क्षेपिष्ठादेवता" इत्येवमादीनि अर्थवादवाक्यानि किं विध्युद्देशेनैकीभवन्ति प्रमाणम्, उत पृथग्भवन्ति । नाद्यः, अनुपयोगात् । यदि हि विध्युद्देश एव स्वार्थं विदधीत, पुरुषोपि तत एव प्रवर्त्स्यति, कृतमर्थवादैः । न ह्यमी करणेतिकर्तव्यतादि विधेयकोटिघटितं कंचिदर्थमुपस्थापयति । न द्वितीयः, **आम्नायस्य क्रियार्थत्वात्** । यद्यपि प्रमाणान्तराणि स्वविषयावबोधपर्यवसितानि प्रवृत्तिनिवृत्त्यनुपयुक्तमपि शिलाशकलादिकं बोधयन्ति—तथाप्यागमाख्येन प्रमाणेन प्रवृत्तिनिवृत्तिपर्यन्ताभिधायिना भवितव्यम् । अन्यथा वक्तृश्रोत्रोर्वचनश्रवणादिप्रवृत्तिवैयर्थ्यप्रसंगात् । न ह्यत्र गीतवत् शब्द एव स्वदत इति शृणोति । न च नास्य वत्

---

विधेयकोटिघटितम्—विधेयकोटिः-विधेयानुप्रवेशः ; तद्युक्तम् । विधेयांशे प्रविष्टमिति वा ।

रसात्मततयाऽवदधत्ते । अतः प्रमाणेन सता आगमेन श्रोतृप्रवृत्तिनिवृत्त्युपयोग्यर्थाभिधायिना भवितव्यम् । ततश्च भूतान्वाख्यानमात्रेषु अर्थवादवाक्येषु वायसरदनवाक्येष्विव क्व वा प्रवर्तेत, कुतो वा निवर्तेत । अतः, **अतदर्थानां** प्रवृत्तिनिवृत्त्यन्वयविरहिणां अर्थवादवाक्यानम् **आनर्थक्यं**—निष्प्रयोजनत्वम् । तस्मादर्थवादवाक्यम् अनित्यमुच्यते । नपुंसकतया सामान्यवचनं सर्वार्थवादसंग्रहसूचनार्थम् । तन्मुखेन कृत्स्नवेदाक्षेपसूचनार्थं वा । एकदेशमुखेन कृत्स्नाक्षेपः शारीरकत्रिपाद्यामिवात्रापि नानुपपन्नः । तत्र चोक्तं **दीपे**—"द्वितीयतृतीयचतुर्थपादेषु कानिचित् वेदान्तवाक्यानि प्रधानादिप्रतिपादनपराणीति तन्मुखेन सर्वाक्षेपमाशंक्य तान्यपि ब्रह्मपराणीत्युक्तम्" इति ।

नित्यत्वे वेदस्य प्रामाण्यं समस्ति, अनित्यत्वे [कारणदोषादन्यथा ?] वा पुम्प्रत्ययाभावादप्रामाण्यमिति कार्योद्देशेन कारणमुक्तम् । इह चौपचारिकमेवानित्यत्वं परैरभ्युपगतम् । यथा **भाषितम्**—"यद्यपि नित्यानि, तथाप्यनित्यकार्यमपि कुर्वन्ति" इति । आह च **भवनाथः**—"नित्यं हि हेत्वनपेक्षं स्वरूपे । अन्यदपि हेत्वनपेक्षमर्थे गौणं नित्यम् । तन्नेति अनित्यम्" इति ।

---

कार्योद्देशेन कारणमुक्तमिति । अनित्यत्वाद्धि अप्रामाण्यम् । प्रयोज्यस्याप्रामाण्यस्य कथनार्थं प्रयोजकस्य अनित्यत्वस्य कथनमित्यर्थः । अन्यदपीति । अनित्यः शब्द इत्यर्थः । अयमर्थः-अनित्यः शब्दः स्वरूपे हेत्वपेक्षोऽपि अर्थे हेत्वनपेक्षः बोध्यबोधकभावरूपस्वभाविकसंबन्धवशादेव बोधोत्पत्तेः । एवमनित्यस्य शब्दस्यापि

(विधिकल्पनस्यायोगः)

[अथ?] अध्याहार-विपरिणाम-गुणकल्पनादिभिर्विधिपरत्वमाश्रीयेत, अव्यवस्थितिः स्यात्। रुद्ररोदनवाक्ये हि शिष्टाचारोपन्यासात् रुद्रवत् रोदितव्यमिति कवयेम (?) कल्पयेम, यद्वा महतामपि तथाविधं प्रमादं प्रकाश्य प्रयत्नेन वर्जनीयमिति।अतो यथारुचि कल्पनादव्यवस्था। अशक्यविधानता च। न हि इष्टविनियोगादिकमन्तरेण विधिमात्रप्रेरितेन रोदितुं शक्यम्। न च प्रजापतिवत् आत्मनो वपोत्खेदनम्, तस्याश्च स्वयमग्नौ प्रेरणम्, ततस्तूपरपशूत्थापनम्, तेन च स्वयं यजनमित्यादीनि इदानींन्तनेषु घटते। न च देवयजनाध्यवसानसमनन्तरं स्वेच्छया दिङ्मोहः साधयितुं शक्यः।

अत एवञ्जातीयकानि दूरं गत्वापि नैरर्थक्यात् सिद्धमात्रपर्यवसितान्येव। तत्र यदि सिद्धमर्थं प्रमिमीमहि, ततः किम्। यदि च न, ततोपि वा किम्। किञ्च—प्रामाण्ये निश्चिते प्रयोजनवदर्थपर्यवसानकल्पनम्, तत्कल्पनेन तन्निश्चय इत्यन्योन्याश्रयणम्। न च सिद्धप्रतिपादने निष्प्रयोजने सति श्रुतहानेनाश्रूयमाणप्रयोजनवदर्थान्तरपरतावक्लृप्तिर्युक्ता। यथोक्तं **याम़ुनाचार्यैः**—"न खलु काकावलोकनमनभिमतमिति कनकावलोकनता कल्प्येत" इति। न च प्रयोजनानुगुणा प्रमाणव्यवस्था (प्रवृत्तिः?); प्रयोजनं हि प्रमाणानुगुणम्; स्वविषयाववोध पर्यवसायित्वात् सर्वप्रमाणानाम्। अन्यथोपेक्षादिफलेषु

---

गौणं नित्यत्वमस्ति। नित्यत्वं गौणमर्थवादेषु नास्तीति ज्ञापयितुं 'तस्मादनित्यमुच्यते' इत्युक्तमिति।

तृणकण्टकादिविषयेषु प्रमाणेषु उपादानोचितार्थक्लृप्तिप्रसंगात् । न च तर्हि तृणादिप्रत्यक्षवदेव प्रामाण्यमस्त्विति वक्तुं शक्यम् ; पुरुषव्यापारनैरर्थक्यप्रसंगस्योक्तत्वात् । न च तत एव प्रसंगात् प्रयोजनविभ्रमः, भ्रान्त्यापि तद्व्यापारोपपत्तेः ध्वांक्षदन्तेयत्तावाक्यस्येव प्रामाण्यस्थापनस्यैवायुक्तत्वात् ।

(अध्ययनविधेरसाधकत्वम् ।)

न च वाच्यम्—स्वाध्यायविधिना कृत्स्नस्य वेदस्य पुरुषार्थाय नियम्यमानत्वात् अर्थवादेष्वपि प्रयोजनेन भवितव्यमिति । शक्यमेव हि विधिना प्रयोजनमुपादीयेत । न च सिद्धार्थज्ञानमात्रं प्रयोजनम् ; वैषयिकज्ञानवत् स्वयंस्वादुत्वादर्शनात् । दर्शनेऽपि, ज्ञानमात्रे प्रीत्युत्पत्तावर्थसत्यतायामनिर्बन्धात् । न चात्र कार्यदर्शनं क्लृप्तितः शक्यत इत्युक्तम् । दृष्टार्थत्वासम्भवे च अध्ययनस्यैव वरमदृष्टार्थत्वं कल्पयितुम् ; न तु तद्बलेनाशक्यदृष्टक्लृप्तिः । अध्ययनविधिश्च नार्थज्ञानपर्यन्त इति साधितमादौ । अक्षरग्रहणस्य प्रयोजनवत्त्वमर्थवादभागानामर्थपरत्वाभावेपि पारायणाद्यदृष्टेनापि सिद्ध्येत् । न च तत्र प्रामाण्यापेक्षा, हुमादिसमानयोगक्षेमत्वात् । यथा च हुमादीनां स्तोभाक्षराणामर्थज्ञानमन्तरेणापि ऋगाद्यभिव्याप्तसामभागपूरणेन सप्रयोजनता (9-2-2.) वक्ष्यते । एवमिहाप्यर्थवादानां अर्थज्ञानेतरप्रयोजनवत्तायामध्ययनविधेः का हानिः । नचैवमस्त्विति

---

स्तोभेति । हुम् फट् इत्यादीनि सामगानावसरे यथासंप्रदायं प्रयोज्यानि निरर्थकानि अक्षराणिस्तोभाः ।

वाच्यम्, अपौरुषेयस्यानन्तस्य वाक्यराशेः प्रतीतिमुत्पादयतोऽप्यविवक्षितार्थत्वे शिष्टेऽप्यनाश्वासप्रसंगात्।

भवतु वाऽध्ययनविधेर्दृष्टार्थत्वबलादसम्भवद्दृष्टानामर्थवादानां स्वाध्यायबहिर्भावः। सन्ति च आख्यानरुचीनामुपाध्यायानां मन्दप्ररोचनार्थमालापाः। इदानीन्तनेष्विव ग्रन्थेषु परिग्राह्यतया प्रथितेन केनचित् प्रक्षेपाच्च तदुपज्ञं परिग्रहपारम्पर्योपपत्तिः। एतदपि सूचितम्, "तस्मादनित्यमुच्यते" इति। "तदेषाऽभ्युक्ता", "तदुक्तमृषिणा" इत्यादीनि च अर्थवादवाक्यानि मन्त्रान् संवादयन्ति। अतोऽप्यवगच्छामो मन्त्रेभ्योऽर्वाचीनतामर्थवादवाक्यानाम्। अतः कृत्स्नस्य वेदस्यापौरुषयत्वं प्रामाण्यञ्च दुर्वचमिति। (1)

न च आनर्थक्यमात्राद प्रामाण्यम्; अपितु बाधाच्चेत्याह—

१. सू-शास्त्रदृष्टविरोधाच्च ॥ १-२-२ ॥ (पू)

शास्त्रविरोधात् दृष्टविरोधात् शास्त्रदृष्टविरोधाच्चेति प्रत्येक समुदायपरमिदम्। द्वौ शास्त्रदृष्टविरोधौ परिहारसूत्रक्रमसंख्यानुरोधात्।

---

संवादयन्तीति। पूर्वाधिकरणान्तिमे 'कृते' इत्यादिसूत्रे, स्मृत्यादौ वेदतिनियोगो वेदस्य कृतत्वेऽस्ति न भवतीत्युक्तम्। वेदस्य वेद एव विनियोगात् उत्तरस्य कृतत्वमस्तीति अत्रोच्यते।

पू-2. सकृत्प्रयुक्तस्य शब्दस्यैकार्थस्वीकार एव युक्तः। अथापि सिद्धान्ते, शास्त्रविरोधः अथ लोकदृष्टविरोधः पुनः शास्त्रविषयविरोधश्च परिहरिष्यते। अतो मध्ये दृष्टघटनात् एवमिति भावः। तथा च शास्त्रञ्च दृष्टञ्च शास्त्रदृष्टे; शास्त्रेण दृष्टं शास्त्रदृष्टम्; ते तच्च शास्त्रदृष्टानि; तेषां विरोधादिति विग्रहः।

शास्त्रविरोधस्तावत्, "स्तेनं मनोऽनृतवादिनी वाक्" इत्यादिषु। यद्येतत् भूतान्वाख्यानमात्रम्, तदा-विद्यमानत्वेऽपि नैरर्थक्यात्, अविद्यमानत्वे मृषावादरूपत्वात्, 'स्तेनं मनः, अनृतवादिनी वाक् अतः स्तेयादिकं न कर्तव्यम्' इत्यनन्वयात् कर्तव्यमित्येव कल्प्येत; सर्वशरीरेषु चेष्टायां वाङ्मनसयोः प्रधानत्वादितरभूतेन्द्रियैरपि तच्चरितमनुवर्तितव्यमिति वा; निमीलनोन्मीलनादिवत् स्वभावस्य दुरतिक्रमत्वात् तत्करणिना पुरुषेणापि तत्तन्त्रवाहिना भवितव्यमिति वा। तथाच स्तेयानृतप्रतिषेधकशास्त्रेण विरोधः। न च षोडशिग्रहणादिवत् विकल्पः, प्रत्यक्षान्निषेधात् कल्प्यस्य विधेर्दुर्बलत्वेनातुल्यत्वात्। रागप्राप्त(सं)प्रति विध्यनुपजीविनो निषेधस्यैव बलीयस्त्वात्। स्तेयानृतयोश्च रागप्राप्तत्वात्, तत्र चानपेक्षिततया विधेरनुदयात्। नियमादेश्चात्रासम्भवात्। अतोऽत्र विधिकल्पने शास्त्रविरोधः सौत्रः, विध्यसम्भवस्त्वर्थसिद्ध इति।

दृष्टविरोधस्तु—"तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः। तस्मादर्चिरेवाग्नेर्नक्तं ददृशे, न धूमः" इत्यादिषु स्पष्टः, दिवानिशमुभयोरुपलब्धेः। यच्चानेन समर्थ्यते, "अस्माल्लोकादुत्क्रम्याग्निरादित्यं गतः, आदित्यश्च तम्" इति, तदपि हेत्वसिद्धेर्मृषावादः। अत एव तन्मूला अग्निसूर्ययोर्नक्तंदिवंव्यवस्थितज्योतिष्ट्वेन स्तुतिरपि मृषा, न ह्यसत्या(ता ?) स्तुतिरुपपद्यत इति।

अथ शास्त्रदृष्टविरोधः-"न चैतद्विद्मोऽब्राह्मणा वा स्मो वयं ब्राह्मणा वा" इति। (न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वेति)। ब्राह्मण्यं विशिष्टमातापितृसम्बन्धविशेषरूपोपाधिः; स च क्वचित् दृष्टः क्वचिदनुमेय

इत्येके। मातापितृसम्बन्धविशेषसहकृतचक्षुर्ग्राह्यो जातिविशेष इत्यपरे। अत उभयेषामप्येतद् दृष्टविरोधोदाहरणम्। वयं तु ब्रूमः शास्त्रविरोधस्यैवैतदुदाहरणमिति। न हि वयं गवादिवत् ब्राह्मणक्षत्रियादिविभागमापाततोऽध्यक्षयामः, न च रत्नतत्त्वमिवाभ्यासपाटवादिना। न च देशान्तरागतमुपदेशात्पूर्वम् 'अयं ब्राह्मण' इति निश्चिनुमः। न च ब्रह्मसूत्रादिलिंगभेदान्निश्चयः, दुष्टशूद्रादिभिर्व्यभिचारात्। अत एव न लिंगविशेष एवैतत्। एतेन आचारविशेषो ब्राह्मण्यमित्यपि दत्तोत्तरम्। "चण्डालमपि वृत्तस्थम् तं देवा ब्राह्मणं विदुः" इत्यादि तु क्रियास्तुतिपरमेव। अन्यथा सर्वसंक्षोभप्रसंगात्। किंच ब्राह्मण्यादिजातिविशेषमधिकृत्य क्रियाविधिः। सा चेत् तत्, आत्माश्रयः स्यात्। एतेन आचारविशेषाभिव्यंग्यत्वमपि निरस्तम्। अथ विशिष्टमातापितृसम्बन्धरूपम्, किं तत् वैशिष्ट्यं नाम? न तावदाचारादिकम्, उक्तदोषानतिक्रमणात्। नापि मातापितृब्राह्मण्यमेव; पूर्वपूर्वमातापितृब्राह्मण्यनिरूपणेऽपि पूर्वपूर्वमातापितृब्राह्मण्यनिरूपणसापेक्षत्वादिनाऽनवस्थानात्॥ मातापितृब्राह्मण्यस्योपदेशसिद्धत्वान्नानवस्थेति चेन्न;—

---

ननु शाबरादौ दृष्टविरोधोदाहरणतयेदमुक्तम्। कथं तद्विरुद्धमुच्यते इत्यत्र वक्तव्यं वक्तुम् आदौ तत्तत्पक्षमाह ब्राह्मण्यमिति। क्वचिदनुमेय इति। 'अयञ्चोत्पाद्योत्पादकसंबन्धो मातुरेव प्रत्यक्षः, अन्येषामनुमानोक्तोपदेशाद्यवगतः [तत्प्रत्यक्षादि] कारणं भवति' इति वार्तिके। वयंत्विति। सत्त्वरजस्तमसामप्रत्यक्षत्वात् तद्विशेषरूपस्य नित्यजात्याद्यन्यस्य ब्राह्मण्यादेरप्रत्यक्षत्वमित्याशयेन स्वपक्षोऽन्य उच्यते।

तद्ब्राह्मण्यमपि ह्युपदिश्यमानं ब्राह्मणेन ब्राह्मण्यामुत्पत्तिरूपम् । ततश्चोत्पत्तिमात्रमतिप्रसंगि । तदतिरिक्तं तु ब्राह्मणशब्दनिमित्तं पूर्वपूर्वेष्वपि न सिद्ध्यतीति निरालम्बनस्तद्व्यवहारः ।

अथ ब्राह्मण्याख्यो जातिविशेषो मातापित्रोः प्रत्यक्षः, तत्सम्बन्धज्ञानेन पुत्रे तदभिव्यक्तिरिति—तदपि न, मातापितृब्राह्मण्येऽपि तन्मातापितृब्राह्मण्यसापेक्षत्वेनानवस्थानात् ॥ पूर्वपूर्वप्रत्यक्षमूलोपदेशपरम्परया न दोष इति चेन्न—उपदेशपरम्परातिरिक्तप्रत्यक्षपरम्परायां प्रमाणाभावात् । न हि विशिष्टमातापितृप्रसूतोऽयमित्युक्तेऽपि तद्वाक्यार्थनिश्चयादधिका क्षत्रियादिव्यावृत्तिधीरध्यक्षा जायते । यस्तु विशिष्टमातापितृप्रसूतत्वाद्ब्राह्मणोऽयमिति व्यवसायः, सोपि ब्राह्मणेन ब्राह्मण्यामुत्पन्नो ब्राह्मण इति सामान्योपदेशमूल इति नाध्यक्षमूलः । संकरजातानां तूत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वा अन्यवर्णतापत्तिरित्यत्र तु आगम एव शरणमिति सर्वैरभ्युपगतम् । तथा च यथा तृणारणिमणिभ्यो जायमानस्याऽऽशुशुक्षणेः कारणवैषम्यपरिज्ञानेप्यवान्तरजातिरप्रत्यक्षा, एवमिहापि । तत्रापि चेत् जातिभेदः प्रत्यक्ष इष्येत, अनयैव दिशा द्रव्यादीनां धर्मत्वं प्रत्यक्षं भविष्यति देवानांप्रियस्य । एतेन 'न हि यत् गिरिशृंगमारुह्य गृह्यते तदप्रत्यक्षम्' इत्यादीनि स्त्रीपुंस्को-

---

द्रव्यादीनां धर्मत्वमिति । द्रव्यक्रियागुणादीनां यत् धर्मत्वं श्रेयस्साधनत्वम्, तदपि विलक्षणसहकारवशात् प्रत्यक्षमिति किं न भवेत् । एतावद्धर्माभिमाने सति देवानां प्रियत्वं संगतं भवेदिति । गिरिशृंगमित्यादिवाक्यम् 'सत्यपि सारूप्ये यथा केनचित् निमित्तेन

किलविभागोदाहरणविषयवाक्यानि निरस्तानि। किंच यदि मातापितृ-सम्बन्धविशेषस्तदभिव्यंग्या वा जातिर्ब्राह्मण्यादिः, ततः कथं परमपुरुषमुख-बाह्वादिजातानाम्, अन्येषां च मानसानाम्, अगस्त्यवाल्मीकिद्रौपदीधृष्ट-द्युम्नादीनामयोनिजानां जातिविशेषा व्यवतिष्ठेरन्। न च ते न सन्ति, प्रत्यक्षाद्यविरुद्धविषये अर्थवादादेरितिहासादेश्च प्रामाण्यस्याभ्युपगमात्। अतो योनिजायोनिजसाधारणमन्यदेव ब्राह्मण्यादिकम्। यथा गोमयप्रसूते वृश्चिकप्रसूते च वृश्चिकत्वमविशिष्टम्, तथा योनिजेष्वयोनिजेषु च ब्राह्मण्यादिकम्। अनियतहेतुकं च ब्राह्मण्यादि संकरेषु सप्तमे पञ्चमे वाऽन्यतरवर्णोत्पत्तौ दृष्टम्। तच्च ब्राह्मण्यादिकं सर्वं (र्वं) प्रसवितुः परस्य पुंसः प्रजापतिप्रभृतीनामृषीणां च प्रत्यक्षम्; इतरेषां तु प्राक्तनप्रत्य-क्षादिसिद्धगोत्रप्रवराद्युपदेशपारम्पर्यनियतसम्बन्धावसेयमित्यौपदेशिकम्।

यथा स्मरन्ति, "वर्णाश्रमादिनियतमन्त्रसंस्कृतविग्रहे। (वर्णा-श्रमोक्तमन्त्राधीनताबुद्धिसमन्विते) कर्मण्ये मिथुने जातो द्विजोऽन्यः संकरः स्मृतः॥" इति—एतच्च अस्मदादीनां योनिजशरीरेषु जाति-विशेषज्ञापनाय लक्षणकथनम्; न पुनः प्रमाणशतप्राप्तमयोनिजवर्गं व्यवच्छेत्तुं क्षमम्।

ननु काऽसौ ब्राह्मण्यादिजातिः? न तावत् संस्थानातिरिक्ता पराभिमता जातिर्भवद्भिरभ्युपगम्यते। यथोक्तं भाष्ये—"संस्थानाति-

---

स्त्रीपुंस्कोकिलादिविभागज्ञानमिति वाक्यञ्च वार्तिके। पुंस्कोकिलपदं पूर्वं निष्पाद्य स्त्रीपदेन समासः कार्यः। योग्यत्वायोग्यत्वरूपवैषम्य-मवधेयं वार्तिककृतेति भावः। लोके स्त्रीत्वपुंस्त्वादेः शरीरदर्शन-मात्रेण प्रत्यक्षमानुभविकम्।

रेकिणोऽनेकेष्वेकाकारबुद्धिबोध्यस्यादर्शनात् तावतैव गोत्वादिजाति-व्यवहारोपपत्तेः, अतिरेकवादेऽपि संप्रतिपन्नत्वाच्च संस्थानमेव जातिः" इति। न चात्र मनुष्यत्वातिरिक्तं क्षत्रियादिव्यावृत्तं ब्राह्मणादिषु संस्थानं पश्यामः। न च निपुणनिरूपणेऽपि दोष(देहे ?)धातुषु, रूपादिषु वा गुणेषु, भयादिषु वा विकारेषु वैषम्यमुपलभ्यते। न च आयुर्वेदादिषु भेषजादिविधिभेदः। अतोऽध्यवस्यामः सांकेतिक एवायं ब्राह्मणादि-विभाग इति। अपि च—अनादौ खलु संसारे दुर्वारे मकरध्वजे। कुले च कामिनीमूले का जातिपरिकल्पना॥ तस्मादनुपलम्भादनुपपत्तेश्च नास्ति ब्राह्मण्यादिजातिरिति॥

(ब्राह्मणत्वादेरागमिकत्वम्)

अविदितागमसिद्धान्तानामिदं चोद्यम्। शरीरारम्भकद्रव्य-समवेतानां सत्वरजस्तमसां तारतम्यविशेष एव ब्राह्मण्यादिजातिरिति महर्षयो विभजन्ते। एतदपि गुणतारतम्यं तत्तत्पुरुषकर्मतारतम्य-निबन्धनत्वान्न निर्मूलम्। अन्तःकरणगुणतारतम्यं तद्विरुद्धमपि न जात्यादिनियामकम्। दर्शनस्पर्शनाद्यनुज्ञापरिहारावपि शारीरगुणतार-तम्यनिबन्धनावेव। पुण्यापुण्यहेतुकं वृत्त्यादिभेदनियामकं वर्णानां गुण-तारतम्यं श्रीमद्गीताभाष्ये—"ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप। कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः॥" इत्यत्र स्पष्टं व्याचकार—

"ब्राह्मणक्षत्रियविशां स्वीयो भावः **स्वभावः**। ब्राह्मणादि-जन्महेतुभूतं प्राचीनं कर्मेत्यर्थः। तत्प्रभवाः सत्त्वादयो गुणाः। ब्राह्मणस्य स्वभावप्रभवो रजस्तमोभिभवेनोद्भूतः सत्त्वगुणः; क्षत्रियस्य स्वभावप्रभवः

तमस्सत्वाभिभवेनोद्भूतो रजोगुणः, वैश्यस्य स्वभावप्रभवः सत्वरजोभि-भवेनाल्पोद्रिक्तस्तमोगुणः, शूद्रस्य स्वभावप्रभवस्तु रजस्सत्वाभिभवेनात्यु-द्रिक्तस्तमोगुणः। एभिः स्वभावप्रभवैर्गुणैस्सह प्रविभक्तानि कर्माणि शास्त्रैः प्रतिपादितानि । ब्राह्मणादय एवंगुणकाः, तेषाञ्चैतानि कर्माणि, वृत्तयश्चैता इति हि विभज्य प्रतिपादयन्ति शास्त्राणि "इति।

न च अवयवसन्निवेश एव सर्वत्र जातिरित्यस्माभिरंगीकृतम् । यथोक्तं भाष्य एव—"संस्थानं नाम स्वासाधारणं रूपमिति यथावस्तु संस्थानमनुसन्धेयम्" इति। या च कामिनीमूलत्वादिः उपप्लवाशंका ; सा सर्वप्रवृत्तिविघातिनी ; अतिशंकायाः सर्वत्र सुलभत्वात्, दर्शनस्य चाविशिष्टत्वात्, अनुमानस्य च आगमादिविरोधे विपक्षे बाधकाभावे चानुदयात्। न च स्वपराधमात्रेण पुरुषस्यान्यप्रसूतत्वमनुमातुं शक्यम् ; अपराधिनीनामपि भर्तृनिमित्तप्रसवस्यापि दर्शनेनानैकान्त्यात्। सवर्णेन चान्येन संयोगे संकराभावात। संकरजातानामप्युत्कर्षादिना सप्तमे पञ्चमे वा वर्णान्तरापत्तिस्मरणाच्च। (1. संकल्पसूर्योदये 6-25. नवेतिपद्यम्)

किंचेदमुपप्लवचोद्यम् अर्धलोकायतिकमतमिव सेश्वरमत्यन्तायः नास्कन्दति। तथाहि-भगवान् पुरुषोत्तमःस्थावरजंगमात्मकं सर्वं जगदुप-संहृत्य पुनस्सृष्टिकाले तत्तत्कर्मानुरूपपरिणाममापन्नैरचिदंशैर्ब्राह्मणादीन् सृजति। तत्पारम्पर्यप्रसूताश्च ब्राह्मणादयो भवन्ति। एवमनुपप्लुत एवायं विभागो युगान्तरेषु [1]अद्यापि च विशिष्टदेशेष्वनुवर्तते । युगविपर्या-सादिभिरुपप्लुतांश्च सर्वान् उत्साद्य पुनः कृतयुगे महर्षिप्रभृतिभिः शुद्धं जातिविभागं प्रवर्तयति। एवं सर्वोपसंहारे पुनः कल्पान्तेऽपीति

संसारानादित्वेऽपि ईश्वराभिसन्धिवशेन शुद्धसंतानप्रवर्तनात् सर्वत्रोपप्लवानुमानं दूरापक्रान्तम्। यश्च महर्षिप्रभृतिषु प्रमादः, स तु प्राक्तनैः पश्चातनैर्वा तपःप्रभृतिभिरनुपप्लुत इति प्राञ्चः ।

अतः ईश्वरमहर्षिप्रभृतीनां प्रत्यक्षं ब्राह्मण्यादिकम्, अस्मदादीनां चाबाधितस्मृत्युपदेशपरम्पराधीनलक्षणविशेषसिद्धमिति ।

अथायमपरः शास्त्रदृष्टविरोधः, "को हि तद्वेद, यद(य)मुष्मिन् लोकेऽस्ति वा न वेति" इति। अत्र प्रश्नार्थत्वे नैरर्थक्यात् प्रतिषेधपरिशेषे शास्त्रदृष्टेन परलोकादिना विरोधः। पारलौकिकप्रतिषेधे स्वर्गार्थिनां चोदनानामप्रामाण्यं स्यात् । ताश्चेत् प्रमाणम्, तद्विरोधादर्थवादाप्रामाण्यम्। न च विकल्पः; अतुल्यार्थत्वात्, सिद्धे च तदसम्भवादिति। शास्त्रदृष्टविरोधोपि मुखभेदेन शास्त्रदृष्टविरोध(शास्त्रविरोध ?) एव। (२)

इतश्च—सू–तथाफलाभावात् ॥ १-२-३ ॥ (पू-३)

येष्वर्थवादेषु फलं निर्दिश्यते, न तत् तथा दृश्यते। समुच्चयार्थो वा तथाशब्दः। यदेतत् गर्गतिरात्रब्राह्मणं प्रकृत्याधीतम्–"शोभतेऽस्य मुखं य एवं वेद, आऽस्य प्रजायां वाजी जायते" इति। किं तत् सिद्धसंकीर्तनम्, उताध्ययनफलोक्तिः। नाद्यः, तदानीं विद्यमानविषयत्वे

---

पू-3 तदिति तदर्थवादोक्तमित्यर्थः। सूत्रे तथाफलेति एकं पदम्। तादृशस्यार्थवादोक्तरूपस्य फलस्याभावादित्यर्थः। समुच्चयार्थोवेति। नन्वेवं उत्तरसूत्रे चकाराभावात् न्यूनता॥ न। तस्य सूत्रस्यैतत्सूत्रविषयैकदेशविवरणरूपतया एतत्सूत्रशेषत्वमित्याशयात्। अभागिप्रतिषेधाच्चेति चकारघटितः प्रसिद्धः पाठ एवैतत्पक्षे आदर्तव्यः। अथवाऽत्र पक्षे तथेत्यस्य सर्वसूत्रेसंबन्ध इष्ट इति।

नैरर्थक्यात्। अविद्यमानविषयत्वे मृषावादत्वात्। न द्वितीयः, विध्यनुवादविकल्पानुपपत्तेः। न ह्यत्र फलविधिः, द्रव्यसंस्कारादिषु फलाभावस्य वक्ष्यमाणत्वात् (4-3-1)। अत एव न तदनुवादः, असदनुवादत्वापातात्। अत एव न स्तुत्यर्थताऽपि। (3)

नार्थवादिकफलस्याभावमात्रम्, केषुचित् तदभ्युपगमे दोषश्चास्तीत्याह ॥

1. सू-अन्यानर्थक्यात् ॥ १-२-४ ॥ (षू-४)

अन्यानर्थक्यप्रसंगादित्यर्थः। "पूर्णाहुत्या सर्वान् कामानवाप्नोति", "सर्वान् लोकान् पशुबन्धयाज्यभिजयति [पशुबन्धयाजी सर्वान् लोकानभिजयति]", "तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उचैनमेवं वेद" इत्यादिषु यदि पूर्णाहुत्यादिभिः सर्वकामादिसिद्धिः, अन्येषामग्निहोत्रसोमाश्वमेधादीनामानर्थक्यं स्यात्; पूर्णाहुत्यादिव्यतिरेकेण तेषामननुष्ठानात्। यानि पुनः एकफलसाधनान्यपि परस्परनिरपेक्षाणि कर्माणि, उपासनानि वा, तत्र महीधरस्थमध्वर्थं मार्गभेदेन गमनवत् यथारुचिपरिग्रहान्नानर्थक्यम्; अनित्यफलेषु देशकालस्वरूपाद्यतिशयापेक्षया समुच्चयोऽपि स्यात्, यथा शारीरके साधनलक्षणे वक्ष्यते, "काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्" इति। इह तु न विकल्पः, पूर्णाहुत्याद्यकरणे तदुत्तरकर्मानधिकारात्। नापि समुच्चयः, प्रथमेनैव सर्वफलसिद्ध्या तदुत्तरनैरर्थक्यात्। न च फलविशेषेणोत्तरेषां सार्थता, अविशेषश्रवणे कर्मविशेषेषु अप्रत्यक्षस्यासतः फलविशेषस्य कल्पने प्रमाणाभावात्। असता च स्तुतिर्न सम्भवतीत्युक्तम्। (4)

इतश्च [1]. सू-अभागिप्रतिषेधात् ॥ १-२-५ (पू)

प्रतिषेधाभागिनः प्रतिषेधात् । प्रसक्तं हि प्रतिषेधभागि भवति । न च अन्तरिक्षे दिवि वा चयनं प्रसक्तम्, येन, "न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि" इति प्रतिषिद्ध्येत । तेन नैष नित्यानुवादः, अक्रियार्थत्वेनानर्थक्यात् । नापि पर्युदासः; पर्युदसितव्याभावादेव । नान्तरिक्षे नदिवि चेति यद्विध्यर्थं पर्युदस्यते, तच्च पृथिवीचयनं नित्यप्राप्तमिति न विधेयम् । विधीयमानम(ने ?)पि, 'न पृथिव्यामग्निश्चेतव्यः' इत्येव यदि विवक्षा, तदा [1]चयनविधिना बाधः, अरागप्राप्तेः । विधिप्राप्ते तु तदुपजीविनोऽस्यैव दुर्बलत्वात् । न ह्यत्र विकल्पसम्भवः, विधेः कामसंयोगेन [2]च अग्नेः पाक्षिकत्वं सिद्धमिति विकल्पस्य व्यर्थत्वात् । तत्स्वीकारस्य च [3]पाक्षिकबाधगर्भतयाऽष्टदोषदुष्टत्वाच्च । न च चयनफलं तत् अचिन्वानस्यापि स्यादिति संभवति । नापि चयननिषेधेन चयनप्ररोचनाबुद्धिः । अतः स्वात्मानं विध्यन्तरञ्च आकुलयत् वाक्यमिदमप्रमाणमेव । (5)

इतश्च [1]. सू-अनित्यसंयोगात् ॥ १-२-६ ॥ (पू)

पूर्वस्मिन्नधिकरणे वेदप्रामाण्यं सिद्धं कृत्वैवानित्यसंयोगस्य

---

1 अनोक्तस्य नपृथिव्यामग्निश्चेतव्य इति निषेधासंभवस्यापि ज्ञापनार्थम्, अभागि प्रतिषेधादित्यस्य अभागिनः प्रतिषेधाभागिनः प्रतिषेद्धुमनर्हस्य विहितस्य प्रतिषेधादित्यप्यर्थ इष्यते ।

2 कामसंयोगेन-पशुकामश्चिन्वीत, श्येनचितं चिन्वीतस्वर्गकाम इत्येवं काम्यत्वोक्त्या अग्नेः—चीयमानस्य स्थण्डिलस्य कामनाविरहे अभावोपि सिद्ध इत्यर्थः । 3 अकाम्यचयनस्वीकारेऽप्याह पाक्षिकेति ।

श्रुतिसामान्यमात्रेण परिहार उक्तः; इह तु उक्तैर्हेतुभिरर्थवादांशस्याऽऽक्षेपे तदुपष्टम्भकतया पुनरुत्थाप्यते ।

(स्वाभिमतमर्थान्तरम् ।)

यद्वा—प्रतिक्षिप्तस्य पुनरुत्थापनं मन्दम् । न चार्थवादेष्वधिकाशंकाऽस्ति । सत्यपि तत्रैव परिहर्तव्या । असाधारण्येन च तत्रैव व्याख्यातमस्माभिः । अतोऽन्यथा व्याकुर्मः । उक्तैर्हेतुभिर्भवत्वनित्यमर्थवादवाक्यजातम् ; तथापि चोदनाभागे किमायातमिति यदि कश्चित् ब्रूयात्, तं प्रत्याह **अनित्यसंयोगादिति** । उक्तप्रकारेणानित्यलक्षणापन्नैरर्थवादवाक्यैः संयोगादन्यत्राप्यनाश्वास इति ।

(स्वाभिमतद्वितीयार्थः)

अथवा विध्यर्थवादयोर्भिन्नवाक्यतापक्षे आनर्थक्यादिदूषणमुक्तम् । अथैकवाक्यतापक्षं प्रतिक्षिपति **अनित्यसंयोगादिति**। नित्यसंयोगाभावः **अनित्यसंयोगः** । न हि विध्यर्थवादयोर्नित्यसंयोगः । पर-

---

अनित्यदर्शनादिति पूर्वं दर्शनपदं प्रयुक्तम्, अत्र संयोगादिति । अतोन्योऽर्थः प्रकृतोपयुक्तो युक्त इति । अभागिप्रतिषेधान्तैर्हेतुभिर्यदनित्यं सिद्धं तत्संयोगात् सर्वमप्रमाणमिति विवक्षितम् । अर्थवादाप्रामाण्यरूपैकसाध्यसाधकत्वं सर्वस्य पञ्चम्यन्तस्य युक्तमित्यालोच्य अत्यावश्यकमर्थान्तरमाह पुनः अथवेति । अत्राधिकरणे भिन्नवाक्यत्वेन पूर्वपक्षः एकवाक्यत्वेन सिद्धान्त इति व्याख्यातृभिरुक्तम्; एकवाक्यत्वासंभवादप्यप्रामाण्यं पूर्वपक्षिणोच्यते चेत्, पूर्वपक्षदार्ढ्यमिति प्रकृतसूत्रस्य तत्परत्वमुक्तम्। पूर्वसूत्रे चकारः भिन्नवाक्यत्वपक्षोक्तानां दूषणानां समुच्चायकः। अस्तु तर्हि एकवाक्यत्वमित्यत्र तन्निरासकं प्रकृतसूत्रमिति भावः।

स्पराकांक्षायां हि तयोः सम्बन्धनियमस्स्यात् । नचात्र साऽस्ति, अर्थवादान्वयमन्तरेण विध्युद्देशस्य प्रवर्तकत्वशक्तेः ; यथा अर्थवादरहितस्य । न ह्यर्थवादः सर्वेषु विधिषु [सार्वभौमः]; "वसन्ताय कपिञ्जलानालभेत" इत्यादिषु तदभावात् । प्रधानविधिष्वपि । न चांगांगिनोरन्योन्यार्थवादेन सार्थकत्वम्, अन्यविषयप्ररोचनाया अन्यत्र प्रवृत्तिहेतुत्वाभावात् । अर्थवादानां च भूतान्वाख्यानमात्रविश्रान्त्या निराकांक्षत्वात् । प्रयोजनार्थविध्यनुधावनस्य प्राक्तनदूषणम् ; विध्युपयुक्तस्य च फलकरणादेः अन्यतमस्याप्यनभिधानात् । प्रवृत्तेश्च स्तुत्याद्यपेक्षानियमाभावात् । अशब्दाच्च स्तुत्यादेः कल्पनेऽन्योन्याश्रयणात् । एकवाक्यतया स्तुतिनिन्दात्वक्लृप्तिः, स्तुतिनिन्दात्वेन चैकवाक्यता । न च प्रमाणान्तरेणान्यत्र प्रसिद्धिः, येन नान्योन्यापेक्षां स्यात् । अतः प्रत्यक्षेण विध्युद्देशेनैकवाक्यत्वासंभवात् अध्याहारादिभिरन्यत्र कल्प्यमानत्वे अव्यवस्थितिप्रसंगात्, यथाश्रुति गृहीतेऽर्थे नैरर्थक्यात्, क्वचित् प्रमाणान्तरबाधेनासदर्थत्वात्, असता च स्तुत्यसंभवात्, अर्थवादवाक्यानि अप्रमाणम् । (6)

(पूर्वपक्षसंग्रहः)

एतदुक्तं भवति—केचिदर्थवादाः कुण्डमजाजिनं पिण्ड इत्यादिवत् आकांक्षाविरहादनन्विताः, यथा "यजमानः प्रस्तरः" इत्येवमाद्याः, । अबोधका ह्येते । केचित्तु अग्निरुष्णः, आपो द्रवाः इत्यादिवत् बुद्धबोधकाः, यथा "आपो वै शान्ताः" इत्येवमादयः । अनपेक्षिता ह्येते । केचित्तु भ्रान्तविप्रलम्भकवाक्यवत् विपरीतबोधकाः, यथा आत्मवपोत्खेदन-प्रावप्लवनादिविषयाः । बाधिता ह्येते यथायथं प्रत्यक्षाद्यैः ।

सर्वेऽप्येते विधौ न पर्यवस्यन्ति । अक्रियार्थस्वार्थमात्रप्रतिपादनेन च नोपयुज्यन्ते। तदेवमबोधनात् बुद्धबोधनात् विपरीतबोधनात् अनुपयुक्तबोधनाच्चार्थवादांशस्य प्रामाण्यं दुर्वचमिति ।

(सिद्धान्तारम्भः)

तत्र सिद्धान्तमाह—1. **सू-विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ॥ १-२-७॥ सि.**

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । **विधिः** प्रेषणात्मा लिङाद्यर्थविशेषः । तथाचानुशिष्यते—"विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" इति । "विधिः-प्रेषणम्" इति च व्याचख्युः । लिङादिस्तु तत्प्रतिपादनात् परम्परया विधिः । तेन लिङादिना अवयवभूतेन समुदायो विध्युद्देशो लक्ष्यते । वेदे वक्तुरभावात् कथं प्रेषणम्? इत्थम् । नित्या एव हि वेदाः परमपुरुषप्रशासनरूपा इति प्रागेव स्थापितम् । तत्र प्रेषणं शाब्दमर्थलब्धं वेत्येतावदेव चिन्त्यम् ।

**(शासनस्य लिङाद्यर्थता)**

तत्र समभिव्याहृतनिमन्त्रणादिसमानयोगक्षेमतया विधिशब्दनिर्दिष्टस्य प्रेरणस्य शब्दवाच्यत्वम् । तथाच **सांख्याधिकरणभाष्यम्**, "स्वशासनाववोधिशास्त्रं च प्रदिश्य" इति । अत्र शासनं हि शास्त्रेणाववोधनीयमुक्तम् । शासनमेव हि प्रेषणम् । अयमेव च विधिशब्दार्थो वेदानामभिमत इति **परेऽपि केचिदनुवदन्ति** । **तत्त्वरत्नाकरकारै-**

---

परेऽपि केचिदिति न्यायकुसुमाञ्जलावुदयनाचार्या इत्यभिप्रेतम्। श्रीपराशरभट्टारकसंमतिरपि आज्ञार्थकत्व एवेति दर्शयति तत्त्वरत्नाकरकरैश्चेति ।

श्चोक्तम् । एवंच प्रेषणे शाब्दे तस्य निर्विषयस्य बोधयितुमशक्यत्वात्, धात्वर्थस्य कर्तव्यत्वमप्यध्यवसितमेव । अथापि प्रेषणविषयस्य धात्वर्थस्य साध्यत्वाभिधानम्; न केवलस्य । तदभिप्रायेण शारीरकाद्ये भाष्यम्, "विधिवाक्येषु धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धं लिङादेर्वाच्यमित्यध्यवसीयते" इति । एतदेव च वेदार्थसंग्रहेऽप्युक्तम्—"लिङादेः कोऽयमर्थः परिगृहीतो भवति? यज देवपूजायामिति देवताराधनरूपयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयोऽभिदधतीति न किञ्चिदनुपपन्नम् । कर्तृवाचिनां प्रत्ययानां प्रकृत्यर्थस्य कर्तृव्यापारसम्बन्धप्रकारो हि वाच्यः । भूतवर्तमानतादिमन्ये वदन्ति । लिङादयस्तु कर्तृव्यपारसाध्यताम् [वदन्ति]" इति । तत्रैव द्रमिडभाष्यमुपात्तम्, "स्वशासनानुवर्तिनं ज्ञात्वा कारुण्यात् स भगवान् वर्धयेत विद्वान् कर्मदक्षः ।" इति । अनन्तरञ्च भगवद्गीतायामेवायमर्थो दर्शितः, "ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः । ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान् विद्धि नष्टान् अचेतसः ॥" इति स्वाज्ञानुवर्तिनः प्रशस्य विपरीतान् विनिन्द्य, पुनरपि स्वाज्ञानुपालनमकुर्वतामासुरप्रकृत्यन्तर्भावमभिधायाधमा गतिश्चोक्ता" इति ।

यत्तु दीपे कर्त्रधिकरणे प्रोक्तम्, "यजेतोपासीतेति हि कर्तृलकारः, अतः कर्तारमेव बोधयति शास्त्रम्" इति । तत् आत्मनः कर्तृत्वं श्रुतिसिद्ध-

मित्येतदर्थम्, न तु लिङादिप्रत्ययवाच्यविशेषनिष्कर्षणपरम्। यद्वा यजेतेत्यादौ स्वव्यापारसाध्ययागादिविशिष्ट इति कर्तृप्राधान्येन बोधनमभिप्रेतम्। कर्ता चाख्यातान्तरसाधारणत्वान्न लिङादेर्विशेषतोऽर्थः। एवं-"स्वर्गकामो यजेत" इत्या[इत्येवमा] दिषु लकारवाच्यकर्तृविशेषसमर्पकाणां (र्पणपराणां) स्वर्गकामादिपदानां नियोज्यसमर्पकत्वं (णपरत्वं) शब्दानुशासनविरुद्धम्" इति **वेदार्थसंग्रहो**ऽपि।

इत्थं प्रेषणस्य शाब्दत्वपक्षे निर्वाहः। गम्यमानत्वपक्षेऽप्येषां ग्रन्थानां न कश्चिद्विरोधः। अनुशासनं तु कथञ्चिन्नेयम्। अतो विधिः प्रेषणम्, तदर्थत्वाल्लिङादिरिह विधिः। यद्वा विधीयते-कर्तव्यतया बोध्यते, विशिष्टो यागादिरनेनेति चोदनावाक्यमेव विधिः। स्वर्गकामः साध्ययागादिविशिष्ट इति हि विध्युद्देशार्थः।

अतः चोदनावाक्येनार्थवादानामेकवाक्यत्वात् अर्थवादाः **विधीनां स्तुत्यर्थेन** स्युः। स्तुत्या निन्दाऽप्युपलक्षिता। विधिनेत्युपक्रम्य **विधीना**मिति बहुवचनं तेन येन केनचिदंशेन स्तावकतया अन्वयद्योतनार्थम्।

---

7 स्वव्यापारसाध्येति स्वशब्दः कर्तृवाची। साध्यत्वपर्यन्तं लिङर्थः। इदञ्च वेदार्थसंग्रहे श्रीभाष्ये च विशिष्य लिङ्वाच्यार्थः क इति प्रश्नपूर्वकं कर्तृव्यापारसाध्यत्वस्यैवार्थतया भाषणात्, तत्र अभिदधतीति प्रयोगाच्च तदेव मुख्यम्। सांख्याधिकरणे शासनावबोधिपदप्रयोगात् तस्य गम्यमानत्वमिष्टं प्रतीयते। मीमांसकावैलक्षण्येनास्त्सिद्धान्ते वाक्येषु शाब्दबोधवर्णनप्रकारो न्यायपरिशुद्धावितोऽपि विशदतरः।

एतदुक्तं भवति—यदुक्तं विध्युद्देशेनैकवाक्यतया च अर्थवादानां प्रामाण्यं न सिद्ध्यतीति। तत्र तिष्ठतु तावत् प्रादेशिकी[1] स्वावसरसाध्या भिन्नवाक्यता। सामान्येनैकवाक्यतायां तावत् आनर्थक्यं न पश्यामः, स्तुत्यादिमुखेन सप्रयोजनत्वात्। तत्र यानि असम्भवत्स्वार्थानि दर्शितानि, तानि विचारयिष्यामः। यानि पुनः अविरुद्धस्वार्थानि, तानि तावत् अजहत्स्वार्थानि स्तावकतयैकवाक्यत्वं लभन्ते। यथा—"वायव्यं श्वेतमालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्यादि(दीनि?)। इह किल राजसेवादिवाक्ये राजगुणवर्णनवत् देवपूजाविधायिनि वाक्ये देवतास्तुतिः लोकव्युत्पत्तिप्रकारानतिक्रमेण समन्वेतीति सांप्रत्ययिकोऽयं पन्थाः। क्षिप्रदेवताकश्च कर्म क्षिप्रफलदं भवतीति कर्म प्ररोचितं भवति। यद्यपि विधिबलादेव पुरुषः प्रवर्तते, तथाप्येवमर्थवादैः प्ररोचितं कर्म शीघ्रमनुष्ठानाय घटत इत्यपि लोकप्रसिद्धम्। ततश्च यत्र सन्त्यर्थवादाः, [तत्र?] तत्प्ररोचितं कर्म कर्तव्यम्; यत्र न, तत्र विधिमात्रेणेत्यपि न दोषः। न चात्र स्तुतिपरत्वेऽर्थवादानां स्वार्थप्रहाणम्, स्वार्थेषु तदुपयोगिषु तदयोगात्। यथा 'क्रय्येयं गौः, इयं हि सम्पन्नक्षीरा' इत्यादिषु। अबोधनं विपरीतबोधनं च सिंहो देवदत्त इत्यादिवत् उपचारवृत्त्या परिहृतम्। लोकोत्तरेषु प्रागुक्तनयेन यथाश्रुतम्। वैपरीत्याभावाच्च। वृद्धबोधनं तु प्ररोचनार्थानुवादतया इति संग्रहः।

इदं च सर्वं शारीरकदेवताधिकरणे भाष्यकारैरेव स्पष्ट-

---

1 प्रादेशिकीति। समन्वयाधिकरणे वक्ष्यमाणमभिप्रेत्येदम्।

मुक्तमिति तदेवात्र लिख्यते—"कर्मविधिशेषभूतमन्त्रार्थवादेष्वपि 'वज्रहस्तः पुरन्दरः', 'तेनेन्द्रो वज्रमुदयच्छत्' इत्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्प्रमेयमेव। न च अनुष्ठेयार्थ-प्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तराविवक्षा शक्यते वक्तुम्; स्तुत्याद्युपयोगित्वात्; तेन विना स्तुत्याद्यनुपपत्तेश्च। गुणकथनेन हि स्तुतित्वम्। गुणानामसद्भावे स्तुतित्वमेव हीयते। न च असता गुणेन कथितेन प्ररोचना जायते। अतः कर्म प्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादाः। मन्त्राश्च कर्मसु विनियुक्तास्तत्र तत्र किञ्चित्करत्वाय अनुष्ठेयम(या)र्थं प्रकाशयन्तो देवतादिगतविग्रहादि[गुण]विशेषमभिदधत एव तत्र किंचित्कुर्वन्ति; अन्यथेन्द्रादिस्तुत्यनुपपत्तेः। न च निर्वि-शेषा देवता धियमधिरोहति। तत्र प्रमाणान्तराप्राप्तान् गुणान् स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति, गुणविशिष्टं वा प्रकाश-यन्ति, प्राप्तांश्चानूद्य तैः [कर्म]प्ररोचनप्रकाशने कुर्वन्ति। विरुद्धत्वे तु तद्वाचिभिः शब्दैः अविरुद्धान् गुणान् लक्षयित्वा(यित्वोप)कुर्वन्ति। कर्मविधेश्च देवताया ऐश्वर्यमपेक्षितमेव। कामिनः कर्तव्यतया कर्म विधीयमानं स्वयं क्षणप्रध्वंसिकालान्तरभाविनः फलस्य स्वर्गादेः साधन-मपेक्षते। मन्त्रार्थवादयोश्च, 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति', 'यदनेन हविषाऽऽशास्ते, तदश्यात् तदृध्यात्, तदस्मै देवा राधन्ताम्' इत्यादिषु देवतायाः कर्मणाऽऽराधितायाः फलदायित्वं तदनुगुणं चैश्वर्यं प्रतीयमानमपेक्षित-त्वेन वाक्यार्थे समन्वीयते।" इति।

वेदार्थसंग्रहेऽप्युक्तम्–"सर्वो ह्यर्थवादभागो देवताराधनभूतयागादेः सांगस्य आराध्यदेवतायाश्चादृष्टरूपान् गुणान् सहस्रशो वदन् कर्मणि प्राशस्त्यबुद्धिमुत्पादयति । तेषामसद्भावे प्राशस्त्यबुद्धिरेव न स्यादिति कर्मणि प्राशस्त्यबुद्ध्यर्थं गुणसद्भावमेव बोधयति इत्यनयैव दिशा सर्वे मन्त्रार्थवादगता ह्यर्थाः (अप्यर्थाः) सिद्धाः" इति । (7)

अथ स्यात्, केचिदुपाध्यायाः मन्दप्ररोचनौत्सुक्यात् स्वयंच आख्यानरुचित्वात् अर्थवादान् प्रक्षिपेयुः । तन्मूलं च पारम्पर्येण पठनं स्यात् । वक्तृप्रत्ययाभावाच्च न प्रामाण्यम् । पौरुषेयापौरुषेययोश्च नैकवाक्यत्वमिति । तत्राह—

1. सू-तुल्यं च साम्प्रदायिकम् ॥ १-२-८ ॥ (सि)

चः शंकानिवृत्त्यर्थः । यद्वा विध्येकवाक्यतया सह सांप्रदायिकतुल्यत्वं समुच्चिनोति । सम्प्रदायप्रयोज[न?]कं सर्वं विधिभागेन तुल्यमर्थवादानाम् । न ह्यनादिनिधनाविच्छिन्नसम्प्रदायतया अनन्तैरध्येतृभिरभ्यस्यमाने, स्वरादिमात्रान्यथाकरणेऽपि बहुभिर्निवार्यमाणे, अर्थवादांशे प्रक्षेपसम्भवः । अन्यथा विधिष्वप्यनाश्वासः । समं च अस्मर्यमाणकर्तृकत्वं विध्यर्थवादयोः । न चार्थवादान् अवधूय स्वाध्यायोऽध्येतव्य इत्युच्यते । न च तथा प्रेक्षावद्भिरप्यनुष्ठीयते । अध्यायानध्याय—आचार्योच्चारणानूच्चारण—शिष्याचार्यभावादिस्तुल्य एवार्थवादभागेऽपि । न च निरर्थके क्वचिदेवमादरः सम्भवति । अविज्ञार्थाश्चैते नियमाः ; अध्ययनसम्बन्धस्मृतेः ; सन्निहितप्रयोजनवदध्ययनपरित्यागे हेत्वभावात् ; तत्र

8 किञ्चतुल्यश्च" इति वार्तिकानुसारेण पक्षान्तरमाह यद्वेति ।

च्चाविघ्नस्यापेक्षितत्वात्; दृष्टे सम्भवत्यदृष्टक्लृप्तयोगात्; क्रतुसाधनत्व-रूपेण नियमे विदूरत्वा(स्थो ?)पकारित्वप्रसंगाच्च। न च निरर्थकेषु अविघ्नापेक्षा। विघ्न एव हि तत्र वरम्। अतोऽनादिभिरर्थवादैर्भ-वितव्यमिति।

एवं विध्यर्थत्वे समर्थिते विधिविरोधस्य शीघ्रपरिहरणीयत्वात् तदभिप्रायेण च दूषणोद्देशक्रमात् "शास्त्रदृष्टविरोधात्" इत्यत्र शास्त्र-विरोधं तावत् परिहरति—

**1. अप्राप्ताचानुपपत्तिः प्रयोगे हि विरोधस्स्यात्, शब्दार्थ-स्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ १-२-९ ॥ (सि-३)**

चस्तादर्थ्ये तदविरोधं समुच्चिनोति। या सा रोदनात्मवपो-त्खेदनस्तेयानृतवादादिषु शास्त्रविरोधात्मिकाऽनुपपत्तिरुक्ता, साऽत्र प्ररोचनार्थत्वपक्षे न। स्तेयादेः प्रयोगे अनुष्ठाने हि अर्थवादानां विवक्षिते प्रत्यक्षया तत्तन्निषेधश्रुत्या विरोधः स्यात्। न चार्थवादरूप-शब्दस्य अर्थस्त्वनुष्ठानात्मा दृश्यते। तस्मादुपपद्येत अर्थवाद-प्रामाण्यम्। 'अप्राप्तां चानुपपत्तिं' 'अप्राप्तं चानुपपत्ति' मित्यन्यौ पाठौ अध्याहारादिपरिग्रहक्लेशात्, "सा न प्राप्नोती"ति शाबरयोजनानु-

---

दूरस्थोपकारित्वेति वार्तिकानुसारेण शोध्यम्। विदूरत्वा-पकारित्वेति अशुद्धम्। 9 अप्राप्तामिति द्वितीयान्तपाठ एव वार्तिकसंमत इति बुद्धिमपाकरोति प्रक्षेपेति। तत्र सूत्रे शब्दार्थ इत्यस्य विधायकशब्दानुग्रहार्थ इति, अप्रयोगभूत इत्यस्य प्रयोगम-प्राप्त इति च व्याख्यानान्तरं कृतमत्रोपेक्षितम्।

-रूपत्वात्, प्रथमान्तपाठस्यापि सर्वैः स्वीकृतत्वाच्चानादरणीयौ। प्रक्षेप-बुद्ध्यैव वार्तिककृतापि पाठान्तरद्वयं व्याख्यातम्। (9)

यद्यपि विध्येकवाक्यतया स्तुतिनिन्दार्थत्वेनार्थवादप्रामाण्यं सम्भवति, तथाऽपि व्यधिकरणे स्तुतिनिन्दे कथं विधेरुपकरिष्यतः; "वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति" इति विधेः "आपो वै शान्ताः" इत्यपां स्तुतिः क्वोपयुज्यते। न हि अश्वगुणोक्त्या गौः क्रय्येति स्यात्। तत्रैव चासिद्धो गुणः कथ्यमानो न प्ररोचनार्थे घटते। यदाहुर्द्रमिडाचार्याः-"नासता स्तुतिरुपपद्यते" इति। न ह्यत्र, पयः पिब शिखा ते वर्धिष्यत इत्यादि-बालातुराद्युपच्छन्दनन्यायोपि सम्भवति, परीक्षकादिकृतत्वात्। अतः प्रतारणसमाधिरेवात्र स्यादित्यत्राह-—

1. सू-गुणवादस्तु ॥ १-२-१० ॥ (सि-४)

तुशब्दश्चोद्यं व्यावर्तयति। गुणवादः-अमुख्यवाद इत्यर्थः। एतदुक्तं भवति-यत्रार्थवादे साक्षादभिधेयार्थसमन्वयेन विध्येकवाक्य-ता न सम्भवति, तत्र लोकवत् गौण्या लक्षणया वा विध्यन्वययोग्यं कंचिदर्थमुपस्थाप्य तन्मुखेन प्ररोचनादेकवाक्यत्वं भवति। एतेनैव सामान्यतः सर्वविरोधे गमनिकोक्ता। तत्र यत् वेतसावकयोर्विधी-यमानयोरपां स्तुतौ वैयधिकरण्यमुक्तम्, ततस्तयोरेव तथास्तुतिः। तदभिजाते ह्येते स्वाभिजनस्तुत्या स्तुते भवतः। शान्तानामपां विकार-भूते हि ते स्वप्रकृत्यानुगुण्येन शान्तिहेतुतया यजमानस्य कष्टं शमयि-ष्यतः" इति।

(रोदनवाक्यस्य गुणवादत्वाभावः)

यानि रुद्ररोदनादिवाक्यानि, तेष्वपि पूर्वापरपरामर्शात् परस्परसाकांक्षैः पदैः स्तुतिनिन्दामुखेन विध्येकवाक्यत्वं सुव्यक्तम् । तत्र रोदनाद्यसम्भवमात्रं परिहर्तव्यम् । न तावत् रुद्रस्य रोदनमसम्भवि, तस्यापि **शतपथब्राह्मणा**दिषु शतशस्तद्धेतोः प्रतिपादनात् । अत्र रुद्रशब्दनिर्दिष्टस्याग्नेः देववर्गनिक्षिप्तधनप्रत्यर्पणनिमित्तशोकस्य रोदनहेतोः प्रामाणिकत्वात् । न च अशरीरस्य कथं रोदनाश्रुपातादिरिति वाच्यम्, देवताविग्रहादेः समर्थयिष्यमाणत्वात् । न च तदश्रुणो रजताख्यपरिणामे काचिदनुपपत्तिः, वस्तुशक्तेः प्रतिनियतत्वात्; द्रवादीनां परिणामविशेषवशात् काठिन्यादियोगस्य करकादिष्वपि दृष्टेः; गोमयवृश्चिकादिनयेन विलक्षणादपि कार्योत्पत्तेः **नविलक्षणत्वा**धिकरणे समर्थयिष्यमाणत्वात्; तृणारणिजाग्निवत् अश्रुप्रसूतानश्रुप्रसूतरजता(त ?)भेदस्य सम्भवात् ; शब्दप्रमाणके चार्थे शब्देतरसात् बाधायोगात् ; द्रव्यविशेषाणां च तत्तद्धातुरूपेण परिणामस्यान्यत्रापि दृष्टेः ; महर्षिभिश्चानुमतत्वात् । रुद्रशरीरस्य तैक्ष्ण्यविशेषात् सर्वधातूपादानत्वं युक्तम् । आह च भगवान् वाल्मीकिरम्बिकापतेर्वीर्येण ताम्रकार्ष्णायसादिरूपसर्वधातूत्पत्तिम् । यथा—(रा. बा. 37.) "उत्ससर्ज तथा [महा] तेजः स्रोतोभ्यो हि तदाऽनघ (17) । यदस्याः निर्गतं तस्मात् तप्तजाम्बूनदप्रभम् ॥ काञ्चनं धरणीं प्राप्तं हिरण्यममलं शुभम् । ताम्रं कार्ष्णायसं चैव तैक्ष्ण्यादेवाभ्यजायत ॥ मलं तस्याभवत् तत्र त्रपुसीसकमेव च । तदेतद्धरणीं प्राप्य नानाधातुरवर्धत" ॥

इति । एवमश्रुप्रसूतं रजतं स्वकारणानुगुण्येनाश्रुपतनहेतुर्भवतीति अदेय-यत्वाय निन्द्यते । यथा कृत्तिकाग्न्याधानादेः गृहदाहाद्यनिष्टकारण-त्वम्, तथा रजतस्य बर्हिषि दानं रोदनकारणं भवतीत्यनिष्टकारणत्वम्, "तस्माद्बर्हिषि [रजतं] न देयम्" इति निषेधस्योपयुक्तमेव ; यथा अपगोरणशतयातनासाध्यसाधनभावः, "तस्मात् ब्राह्मणाय नापगुरेत" इति निषेधस्य ।

कालनियतफलादर्शनं तु प्रतिबन्धकबलात् कर्मकर्तृसाधनवै-गुण्येन च समाधातव्यम् ।

(वपोत्खेदनवाक्यस्याप्यगौणत्वम्)

एवं प्रजापतेरात्मवपोत्खननं लोकोत्तरशक्तेर्न विरुद्धम् । तथापि तस्य जीवनं, तेनैवाग्नौ वपायाःप्रहरणमित्यादिकञ्च शक्त्य-तिशयादेव । विश्वसृजः प्रजापतेः कर्मसामर्थ्याच्च तथा तूपरपशूत्पत्ते-र्न विरोधः । सर्वं चैतत् कर्मस्तुत्यर्थं भवति ; 'अग्नौ प्रहृतमात्रायां प्रजापतेर्वपायामजस्तूपर उदगात्, इत्थं नाम बहवोपि पशवः सम-

10 कालनियतेति । नन्विदमनन्वितम्—रजतं न देयमिति निषेधवाक्यार्थवादज्ञापितस्य संवत्सरात् प्रागेव रोदनरूपस्य फलस्य रजतदाने कृतेऽप्यभावः कर्मवैगुण्यादिकृत इति वक्तुमशक्यत्वादिति चेन्न—वाक्यस्यान्यविषयत्वात् । तदेवम्—वायुर्वैक्षेपिष्ठेति वाक्य-मेव गुणवादोदाहरणमस्तु, यथाकालं फलाभावात् गौणत्वस्य वक्तव्यत्वादित्यत्राह कालनियतेति । कदाचित् क्षिप्रमपि फल-संभवात् न तत्र गुणवादत्वम् । सर्वत्र तथात्वाभावे कारणान्तरमेव कर्मवैगुण्यादि वाच्यम् । न त्वस्य कर्मणो योग्यताहानिरिति भावः ।

भूवन्; तदिदं कर्मणस्सामर्थ्यम्' इति। प्राजापत्यादिक्रमेण प्राजाप-त्यता च प्रतिपादिता भवति। अतः "यः प्रजाकामः पशुकामः स्यात् स एतं प्राजापत्यं तूपरमालभेत' इत्यनेन विधिनैकवाक्यतया वपोत्खेदनादिवाक्यं प्रमाणम्।

(दिङ्मोहापोहनिर्वाहः)

यदपि "देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्" इत्यादि, इदमपि "आदित्यः प्रायणीयश्चरुः आदित्य उदयनीयः" इत्यस्य विधेः शेषतया, न केवलं वृत्तान्वाख्यानपरम्, नापि विध्यन्तर-कल्पकम्; येनोक्तदोषः स्यात्; किन्तु दिङ्मोहमपि शमयत्य-साविति सर्वव्यामोहशमनत्वेनेष्टिः स्तूयते। न चेदमसदन्वाख्यानम्; देवतानामतिशयितज्ञानशक्तीनामपि कर्मवश्यतया कदाचिद्रजस्तमोभि-भवादिदोषसम्भवेन दिङ्मोहादौ विरोधाभावात्। न च तेषां देवयजनाध्यवसानमेव दिङ्मोहकारणत्वेनोच्यते, येन अस्मदादिष्वनु-पलम्भेन विरोधः शंक्येत; देवयजनाध्यवसानानन्तरं तेषां कदाचित् स्वकारणेन दिङ्मोहः संवर्तते (समवर्तत ?)। स चानेन कर्मणा शमितः। इत्थं नाम प्रशस्तमिदं कर्म; अत इदं कर्तव्य-मित्यस्मदादिष्वप्यस्य कर्मणो मोहप्रशमनहेतुतायां न विरोधः। न हि निवर्तनीयेन मोहेन तदानीन्तनेन भवितव्यमित्यस्ति नियमः। अङ्गेषु च फलं प्रधानाविरुद्धं नात्यन्ताय परिहार्यम् [र्यं], करिष्य-

प्राजापत्यादिक्रमेणेति पाठो दृश्यते। प्रजापतिवपादिकथनवशादपि प्राजापत्यतेत्यर्थोऽभिमतः।

माणे च[1] दर्शपूर्णमासयोरनभ्यस्तसौमिके भवति कर्मकलापे व्यामोह-शमनमपेक्षितम् । तत्राभ्यस्तचरकर्मोपस्था[प ?] नेनानभ्यस्तावधारणा-वकाशदायिनोऽप्यदितियागस्य दृष्टद्वाराऽप्यवधारणौपाधिक (पथिक ?)-त्वे न कश्चिद्दोषः । [2]आदित्येनैव ज्ञापितमिति स्तुतिः । एवमेता-दृशेष्वर्थवादेषु स्तुतिपरेष्वपि स्वार्थसत्यत्वमविरुद्धम् ।

यत्र तु स्पष्टः प्रमाणविरोधः, तत्र **गुणवाद** इति ।

**(परनिर्वाहदूषणम्)**

यत्तु—परेषां स्वार्थेष्वपि रुद्ररोदनादिवाक्यानां गुणवादा-श्रयणम्—तदयुक्तम्, रुद्रस्य रोदनादिसम्भवस्य दर्शितत्वात् ।

यत्तु--वर्णसारूप्यान्निन्दन् अनश्रुप्रभवमित्याह" इति [**शाबरं ?**] तत्र च यत् **वार्तिकं** "अश्रुणश्शौक्ल्यात्, यदि नामैतत्कठिनं भवेत् ततो रजतसदृशं भवेत् इत्युत्प्रेक्ष्य तत्प्रभवनिन्दा" इति—इदमपि साक्षात्तत्प्रभवत्वसम्भवोपपादनेन निरस्तम् ।

यत्तु-पुराऽस्य संवत्सरात् गृहे रुदन्ति इत्यत्र, "धनत्यागे दुःख-दर्शनात् पुराऽस्य संवत्सराद्गृहे रोदनं भवतीत्याह" इति, व्याख्यातंच वार्तिककृता, "धनत्यागेनात्यन्तोदारस्यापि गृहजनः पीड्यत इति

---

1. दर्शपूर्णमासयोरिति सप्तमी। तत्रानभ्यस्तम् तदनुष्ठानकाले अपरिचितमित्यर्थः ।

2. आदित्येन अदितिदेवताकेन सूर्येणच इत्यर्थः। आदित्यशब्दस्य सूर्यवाचित्वात् तच्छ्लेषेणात्र वर्ण्यते, आदित्यः सूर्य उदयं प्राप्तो दिङ्मोहं शमयति, तथाऽयमप्यादित्यश्चरुर्दिङ्मोहं शमयति। अभ्य-स्तरीतिकस्वानुष्ठाने प्रेरणेनानभ्यस्तांशविषयनिर्धारणावकाशदानात् अनुष्ठानप्रकाररूपदिग्विषयमोहनिवृत्तेरिति ।

तत्सामान्याद्वा रोदनोपन्यासः'' इति—तदनेन नूनं प्रहसनकोटौ निवेशितो वेदः। यदि च धनत्यागे दुःखदर्शनेन रजतमदक्षिण्यमदेयमित्युच्यते ; कथं ततः प्रकृष्टमन्यत् दक्षिण्यं विधीयेत ; तस्यापि त्यागे दुःखाधिक्यसम्भवेन निन्दाधिक्यप्रसंगात्। "रजतं हिरण्यमदक्षिण्यम्" इति विशेषेणोपादानमपि ह्यत्र[सुवर्ण ?] हिरण्यव्यवच्छदोर्थम्।

यत्तु (वार्तिके) स्तुतौ आख्यानादिसत्यत्वमतंत्रं कृत्वाप्युक्तम्—"शुक्तिकावत्तु किञ्चिदालम्बनं श्रुतिसामान्यमात्रेण सर्वत्र योजनीयं, यथा–इह महाभूतानि प्रजाः [पान्ति] इति **प्रजापति**शब्देनोच्यन्ते (ते) वायुरादित्य आकाशो वा, तेषां मध्यवर्तिनः सारा वपाशब्देनोच्यन्ते, यथासंख्यं वर्षं रश्मिर्वायुर्वा। तादृश्याश्च वपाया अग्नौ प्रहरणं च वैद्युते वर्षस्य, तस्य तत्सम्बन्धप्रसिद्धेः, लौकिके रश्मेः, तस्य तदाप्यायकत्वात्, शरीरान्तर्वर्तिनि आर्चिषे वायोः, तस्यान्तश्चरत्वसामान्यात्, तेजोज (ततोऽज ?) इति **अज**शब्देनान्नं बीजं वीरुदादि वोच्यते, जायमानानामपि तेषां सामान्येनानादित्वात्। **तदालम्भः** तत्प्रकाशनम्। ततः प्रजानां पशूनां चोत्पत्तिः। सर्वासां प्रजानां पशूनां च व्रीह्यादिपरिणामत्वात् इत्थं काशकुशावलम्बनेन सर्वत्रालम्बनम्'' इति-

एतस्मात् परिक्लेशात् वरं चित्रकथावस्तूनामिव मिथ्यात्वमेव। न हि तत्र कथंचिदित्थमालम्बनं कल्प्यते। न च तदकल्पनेपि विवक्षितं रसादि न सिद्ध्यति। एवमिहापि स्तुत्यादि।

यच्चानित्यसंयोगभयात् भूतान्वाख्यानस्यान्यथाकरणम्—तदपि प्रवाहानादित्वात् प्रागेव परिहृतम्। **वार्तिककारे**णापि पुनस्सानु-

शयेनोक्तम्—यथा–"मन्त्रार्थवादेतिहासपुराणप्रामाण्यात् सृष्टिप्रळयाविष्येते। तत्र सृष्ट्यादौ प्रजापतिरेव योगी तस्मिन् काले पुण्यकर्मोद्भवाभ्युपगमेन पशूनामभावात् स्वमाहात्म्येनाऽऽत्मानमेव पशुमभि(पि ?)निर्माय वपोत्खननादि कृतवान्। ततोऽसमाप्त एव कर्मणि तूपरः पशुरुत्थितः। ईदृशं च कर्म प्रत्यासन्नफलम्, एवं च प्रजापतिना चरितमिति सर्वं सत्यमेव। प्रतिसृष्टि च ऋतुलिंगन्यायेन तुल्यनामप्रभावव्यापारवस्तूत्पत्तेः नानित्यताप्रसंगः" इति।

एतेन "देवा वै देवयजनम्" इत्यादावपि 'कर्मसु कौशलेन दीव्यन्तीति देवाः ऋत्विजः' इति क्लिष्टकल्पना निरस्ता।

अत आर्थवादिकानि आख्यानानि सत्यान्येव सन्ति स्तुत्यादिमुखेन विधौ विनिविशन्त इति। (10)

"स्तेनं मनोऽनृतवादिनी वाक्" इत्यत्र विध्यन्तरकल्पनाभावात् शास्त्रविरोधः, सन्निहितहिरण्यविध्येकवाक्यतया च नैरर्थक्यं पर्यहियत। असम्भवत्स्वार्थे च सामान्यतो गुणवाद इत्यभ्यधिष्महि। तत्र 'स्तेनं मन'इत्यादिना विधेयान्तरस्तुत्यर्थं मनोवाचोर्निन्दा हि क्रियते। न चासता स्तुतिनिन्दे घटेते। नचात्र मनसः स्तेनत्वमदर्शि, वाचो वा

---

1-2-10 ऋतुलिंगन्यायेन। यथर्तुष्वृतुलिंगानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव; तथा भावा युगादिषु। इत्युक्तेरिति भावः। एतेन—देवानां कर्तृत्वरूपयथाश्रुतार्थसंभवोपपादनेन। कल्पना—अर्धमीमांसककृता।

1-2-11 शास्त्रविरोधः इति। पर्यहियतेत्यत्रान्वयः। विधि-

दृष्टमसत्यवादित्वम् । कथमसता स्तेयानृतभावेन निन्द्येयाताम् ? तत्राह—

1. रूपात् प्रायात् ॥ १-२-११ ॥ (स्लि-९)

**रूपात्**—मनसः स्तेनत्वं स्तेनसमानरूपत्वादित्यर्थः । स्तेना अपि परकीयं स्वकीयतयाऽभिमन्यन्ते ; एवं मनोऽपि । करणे कर्तृत्वाध्यवसायेन स्तेनगुणवादः । स्तेनवत् छन्नरूपतया तन्निर्देश **इत्येके** । **प्रायात्**—वाचोऽनृतबाहुल्यात् । बाहुल्येन हि साऽनृतं वक्ति, तावतैव सत्यवादतिरस्कारिणा निन्दोपपद्यते । अतः सतैव स्वभावभेदेन उभे निन्द्येते ।

यत्तु "धूम एवाग्नेर्दिवा ददृशे" इत्यादि दृष्टविरुद्धमुक्तम्—तत्राह—

सू-दूरभूयस्त्वात् ॥ १-२-१२ ॥ (स्लि-६)

दूरे अन्यतरस्य भूयस्त्वेनोपलम्भादित्यर्थः । दिवा धूमो रात्रौ चार्चिः दूरस्थैर्भूयस्त्वेनोपलभ्यते । तावता धूम एव, अर्चिरेवेत्यवधारणम् । यद्वा-दूरस्यैव भूयस्त्वात् अर्चिर्दिवा कदाचिन्नैव दृश्यते, रात्रौ च

---

कल्पनायां भवन् विरोधः तदभावात् परिहृत इति । असत्यवादित्वम् सत्यवदनेऽपि क्रियमाणे असत्यवदनशीलत्वम् । एवं मनोऽपीति । हिरण्यं मनसा दत्तमपि पुनः स्वकीयत्वेन मन्येत । तेन दानानिष्पत्तिः स्यादिति प्रकृतानुगुणोऽयमर्थः । अननुगुणं परोक्तमाह स्तेनवच्छन्नेति । एके—शाबरतदनुयायिनः ।

सत्यवादतिरस्कारिणेति । सत्यवदनं स्थितमप्यसदिव कुर्वता वेदेनेत्यर्थः ।

1-2-12 दूरभूयस्त्वादिति सूत्रस्य दूरस्थकर्तृकोपलम्भभूयस्त्वादित्यर्थः । तदुक्तं वार्तिके, दूरस्थैर्भूम्ना दिवा धूम एव

धूमः, अतस्तात्त्विकीयमवधारणा ॥ अस्त्वेवमवधारणोपपत्तिः, तथापि तेजसोर्मिथस्संक्रमणहेतुत्वमयुक्तम् ; न हि दूरस्थैरनुपलभ्यमानानि वस्त्वन्तरेषु संक्रामन्ति ॥ मा भूत् संक्रमणम्, असंक्रान्तेपि संक्रान्तवाचोयुक्तिर्गौणी, अतिवादमूललोकानुपलम्भानुसारेण स्तुत्यालम्बनात् ।

अत एव अतीन्द्रियदेवताकारसंक्रमणविवक्षायामपि न दोषः । [1]एवञ्च "अग्निर्ज्योतिर्ज्योतिस्सूर्यः", "सूर्यो ज्योतिर्ज्योतिरग्निः" इति मिश्रलिंगयोः, "अग्निर्ज्योतिर्ज्योतिरग्निः", "सूर्यो ज्योतिर्ज्योतिस्सूर्यः" इति केवलयोश्चाग्निहोत्रमन्त्रयोर्देवताद्वयसन्निधिविवक्षया संक्रान्त्याऽन्यतरसन्निध्यविवक्षया च विधानं स्तुतं मन्येमहि । (12)

1. सू-स्वयपराधात् कर्तुश्च पुत्रदर्शनात्(नञ्) ॥१-२-१३ (सि ७)

नेदं ब्राह्मण्यप्रतिषेधार्थम्; येन विरोधस्स्यात्, अपितर्हि ब्राह्मण्यस्य दुर्ज्ञानताप्रतिपादनार्थम् । दुर्ज्ञानत्वं च स्वयपराधात्, कर्तुश्च पुत्रदर्श-

---

गृह्यत इति । दूरे भूयस्त्वादिति चात्रोपक्रमे । षष्ठ्यन्तविग्रहः स्वरस इत्याशयेनाह यद्वा दूरस्यैवेति । अत्र दूरपदं न पुरुषपरम् । अधिकदूरस्थत्वादिति सूत्रार्थः अग्निधूमोभयसाधारणः स्यात् । अतः दूरस्थ-दूरस्थस्याग्न्यादेः भूयस्त्वात् उपलम्भभूयस्त्वादित्यर्थः । प्रविशतीत्युक्तांशेऽनुपपत्तिं शंकते तथापीति । परिहरति माभूदिति । एवमतिवादस्य मूलं जनैस्तदनुपलम्भ एव ।

मुख्यार्थमप्याह अत एवेति । एवञ्चेत्यादि । अत्र भाष्यकृतो मन्त्रपाठः उचितो न वेति विचारविस्तरो वार्तिके द्रष्टव्यः । अत्रेदमुक्तं भवति-अग्निहोत्रहोमे करणं मिश्रलिंगकमन्त्रोपि केवलमन्त्रोऽपि विकल्पेन । देवताद्वयप्रतिपादको मन्त्रः मिश्रलिंगकः । तत्रायमर्थवादः मिश्रलिंगकमन्त्रविधिशेषोऽपि भवति । एकदेव-

-नात्। अनपराधायां हि स्त्रियां क्षेत्रिण एव धर्म[तः?]पुत्र इति निश्चेष्यामः, सा चेदपराध्येत, तत्कर्तुरेवायं स्यात्, कर्ता च क्षेत्री वाऽन्यो वेति दुर्ज्ञानम्; अन्योपि ब्राह्मणः, इतरो वेति। अत एव हि श्रूयते-"अप्रमत्ता रक्षत तन्तुमेतम्" इति। प्रमादे हि प्रजातन्तुच्छेदोऽत्र प्रतीयते। स्मरति च, "माता भस्त्रा जनयितुः पुत्रः" इति। अत एव काचित्क-दुर्ज्ञान[त्व?]मात्रात् "नचैतद्विद्मः" इत्यादि अज्ञानवचनम्। अज्ञातेप्य-ज्ञातत्ववचनं किमर्थम्? प्रवरानुमन्त्रणप्रशंसार्थम्। प्रवरेण हि व्रियमाणेन अब्राह्मणोपि ब्राह्मणो भवेदिति प्रवरानुमन्त्रणं प्रशस्यते। सा च प्रशंसा प्रसिद्धब्राह्मणा(ण्या?)नां ब्राह्मण्यप्रसिद्ध्यपह्नवसापेक्षेति तदर्थो-ऽयमज्ञानार्थवादः।

अथ "कोहितद्वेद" इत्यादौ विरोधं परिहरति—

---

तायामन्यदेवताया अपि संक्रान्तत्वेनोभयोः स्थित्या मिश्रलिंग-कमन्त्रप्रयोगो युज्यत इति। एवं केवलमन्त्रविधिशेषोऽपि; एक-देवतामात्रोपलम्भात् अन्यदेवताया असांनिध्यविवक्षासंभवादिति। तस्मात् एकदेवतामात्रोद्देशोऽपि युज्यते अन्यतिरोधानात्। उभय-देवत्यत्वमपि युज्यते संक्रान्त्या संनिधानादिति॥

1-1-13 सूत्रे पुत्रदर्शनमिति प्रथमान्तपाठोऽन्येषाम्। स्त्र्यपरा-धस्य कर्तुःपुत्रदर्शनस्य च मिलितस्य ब्राह्मण्यदुर्ज्ञानत्वं प्रति हेतुत्वात् अत्र पञ्चम्यादरः। मिलितस्यैव हेतुत्वमेवोपपादयति अनपरा-धायामिति।

भवतु दुर्ज्ञानत्वम्। तत् किमर्थमत्रोच्यत इति पृच्छति अज्ञा-तेऽपीति। ब्राह्मणो भवेदिति। ब्राह्मण्यसंशये प्रवरानुमन्त्रणं तद-भावप्रयुक्तवैकल्यपरिहारकमिति भावः।

सू-आकालिकेप्सा (आकल्पिकेप्सा) ॥ १-२-१४॥ (सि-४)

तादात्विकमिहाकल्पिकं विवक्षितम् । आगमिष्यति वसन्ते यदद्यतनं वसन्तलिङ्गं तदाकलिकमित्याहुः। आकालिकमिति (तादात्विक-

---

1-2-14 आकालिकेप्सा इत्येव सूत्रपाठोऽन्यत्र सर्वत्र । शाबरे किमपि न गृहीतम् । वार्तिके तत्पदार्थवर्णनात् 'अकालिकड़ाद्यन्तवचने' इति पाणिनिसूत्रोदाहरणात् अकालिकमिति वा पाठः इत्युक्तेश्च आकालिकेति पाठः प्रथममिष्ट इति ज्ञायते । अत एवात्रापि भाष्ये तत्पाठद्वयमेव भवितुमर्हति । आकल्पिकेति पाठो न प्रसिद्धः । नापि तद्विवरणमत्नेषदपि ।

अत्र अण्ड्यार्‌ (अडैयारकोशालय)तालकोशपाठ उपरिदर्शितः। मुद्रितपाठश्च कुण्डलान्तर्निवेशितः । तत्र नञ् अनन्वितः । वार्तिके 'यत् तदानीमेवोत्पद्यते तत् आकालिकम्' इति तादात्विकत्वरूपार्थ एवोक्तः। तस्य नात्र खण्डनप्रसक्तिः । नाप्यद्यतनरूपार्थस्य निषेधः । उपरि अद्यतनेति तात्कालिकेति चोभयसंमतत्वगतेः। वार्तिके पाठान्तरमित्येकं पदमनन्वितं मुद्रितमस्ति । तेनान्यस्यापि पाठस्योल्लेखोऽवसरं लभेत । तत्सर्वं शोधनीयम् । आकल्पिकपदस्थाने आकालिकपदं ग्राह्यम्। उपरि आकालिकमिति पाठे इत्यत्र वार्तिकानुसारात् अकालिकमिति पाठे इति शोधनीयम्। तदुपरि आकालिकेप्सा इति सूत्रमनूद्य वाक्यार्थ उच्यते । पूर्वं प्रथमपदव्याख्यानमात्रं कृतम् ।

व्याख्यानार्थश्चैवं भाव्यः । पाणिनिसूत्रे आकालिकपदम् समानकालौ आद्यन्तौ यस्य तदित्यर्थकम्। उत्पत्तिनाशयोरेककालत्वं यस्य तदित्यर्थः। आशुविनाशीति यावत्। अयं विनाशित्वघटितोऽर्थः इहाविवक्षितः । किंतु यत् कारणात् समनन्तरमे-

मिहाकल्पिकं न विवक्षितं आगमिष्यति वसन्ते यदद्यतनं वसन्तलिं तदाकल्पिकमित्याहुः । आकालि(अकालिक ?)मिति) पाठान्तरेऽप्येवै विवक्षा । [अ] आकालिकेप्सा—अद्यतनफलश्रद्धा हि पुरुषाणां स्वरस-वाहिनी । वरमद्य काकः श्वोमयूरादिति न्यायात् । एतदुक्तं भवति—

---

वोऽपद्यते तदित्यर्थ एव । वार्तिकस्याप्ययमेवार्थः । अस्यार्थस्य सूत्रा-लाभे क्लेशात् सूत्रस्यार्थान्तरं शाब्दिकोक्तं मनसिकृत्य अद्यतनमिति, उपरि आहुरित्यन्तेनाह । तदा समानकालेति न एकक्षणविवक्षा । किंतु अस्मिन् दिने यस्यां वेलायां प्रातरादौ किञ्चिदुत्पन्नं परस्मिन् दिने तत्समानवेलायां नश्यति तदेकदिनस्थम् आकालिकम् । वसन्त-कालागमनात् प्रागेवैकस्मिन् समये वसन्तलिंगं रसालादि दृश्यते चेत् तत् अद्यतनमाकालिकम् । अद्यतनमित्यस्य तात्कालिकमित्यर्थे पर्य-वसानं सुकरमित्ययमर्थोऽस्तु इति । यद्वा यादवाभ्युदयव्याख्याने (7. 11, 17) दीक्षितोक्तरीत्या, न कालः अकालः वसन्तत्वादिव्य-वस्थितकालभिन्नः कालः । एवमकालशब्दस्यापि कालवचनत्वात् ततः ठञि आकालिकमिति रूपम् । इदम्, 'गमिष्यति वसन्ते' इत्यनेन सूचितम् । उपरिकालात् ठञिकालिकम्, न कालिकमिति विग्रहेण पाठान्तरप्रदर्शनम् । तालकोशे 'अआकालिकेप्सा' इति लिखि-तत्वात्, प्रथमाक्षरम् अकार आकारो वेत्येतावत्यंशे विवाद इति ज्ञायते । आकल्पिकपदस्यापि चिरकालभाविभिन्नेत्यर्थवर्णनं शक्य-मिति चेत्—अस्तु । तदनुकूलं विवरणमीषदपि न लक्ष्यते । न्याय-सुधा वार्तिकव्याख्यानरूपा द्रष्टव्या ।

कोहितद्वेदेति श्रुत्यर्थोऽपि चिन्त्यः । अमुष्मिन् लोके अस्ति-वानवेति कोवेदेत्यस्य अनेकेऽर्था भवन्ति—को निर्णयेत् । स्या-दपि, नस्यादपीति । अस्तिवानवेति कोटिद्वयात्रगाहि ज्ञानं न कस्या-पीति । आमुष्मिकमर्थं शास्त्रं विना अस्तीत्यपि नवेद, नास्तीत्यपि न वेद । सिद्धिर्शाधश्च दुरुपपादौ इति । सत्यपि अमुष्मिन् लोके, कर्मा-

"दिक्ष्वतीकाशान् करोति" इति प्रवर्ग्यकाले प्राग्वंशस्य दिक्ष्वतीकाशकरणं धूमक्लेशानुभवनिवृत्तिहेतुतया प्रत्यक्षतात्कालिकफलं प्रशंसितुम् । आमुष्मिकफलमागमैकसमधिगम्यमप्रत्यक्षमात्रेणाविदितमेव भावयन्तीति ।

यत्तु तथाफलाभावादित्युक्तम्, तत्राह—

1. सू-विद्याप्रशंसा ॥ १-२-१५ ॥ (सि. ९)

नैष फलनिर्देशः ; अपितु विद्याप्रशंसा । गर्गत्रिरात्राध्ययनं ह्यत्र मुखशोभावाजिभ्यां प्रशस्यते । नचैवमसता स्तुतिः ; अध्ययनदशायाम् अङ्गनादिमहनीयसौन्दर्यलावण्यादिमुखशोभाभावेऽपि "विद्यासमं नास्ति शरीरभूषणम्' इति न्यायेन विद्वत्सम्भाव्यविशिष्टपद वाक्योच्चा(द्ध ?)-

---

नुष्ठानेऽपि प्रतिबन्धकभूमप्रसक्तौ फलं यथाकालमस्य भवेत् नवेति न वेद्यमिति च । अतो नैकान्तेनापलापः श्रुत्यर्थ इत्यपि बोध्यम् । दिक्ष्वतीकाशानिति । झटिति धूमनिर्गमार्थान् अवकाशान् रन्ध्राणीत्यर्थः । भावयन्तीति । जना इतिशेषः ।

1-2-15 मुखशोभावाजिभ्यामिति । मुखशोभया वाजिपुत्रवत्त्वेन चेत्यर्थः । शाबरे, मुखशोभावाक्यं गर्गत्रिरात्रविधिशेषः, वाजिवाक्यं वेदानुमन्त्रणशेष इत्युक्तम् । वार्तिके तु उभयोरध्ययनविधिशेषत्वमेवोक्तम् । अंगनादिमहनीयेति । तदुक्तं वार्तिके, "न चैक एव प्रकारो मुखशोभायाः संस्थानं रमणीयता लावण्यश्चेति । स्त्रीविषयं ह्येतत् । विदुषां पुनः पदवाक्यन्यायोद्गारि मुखं शोभते" इति । अथ पदवाक्यन्यायेत्यस्य व्याकरणमीमांसान्यायशास्त्रेत्यर्थोपि स्फुरेत् । अन्यथा पदशब्दवैयर्थ्यात् लौकिकवाक्योच्चारणस्य सर्वसाधारणत्वाच्च । अथापि शास्त्रान्तरादेरपि ग्राह्यत्वात्

रणरूपेण परिष्कारेण शोभमानत्वात्। "आऽस्य प्रजायां वाजी-जायते" इति चाध्येतुः कुले सन्तताध्ययनश्रवणेन सम्पन्नमेधाब्रह्म-वर्चसः पुत्रः, **वाजम्**—'अन्नं वै वाजः," 'पात्रमायान्ति सम्पदः' इत्यादिन्यायेन प्रतिग्रहात्—अन्नं प्राप्नोति। (15)

अन्यानर्थक्यानुयोगं प्रतिवक्ति—

1. **सू-सर्वत्वमाधिकारिकम्** ॥ १-२-१६ ॥ (सि. १०)

पूर्णाहुत्यादिषु यः फलनिर्देशः, नैष फलविधिः, [द्रव्य ?]-संस्कारकर्मसु फलश्रुतेरविधित्वस्य वक्ष्यमाणत्वात्। स्तौति त्वेवम्। तथापि नासता; परम्परयोपपत्तेः। पूर्णाहुत्यादिभिरग्न्यादिसिद्धौ तत्साध्यैः कर्मभिर्नानाफलैः सर्वकामावाप्तेः। ये पुनः अतत्साध्याः

---

विशिष्टपदवाक्योच्चारणेत्युक्तम्। उच्चारणेत्यत्र उद्धरणेति पदमपि स्यात्। आ अस्य प्रजायामित्यस्य शाबरानुसारेणार्थमाह आस्येति। पुत्र इत्यस्य प्राप्नोतीत्यत्रान्वयः। वाजमित्यस्य प्रमाणपुरस्सरं विवरणम् अन्नमित्यन्तम्। वाजीजायत इति श्रीहयग्रीवानु-प्रवेशोऽपि।

1-2-16 संस्कारकर्मस्विति। पूर्णाहुतेरग्निसंस्कारत्वात्, अश्वमेधयागवेदनस्य यागानुष्ठानार्थतया कर्तृसंस्कारकत्वात्, पशुबन्धस्य संस्कारत्वाभावेऽपि ज्योतिष्टोमोपकारकत्वात् अङ्गत्वम्। द्रव्यसंस्कारकर्मस्विति सूत्रे कर्मपदमारादुपकारककर्मपरम्। कर्म-भिरिति। तथा च सर्वकामसाधनयागादिकर्मसाधनत्वमेव पूर्णाहुति-निष्ठं सर्वकामसाधनत्वरूपेणोक्तमित्यर्थः। नन्वग्निसाध्यकर्मणां कथं सर्वकामसाधनत्वम्, [तदसाध्यस्यापि कामस्य सत्त्वादित्य-त्राह ये पुनरिति। सर्वं फलं अग्निमूलं यागाद्यधिकारसंपत्त्या

कामाः, न तेऽत्र सर्वशब्देन संगृह्यन्ते। अधिकृतापेक्षं हि सर्वत्वम्। तथैव लोकवेदयोः प्रयोगात्। (16)

नन्वङ्गे सर्वकामफलश्रुत्या मा भूदन्यानर्थक्यम्। यत्र पुनः परस्परानंगभूतेषु कर्मसु अल्पस्य महतश्च कर्मण एकमेव फलं निर्दिश्यते, तत्र दुष्परिहरमन्यानर्थक्यम्। यदि ह्यल्पेनाग्निहोत्रादिना स्वर्गः सिद्ध्येत्, किं गुरुतरेण ज्योतिष्टोमादिना? यदि हि चातुर्मास्ययाजिनः सुकृतमक्षय्यं स्यात्, किं कर्मान्तरेण? यदि च कर्मणैव स्वतन्त्रेणाक्षयामृतफलसिद्धिः, किं कर्मांगिकया यमनियमादिपरिक्लेशबहुळया दीर्घकालनैरन्तर्यादरसेवनीयया ब्रह्मविद्ययेति॥ तत्राह—

1. सू. फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात्॥ १-२-१७॥ (सि ११)

यत्र फलस्य कर्मभ्यो निष्पत्तिर्विवक्षिता, तत्र तेषां कर्मणां लौकिककर्मणामिव परिमाणानुसारेण फलतारतम्यं स्यात्।

---

तद्द्वारकमित्येकोऽर्थः सूत्रस्य। तदा त्वप्रत्ययस्यावश्यकत्वाभावात् अयमप्यर्थः-कामानामत्र सर्वत्वं अग्निसाध्यकर्मफलरूपप्रकृतमात्रनिष्ठमिति। तथा च शाबरम्, असर्वेषु सर्वत्वमधिकृतापेक्षमिति।

1-2-17 पूर्णाहुत्यादेः पृथक्फलाभावेपि फलसद्भावान्वारोहेण समाधानान्तरपरमिदं सूत्रमिति शाबरादौ उक्तम्। अन्वारोहमुपेक्ष्य फलसद्भावस्थलविषयतयैव सूत्रं योजयितुमारभते नन्विति। स्वल्पप्रश्नसमाधानार्थं प्रवृत्तमपीदं सूत्रं ब्रह्मजिज्ञासादिबहुकार्योपयोग्यर्थविशेषदर्शकमिति एतद्गौरवं दर्शयितुं शंकासमाधानविस्तरः। सूत्रमिदं विधिमन्त्रलभ्यफलविषयमिति भावः।

एतदुक्तं भवति—यथा लोके कृष्यादिकर्मणां व्रीह्याद्येकफलसाधनानामपि कर्मतारतम्यानुसारेण फलतारतम्यम्, एवमिहापि । यद्यपि लोके अल्पेन रत्नवाणिज्यादिना महत्तरम्, महता च कृष्यादिनाऽल्पतरं फलं दृश्यते; तथापि वेदे नैवमुत्प्रेक्षितुं शक्यम्, अधिकारेऽविशेषे (अधिकार्यविशेषात्) लघौ स्थिते गुरौ नियमेनाप्रवृत्तिप्रसंगात् । अतो यथा फलाश्रवणेपि विश्वजिदादौ फलं कल्पितम्, एवं फलविशेषाश्रवणेपि गुरुतरे कर्मणि विधिबलादेव फलमूमा कल्प्यः । सम्भवति च देशकालस्वरूपैः स्वर्गादिफलेषु तारतम्यम् । अनुशिष्यते च श्रुत्यादिभिः । एवं गुरुतरोपासनविधिवैयर्थ्यपरिहाराय, "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति", "अपाम सोमममृता अभूम" इत्यादिकम्, "वायुश्चान्तरिक्षञ्चैतदमृतम्" इत्यादिकंच(दिवत् ?) आपेक्षिकं मन्तव्यम् । चातुर्मास्येष्वेव फलतारतम्यमधीमहे । वेदनरहितानां च सर्वेषां कर्मणां बहूनि वर्षसहस्राण्यभ्यस्तानामप्यन्तवत्फलत्वमुपनिषद्भिर्घुष्यते । अतो वेदनसम्बन्धदशायां भवतु अक्षयफलत्वं स्तुत्यर्थमभिव्याप्त्या निर्दिष्टमित्यपि निर्वोढुं शक्यम् ।

तदेवमर्थवादप्रसंगात् विध्युद्देशैर्मन्त्रैश्च प्रसक्तमन्यानर्थक्यं परिहृतम् । एवं च सति—पूर्णाहुत्यादिष्वपि भवतु फलविधिरेव; तथापि नान्यानर्थक्यम्; पूर्णाहुत्या सर्वेषां काम्य[फल ?]भेदानां मात्रया प्रागुपपत्तेः । पशुबन्धयजनेनापि देशकालस्वरूपैरल्पीयसो भोगस्य सम्भवात्, अश्वमेधब्राह्मणाध्ययनेनापि मात्रया तत्फलसिद्ध्यविरोधात्, आवृत्तिभूयस्तया वा समफलसम्भवात् । कर्मणां तु सर्वेषां ज्ञानरहितानां

कल्पकोटिसहस्रावृत्तानामपि न ब्रह्मविद्यया फलसाम्यं संभवति । प्रायश्चित्तादिषु च गुरुलघुविकल्पाः फलतारतम्यात्, अधिकारिविकल्पभेदावृत्त्यादिभिश्च निर्वहणीया इति ।

नन्वेवं यदि सर्वत्रैव कर्मणामल्पास्थिर[फलः]त्वमवधारितम्, अथेदानीं मुमुक्षुर्ब्रह्मविचारमारभताम् ॥ मैवम्; अध्यायशेषमन्तरेण कृत्स्नवेदप्रामाण्यस्यानिर्वहणात् । ततः परमपि, अविदितस्वरूपाणां कर्मणां स्वतन्त्राङ्गभेदयोः फलभेदस्य दुर्ग्रहत्वात् । स्वरूपादिकं सिद्धं कृत्वा सङ्गत्यन्तराणां शास्त्रादौ दर्शितत्वात् । अतो निरूपितेषु कर्मस्विममेव सूत्रार्थं यथावत्प्रतिसन्धाय परं निर्वेदमेष्यति, यमेनं श्रुतिराह, "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन" इति । तथाच शारीरकाद्यभाष्ये—"तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वा" इति । केचित्—"इदं सूत्रं कर्मावान्तरभेदविषयम्, कर्मोपासनयोः फलविवेकस्तु शारीरकाद्ये विशिष्ट-शास्त्रारम्भहेत्वेकदेशानुप्रवेशेन साधनीयः" इति वर्णयन्ति । तमपि च पक्षं तत्रैव स्थापयिष्यामः ।

---

विशिष्टशास्त्रेत्यादि । अथातो ब्रह्मजिज्ञासेत्यत्र शास्त्रारम्भसाधको हेतुः कर्माल्पास्थिरफलत्वनिर्णयविशिष्टब्रह्मापातप्रतीतिरूपः तदेकदेशः कर्मविषयेनिर्णयः तत्रैव चातुर्मास्यादेरक्षय्यफलत्वाशंकापूर्वकपरिहारेण करिष्यत इत्यर्थः। कर्मफलतारतम्ये एतत्सूत्रोक्ते सत्यपि एकरूपफलसाधननानोपासनन्यायेन चातुर्मास्यादेः कस्यचिदक्षयफलत्वशंका, चातुर्मास्यादेरप्युपासनांगत्वात् अङ्गेनैव सिद्धौ अंगिवैयर्थ्यात् सर्वकर्मस्पष्टनिन्दादिना च परिहर्तव्येति भावः।

यैः पुनरिदं सूत्रं फलान्वारोहेणान्यानर्थक्यपरिहारपरमिव नीतम्—तैः स्वतन्त्रकर्मफलनिर्देशमूलमन्यानर्थक्यं कथं परिहृतम्। निरूपितकर्मस्वरूपतारतम्यस्य तु पश्चात् व्यक्तिर्भविष्यति। अस्मिन् पक्षे **कर्मविधिस्वरूपे** इत्यादिभाष्यमप्यविरुद्धमिति।

अथाभागिप्रतिषेधचोद्यस्योत्तरमाह—

**1. सू-अन्त्ययोर्यथोक्तम्** ॥ १-२-१८ ॥ (सि-१२)

"**अन्त्ययोः**—"नान्तरिक्षे न दिवि" इति प्रतिषेधयोः। आदिमे 'नपृथिव्याम्' इत्यत्र यथा उक्तं 'हिरण्यं निधाय चेतव्यम्' इत्यस्य विधेःशेषत्वं, तथा तच्छेषत्वमित्यर्थः। एतदुक्तं भवति—केवलपृथिवीचयननिषेधो हिरण्यस्तुत्यर्थ इति स्पष्ट एव; अन्यथा चयनस्यैवासम्भवप्रसङ्गात्। तद्वत् अन्तरिक्षादिचयननिषेधोपि। प्रसक्तेन हि[अ ?]प्रसक्तं सह निषेध्यम्। केवलपृथिवीचयनेन प्रसक्तेनाप्रसक्तं

---

येपुनरिति शबरादिग्रहणम्। स्वतन्त्रफलकर्मेति। यत्र वस्तुत एव स्वल्पस्य महतश्च फलैक्यम्, तत्कर्मेत्यर्थः। व्यक्तिः-विस्पष्टज्ञानम्।

1-2-18 अन्त्ययोरिति द्वयं किम्, यथोक्तमिति कुत्रोक्तमुच्यते इत्यत्र विवृणोति अन्त्ययोरित्यादिना। पृथिव्यां चयननिषेधः (पृथिव्यां) हिरण्यनिक्षेपस्तुत्यर्थः, यथा वाङ्मनसनिन्दा (हस्ते) हिरण्यनिक्षेपस्तुत्यर्थेति हिरण्यसंबन्धित्वरूपैक्यमादाय यथोक्तमित्येतद् वार्तिके विवृतम्। तदिहाप्युपरि वदति। अथ तत्र वार्तिके नान्तरिक्षेनदिवीति निषेधद्वयं शुद्धपृथिवीनिषेधसमर्थनार्थमित्युक्तम्। अतः अभागिप्रतिषेधादिति सूत्रे अप्रसक्तप्रतिषेधरूपांशस्यैव मुख्यत्वात् तन्निषेधमात्रपरतयाऽपि सूत्रयोजना युक्तेति

समीकृत्य निन्दति, तेन हिरण्यं स्तुतं भवतीति ॥ यथोक्तमित्यत्र वाङ्मनसनिन्दनं यथा उक्तं हिरण्यस्तुत्यर्थमिति, तथेत्येके ।

अनित्यसंयोगस्तु यदा प्रागुक्त एव प्रकृतोपष्टंभकत्वेनानुषक्तः, तदा प्रकृतसमाधाने प्रागुक्तमेवोत्तरम्, यदा तु (?)प्रयुक्तिभिरनित्यकोटौ निवेशितैरर्थवादवाक्यैस्संयोगाद्विध्युद्देशभागेऽप्यनाश्वासात् इति योजना, तदा (?)प्रयुक्तीनां परिहारेणार्थवादानामनित्यत्वप्रसंगाभावात् तत्संयोगमूला विध्युद्देशस्यानित्यत्वशङ्का स्वयमेव विलीयत इति नोत्तरं पृथक्सूत्रितम् । यदा पुनः अर्थवादविध्युद्देशयोरसम्बन्धचोद्य-

---

अन्त्ययोरित्यस्य द्युनिषेधान्तरिक्षनिषेधयोरित्यर्थवर्णनम । यथेत्यस्य पृथिवीनिषेधस्येवेत्यर्थः। तस्येव तयोरप्यर्थवादत्वमुक्तमित्यथः। उपस्थितपूर्ववाक्यार्थस्यैव सुग्रहत्वादेवम् । तस्य दृष्टान्तत्वं कथमित्यत्रोपपादयति एतदुक्तमिति। नान्तरिक्षे चयनं कर्तव्यम्, न च दिवि कर्तव्यमित्युक्तौ अप्रसक्तनिवारणमिति दोषः स्यात् । यथा दिवि अन्तरिक्षे च चयनं न भवत्येव, तथा पृथिव्यामपि न चेतव्यमिति वाक्यार्थो युक्त एवेति भावः । शुद्धपृथिवीनिषेधस्यार्थवादत्वं विधिनान्वितिति प्रथमसूत्रेणैव सिद्धम् । अप्रसक्तप्रतिषेधरूपशंकांशमात्रमत्र परिहार्यमिति भावः ।

अन्तिमसूत्रोक्तः आक्षेपः कुतः सूत्रकारेण न परिहृत इत्यत्र पूर्वमेव कृतत्वादित्याह अनित्येति । तस्य सूत्रस्य स्वाभिमतार्थान्तरपरत्वे तन्निरासोपि स्थित एवेत्याह यदापुनरिति ।

अत्रेदमाकूतम्–सूत्रमिदं पुनरावर्त्य अन्त्ययोः–अनित्यसंयोगसूत्रे पूर्वोक्तार्थातिरिक्तं यत् अर्थद्वयं तत्रापि यथोक्तमेव समाधानमिति व्यख्यातव्यम् । एवं तत्राऽऽवृत्त्या पृथगर्थवर्णनं वैशद्याय ।

मिदम्, तदाऽप्यानर्थक्यपरिहाराय प्रवृत्तेन सिद्धान्ताद्यसूत्रेणैव विध्यर्थवादयोरेकवाक्यतया दत्तमुत्तरमिति तदेव प्रयोजनम्---इति सत्यार्थाभिधानात् सर्वेऽर्थवादाः प्रमाणमिति सिद्धम् ।

प्रयोजनं तु---क्षणिकस्य कर्मणः कालान्तरभाविफलसाधनत्वेऽपि कल्पनानिरपेक्षदेवतानुग्रहादिद्वारलाभः, विश्वजिदादिवत् विध्युद्देशेऽप्यनिर्दिष्टफलानां रात्रिसत्रादीनामार्थवादिकप्रतिष्ठादिफलपरिग्रहः, विध्युद्देशनिर्दिष्टानाञ्च स्वर्गादिफलानां दुःखासम्भिन्न देशत्वादिस्वरूपशोधनं, यथावस्थापितस्वरूपरूपगुणविभवादिसिद्धिश्चेति ॥

67 स्वरूपविश्रमो यत्र स्वत एव प्रयोजने ।
ततोऽन्यत्रैकवाक्यत्वं प्रतीतं परिगृह्यते ॥

68 स्तुतिनिन्दादिरूपेण विध्यपेक्षितलम्भनात् ।
नानर्थक्यं न पार्थक्यमर्थवादेषु कुत्रचित् ॥

69 प्रत्यक्षादिविरोधस्तु मुख्यार्थे यत्र दृश्यते ।
तत्रौपचारिकीं वृत्तिमनुसृत्यार्थसत्यता ॥

70 असम्भवद्विरोधे तु मुख्यार्थेऽन्यपरेष्विव ।
स्वतःप्रामाण्यमुत्सृष्टं को वाऽपवदितुं क्षमः ॥

---

यदि एतावद्विस्तरं विहाय अन्त्ययोरित्यस्य, अभागिप्रतिषेधात् अनित्यसंयोगादिति सूत्रद्वयोक्तयोराक्षेपयोर्यथोक्तमेव समाधानमिति विशिष्टार्थो वर्ण्यते, न तन्निषेधः आचार्याणामिष्टः । शाबरस्य वार्तिकस्य च अन्यथा प्रतीयमानस्यापि, अन्त्ययोरिति सूत्रद्वयोक्तपूर्वपक्षयोरित्यर्थेऽपि नेतुं शक्यत्वादित्यलम् ।

71 यत्र च स्तुतिनिन्दादौ तात्पर्यं तदपेक्षणात् ।
मुख्योऽमुख्योपि वा कश्चिदर्थः सत्यो विवक्षितः ॥
72 असता स्तुतिनिन्दे तु नादर्तव्ये परीक्षकैः ।
उपच्छन्दननीतेरप्यत्र नूनमसम्भवात् ॥
73 अतोऽर्थलोकायतिकैरसता स्तुतिकल्पना ।
अप्रमाणा विवक्षूणामहंकाराय कल्पते ॥
74 अजैमिनीयेष्वर्थेषु भाषितेषु प्रतारकैः ।
गतानुगतिकान् मन्दान् किं करिष्यामहे वयम् ॥१८॥

इति अर्थवादप्रामाण्याधिकरणम् ॥ १ ॥

## २. अथ विधि(फल ?)वन्निगदाधिकरणम् । १-२-१

2. सू-विधिर्वा स्यादपूर्वत्वात् वादमात्रं ह्यनर्थकम् ॥१-२-१९॥ पू

यदुक्तम्, "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इत्यर्थवादानां प्रामाण्याय विध्येकवाक्यत्वं स्तुत्यर्थत्वं च—तत् केषुचित् अर्थवादेषु न सम्भवतीत्याशङ्क्य परिह्रियते । इह विध्यभिव्यक्तिरहितवाक्यान्तरसंबन्धिनोऽर्थवादा उदाहरणम् । यथा—"औदुम्बरो

1-2-19. पूर्वाधिकरणे अर्थवादानामप्रामाण्यमाशंक्य प्रामाण्यं स्थापितमिति सर्वेष्टम् । अत्राधिकरणे अनन्तराधिकरणे च फलसमर्पकतया हेतुसमर्पकतया च प्रामाण्यमित्यर्थवादविशेषेष्वाशंक्य अर्थवादतयैव प्रामाण्यं स्थाप्यत इति भाट्टगतिः । शाबरमप्यत्रानुकूलं लक्ष्यते । तदिदमयुक्तम् । अस्मिन्नध्याये हि अप्रामाण्यमाशङ्क्य प्रामाण्यस्थापनमेवानुस्यूतम् । यथाकथञ्चित्प्रामाण्ये

यूपो भवति" इत्यादिवाक्यैः संबध्यमानाः, "ऊर्वा उदुम्बर ऊर्क् पशव ऊर्जं पशूनाप्नोति, ऊर्जोवरुध्यै" इत्यादयः। ते किं स्वार्थमात्रं विदधति, उत विहितमन्यत् प्ररोचयन्तीति विचार्यते। किं प्राप्तम्? स्वार्थमेव विदधतीति। कुतः? **अपूर्वत्वात्**—तदर्थस्य प्रमाणान्तराप्राप्तत्वात्। नायमनुवादः, अपितु अज्ञातज्ञापनरूपो विधिरेव स्यादित्यर्थः। ततः किं? **वादमात्रं ह्यनर्थकम्**। अक्रियार्थवस्तुस्वरूपवादमात्रं ह्यनर्थकमिति पूर्वाधिकरण एवोक्तम्।

---

सिद्ध तद्विशेषविचारस्तु अध्यायान्तरकृत्यम्। तस्मादसंगतिरिति स्वयमप्रामाण्यशंकासमाधानपरतयैव योजनामारभते। इममंशमन्ते वक्ष्यति च। फलविधित्वपूर्वपक्षमबद्धं कृत्वा प्रत्यधिकरणादिना पौनरुक्त्यमाशंक्य वार्तिके अव्यवस्थितबहुपक्षकोलाहलः कृतः, सर्वोऽयमस्थाने इति च सूचयिष्यति। अपौनरुक्त्यरक्षणायापि अप्रामाण्यपूर्वपक्षो युक्तः। सूत्रे विधिशब्दः विधिनातित्विति पूर्वसूत्रवत् विधायकवाक्यपरत्वात् तदनुकूल इति चेन्न-तथासति हि जर्तिलयवाग्वा वा जुहुयादित्यादिविधिप्रत्ययघटितार्थवादोदाहरणमेव युक्तम्। नेदं विधिप्रत्ययरहितम्। विधिशब्दश्चाज्ञातज्ञापनपरो बहुलमिष्ट इति यत्किञ्चिदेतत्। धास्यादित्यनेन च अर्थानुपपत्त्या अप्रामाण्यस्याविशिष्टत्वात् किं स्वरसप्रतीतार्थत्यागेनेति आपातगृहीते विधौ अप्रामाण्यसाधकमनुपपन्नत्वं ज्ञाप्यते। यद्यपि अनन्तरपादद्वये प्रत्यधिकरणमप्रामाण्यपूर्वपक्ष एवेति न नियमः—अथापि यथासंभवं प्रधानार्थात्याग एवोचित इति। अज्ञातार्थज्ञापकत्वे कथमप्रामाण्यमित्यत्र विवरणार्थं वादमात्रं ह्यनर्थकमिति सूत्रखण्डः। अक्रियार्थेति। औदुम्बरवाक्ये भवतीत्येव सत्त्वात्

यदिह **परैर्भाषितम्**—"इतरथा स्तुतिवादमात्रमनर्थकं स्यात्" इति—तत् तदर्थकशब्दप्रत्यभिज्ञानाननुरूपम्। स्तुतित्वे अर्थशून्यत्वोक्तिर्निष्प्रयोजनत्वोक्तिश्च न युक्ता, प्रागेवोभयप्रतिषेधात्। स्वरूपविधिविषयं चानर्थक्यं न प्रतिक्षिप्तमिति तत्प्रत्यभिज्ञानमुचितम्। यद्यपि व्याससूत्रे स्वरूपविधावप्यानर्थक्यं केषुचित् वाक्येषु परिहरिष्यते, तथापि अपवरकनिहितनिधिसत्तादिवाक्यवत् स्वतःपुरुषार्थभूतवस्तुविषयेषु वाक्येष्वेव तदिति, प्रस्तुतेष्वन्येषु चानुयोगावकाशः। ननु पश्वादिरूपोऽपि पुरुषार्थो लोकसिद्धः? सत्यम्, न पश्वादिरूपः पुरुषार्थोऽस्तीत्युपदिश्यते, तत् लोकसिद्धमेव। अलौकिकेऽपि स्वर्गादौ ब्रह्मसमाधिसम्भवेन न दोषः। पश्वादिरूपं पुरुषार्थमौदुम्बरेण प्राप्नोतीत्युक्ते तु लौकिके तदसम्भवात् वेदे तद्विध्यदर्शनात् पश्वादिकञ्च औदुम्बरेण यूपेन प्राप्नोतीति वाङ्मात्रमेव स्यात्, तथा[चा?]नर्थकमिति सम्यगनुयोगः।

सिद्धान्तिच्छायया पुनराशंक्य परिहरति-

**2. सू-लोकवदिति चेन्न पूर्वत्वात्** ॥ १-२-२० ॥ (पू-2)

यथा लोके विध्येकवाक्यत्वाभावेपि गुणकथनात् तदनुरूपविधिकल्पनेन प्रवृत्तिनिवृत्तिपर्यन्तता, शालिसम्पत्तियोग्यं सुक्षेत्रमिदं,

---

कर्तव्यायाः क्रियायाः तत्कर्तव्यतायाश्चाकथनादिति भावः। तदर्थकेति। स्वरूपवादार्थकेत्यर्थः। केवलैवाद्शब्दः लक्ष्यार्थभूतस्तुतिविषयकवादपरो न भवतीति भावः। ब्रह्मसमाधिसंभवेनेति। ब्रह्मणः पुरुषार्थभूतत्वात् तत्स्वरूपमात्रपरमपि प्रमाणमिति समन्वयाधिकरणोक्तसमाधान संभवेनेत्यर्थः।

अथ सूत्रद्वयमेकीकृत्याह लोकेति। वक्ष्यत्येतत्।

बहुक्षीरेयं गौरित्यादिषु हि तत्प्रयोजनाभिलाषिणः क्रेतव्यत्वादि-बुद्धिर्भवति, एवमौदुम्बरादाविति चेत्—तन्न, **पूर्वत्वात्**—लौकिक-स्यार्थस्य प्रमाणान्तरदृष्टपूर्वत्वात् । अन्यदीयसुक्षेत्रादिसिद्धेः क्रेतव्यत्वा-दिना नियमं समधिगम्य तत्प्रयोजनार्थिनां तत्र प्रवृत्तिरुपपन्ना । इह तु न विधिकल्पने प्रमाणमस्ति । तत्कल्पने हि वाक्यं भिद्येत, औदुम्बरो यूपः कर्तव्यः, उदुम्बरेण पशूनाप्नोतीति । न चैवं लोके । बहुक्षीर-वत्त्वादेः प्रमाणान्तरसिद्धत्वेन वाक्यस्य तद्विधिपरत्वाभावात् तत एव क्रेतव्येत्यादिविध्यनुसरणोपपत्तेः ।

ननु करणश्रुत्या साधनत्वेऽध्यवसिते किं विधिना ? प्रत्यक्षादि-गोचरेष्वप्यर्थेष्विष्टसाधनताबुद्धिमात्रेण पुरुषाः प्रवर्तन्ते । विधिना विहित(ते ?)साधनत्वं निश्चित्यैव फलार्थिनः प्रवृत्तिः । तत् यदि साक्षात् करणश्रुत्याऽध्यवसितम्, तावतैव प्रवृत्तिसम्भवे विधिरप्यपेक्ष्यत इति किमियमीश्वराज्ञा । अतो [यथा ?] वाणिज्यादिना धनं प्राप्नोतीत्युक्ते विधिमन्तरेणापि तदुपादित्सा जायते ; एवमिहापीति ॥ एतदप्यनेनैव सूत्रेणानुभाष्य परिहृतम्, "लोकवदिति चेन्न पूर्वत्वात्" इति । लौकिकवाक्यैरिष्टसाधनतया निर्दिष्टानामर्थानां प्रमाणान्तरगोचरतया ततस्तत्प्रमाणैरेव स्वप्रयत्नाधीनसिद्धिकतामधिगम्य प्रयतन्ताम् । इह तु न तथा, करणत्वे श्रुतेऽपि विधिमन्तरेण कर्तुर्व्यापारसाध्यत्वे प्रमाणा-भावात्, "ऊर्वा उदुम्बरः" इत्यादिना वसन्तेन सुखं प्राप्नोतीत्यादा-

---

सुक्षेत्रादिसिद्धेरिति । सुक्षेत्रादेः स्वार्थतया सिद्धेः—स्वयंप्राप्तेरिति यावत् ।

विव वस्तुस्वभाववर्णनमेव शब्दात् प्रतीयते, तावति चापूर्वे वस्तुनि विश्रान्ते, वाक्ये किमिति तदतिरिक्तं कल्पयेमहीति ।

यत्तु परे 'लोकवदिति चेत्' इति सूत्रं भिन्दन्तः **इति चेदिति** पूर्वोक्तानुवादेन लोकवदिति सिद्धान्तिच्छायया परिहारमाशशंकिरे—तदसत् । स्वारस्यादेकवाक्यताप्रतीतौ सूत्रभेदानौचित्यात् । अनुवादपरिहारयोर्व्युत्क्रमान्वयात् । **इतिचेदि**त्यनुवादस्य मन्दप्रयोजनत्वाच्च । न चैवं सौत्री शैली भज्येत, **शारीरके** तावत्, "छन्दोभिधानान्नेतिचेन्न तथा चेतोर्पणनिगमात् तथा हि दर्शनम्", "उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्", "न वक्तुरात्मोपदेशादिति चेत् अध्यात्मसम्बन्धभूमा ह्यस्मिन्", "जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्" इत्यादिषु बहुषु प्रदेशेषु इति चेदित्यन्तं नेत्यादिनोत्तरेणैकसूत्रतया व्याख्यायि । नचान्यादृशी जैमिनीयसूत्रशैलीति शास्त्रमस्ति । उपरि[ष्टा?]च्चैवंविधेषु उचितं व्याख्यास्यामः ।

2. सू. **वेदे व्यक्तमसंवादः** ॥ १-२-२१ ॥ (पू-३)

न केवलं वादमात्रस्यानर्थक्यमेव, संवादोऽपि न दृश्यते । असंवादो न संवादः,-विसंवाद इत्यर्थः । "ऊर्वा उदुम्बर ऊर्क्

---

'वेदेव्यक्तमसंवादः' इत्येतत् सूत्रत्वेन न निर्दिष्टं मुद्रिते शाबरे वार्तिके च । तत् न स्वरसम् । 'ननूक्तमसंवादो वेदे' इति उपरितनशाबरश्च सूत्रत्वगमकम् । अतः सूत्रत्वेनैव निर्दिश्य व्याख्याति वेद-इत्यादिना । ननु वेदे इति पदं किमर्थमिति चेत्—पूर्वं लोकवदिति लोकसाम्यस्य पृष्टत्वात् . तत्रासंवाद उच्यत इति भ्रमनिवारणार्थम् ।

पशवः" इत्यादयो हि प्रत्यक्षेण विसंवदन्ते । अतः स्वार्थेऽपि न प्रामाण्यम् । कल्प्यमानविधेर्मृषावादमूलत्वात् प्रतारकवाक्यस्येव प्रामाण्यं दुर्वचम् । तस्मात् प्रागुक्तनिष्प्रयोजनमृषावादरूपत्वमेतेषु विध्येकवाक्यत्वादियुक्त्यनपोदितमित्यप्रामाण्यमेवेति ।

2. सू. उक्तं तु वाक्यशेषत्वम् ॥ १-२-२२ ॥ (सि-१)

उक्तमस्माभिः, "विधिना त्वेकवाक्यत्वात्" इत्यर्थवादानां विधिवाक्यशेषत्वम् ; इह तु विधिसन्निधिमात्रं प्रदर्शनीयम् । तत्र तावत्, "औदुम्बरो यूपो भवति" इत्यस्य वाक्यस्य शेषतया, "ऊर्ग्वा उदुम्बर" इत्यादिकं प्रतीयत एव । अन्यथा कस्यायं फलविधिरिति शंक्येत । सौत्रान्तिकादेशवत् इत्थं फलं भविष्यतीत्याह औदुम्बरेण पश्वादिकमिति । नचाविहितः कश्चिदौदुम्बरो यूपो भवति प्रशस्तः । यूपस्य क्रतुसम्बन्धाव्यभिचारात्, औदुम्बरतायाश्च तद्विशेषणत्वात् [रागप्राप्तत्वायोगात्?] । नचायं प्रकृतानुवादः, अनुपदेशात् । अतोऽवगच्छामो वैकृते प्रकृतिवत् प्राप्तस्यौदुम्बरताविधिरिति । अतो यद्यप्यत्र विधिप्रत्ययो न श्रूयते, तथापि विधिरेव ; अपूर्वत्वात्, अन्यथानुपपत्तेश्च । लिङर्थे लेडिति पंचमो वा लकारो विध्यर्थः । एवं विधिसन्निधौ प्रागुक्तनयेन स्तुत्यादिमुखेनैकवाक्यत्वं सुगमम् । फलवत्ता तावत् शाब्दी, ततः प्रशस्तिः सिध्येत् । यथालोकमर्थवत्त्वात् लक्षणा न दोष इति चोक्तम् । यदपि च 'वेदे व्यक्तमसंवादः' इत्युक्तम्, तदपि गुणवादेन सामान्यतः प्रागेव

---

1-2-22. औदुम्बरताविधिरिति । उदुम्बरेण यूपं भावयेदिति तद्वाक्यार्थ इति भावः । आलम्बनमात्रम्—ऊर्क्छब्दप्रयोग-

परिहृतम् । आलम्बनमात्रं तु प्रदर्शनीयम् । ऊर्क्सादृश्यादूर्ग्वा उदुम्बर इति दृश्यते । यथा तस्य प्रीतिसाधनत्वं, एवमौदुम्बरताया यूपद्वारकानुप्रवेशेन प्रीतिसाधवत्वम् । प्रीतिसाधनान्तरेष्व[पि?]सत्सु अन्नत्वेनोपचारोऽयं फल[ानु]रूपेण पचेलिमैरंशैरुदुम्बरस्यान्नताध्यवसानार्थत्वात् । ऊर्क्पशव इत्यपि परिणामविशेषादेवोपपद्यते । अन्नविकारभूता एव हि प्राणिनः श्रूयन्ते । एवमौदुम्बरादिविधिशेषतया फलादिवन्निगदानामर्थवादानां स्तुत्यादिमुखेनोपयोगात्प्रामाण्यमिति ।

**सू-विधिश्चानर्थकः क्वचित् तस्मात् स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् ॥ १-२-२३ ॥ (सि·२)**

अपिच, "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इत्यत्र अर्थवादेषु स्वार्थको विधि(स्वार्थविधि?)रनर्थक इति, तत एव हेतोः स्तुतिः प्रतीयेतेति साधितं पुरस्तात् । एतदुक्तं भवति–केषुचित् अर्थवादेषु स्तुतिपरतयाऽर्थपरत्वेन प्रामाण्येऽभ्युपगते तदितरेष्वपि स्वार्थविधिमात्रेणासम्भवत्प्रयोजनेषु तथैव प्रामाण्यमनुवर्तितुं शक्यम् ।

---

नियामकमात्रम् । अंशैः—उदुम्बरांशैः । तथाच शाबरम् 'पक्वफलसंबन्धादूर्क्' इति । फलादिवन्निगदानामित्यनेन विधिवन्निगदेति अधिकरणनामकल्पनमर्वाचीनमिति सूचितम् ।

1-2-23. उक्तंत्विति सूत्रस्य अत्राप्युदाहरणे विधिवाक्यसद्भावप्रदर्शने नैर्भर्यम् । विधिश्चेति सूत्रेणोच्यमानं तावत्—यदत्रोदाहरणे उक्तं स्वार्थस्वरूपविषयकाज्ञातज्ञापनमर्थरहितमिति, तत् पूर्वाधिकरणविषयेष्वपि बहुष्वर्थवादेष्वस्तीति असंभवदर्थकत्वसाम्यात् तद्वदेवात्रापि स्तुतिपरत्वमिति ।

ततश्च प्ररोचनीयस्य यस्य कस्यचित् परामर्शे क्वचित् प्राकरणिकस्यापि कस्यचित् तथात्वं सिद्धमिति ।

यदिह **परैरभाषि**—"अप्सुयोनिर्वा अश्वः, अप्सुजो वेतसः" इत्यादिषु अप्सुयोनिरश्वः कर्तव्यः, अप्सुजो वेतसः कर्तव्य इत्यादिविधेरशक्यत्वात् स्वभावसिद्धत्वाद्वा विध्यानर्थक्यम्, तत्रावश्यं स्तुतिः कल्पयितव्या, तत्सामान्यादितरेषु तथात्वम् । किं तत्सामान्यम् ? विध्यसम्भवः स्तुतिसम्भवश्च" इति । तदिदं प्रकृतासंगतम् । तथा हि—यदि फलविधिर्न वेति विचारः प्रकृतः, तदा अध्याहारादिकल्पितकर्तव्यताविध्यानर्थक्यदर्शनेन स्तुतित्वकल्पनमयुक्तम् । अथ प्रकृतेऽपि कल्पनीयकर्तव्य[ता?]विषयो विचारः, तदा, "विधिश्चानर्थकः क्वचित् तथा तत्सामान्यादितरेषु" इति वचनमयुक्तम्, [अ?]विशिष्टत्वात्, फलविधिविचारविषयस्ववाक्यविरोधाच्च । तत एव विरोधात्

---

अथ शाबराद्युक्तमर्थं विमृशति यदिहेति । अर्थवादेषु द्रव्यगुणक्रियाविध्यानर्थक्यात् स्तुतिपरत्वं प्रागुक्तम्, वेतसादीनां स्वयमुत्पन्नत्वात्; अश्वादीनामद्भ्य उत्पादयितुमशक्यत्वाच्च । तद्वदत्रापि विध्यसंभवात् स्तुतिसंभवाच्च स्तुतिपरत्वमिति तदुक्तोऽर्थः । तन्निरासस्तु - कर्तव्यताविषयकविध्यसंभवस्य फलविध्यसंभवस्य च विभिन्नत्वात् तत्सामान्यमत्र कथम् । अत्रापि कर्तव्यताविध्यानर्थक्यमेवेति चेत्—फलविधिविचारपरवाक्यविरोध इत्येवम् । तथातत्सामान्यादित्यत्र तथापदं तथात्वमिति सौत्रपदस्थाने प्रयुक्तम् । शाबरे त्वप्रत्ययत्यागोक्तेः । ननु अप्सुयोनिरित्युदाहरणमात्रम् । सर्वार्थवादविवक्षैव, गुणो वा फलं वाऽन्यद्वा किमप्यस्तु - विधानासंभवरूपसाम्यविवक्षा युज्यत एवेति चेत्—

औदुम्बरो यूपो भवतीत्यादावविधित्वात् अर्थवादत्वविचारः प्रकृत इति प्रत्युक्तम् । विध्यसम्भवः स्तुतिसम्भवश्चेत्युक्तमप्यत्र विपरीतम् । तस्मादसदुक्तैव योजनेति । (23)

ननु दर्शपूर्णमासप्रकरणे श्रूयते "यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यःशृतः स दैवः तस्मादविदहता श्रपयितव्यः सदैवत्वाय" इति । तत्र यो विदग्धः स नैर्ऋत इत्येतत् अविदहता[1] श्रपयितव्य इत्यनेन नान्वेति । अतो विदग्धविधानं प्राकरणिकविधावन्यत्र चान्वयमलभमानं निरर्थकमेवेति, कथं तत्र प्रामाण्यम् । तत्राह-

**२. सू-प्रकरणे[च] सम्भवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥ १-२-२४ ॥**

"अविदहता श्रपयितव्यः" इत्येतत्प्रकरणे व्यतिरेकनिन्दामुखेन अविदग्धश्रपणस्तुतिपर्यवसायितया सम्भवन् विदग्धादिः तत्प्रकरणादपकर्षो न कल्प्येत । अपकृष्यत इत्यपकर्षः । **विध्यानर्थक्यं हि तं प्रति**-विदग्धादिकं प्रति नैर्ऋतादिविध्यानर्थक्यं स्यात् । न ह्यत्र प्रकरणे विदग्धोद्देशेन नैर्ऋतादिविधिः सम्भवति, उत्पत्तिगुणावरुद्धनयात् । न चान्यत्रोत्कर्षः, प्रकृतोपयोगसम्भवादेव प्रकरण-

---

उपरि, विधौ च वाक्यभेदः स्यादिति सूत्रेण तदंशकथनात् अत्र स्वरूपमात्राज्ञातज्ञापनांशानर्थक्यमादाय साम्यकथनं युक्तमित्याशयः।

24. प्रकरणे संभवन्निति हेतुगर्भम्—प्रकरणेऽन्वयसंभवात् नापकृष्येतेति । अपकर्षो नकल्प्येत—अपकृष्टतया न कल्प्येत ; नापकृष्येतेति यावत् । ननु प्रकरणसंबन्धमनपहायैव कश्चिद् विधिरस्तु इत्यत्राह विध्यानर्थक्यमिति । अभ्युदितेष्टिवत् नैमित्तिकविधि-

बाधायोगात् । न चात्र नैर्ऋतोद्देशेन विदग्धत्वविधिः, अप्रकृतत्वात्, प्रकृतानुपयोगाच्च । अतः **तम्** अप्रकृष्टं (अप्रकृतं?) प्रति विध्यानर्थक्यमिति वा योजना । यद्वा प्रकरणे स्तुत्यादिपरतया सम्भवद्वृत्त्यन्तरमर्थं प्रति अभ्युदितेष्ट्यादिवत् नैमित्तिकविधेरानर्थक्यम् तत्राह (तदाह?) **विध्यानर्थक्यमिति** आनर्थक्यपरिहारायैव प्रकरणोपयुक्तस्तुत्यादिपर्यवसायित्वमेष्टव्यमिति । यद्यप्येतदुदाहरणं पूर्वस्मिन्नधिकरणे चिन्तयितुं युक्तम्—तथापि विरुद्धविषयतया विध्येकवाक्यत्वासम्भवाशंकास्पष्टत्वेन प्रकृतसारूप्यादत्र विचारितमिति । (24)

**४.सू ॥-विधौ च वाक्यभेदस्स्यात् ॥ १-२-२५ ॥ (सि-४)**

अपिचात्र स्वरूपविधावभ्युपगम्यमाने 'औदुम्बरो यूपो भवति'

---

शंकापरिहारोऽपि सूत्रखण्डार्थं इत्याह यद्वेति । पूर्वं तंप्रति इत्यस्य विदग्धादिपदार्थं प्रतीत्यर्थः । इदानीं तस्य विधिकल्पनानिरपेक्षं विशिष्टवाक्यार्थं प्रतीत्यर्थः । सूत्रे प्रकरणे चेति चकार इहाधिको दृश्यते, न तेषां ग्रन्थेषु । पूर्वसूत्रे क्वचिदिति एकं निर्दिश्य इतरेष्विति तादृशवाक्यान्तराणां गृहीतत्वात् तत्रैकदेशेऽयं विचार इति चकारेण ज्ञाप्येतेति सप्रयोजनश्चकारः ।

25. नन्वस्य सूत्रस्य पूर्वसूत्रोपात्त विदग्धवाक्यविषयत्वमेव नवीनभाट्टमस्त्विति चेन्न—तथासति औदुम्बराधिकरणान्तर्भावं विना सूत्रद्वयं पृथगधिकरणं स्यात् । उपक्रान्तोपसंहारे तु पूर्वसूत्रस्यात्रान्तर्भावः सुवचः । संभवति प्रकृतविषयकत्वेनैव सूत्रनिर्वाहे वाक्यान्तरग्रहणमनुचितञ्च । न चैवं पूर्वं सूत्रमपि प्रकृतविषयमस्त्विति शंक्यम् ; उक्तसिद्धान्तोपमर्दिनः अप्रामाण्यपूर्वपक्षस्यापकर्षकल्पनामूलेस्यात्र दुर्वचत्वात् । अतः सूत्रमिदं यथाशाबरभाष्यं प्रकृतविषयकमेवात्रापि व्याख्यातम् ।

इत्याकार(?)क्रमेण प्रतीयमानमेकवाक्यत्वं भज्येत। न च कथंचित् संम्भवन्त्यामेकवाक्यतायां तद्भेदो युक्तः। न च परस्परानुपयुक्ततयैकवाक्यता[नुपपत्तिः ?]। समर्थितश्चौदुम्बरविधिः। अतो विध्येकवाक्यतायाः(यां ?) स्तुत्यादिपरत्वेन प्रामाण्यं प्रागुक्तमप्रतिहतम्।

ननु—"खादिरं वीर्यकामस्य यूपं कुर्यात्" इत्यादिष्विव गुणफलसम्बन्धविधिः स्यात्; अत एव च न वाक्यभेददोषः; न चैवं कामशब्देन फलमुपादेयमित्यस्ति नियमः, तदभावेऽपि रात्रिसत्रादिष्वार्थवादिकफलस्वीकारात्। तत्र तु, "य एता रात्रीरुपयन्ति ते प्रतितिष्ठन्ति" इति न साक्षात् फलसाधनयोस्सम्बन्धः श्रुतः; इह पुनः करणश्रुत्यैव प्रकृतस्यौदुम्बरस्य फलेन सम्बन्धः साक्षात्प्रतीयत इति विशेषः; एवमपि च प्रामाण्ये सुवचे

---

एतदधिकरणकर्तव्यमप्रामाण्यशंकापरिहरणं कृतम्। अथार्थवादत्वं विनैव विधिवाक्यत्वेनैव प्रामाण्यं कुतो नेष्यत इति स्वतन्त्रमाशंक्य परिहरति नन्वित्यादिना। वैकृतत्वादेवेति। किम् औदुम्बरो यूप इत्यत्र सामानाधिकरण्यादरुणाधिकरणन्यायेन अस्मत्पक्षे विशिष्टार्थसंभवात् औदुम्बरयूप एव ऊर्जोवरुद्धयै इत्युक्तफलाय विधीयताम्, विकृतेराश्रयत्वमिति, उत यूपाश्रितमौदुम्बरत्वं फलायेति। उभयमपि न; यूपस्य विकृत्यर्थं प्राप्तत्वेन निराकांक्षत्वात्। नान्त्यः; यूपो भवतीत्यस्य यूपं भावयेदिति विधिविपरिणामे यूपस्योद्देश्यत्वेनान्वयेनैव उदुम्बरस्य विधेयस्य निराकांक्षतया पशुफलकत्वायोगात्। कथमसता स्तुतिरिति चेत्—विकृतियागस्यास्य सोमापौष्णं त्रैतमालभेत पशुकाम इति वाक्यविहिततया पशुफलकत्वात् अङ्गिफलस्याङ्गाधीनत्वसत्त्वादसत्त्वायोगात्।

किमशाब्दस्तुत्याश्रयणेनेति चेत्—सत्यम् । तथापि वैकृतत्वादेव विशेषफलाकांक्षारहिते तस्य फलसम्बन्धविध्यनुपपत्तिः । स्तुतिस्तु तत्रापि युक्तेति तन्मुखेन प्रामाण्यं प्रति अविवादमेव ।

(भाट्टरचनाप्रतिक्षेपः)

यत्त्वत्र **कौमारिलैः**, विधित्वेन पूर्वपक्षमुपक्षिप्य कृत्स्नोऽर्थवाद इत्युक्तम्, तत् प्रामाण्याक्षेपसमाधानयोरनुपयुक्तमिति व्यर्थायासमात्रत्वादसंगतम् । प्रथमपादमात्रपर्यवसायिनी प्रामाण्यचिन्तेत्यभ्युपगमेऽपि निरर्थकोऽयं विचारः, विधिपरत्वेऽपि प्रामाण्यानुच्छेदेन विरोधाभावात् । सिद्धान्तेऽप्यर्थवादोन्नेयविधिस्वीकारात् । फलविधिपूर्वपक्षेऽपि औदुम्बरो यूपो भवतीति विधेरवश्याभ्युपगन्तव्यत्वस्थापनात् । अंगेषु फलश्रुतेरर्थवादत्वस्यान्यत्र व्यवसितत्वेन रात्रिसत्रनयप्रसंगप्रतिषेधयोरसम्भवाच्चेति ।

(प्राभाकररचनाप्रतिक्षेपः)

यच्च **प्रभाकर**प्रमुखैः प्रामाण्यमध्यायार्थं प्रतिसन्दधानैरपि, औदुम्बरेण यूपः कर्तव्यः, उदुम्बरेण पशूनाप्नोतीति साध्यद्वयभानात् एकवाक्यत्वप्रतीतेश्च परस्परविरोधात् अन्यतरपरित्यागकारणाभावाच्चानध्यवसायादप्रामाण्यमिति पूर्वपक्षितम्—तदतिमन्दम् ; उक्तन्यायेन विपरीताध्यवसायसम्भवे तेनैव पूर्वपक्षीकरणस्योचिततरत्वात् । अतोऽस्मदुक्त एव पन्थाः । तत्र पर्णमय्यधिकरणादिषु पौनरुक्त्यशंकाया एवाभावात् परेषामिव न विषयव्यवस्थादिपरिक्लेशः । शारीरकेऽपि

लिंगभूयस्त्वाधिकरणादिषु विचारेष्वेतदुपयोक्ष्यत इति ॥ २५ ॥

75 अर्थवादविशेषेषु प्रामाण्यप्रतिपादनात् ।
अस्मदुक्तनये स्पष्टा सा पादाध्यायसंगतिः ॥

76 प्रकृतापेक्षितश्चात्र पूर्वपक्षसमुद्भवः ।
प्रकृतस्थापनेनैव प्रसिद्ध इति संग्रहः ॥

इति विधि(फल?)वन्निगदाधिकरणम् ॥ २ ॥

अथ हेतुवन्निगदाधिकरणम् ॥ ३ ॥

3. सू-हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ १-२-२६ ॥ (पू-१)

पुनरप्यर्थवादविशेषेष्वप्रामाण्यशंका परिह्रियते । तत्र पूर्वपक्षी मन्यते—भवतु सर्वत्रार्थवादानां विध्येकवाक्यता, तथापि केषुचिदर्थवादेषु प्रामाण्यं दुष्प्रतिपादम् । तथाहि—ये पुनरेते हेतुवन्निगदाः, "शूर्पेण जुहोति" इत्यादौ, "तेन ह्यन्नं क्रियते" इत्यादयः, किं ते प्रतिज्ञातस्य कर्तव्यस्य हेतुमभिदधति ; उत प्रशंसामिति विचारणीयम् । न तावत् प्रशंसन्ति, अशाब्दत्वात् प्रशंसायाः । हिशब्दादिश्रुत्यैव हेतुत्वस्य स्पष्टाभिधानात् । श्रुतहानाश्रुतकल्पनयोश्चान्याय्यत्वात् ।

---

लिंगभूयस्त्वेति । सहस्रशीर्षानुवाकस्य औदुम्बराधिकरणन्यायेन न दहरविद्यार्थवादत्वम् ; सहस्रशीर्षत्वादिविशिष्टतायाः दहरविद्यायामप्राप्ततया तत्तद्धर्मविशिष्टोद्देशेन नारायणत्वविधानस्य स्तुतिरूपत्वायोगात्, विभिन्नधर्मैरुद्देश्यनिर्देशस्य चायोगादित्येवं भाव्यम् । 25.

26. हिशब्दार्थवत्त्वादिति । शूर्पेणेति तृतीययैव विनियोगे कृते हेतुरनपेक्षित इति चेन्न ; दर्व्यादेरपि होमकरणतासंपादक-

तदेतदुच्यते हेतुर्वेति । ईदृशानामर्थवादानां हेतुरभिधेयस्स्यात् । कुतः? **अर्थवत्त्वोपपत्तिभ्याम्** । हिशब्दार्थवत्त्वात् । अन्यथा श्रुतहानमित्यर्थः ।

अथ—एवं हेतुपरत्वे परार्थानुमानप्रयोगवत् नागमतया प्रामाण्यम् । नाप्यनुमानतया, तस्य व्याप्तिपरामर्शसापेक्षत्वात्, 'यदन्नकरणं तत् होमसाधनम्' इति व्याप्तेश्चासिद्धेः । दर्वीपिठरादिषु होमसाधनत्वमसिद्धम्, प्रत्यक्षादेस्तत्र व्यापाराभावात् ; शास्त्रेणापि इतः पूर्वमसिद्धत्वात् । अथ हेतुनिर्देशमुखेन व्याप्तावेव तात्पर्यमुच्येत, तथाऽप्यश्रुतकल्पनागौरवम् । वाक्यभेदश्च, "तेन ह्यन्नं क्रियते" इत्येकस्यैव, यदन्नकरणं तत् होमसाधनम्, अन्नकरणत्वाच्छूर्पो होमसाधनमित्यर्थद्वयविधानाशक्तेः ।

अथोच्येत—यद्यदन्नकरणं तेन तेन होतव्यमित्येव विधिः कल्प्यते, "शूर्पेण जुहोति" इति तद्विशेषविषयोऽनुवाद इति—तदपि न; उक्तोत्तरत्वात्, करणविभक्तिश्रुत्यैव होममवरुन्धानस्य शूर्पस्य कल्पनासिद्धैर्दर्वीपिठरादिभिः कथं बाधो विकल्पः समुच्चयो वा कल्प्येत । श्रौतेनैव करणेन निराकांक्षो होमः कल्पनीयं करणान्तरं नापेक्षते । अपेक्षित एव च करणान्तरे (णान्वये?) श्रुतौ श्रूयमाणं करणमुपधावन् होमः करणान्तरकल्पनं प्रतिबध्नीयात् । कल्पकश्च हेत्वपदेशार्थवादः स्तुतिपरत्वेनान्यथाप्युपपन्नः । शूर्पस्य तु करणता

---

तया तत्सार्थक्यसंभवात् हेतुत्वान्वयोपपत्तेरित्युपपत्तिशब्दार्थोऽपि ग्राह्यः । दर्व्यादीनामन्नकरणत्वोपपत्तिर्वक्ष्यमाणा वा उपपत्तिशब्दार्थः । स्तुतिपरत्वेनेति । एवं तर्हि सिद्धान्तार्थस्यास्य पूर्व-

विध्युद्देशान्तर्गततया स्फुटतरश्रुत्यैव प्रतिपन्ना ।

विशिष्टानुष्ठानेनैव हि शास्त्रार्थव्यवस्था, न च दर्वीपिठरादिभिः जुह्वतोऽनुष्ठातॄन् पश्यामः । अथ दर्वीपिठरादीनां होम(अन्न ?)करणत्वं नास्तीत्यव्यभिचारं मन्यसे, कथं तर्हि शूर्पस्य तत्करणत्वं मंस्यसे । परम्परयेति चेत्, तुल्यम् । दर्व्यादेश्च तत्करणत्वाभावे कुत्र व्याप्तिं ग्रहीष्यसि । न क्वचिदिति चेत्, कथं हेतुः । न चात्रापि त[दु?]न्नीतिरपि सम्भवतीत्यप्रामाण्यमेवाविशिष्टमिति ॥ २६ ॥

---

पक्षेणैव गृहीतत्वात् कथं पूर्वपक्षोत्थानमिति चेत्-एतदाशंकापरिहारः, 'न चात्रापि तन्नीतिरपि संभवति' इति वाक्येन करिष्यते । शूर्पातिरिक्तेन होमस्यैतावत्पर्यन्तं कैरप्यननुष्ठानादपि न स शास्त्रार्थ इति ज्ञायत इत्याह विशिष्टेति । वैकल्पिकत्वेऽपि पूर्वाचारप्राप्तशूर्पत्यागेन परग्रहणं कोऽपि न करिष्यतीति हेतुत्वसंपाद्यं फलं नास्तीति भावः । एवं निरूपणव्याजेन हेतुत्वप्रतिपादकवाक्यं व्यर्थं सदप्रमाणमित्यपि सूचितम् । मुख्यविवक्षितार्थस्तु अन्नकरणत्वव्यापकत्वं होमकरणत्वस्य न भविष्यति अननुष्ठानादिति व्याप्तिभंग एव । अथ हेतोरेव दर्व्यादावभावान्न व्यभिचार इति शंकते अथेति । होमकरणत्वमित्यत्र अन्नकरणत्वमिति पाठो ग्राह्यः; अन्यथाऽनन्वयात् । शाबरभाष्यानुरोधाच्च । पक्षातिरिक्तस्थल एव व्याप्तेर्ग्राह्यतया शूर्पातिरिक्तस्य कस्यचिदन्नकरणत्वे सत्येव हेतुत्वोक्तिप्रयासः सफलः स्यादिति भावः । हेतुत्वग्राहकत्ववत् व्याप्तिग्राहकत्वमपि वाक्यस्यैवास्त्वित्यत्र, हेतुत्वायोगे स्तुतिपरत्वेनैव सार्थक्यमस्त्वित्यत्र च एकेनैव वाक्येन समाधानमाह न चात्रापीति । दर्व्यादेरन्नकरणत्वाभावस्य प्रत्यक्षसिद्धत्वे दर्व्यादिना कदापि होमाननुष्ठाने च व्याप्तिग्राहकवाक्यं बाधितार्थकं स्यादित्यप्रामाण्यमेव । अन्नकरणत्वमुखेन

तत्र प्रतिविधत्ते—

**३. सू. स्तुतिस्तु शब्दपूर्वत्वादचोदना[च]तस्य ॥**
**१-२-२७ (सि-१)**

"तेन ह्यन्नं क्रियते" इत्यादिना स्तुतिः क्रियते। कुतः? शूर्पादीनां होमकरणत्वादेः शब्दपूर्वत्वात्। श्रेयस्साधन[त्व?]स्य शब्दैकवेद्यतया हेतुसाध्यत्वाभावादित्यर्थः। अतोऽनाकांक्षितस्य तस्य हेतोः अचोदना ॥ २७ ॥

**सू. व्यर्थे स्तुतिरन्याय्येति चेदर्थस्तु विधिशेषत्वात् यथा लोके ॥**
**॥ १-२-२८ ॥ (सि-२)**

"तेन ह्यन्नं क्रियत" इत्यादौ, व्यर्थे-अर्थरहिते वाक्ये, स्तुतिरन्याय्या; असता स्तुतेरयुक्तत्वस्थापनात्। होमसाधनदशायां क्रियत इति वर्तमानतया निर्दिष्टस्यान्नकरणत्वस्यासत्त्वादिति चेत्—

---

होमकरणत्वस्तुत्यप्रतीत्यापि तत्परत्वायोगात् बाधितहेतुत्वपरत्वमेवेति अप्रामाण्यमेवेति भावः।

27. शूर्पे होमकरणत्वस्य विधिबलादेव ज्ञाततया हेतुनिरपेक्षत्वात् हेतुत्वस्य विध्यसंभवश्च। तद्विधानं हि किं होमकरणत्वान्नकरणत्वयोर्व्याप्त्यभिज्ञं प्रति, अनभिज्ञं प्रति वा। आद्ये, पूर्वमेव दर्व्यादिष्वपि होमकरणत्वं ज्ञातमिति हेतुत्वं न विधेयम्। अन्त्ये, व्याप्त्यनभिज्ञत्वादेव होमकरणतां प्रति अन्नकरणतागतहेतुत्वे विवदमानः शूर्पकरणकहोमप्रवृत्त्यौचित्यस्थापकतया संप्रतिपन्नशूर्पप्राशस्त्यगतहेतुत्वपरतामेव मन्वीतेति सूत्रतात्पर्यार्थः।

28. शूर्पस्य अन्नकरणताया वर्तमानत्वमप्यसदिति कथं तदादाय स्तुतिरिति शंकित्वा परिहरति व्यर्थ इति। परशब्दार्थेति।

नैवं व्यर्थत्वम्। अर्थस्तु स्यादेव। कुतः? **विधिशेषत्वात् यथा लोके।** न ह्यसौ विधिः, अपितु तच्छेषः, तेन परशब्दार्थस्वीकारो युक्तः। हेतुविधौ त्वयं दोषः, विधेस्त्वत्यन्ताप्रतिपन्नविषयतया यथाश्रुतात् मात्रयाऽप्यन्यथाकरणाभावात्; अन्नकरणदशायां च होमकरणतासम्भवात्। विध्यर्थे चास्मिन्ननुवादे परिशेषात् यथाप्रसिद्धि अन्नकरणत्वं शब्देनैवानुज्ञातमिति न व्यवहितकरणत्वादिचोद्यावकाशः। पाकनिष्ठं च साधकतमत्वं शूर्पे उपचर्यते। विवक्षातः कारकाणि भवन्ति। 'तेन ह्यन्नं क्रियते' इति नेतरव्यवच्छेदार्थम्; अपितु प्रकृष्टकरणत्वविवक्षया। प्रकर्षश्चापेक्षातो निकृष्टापेक्षया मन्तव्यः। इदमपि न(ना?)लौकिकम्; यथा, वाणिज्येन वर्तेत, तेन च धनवान् भवतीति। अत्र च भूतं भविष्यद्वा अन्नकरणत्वं स्तुत्यर्थं वर्तमानतया व्यपदिश्यते। अवर्तमानादपि वर्तमानस्येष्टप्रीत्यतिशयहेतुत्वात्। शक्तेर्वा वर्तमानत्वं व्यापारे निवेश्य निर्दिष्टम्। तदवस्थायां तस्यां हि पुरुषाणां प्रीतिरतिशयिनी, न पुनः स्वरूपसत्याम्। "वर्तमानसामीप्ये वर्तमानवद्वा" इत्यनुशासनं वाऽनुसर्तव्यमिति॥ इह परैः इति चेदिति सूत्रं भिन्दानैः "इति पुनर्यदुक्तं तत् परिहर्तव्यम्"

---

वाच्यार्थातिरिक्तस्य लाक्षणिकस्य शब्दार्थस्येत्यर्थः। वाच्यार्थादिव लक्ष्यार्थादपि अलौकिकमदृष्टं भवतीत्यत्र गमकाभावात् विधौ न लक्षणा। अत एवोच्यते; "न विधौ परः शब्दार्थः" इति। पाकनिष्ठमिति। पाकेन ह्यन्नं क्रियते। साक्षात् तन्निष्ठमेव साधकतमत्वं व्यवहितकारणेष्वारोप्यते॥ शक्तेर्व्यापारे निवेश्य निर्देशः किमर्थमित्यत्राह तदवस्थायामिति। शाबरादौ सूत्रभेदनमयुक्तमित्याह इह परैरिति।

इत्यार्थ(त्याक्षेप?)भाषान्तं सूत्रमिह भाषितम् । तदयुक्तम्, एकवाक्यताप्रतीतिभङ्गात् । अध्याहारादेश्च नि(र्निर्नि ?) मित्तत्वात् । उत्तरयोरपि सूत्रयोः परस्परनिरपेक्षशंकोत्तरक्रमेण प्रस्पष्टविभागयोरेकतयोपादानमकारणकमनुसन्धेयम् ॥ २८ ॥

एवं हेतुपरत्वं दूषितम् । अथान्वारुह्य वदति—

**३. सू. यदि च हेतुः, अवतिष्ठेत निर्देशात् ॥१-२-२९॥ (सि-३)**

"तेन ह्यन्नं क्रियते" इत्यसौ यद्यपि हेतुः, तथापि निर्देशादवतिष्ठेत। एतदुक्तं भवति—हिशब्दादेर्हेतुरेवार्थ इति नायं नियमः, नानार्थत्वप्रसिद्धेः । अतः प्रामाण्यानुगुण एवार्थः स्वीकार्यः । प्रसिद्धिप्रकर्षमात्रात्तु यद्यपि हेतुरंगीक्रियेत, तथापि शूर्पगतमेवान्नकरणत्वं हेतुरवतिष्ठेत, 'तेन ह्यन्नं क्रियते' इत्येवं निर्दिश्यमानत्वात् । शब्द-

---

29. तेनेति । तेनेति निर्दिश्यमानत्वेऽन्यग्रहणं कथं वार्येत, न हि, रक्ष्यतां दधि काकेभ्यः ते हि दध्युपघातकाः इति तच्छब्दनिर्देशादन्येभ्यो दध्यरक्षणमित्यत्राह शब्दप्रमाणके चेति । काकेभ्य इति वाक्ये रक्षणमात्रं विधेयम् । काका न विधेयकोटिप्रविष्टाः । अतः तैर्हि दध्युपहन्यत इति वाक्याभावेऽपि सर्वतो रक्षणं सिद्धम् । न चात्र शूर्पस्य करणत्वं तदविधानेऽपि ज्ञातम् । अतो विधेयानुप्रविष्टः शूर्पपदवाच्यार्थ एव ; अन्यस्य होमसाधनत्वे मानाभावात् शूर्पमात्रनिष्ठं हेतुत्वमेवात्र तेनेति वक्तव्यम् । सहिकर्तेनि स्वनवाक्यमिवेदं तच्छब्दार्थमात्रगतासाधारणांशोपपादकम् । तच्च हेतुत्वं ज्ञापकत्वरूपं चेन्न भवति; व्याप्त्यादेर्दुर्निरूपत्वात्, कारकहेतुर्भवतु । तत्र दृष्टान्त उक्तः शाबरे, 'यस्मात् बलेवदुपध्मातोऽग्निः, तेन मे गृहं

प्रमाणके चार्थे यथाशब्दं व्यवस्थानात् । क्लृप्तकल्प्यविरोधे च क्लृप्त-स्वीकारस्यैव युक्तत्वात् । न चात्र व्याप्त्यादिपरामर्शापेक्षा, ज्ञापकहेतोर-विवक्षितत्वात् । कारकेपि[अ ?] विरोधात् । बीजादंकुरं जन्यते तद्धि क्षिति जलादिसापेक्षमिति व्यवस्थितमितिवत् । न च तावता शिलाशकलादि-ष्वपि प्रसंगः, तेष्वदर्शनाद्वा प्रकृतेपि क्षितिजलादेः कारणत्वं निवर्तते ; एवमिहापि करणभूतस्य शूर्पस्यान्नकरणसामर्थ्यमविशेषकं भवति । न हि शूर्पस्य विशेषणमश्रुतानां तद्विशेषणयोगिनां संग्रहार्थं, अपितु शूर्पस्य तद्विशेषणयोगा(णायोग)व्यवच्छेदार्थम् । तथाभूते च करणे तद्वि-शेषणरहितशूर्पान्तरं व्यवच्छिद्यते । न च विशिष्टस्य करणत्वे विधीयमाने विशेषणहेतुत्वग्रहाय प्रमाणान्तरमन्वेषणीयम्, अरुणैकहायन्यादिवत् ।

---

दग्धमिति, नानग्निरपि बलवदुपध्मातो दहतीति गम्यत' इति । एवञ्च दाहं प्रति अग्निविशेषणतयोपध्मातत्वस्यान्वयवत् होमकरणशूर्प-विशेषणतयाऽन्नकरणत्वान्वय इति तस्य होमकरणतावच्छेदकतया कारकहेतुत्वम् । तेनान्नासाधकशूर्पव्यावृत्तिरिति । ननु होमकालेऽन्न-करणाभावेन वर्तमानकालानन्वयात् अक्रियतेति लक्षणैव स्वीकार्या । तेनासमर्थशूर्पाव्यावृत्तिरित्यत्राह बीजादिति । यदि सर्वकारणान्तर-समवधानं वर्तमानकाले स्यात्, कार्यं कुर्यादिति वक्तुमर्हता वर्तमान-कालवचनेन विवक्षितेति असमर्थव्यावृत्तिर्भवेदेवेति भावः । फलो-पधायकतारूपजनकत्वस्य सामग्रीनिष्ठत्वात् तेनेति विशिष्टवाचि । क्षितिजलादिविशिष्टबीजादित्येव पञ्चम्यन्तार्थश्च । निवर्तत इत्यत्र न चेत्यस्यानुषङ्गः । अविशेषकम्-अनियामकम् दर्व्यादिसंग्रहाप्रयोजक-मित्यर्थः । अन्यो वा पाठः । विशिष्टस्य—अन्नकरणताविशिष्टशूर्पस्य ।

अतोऽन्नकरणसमर्थेन शूर्पेण होतव्यमिति विध्युद्देशान्तःपातेन केवलार्थवादतामेव प्रतिक्षिपन्नयं हेतुशब्दः कथमर्थवादतां प्रसंजयेदिति ॥ २९ ॥

हेतुविधावपि निर्देशवशात् विशेषव्यवस्थानं दर्शितम् । अथ तदभ्युपगमे बाधकमाह—

**३. सू-सामान्यादिति चेत्-अव्यवस्था विधीनां स्यात् ॥१-२-३०**

'शूर्पेण जुहोति' इति प्रकृतं तेनेति प्रत्यवमर्शं चानादृत्य **अन्नं क्रियत** इति सामान्यमात्रादन्नकरणभूतसर्वोपसंहार इति चेत्—प्रमाणतयाभ्युपगतानां विधीनामव्यवस्था स्यात्—विध्युद्देशेष्वपि अर्थप्रकरणादिभिरापन्नान् विशेषान् अनादृत्य पदादिमात्रप्रतिपन्नसामान्ये(?)तिकर्तव्यतादिव्यवस्थाभंगः प्रसज्येतेत्यर्थः । अतो हेतु-

---

विध्युद्देशेति । विधायकवाक्यरूपभागेत्यर्थः । अत्रायं वाक्यार्थः—शूर्पनिष्ठहेतुत्वमात्रोक्तौ वैयर्थ्यादर्थवादत्वमेव भवेत् । द्रव्यादिसाधारणोक्तावेव सार्थता ; तदयोगादर्थवादत्वप्रसञ्जनमिति न ; शूर्पमात्रनिष्ठकरणत्वोक्तावपि हेतुत्वसार्थक्यस्य अन्नकरणासमर्थशूर्पव्यावृत्तिरूपस्योक्तत्वादिति ।

30. पदादिमात्रप्रतिपन्नेति । अत्र वार्तिके—"यथा गमनं गोशब्दव्युत्पत्तिनिमित्तमुपादीयमानं सास्नादिमत्सामान्यप्रत्ययोत्तरकालं तद्गतमेव निमित्तत्वं प्रतिपद्यते, न गन्तृमात्रविषयमिति गोशब्दव्यवस्था" इत्युक्तम् । अस्यापि वाक्यस्य तत्परत्वे वाक्यं शोधनीयं स्यात् । स्थितनिर्वाहस्तु—पदादिमात्रप्रतिपन्नं सामान्यं यस्य, तस्य इतिकर्तव्यतादेः अर्थप्रकरणादिप्रयुक्तव्यवस्था न स्यात् । अक्ताश्शर्करा उपदधातीत्यादौ आज्यातिरिक्तेनाप्यञ्जनं स्यात् । अग्नीषोमीयपशुरच्छागोऽपि स्यात् । विधिवाक्येषु आख्यातस्य

ब्लिगदानामप्यर्थवादानामप्रामाण्यं वक्तुं न शक्यत इति सर्वेऽप्यर्थ-वादाः स्तुत्यादिमुखेन सार्थकास्सन्तः प्रमाणमिति ॥ ३० ॥

77. असंगतिरनौचित्यमानर्थक्यं गतार्थता ।
अस्वारस्यं च सूत्राणां अन्योक्तेष्विह सुग्रहम् ॥

इति हेतुवन्निगदाधिकरणम् ॥ ३ ॥

अथ मन्त्राधिकरणम् ॥ ४ ॥

॥ ४ ॥ सू-तदर्थशास्त्रात् ॥ १-२-३१ ॥ (पू-१)

एवं साधितमर्थवादानां विध्युद्देशेनैकवाक्यतया कार्त्स्न्येन

---

कर्तृसामान्यार्थकतया अनधिकारिणामपि कर्माधिकारः स्यादित्येवं भाव्यम् । अधिकरणार्थं निगमयति अत इति । पूर्वपक्षिणा हि शब्दावैयर्थ्याय हेतुपरत्वमावश्यकम्, दर्व्यादेर्होमकरणत्वश्चाप्रामाणिकमिति वाक्याप्रामाण्यमुक्तम् । सिद्धान्तिना हेतुपरत्वान्वारोहेणासमर्थशूर्पव्यावृत्तिरूपफलं प्रदर्श्य वाक्याप्रामाण्यं परिहृतम् । वस्तुतोऽनाकांक्षितत्वात् हेतुत्वाविधानात् स्तुतिपरतयैव प्रामाण्यमिति च । हेतुत्वविवक्षायां तु, येनान्नं क्रियत इति वाक्यं स्यात्, न तु तेन हीति । न हि शूर्पशब्दवाच्यस्य सर्वस्यान्नकरणे उपयोगः सामर्थ्यं वा । नन्वेतदर्थवादत्वस्य हेतुपरत्वाभावस्य चात्र सिद्धत्वे कथं नवमप्रथमे द्रव्यसंख्याहेतुसमुदायमिति (9-1-11) सूत्रे हेतुपरत्वस्वीकारेण पूर्वपक्ष इति चेत्—अत्रान्ते अभ्युपगम्यवादं कृतमालस्यैव तथोक्तिसंभवात् । तत्रान्यदेव किञ्चिदुदाहर्तव्यमिति सुवचत्वाच्च । शिष्टं परिशिष्टे ॥ 30 ॥

31. तदर्थशास्त्रादिति । एतदारभ्य मन्त्रानर्थक्यमित्यन्तमेकमेव पूर्वपक्षसूत्रम्; व्याख्यानसौकर्याय विभज्य लिखितमिति तत्र

प्रामाण्यम् । अथेदानीं तदेकवाक्यताहीना मन्त्रा विचार्यन्ते, किं ते मन्त्राः प्रमाणम्, उत नेति । तदर्थं च प्रतीयमानेऽर्थे तात्पर्यमस्ति, न वेति । तदर्थं च किमेते कर्मोपासनरूपेषु शास्त्रेषु स्वार्थबोधनेनोपकुर्वन्ति, उतोच्चारणमात्रेणेति । उच्चारणमात्रे विवक्षिते ह्यर्थबोधनमानुषंगिकम्, अर्थप्रत्यायनपरत्वेऽप्युच्चारणं प्राप्तमिति संशयावकाशः ।

तत्रैवं पूर्वपक्षः—यद्यपि स्वतःप्रामाण्यादिकं स्थापितम्, तथाऽप्यन्यपरत्वादिह तदपोद्यते । न ह्यतत्परः शब्दस्तत्र प्रमाणम्; अतिप्रसंगात् । न च मन्त्राणां स्वार्थे तात्पर्यं सम्भवति, तदर्थशास्त्रादिविरोधहतत्वात् । तथाहि—"बर्हिर्देवसदनं दामि" इत्यादयो मन्त्राः यदर्थाः, तदर्थेष्वेव ते शास्त्रेण विनियुज्यन्ते । विवक्षितार्थत्वे हि स्वशक्त्यैव बर्हिर्लवनादौ विनियोगः सिद्धः, तत्र किं शास्त्रेण तदर्थेन । न ह्येषामर्थविवक्षा शक्तिर्वा शास्त्रैरभिधीयते, हुमादिष्वतिप्रसंगात् । अविवक्षितार्थत्वे तदर्थशास्त्रमर्थवत् । अतोऽवगच्छामो मन्त्राणां स्वार्थेषु न तात्पर्यमिति ॥ १ ॥

---

नव्यैरुक्तम् । न चात्र भाष्ये मन्त्रानर्थक्यमिति पदानुपलम्भात् न तत् सौत्रं पदमिति मन्तव्यम्; वार्तिके, "ह्यानर्थक्यश्रवणात् केचित्" इति सूत्रे आनर्थक्यपदसद्भावस्यावगमात् । आनर्थक्यं नाम नार्थाबोधकत्वम्; प्रतीयमानार्थापलापायोगात् । किं तु अविवक्षितार्थत्वमिति तत्र भाष्यकाराशयः । अत्रापि भाष्ये तदेवाद्रियते । प्रायोऽत्र पूर्वाधिकरणेष्विव सूत्राणामर्थवर्णने भेदो न लक्ष्यते । मन्त्रानर्थक्यमिति मन्त्रपदप्रयोगात् पूर्वमर्थवादाधिकरणे तन्मूलसर्वाप्रामाण्यशंकनवत् इह न शंकेति ज्ञाप्यते । कर्मणि उच्चारणमूलकस्य साफल्यस्य मन्त्रेषु पूर्वपक्षेऽप्यंगीकारात् ।

4. सू. **वाक्यनियमात्** ॥ १-२-३२ ॥ (पू.२)

पदसमुदायविशेषो वाक्यम्; तस्य **नियमः**—पदानां नियतक्रमयोगित्वम्। अयमभिसन्धिः—न तावत् पदानां क्रमनियमः अर्थप्रत्यायनांगम्, व्युत्क्रमेणाप्यर्थप्रतीतेः। उच्चारणार्थत्वे क्रमनियमोऽर्थवान्, नियतक्रमैरुच्चारितैरदृष्टोपकारसम्भवात्। यद्यपि विध्युद्देशेऽपि व्युत्क्रमेऽप्यर्थप्रतीतिः स्यात्, तथापि नियतक्रमस्याप्यक्षरराशेः स्वाध्यायशब्दवाच्यत्वात् तथैवाध्ययनं वैधम्। अर्थप्रतीतेस्तु व्युत्क्रमप्रतिसंहितैरपि पदैः साधनत्वं को वारयेत्। न चेहापि तथा, व्युत्क्रमेणोच्चारणस्याशास्त्रार्थत्वात्। अनुच्चारणावस्थाभाविन्या अर्थप्रतीत्या अनुष्ठानानुपकारात्। न च नियतक्रमार्थप्रत्यायनेनादृष्टमिति नियन्तुं युक्तम्, तादृशोच्चारणेनावर्जनीयेन तत्सम्भवे तदधीनातिरिक्तोपादानगौरवात्। यत्र तु आनुशासनिकप्रकृतिप्रत्ययसमासादिषु क्रमनियमः, तत्र क्रमभंगेऽपशब्दत्वान्यार्थत्वनिरर्थकत्वादिप्रसंगात् तथैव क्रमेण नियतेन भवितव्यम्। इह तु न तथानुशिष्टमिति व्युत्क्रमेणार्थप्रत्यायनं को निरुन्ध्यात्॥ क्रमभंगे कथं मन्त्रत्वमिति चेत्–मा भून्मन्त्रत्वम्। न ह्येतत् अर्थप्रतीतेरंगम्। अर्थप्रतीतिसाधनत्वे तदपेक्षामात्रमेव संरक्षणीयम्। अतो मन्त्रत्वपरिरक्षणाय अर्थप्रत्यायकमपि व्युत्क्रमपाठं[तं] पौरुषेयं वा वाक्यं ध्यानादिकरणान्तरं चानादृत्य क्रमविशेषवत्स्वप्रकरणस्थवाक्यनियमोऽयमर्थाभिसन्धिं प्रतिबध्नाति ॥ ३२ ॥

---

32. अपशब्दत्वेत्यादि। इन्द्राग्नी, राजपुरुषः, निष्कौशाम्बिः इत्यत्र अग्नीन्द्रौ, पुरुषराजः, कौशाम्बिनिः इति प्रयोगे क्रमेणापशब्दत्वमन्यार्थकत्वमर्थराहित्यञ्च वार्तिकोक्तं द्रष्टव्यम्।

## 4. सू. बुद्धशास्त्रात् ॥ १-२-३३ ॥ ( पू.३ )

अपिच केचिन्मन्त्राः कर्ममध्ये प्रयुज्यमानाः परप्रेषणवन्निगदाः प्रतिपन्नाः साधनरूपा दृश्यन्ते;—यथा "अग्नीदग्नीन् विहर" इत्येवमादयः। प्रतिपन्नो ह्ययमर्थः पाठमात्रेण। न ह्यनधीतवेदः अविद्वान् कर्मणि नियुज्यते। 1अतः[कर्मप्र?]क्रमात्प्रागेव शिक्षितात्मीयपदार्थम् आग्नीध्रं प्रति प्रैषोऽयमनर्थकः। अथ निश्चितात्मीयपदार्थस्यानुष्ठानकाले स्मरणार्थः प्रैष इति चेन्न ;— सादरपटुतरशिक्षितब्राह्मणार्थविज्ञानाभ्यासमहिमसंजनितसंस्कारविशेषादेव तत्प्रसिद्धेः। संस्कारोद्बोधोपि निरन्तरेष्वात्मीयपदार्थेषु पूर्वसमाप्तिमात्रात्, ब्राह्मणवाक्यादेव (द्वा?) सिद्ध्येत्। न च बुद्धे बोधनमर्थवत्। बुद्धेऽप्युच्चारणमदृष्टद्वारेणोपकुरुते, बोधनं तु दृष्टं सिद्धं चेति न साधनमर्हति।

ननु संस्कारातिशयाय द्वितीया बुद्धिरुत्पाद्यते ; यच्चात्र सोपानत्के पादे द्वितीयोपानत्परिग्रहवत् अशक्यत्वं परैर्भाषितं, पिष्टपेषणं च निदर्शितम्-सोऽपि हस्तसमालोचः, वैषम्यात्; शब्दे हि सहस्रशः पठितेऽपि प्रतिपर्यायं बुद्ध्यन्तरोत्पत्तेः—इति चेन्न ;—शक्यत्वेपि कृतकरत्वस्य दुस्त्यजत्वात्। न हि द्वितीयेन बोधेन प्रथमादधिकमुपकृतम्। अदृष्टं तूच्चारणादेव युक्तमित्युक्तम् ॥ ३ ॥

---

33. 1 कर्मप्रक्रमेति पदं वार्तिकतो ज्ञातम्। परैरिति। शाबरे, "यथा सोपानत्के पादे द्वितीयामुपानहमशक्यत्वान्नोपादत्ते" इति, वार्तिके, "पिष्टपेषणन्यायेनार्थं ज्ञापयितुमशक्नुवन्" इति। हस्तसमालोचइति। विस्पष्टस्यापि तैरग्रहणमित्यर्थः।

4. सू. अविद्यमानवचनात् ॥ १-२-३४ ॥ ( पू-४ )

अविद्यमानमर्थं केचिन्मन्त्रा वदन्ति--"चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यॉं आविवेश" इति । न ह्येवंविधः कश्चित् वृषभः सम्भाव्यते । यद्यपि लोकोत्तरमर्थं शब्दः प्रतिपादयेदिति साधितम्—तथापि यत्रासौ यज्ञे मन्त्रः, न तत्र, प्रकृतौ वा चतुश्शृंगत्वादिविशिष्टं कर्म तत्सम्बन्धि वा किंचिदुपलभामहे, यदभिधानेन प्रमाणमसौ मन्त्रः स्यात् । यदि च यज्ञानुबन्धिनि कस्मिंश्चिदर्थे मन्त्रस्यास्य विवक्षा स्यात्, स कथं समस्तशब्दार्थवित् भगवान् पतञ्जलिः नामाख्यातोपसर्गनिपातादिरूपेण चतुश्शृङ्गतादीन् कल्पयित्वा शब्दविषयमयोजयत् ? अविवक्षितार्थत्वे तु स्वेच्छया स्वाभिमते विवा कल्पयितुं शक्यते ; न त्वन्यथा; तथासति विप्लावकत्वप्रसंगात् ॥

एतेन संख्यासादृश्यमात्रात् ऋत्विक्सवनादिषु शृंगपादादिरूपो गुणवाद इत्यपि प्रत्युक्तम्, अनुष्ठानानुपकारित्वाच्च । अविज्ञातप्रयोगप्रदेशस्यास्य मन्त्रस्य पाठक्रमात् प्रदेशक्लृप्तौ युक्तं तत एव स्वयम्प्रतितोच्चारणार्थत्वम् ।

यश्च "नमस्ते अस्तु मा मा हिँसीः" इत्यादिर्मन्त्रः, सोऽप्यविद्यमानवचनः । न हि तत्र हिंसा प्रकान्ता, येन प्रतिषिध्येत । तस्मादप्रतिषिद्ध(षेध?) भागिनमर्थं प्रतिषेधन् अयं मन्त्रोऽपि स्यादविद्यमानवचन एव । एवमन्येऽपि ॥ ४ ॥

---

34. ऋत्विक्सवनेति । एतद्विवरणं सिद्धान्तसूत्रटिप्पणे द्रष्टव्यम् ।

4. सू–अचेतनेऽर्थबन्धनात् ॥ १-२-३५ ॥ (पू–५)

अचेतनं बोधयितुं केचिन्मन्त्रा अर्थं निबध्नन्ति । यथा–"ओषधे त्रायस्वैनम्, स्वधिते मैनँ हिँसीः", "शृणोत ग्रावाणः" इत्यादयः, अनन्तरोदाहृताः "मा मा हिँसीः" इत्यादयश्च । नचाचेतना ओषध्यादयः तत्प्रविष्टा वा क्षेत्रज्ञा अभिमुखीकर्तुम् अर्थं वा बोधयितुं मन्त्राणां पदवाक्यश्रवणादौ नियोक्तुं वा शक्यन्ते । नाप्यत्राभिमानिदेवताविवक्षा शक्या कल्पयितुम्, प्रत्यक्षसिद्धद्रव्यविषयत्वाद्विनियोगस्य । न चान्यस्य विनियोगेऽन्यःप्रकाशनीयस्स्यात् । अत उन्मत्तभाषितसमानाः कथमेते मन्त्राः प्रमाणं स्युः ॥ ५ ॥

[(?) 4. सू–अर्थविप्रतिषेधात् ॥ १–२–३६ ॥ (पू–६)

..........................................................(?)]

4. सू–स्वाध्यायवदवचनात् ॥ १-२-३७ ॥ (पू-७)

"स्वाध्यायोऽध्येतव्यः" इति विधिमनुसरन्तोऽधिकारिणः स्वाध्यायवन्न तदर्थं प्रधानमुपदिशन्ति; अपितु स्वयं निश्चितार्थास्सन्तः [1]सन्निहितमप्यर्थमनादृत्य यावदक्षरग्रहणं स्वाध्यायस्वरूपमेव शिष्यान् अध्यापयन्ति । येनाकारेणायमुपयोक्ष्यते, तत्रैवायं संग्रह इत्युक्तम् । अत उच्चारणशिक्षणमुच्चारणार्थमेव । उच्चारणं च कर्मण्यपेक्षितम्, ज्ञानार्थ-

---

अर्थविप्रतिषेधादिति सूत्रार्थमनूद्य । उपरि पृथक् सूत्रेणनिरसनात् तत्सूत्र भाष्यमत्र भ्रष्टमिति ज्ञायते । 37 संनिहितमपीति । अध्ययनकाले पूर्णिकया क्रियमाणे अवहनने कदाचिद् दृश्यमानेऽपि तदर्थप्रतीत्यभ्यासो नहि क्रियत इत्यर्थः शाबरे ।

त्वेऽप्यवर्जनीयं च। अतोऽर्थमशिक्षयद्भिः स्वाध्यायस्वरूपं शिक्षयद्भिः शिष्टैरुच्चारणरूप उपकारोऽभिप्रेत इत्युत्प्रेक्षामहे ॥

विध्यर्थवादयोरपि साधारणमिदं चोद्यम्। तयोरपि ह्यक्षरग्रहणपूर्वं वृद्धाः प्रवर्तयन्ति। यदा पुनः बुभुत्सितार्थानामन्तेवासिनां विध्यर्थवादयोरर्थं व्याकुर्वते, तदापि न मन्त्रभागार्थं परिसंख्याय व्याचक्षते। ततोऽक्षरग्रहणदशायामर्थावचनमात्रेण यदि मन्त्राणामविवक्षितार्थता, तुल्यं विध्यर्थवादयोरपीति शास्त्रारम्भे त्रिपाद्यारम्भे चो(वो?)पक्षिप्य परिहर्तव्यमिदं चोद्यं किं मन्त्रेषु विशिष्येदानीमभिधीयते ॥ एकदेशद्वारा कृत्स्न वेदाप्रामाण्यमुपपिपादयिषितमिति तदभिव्यक्त्यर्थमिदं सूत्रं [गुरुनये] संगच्छत इति चेत्, तथाप्येकदेशद्वारिकाणामेव पूर्वपक्षयुक्तीनामिहोपक्षेप्तव्यत्वम्। तथेह न चास्ति। अध्ययनविधेरर्थग्रहणपर्यन्तत्वेऽपि

---

37. स्वाध्यायवदवचनादित्यस्य वेदोच्चारणशिक्षणवत् अर्थज्ञानशिक्षणस्य आदावभावात् मन्त्रो निरर्थक इति यथावार्तिकं व्याख्यानं विधाय, तदिदमनवसरग्रस्तमिति शंकते विध्यर्थवादयोरपीति। शास्त्रारम्भे इति। जिज्ञासाधिकरणे अध्ययनविधिरर्थज्ञानार्थ इति भाट्टैः कथनात् तत्र पूर्वपक्षे एतद्घटनं युक्तम्। अस्मत्पक्षे स्नानकालप्राप्त्या कथं विचारावसर इत्येव तत्र पूर्वपक्षात् त्रिपाद्यारम्भे अर्थवादाधिकरणेऽयमाक्षेपो घटनीय इत्याशयेन त्रिपाद्यारम्भेणेत्युक्तम्। ननु तत्र वक्तव्यस्यात्र घटनात् एकदेशाक्षेपमुखेन सर्वत्र कृत्स्नवेदप्रामाण्यमेवाक्षेप्यमिति सूत्रकारः सूचयतीत्यस्तु; स्वरसतः प्रामाण्यासंभवे कुत्रापि प्रामाण्यार्थप्रयासो न कार्यः इत्याशय इत्याशंकते एकदेशेति। तथापीति।

स्वशक्तेरक्षरग्रहणमात्रविश्रान्तत्वात् पूर्वमर्थानभ्यासः न त्वर्था-नादरात्; अत इदं सूत्रमसंगतम् ॥

मैवम्; एकदेशद्वारिकाया एव युक्तेरिहाभिप्रेतत्वात्। अध्य-यनदशायामेव जप्तव्यास्सन्ति केचिन्मन्त्राः। यथा "शन्नो मित्रश्शं-वरुणः", "सह नाववतु" इत्यादयः, यथा च ब्रह्मचारिकर्तव्येष्वपि धर्मेष्वनुप्रविशन्तो मन्त्राः। न हि तेऽपि तदानीमर्थतः शिक्ष्यन्ते, अपितु अस्खलितमात्रादिना स्वरूपेणैव। यदि तेषु मन्त्रेषु विवक्षितार्थ-तया अर्थोऽपि तैरनुसन्धेयः, तदा कथं विद्वांसो वृद्धाः तत्तन्मन्त्रस्व-रूपमिव तंतमर्थमपि शिष्यान्न शिक्षयेयुः। अतः आरम्भे मन्त्राणामुच्चा-रणार्थत्वेऽवसिते सर्वत्रैवमिति सूत्राभिप्रायः।

एवंवा सूत्रं व्याकुर्मः-स्वाययाध्ययनदशायां यत्प्रकाराः मन्त्रा अधीताः, न तथा प्रयोगकाले प्रयुज्यन्ते, अपित्वर्थज्ञानानुपकारिणा नीचै (उच्चै ?)स्त्वोपांशुत्वैकस्वरमात्रत्वादिभेदेन उच्चार्यन्ते। अतोऽवग-च्छामः, समानन्यायतया सर्वत्र उच्चारणविशेषनियमेनैवादृष्टमिति ॥३७

---

मन्त्रमात्रान्वय्येव पूर्वपक्षो वाच्यः, सूत्रान्तरवत्। एतदप्रामाण्ये-ऽन्यस्याप्यप्रामाण्यशंका कामं भवतु। न तु तस्यापि साध-नार्हो हेतुर्मन्त्राधिकरणे युक्त इत्याशयः।

एकदेशमात्रान्वयितयैव योजयन् शंकां परिहरति मैवमिति। अवचनादित्येतत् अर्थाबोधनादित्यर्थविवक्षया व्याख्याय, अप्रयो-गादित्यर्थविवक्षया स्वाध्यायाध्ययनकालिकोच्चारणवत् अनुच्चारणात् स्वरभेदरहितात् विलक्षणोच्चारणादित्यर्थमादृत्यव्याख्याति एवंवेति।

4. सू-अविज्ञेयात् ॥ १-२-३८ ॥ (पू-८)

अविज्ञानादित्यर्थः । अविज्ञेयत्वादिति वा । अर्थस्येति शेषः । अर्थप्रतीतौ जायमानायां प्रमाणमप्रमाणं वेति चिन्तावकाशः, न पुनः समुद्रघोषादिषु वर्णक्रमपाठादिषु वा । कतिचन मन्त्रा न कथञ्चिदर्थं बोधयन्ति । यथा-"अम्यक्सा त इन्द्र ऋष्टिरस्मे" इति, "सृण्येव जर्भरी तुर्फरीतू", "इन्द्रस्सोमस्य काणु(नु)का" इति । एवमविदितपदार्थ-वाक्यार्थानामेषां मन्त्राणां कस्मिन्नर्थे प्रामाण्यं (?) प्रतिपिपन्महे । उच्चारणार्थत्वे तु हुमादिवत् अविदितार्थैरपि तैस्तत्सिद्धिः ॥ वस्तुतस्तेषा-मप्यर्थवत्तया वर्णक्रमादे र्हुमादेश्च विशेष इति चेत्, वर्णेष्वर्थमनधिग-मयत्सु कथं भवांस्तेषामर्थवत्तां प्रत्यवादीः । न ह्यर्थवन्त इमे मन्त्रा-इत्यनुश्शृणुमः । नाप्यनुमिमीमहे, योग्यानुपलम्भबाधात् । हुमादि-भिरनैकान्त्याच्च । अत ईदृशानां मन्त्राणामुच्चारणमात्रार्थत्वे तुल्यन्याय-तया अन्येषामपि मंत्राणां तादर्थ्यं युक्तमिति ॥ ३८ ॥

4. सू-अनित्यसंयोगात् मन्त्रानर्थक्यम् ॥ १-२-३९ ॥ (पू-९)

वेदानामपौरुषेयत्वाय वेदानां प्रामाण्याय च पूर्वमनित्यसंयोगौ

---

38. अविज्ञेयात् । विज्ञातुं शक्यं नास्तीति अविज्ञेयम् तस्मात् । विशदज्ञेयवाक्यार्थाभावात् । वाक्यार्थज्ञानाभावादिति यावत् । भावप्रधानमवलम्ब्य पक्षान्तरमाह अविज्ञेयत्वादिति । ननु अविज्ञेयादित्युक्त्या स्थितस्यार्थस्याविज्ञानमेव सिद्ध्येत्; नत्वर्थ-स्यैवाभावः । अतो हुमादिवैलक्षण्यमित्याशंक्य परिहरति वस्तुत इति । मन्त्रत्ववेदत्वादेरर्थवत्त्वहेतोर्व्यभिचारमाह हुमादिभिरिति ।

उदाहृतौ। इह पुनः मन्त्राणामविवक्षितार्थत्वाय मान्त्रवर्णिकस्स एव पुनरारभ्यत इत्येवं मन्यते। यथा—"किं ते कृण्वन्ति कीकटेषु गावः" इत्यादयो मंत्राः कीकटादिसंज्ञितान् जनपदनगरराष्ट्रप्रभृतीन् अनित्यान् पदार्थान् कर्मांगभूतान् उपाददते। तेषाञ्चेदर्थविवक्षा, नित्ये अनित्य-संयोगविरोधात् वेदाप्रामाण्यं प्रसज्यते। उच्चारणार्थत्वे तु नैवं दोषः।

ईदृशार्थस्य प्रवाहयुक्तया प्रागेव परिहृतत्वात् वयं नाम्रेडितमर्थ-मभिदध्महे। मन्त्राणां स्वप्रतिपाद्यैरर्थैः, अनित्यसंयोगात्-अनियत-संयोगादित्यर्थः। एकैक एव हि मन्त्रो विनियोगभेदेन तत्तदनुरूपान् नानार्थान् प्रतिपादयतीति निरुच्यते नैरुक्तकैः। तत् कस्य हेतोः ऋते मन्त्राणामविवक्षितार्थत्वात्? विवक्षितार्थत्वे वा कथं स्वार्थं जह्यात्? अन्यद्वा कथं वदेत्? एवम्, "ऐन्द्रया गार्हपत्यमुपतिष्ठते" इत्यादि-विनियोगबलादिन्द्रादिरूपान् स्वार्थान् परित्यज्य स्वकार्यसामर्थ्यादि-निमित्तनिर्वचनादिमुखेन गार्हपत्यादीन् अर्थान् मन्त्राः प्रतिपादयन्तीति व्याचक्षते। अतोऽयमनित्यसंयोगप्रभेदः।

---

39. अविवक्षितेति। अपौरुषेयत्वं प्रामाण्यञ्च सिद्धान्तः, अविवक्षितार्थत्वं पूर्वपक्षः। अतः उभयत्रैकरूप्याय पौरुषेयत्वाय प्रामाण्यायेति वा, विवक्षितार्थत्वायेति वा स्यात्। आनर्थक्यमिति पदस्य अविवक्षितार्थत्वं कर्तव्यकार्यान्वय्यर्थप्रतिपादकत्वाभाव इत्यर्थः। क्वचिदर्थाभावात्, क्वचित् स्थितस्याप्यर्थस्य प्रकृतकार्या-नन्वयाच्चानर्थक्यम्। एवं पूर्वव्याख्यानोक्तमुक्तम्; स्वयमन्यदाह ईदृशार्थस्येति।

तदेवं तदर्थशास्त्रादिभिर्ज्ञापकैः प्रत्यायकैश्च युक्तिभेदैरविशेषात् सर्वत्र मन्त्रेषूच्चारणमेव विवक्षितम् नार्थज्ञानमित्यविवक्षितार्थत्वात् मन्त्राः न प्रमाणमिति ॥ ३९ ॥ **(सिद्धान्तारम्भः)**

अत्र राद्धान्तमारभते—

**॥ ४ ॥ सू-अविशिष्टस्तु वाक्यार्थः ॥ १-२-४० ॥ (सि-१)**

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । व्युत्पन्नैः पदैरवगम्यमानो वाक्यार्थो वेदे लोके च समानः । तान्येवं च पदानि संहत्य लोकोत्तरमर्थं प्रतिपादयितुं लोकवदेव वेदे व्युत्पत्त्यनुसारेण शक्नुवन्तीत्युक्तम् । स्वतः-प्रामाण्यञ्च प्रागेव साधितम् । कारणदोषाशंका च परिहृता । ये पुनः तदर्थशास्त्रादयः क्षुद्रोपद्रवाः, ते कारणदोष-बाधकप्रत्ययरहित प्रतीति-जन्मनैव प्रत्युक्तप्रायाः । मान्त्रवर्णिकप्रतीतिः प्रमाणम्, कारणदोष-बाधकप्रत्ययरहितप्रतीतित्वात्, आप्तवाक्यजन्यप्रतीतिवत्; विध्युद्देशादिवाक्यार्थप्रत्ययवत् इति । इदमप्यविशिष्ट इत्यनेनैव सूचितम् । असिद्ध्यन्यथासिद्ध्यादिपरिहारः तदर्थशास्त्रादिप्रत्युत्तरेणैव सेत्स्यति ।

एतदुक्तं भवति—तदर्थशास्त्रेणापि कर्मसु विनियुक्तैर्मन्त्रैः तच्छेषतया तत्र तत्र किंचित् कर्तव्यम्, कर्मणांच अनुष्ठानेऽर्थप्रकाशन-मपेक्षितम्, मन्त्रैश्चाविहतस्वाभाविकशक्तिभिरर्थप्रकाशो जायमानो दृश्यते । अतोऽनुष्ठानोपयुक्तार्थप्रकाशनेनोपकुर्वते इति युक्तमाश्रयितुम्; दृष्टे सम्भवति अदृष्टकल्पनस्यान्याय्यत्वात् । नियममात्रस्य च दृष्टाविरोधेन सिद्धेः । शक्त्यनुसारेण च विनियोगोपपत्तेः । सन्निहितस्य च वाक्यार्थ-

---

39. ज्ञापकैः अर्थराहित्यानुमापकैः । प्रत्यायकैः तद्बोधकैर्निरर्थक पदराशित्वादित्यादिभिः ।

प्रत्ययस्याकृतार्थप्रयोगेऽनुप्रवेशयितुं युक्तत्वात् । उच्चारणपदार्थज्ञाना-:देस्त्वेवमपिं चरितार्थत्वात् । अचेतनसम्बोधनाद्यनुपकार्यर्थप्रकाशनस्य च परिहरिष्यमाणत्वात् । अतः "बर्हि र्देवसदनं दामि" इत्यादि-मन्त्राणां तावत् अविहतार्थप्राधान्यानाम् अनाकुलं प्रामाण्यमिति ॥४०॥

अतः [परं?]त्रिभिः सूत्रैरुदाहरणविशेषेषु पुनःश्रुतिं प्रकारान्तरेण परिहरति। "चतुर्भिरादत्ते" इत्यत्र चतुर्णां मंत्राणां रूपादेवाभ्र्यादाने विनियोगः प्राप्यत इति न पुनर्विधानमर्हति। न ह्येतत् संख्याविशेषार्थं पुनःश्रवणम्, चतुष्ट्वस्यापि तेषु सिद्धत्वात्। न च [1]निष्क्रियत्वात् क्रियां-गतया विशेष्टुमलम्। नापि समुच्चयः; चतुष्ट्वो(ष्टयो?)क्ति प्रत्येकसामर्थ्यात् प्राप्ते विकल्पे समुच्चयस्यान्याय्यत्वात्; समुच्चयाभिधायिनः चशब्दस्या-दर्शनाच्च। अतोऽर्थपरत्वे निरर्थकमिदं पुनर्वचनम्। पक्षान्तरे तु अभ्र्यादाने [अ?]प्राप्तानामेव तत्र विनियोगः प्रमाणान्तरेणाप्राप्तेः चतुष्ट्वमप्यदृष्टार्थं गमयतीति युक्तः समुच्चय इति। तत्राह—

॥ ४ ॥ सू-गुणार्थेन पुनश्श्रुतिः ॥ १-२-४१ ॥ (सि-२)

स्वरूपादेवाभ्र्यादाने प्राप्तानामेषां मन्त्राणां पुनरभ्र्यादाने विधानं **गुणार्थेन**-चतुष्ट्वसंख्यारूपगुणविधानार्थम्। यद्यपि चतुष्ट्वं तेषु स्वतःसिद्धम्—तथाप्यभ्र्यदानार्थतया न प्राप्तमिति युक्तस्तद्विधिः। सामानाधिकरण्यलब्धगुणवैशिष्ट्यस्य कारकस्य क्रियाद्वय(न्वय?)—विधौ न कश्चिद्विरोध इति **अरुणाधिकरणे** वक्ष्यते। न चात्र विकल्प-

---

40. अकृतार्थेति। संनिहितवाक्यार्थप्रत्ययं विना अनिष्पन्नस्य प्रत्ययसाकांक्षस्येत्यर्थः। 1 चतुष्ट्वं क्रियाविशेषणं न भवति अयोग्यत्वादित्यर्थः।

प्राप्तया विरोधः, लैंगिकत्वादत्र विकल्पप्राप्तेः ; समुच्चयस्य श्रौतत्वात् । न चात्र समुच्चयशब्दो नास्तीति वक्तुं युक्तम्, क्रियावेषे(न्वये?) (शे?)च चतुष्ट्वस्य समुच्चयशब्दमन्तरेणापि सिद्धेः । अत एवंविधेषु पुनश्श्रुतेः अप्राप्तगुणविधिपरत्वान्न तदर्थशास्त्रविरोध इत्यभंगुरमर्थपरत्वम् ॥ ४१ ॥

ननु "इमामगृभ्णन् रशनामृतस्य" इत्यादिषु सामान्यलिंगेषु मन्त्रेषु यदि अर्थविवक्षा स्यात्, तदा, "अश्वाभिधानीमादत्ते" इति विधानमनर्थकं स्यात्, मन्त्रलिंगेनैवाश्वाभिधान्या अपि रशनायाः प्राप्तत्वात् । अत्यन्ताप्राप्ते हि विधिः प्रवर्तते । तत्राह—

॥ ४ ॥ सू-परिसंख्या ॥ १-२-४२ ॥ (सि-२)

सत्यमत्यन्ताप्राप्ते विधिः; न त्वसौ करिष्यते, अपितु परिसंख्या । स तु सामान्यतः प्राप्तिमपेक्षतैवेति मन्त्रस्यार्थविवक्षा तदुपकारिका । अतोऽत्राश्वाभिधानीविधानं गर्दभरशनावर्जनस्य बोधनार्थमिति न पुनश्श्रुतिः । नन्वेवं स्वार्थप्रहाणं परार्थकल्पनं प्राप्तबाधश्चेति दोषत्रयं स्यात् ॥ किमतः ? गत्यन्तराभावे सोढव्यत्वात् । अत्यन्ताप्राप्तविषय-

---

41. क्रियावेषे—क्रियाविघ्नमन्त्रे । चतुश्शब्दस्य चतुष्ट्वपर्याप्त्यधिकरणार्थकतया समुच्चयस्य सिद्धत्वादित्यर्थः । एतद्वचनाभावे अभ्रिरूपस्त्रनित्रादानमन्त्राश्चत्वारः विकल्पेरन् । न चैकेनैव मन्त्रेण प्रयोगसमवेते तस्याभ्र्यादानस्य प्रकाशितत्वात् इतरवैयर्थ्यम् ; यथा मन्त्रबलान्मन्त्रजन्यार्थज्ञानस्यैवानुष्ठानहेतुत्वमिति नियमः, तथा चतुर्भिरिति श्रुतिवशात् मन्त्रचतुष्टयाधीनार्थज्ञानस्यैवानुष्ठानहेतुत्वमिति स्वीकारात् ।

विधिवत्, अपुष्कलविषयनियमवत्, पुष्कलप्राप्तैकदेश[वर्जन ?]लक्षणायाः परिसंख्याया अपि लोकव्युत्पत्तिसिद्धत्वात्। लोके हि विशेष-

---

42. अपुष्कलेविषयेति। नखविदलनाद्युपायान्तराक्रान्तेषु व्रीहिषु अवहननाभावादपुष्कलविषयकत्वम्। अवहननस्य नियमः पुष्कलविषयकत्वम् अप्राप्तांशपूरणम् नखविदलनाद्यवसरेऽपि अवहननस्य धातुवाच्यस्यैव विधानान्नियमविधित्वमेव। ततो गम्या तु नखविदलननिवृत्तिरिति तस्या आर्थिकत्वम्। प्राप्तोभयैकतरवर्जनं परिसंख्या। इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते इत्यत्र आदानोद्देशेन मन्त्रविधानं व्यर्थम्। लिंगादेव सिद्धेः। अश्वाभिधान्युद्देशेन तु मन्त्रविधानम्। यद्यपि इदमपि लिंगात् सिध्येत्— तथापि प्रत्यक्षवचनविहितत्वात् लिंगाद्विधिर्न कल्प्यते। अश्वरशनायां गर्दभरशनायाञ्च लिङ्गान्मन्त्रे प्राप्तुमर्हे सत्यपि एतद्विशेषविधानात् गर्दभरशनातो मन्त्रनिवृत्तिः। सेयं परिसंख्या। लिङ्गादुभयत्र मन्त्रं प्रापय्य तदनन्तरमेतद्वाक्यपरामर्शो अश्वाभिधान्युद्देशेन मन्त्रो न विधातुं शक्यते, प्राप्तत्वात्। न गर्दभरशनामनेन मन्त्रेणेति लक्षणया परिसंख्यारूपार्थस्वीकारे, स्वार्थत्याग-परार्थस्वीकार-गर्दभरशनार्थप्राप्तमन्त्रबाधरूपदोषत्रयं स्यात्। अशक्यश्च एकान्तेन बाधः; लिंगकल्पित श्रुत्यवगमिते सति गर्दभरशनामन्त्रसंबन्धे तदभावस्य वैकल्पिकत्वमेव स्यात्। अथ कल्पितवाक्यस्य अश्वाभिधानीवाक्यस्य चैकवाक्यताकल्पनमिष्यते यदि, एकवाक्यतामन्तरेण तदर्थसिद्धौ तत् व्यर्थम्। अतो लिंगात् श्रुत्यकल्पनात् अर्थादेव गर्दभरशनासंबन्धनिवृत्तिः। परिसंख्यायाः कण्ठोक्तिस्तु वचनान्तर एव द्रष्टव्या, यथा 'पञ्च पञ्चनखा भक्ष्याः' इति। अत्र सर्वपञ्चनखभक्षणस्य प्राप्तत्वात् तद्विध्ययोगात् पञ्चेतरे पञ्चनखा न

विधिः एवकारादिवत् निषेधं गमयति; विशेषनिषेधः शेषानुज्ञानम्। [नः] किंचित्प्रामाण्यमेकतः, परिसंख्यादोषत्रयमेकतः; तत्र कतरत् लवीय इति निपुणं निरूप्यताम् ॥ ४२ ॥

ननु तत्र चान्यत्र च प्राप्तावन्यतरविधानं परिसंख्यार्थमिति युक्तम्। यत्र तु तत्रैव प्राप्तिः शब्दात् परिशेषाद्वा, तत्र "उरु प्रथस्वेति पुरोडाशं प्रथयति" इत्यादौ पुनश्श्रुतिवैयर्थ्यपरिहाराय मन्त्रस्याविवक्षितार्थत्वं युक्तमास्थातुम्। तत्राह—

॥ ४ ॥ सू-अर्थवादो वा ॥ १-२-४३ ॥ (सि·४)

वाकारो व्यवस्थितविभाषाविकल्पार्थः। पुनश्श्रुतिः क्वचित् रशनादानादौ परिसंख्यार्था, क्वचित् पुरोडाशप्रथनादावर्थवादार्था।

एतदुक्तं भवति—अप्राप्तं पुरोडाशप्रथनमेवात्र विधेयम्, न तु मन्त्रस्तत्र विनियुज्यते। सामर्थ्यादेव प्राप्तस्सन् प्रथनस्तुत्यर्थं पुनर्वि(रभि?)धीयते। "यज्ञपतिमेव प्रजया पशुभिः प्रथयति" इति प्रथनं स्तूयते। तत्रैवमाशंकेमहि—कथं पुरोडाशः(शं?) प्रथयन् यजमानं प्रथयतीति। सैषा शंका मन्त्रलिंगप्रधान(प्रथन?)प्रकाशनेन

---

भक्ष्या इति परिसंख्यैव विधेया। भक्षणेऽनुमतास्तु पञ्च तत्रैव श्रीमति रामायणे रामं प्रति वालिना, 'शशकः श्वाविधो गोधा खड्गः कूर्मश्च पञ्चमः' इति। नेयं श्रुतिरिति चेत्—तर्हि सत्यं वदेति वाक्यं परिसंख्याविधिरस्तु। दोषत्रयमपि सोढव्यम्, अन्यथा तात्पर्यभंगात् वाक्यप्रमाण्यहानेश्च। 'अप्रामाण्यमेकतः परिसंख्यादोषत्रयमेकत' इत्यर्थकेन वाक्येन भाव्यमिव।

43. व्यवस्थितेति। नःवेकत्रैव गुणार्थत्व परिसंख्यार्थत्वार्थ-

"उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्" इति यज्ञपतिप्रथनाशिषा हि मन्त्रेण प्रथनं क्रियते। अत इदं प्रथनमनेन मन्त्रेण क्रियमाणं यज्ञपतिप्रथनकारणं भवतीति। न चैवमसता स्तुतिः, मन्त्रोदितस्य हि फलस्य अंश(ग?)विषयस्यापि प्रधानाविरोधिनः स्तुत्यर्थं पुरस्कृतस्यापि तदपेक्षितत्वेनैव परित्यागायोगात्। उक्तं च भाष्यकारैः **श्रीमद्गीताभाष्ये**-"बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्" (2-41.) इत्येतद्व्याचक्षाणैः प्रधानाविरोधिनां मन्त्रोदितफलानां विवक्षितत्वम् ॥१२॥

एवं बहुधा पुनश्श्रुतिः परिहृता। अथ क्रमनियमस्य अन्यथासिद्धिमाह—

**४. सू-अविरुद्धं परम् ॥ १-२-४४ ॥ (सि-५)**

यत् मन्त्रस्थानां पदानां क्रमनियमेनोच्चारणम्, तदर्थादृष्टकल्पनं वा, तत् मन्त्रस्य विवक्षितार्थत्वेऽप्यविरुद्धम्। **परम्**—अनन्तरोक्तमित्यर्थः। केवलमिति वा। क्रमनियमोच्चारणादिकं केवल-

---

वादत्वोक्तिः, किंतु भिन्नभिन्नवाक्य इति। यज्ञपतिप्रथनाशिषा। यज्ञपतिप्रथनरूपेष्टार्थप्रकाशकेन। प्रथनं—पुरोडाशप्रथनम्। एवञ्च उरुप्रथा उरुप्रथस्वेति इति वाक्ये इतिशब्दः प्रभृतिवचनः। एतदादिकेन यज्ञपतिप्रथनापेक्षावाचिना मन्त्रेण यस्मात् पुरोडाशं प्रथयति, ततो यज्ञपतिप्रथनमपि भवतीति। एवं यज्ञपतिप्रथनपर्यवसायिमन्त्रकरणकत्वात् प्रथनमिदं प्रशस्तमित्युक्तं भवति। परित्यागायोगादिति। इतिकरणेन विनियुक्तस्थलं अङ्गफलमपि ग्राह्यमिति नव्यमीमांसका अप्याहुः। लिङ्गाद् विनियोगेऽप्यविरोधिफलं श्रुतं ग्राह्यमिति वयम्।

मविरुद्धं, पक्षद्वयसाधारणं, न क्वचित् पक्षे पतितमित्यर्थः । अथवा परम्-उच्चारणात् इतरत् अर्थज्ञानम् अदृष्टार्थोच्चारणनियमेनाविरुद्धम् । यद्वा उच्चारणमदृष्टार्थमिति वदता यतः परमेवं क्रमैरदृष्टमिति नियमितं, तत् अर्थप्रत्यायनपक्षेऽप्यविरुद्धम् ।

एतदुक्तं भवति—दृष्टमर्थज्ञानं तावत् दुरपह्नवम्; बाधाद्यभावश्च सिद्धः, सोपयोगिता च दर्शिता, एवं स्थिते यथा क्रमनियमेनोच्चारणमदृष्टार्थम्, तथैव नियमयोगेन प्रत्यायनमदृष्टाय स्यादिति ॥१३॥

बुद्धे बोधनमपि नियमार्थतया समाधत्ते—

**4. सू-सम्प्रैषे कर्मगर्हानुपालम्भः संस्कारत्वात्** ॥१-२ ४५(सि ६

"अग्नीदग्नीन्विहर" इत्यादिसम्प्रैषे बुद्धबोधनरूपस्य कर्मणो गर्हा या पूर्वमुक्ता, तस्याः, अत्रानुपालम्भः । पुनर्बोधनगर्हारूप उपालम्भः अत्र न कर्तुं शक्यत इत्यर्थः । पुनर्बोधनस्य नैरर्थक्यप्रसंगे हि मन्त्रस्याविवक्षितार्थताक्लृप्तिः । तत्तु सार्थकम् । तथाहि—स्वाध्यायकाले बुद्धस्येदानीं बोधनं तावन्न निरर्थकम्, तदातनधियां क्षणिकतया यावत्प्रयोगकालमनवस्थानात् । तासां संस्कारमात्राविशिष्टत्वात्, प्रयोगस्य च तदानींतनप्रयोक्तव्यधीसाकांक्षत्वात् ।

---

45. या गर्हा सा अनुपालम्भ इति वार्तिके। अत्र तस्याः इति प्रयोगात् गर्हानुपालम्भ इत्येकं पदम्। अनुपालम्भ इत्यस्य उपालम्भकत्वाभाव इत्यर्थः । गर्हावाक्यमुपालम्भनाशक्तमिति यावत् । संस्कारत्वात् । संप्रैषस्येत्यनुवृत्त्या संस्कारकत्वादित्यर्थः । वार्तिकेऽर्थान्तरमप्युक्तम्, तदानीं वर्तमानस्याग्निविहरणविषयकगुणस्य ज्ञानत्वाभावात् संस्कारत्वात् उद्बोधकापेक्षाऽस्तीति ।

अथ केनचित् प्रत्ययमार्गादिना प्रयोगकालेऽपि स्मृतिः सम्भवतीति पुनः बोधननैरर्थक्यं शंक्येत—तदपि न, नियमार्थत्वात् । अनेनोपायान्तरेण वा प्राप्ता स्मृतिः अनेनैवोपायेनेति नियम्यते । संस्कारत्वादित्यस्य पुनस्स्मृतिसंस्कारार्थत्वादित्यर्थः ॥ १५ ॥

अविद्यमानवचनं परिहरति—

**सू-अभिधानेऽर्थवादः ॥ १-२-४६ ॥ (सि-७)**

"चत्वारि शृंगा त्रयः" इत्यादिकं नाविद्यमानवचनम् ; "हिरण्मयः पुरुषः," "हिरण्यश्मश्रुर्हिरण्यकेशः" इत्यादाविवाञ्जसैव विश्वसृजो रूपविशेषस्य प्रतिपादनात् । विग्रहादिमत्त्वञ्च देवतानां समर्थयिष्यते । ईदृशञ्च रूपमद्यापि क्वचिदर्चयन्ति । स्मरन्ति च वैखानससंहिताभेदकर्त्तारो महर्षयः । अत ईदृशस्य रूपविशेषस्य प्रतिपादकेन मन्त्रेणान्याभिधानेऽर्थवादः । मन्त्रेऽप्यर्थवादशब्दो व्युत्पत्तिसा-

---

46. अभिधानेऽर्थवाद इति सूत्रस्य यामादौ शृंगत्वाद्यारोपादर्थवादत्वेति परव्याख्यानपक्ष एव सौत्रार्थवादपदस्वारस्यम् ; न तु वास्तवशृंगादिमद्रूपविशेषपरत्वे इत्यत्राह मन्त्रेऽपीति । अयमर्थः— विध्यर्थवादमन्त्ररूपेण विभक्ते वेदे मन्त्रोऽयं कथमर्थवादः। अर्थवादवत् स्तावकत्वात् अर्थवादशब्दो गौण इति चेत्—तर्हि अर्थवादो वेति सूत्रेणैवैतदुदाहरणस्यापि विचारितत्वसंभवात् व्यर्थमिदं सूत्रं स्यात् । गौणार्थपक्षे चाभिधान पदमस्वरसं भवेत् । अतोऽर्थवादशब्दस्यापि गौणमर्थं विहाय, चत्वारि इत्यादिना वाच्यार्थस्यैव मन्त्रेणाभिधाने सति मन्त्रोऽयं यथावस्थितार्थवदनरूप एवेति सूत्रार्थः । यदि तु स्तोत्रशस्त्राणामदृष्टार्थत्वात् प्रयोगसमवेतार्थस्मारकत्वनिर्बन्धाभावात् यः कोऽप्यर्थ इष्येत, तदा महाभाष्याद्युक्तार्थ-

म्यात् यथाकथंचित्सारूप्यात् तद्रूपत्वमारोप्य अर्थ वाद(?) इत्यर्थकः। अत एव हि भगवान् पतंजलिः स्वाभिमतं शब्दतत्वं स्तुवानो नामाख्यातोपसर्गनिपातादिमुखेन संख्यानिवेशात् सारूप्यारोपणेन इममेव मन्त्रमनुसन्दधानः पुनरस्य विवक्षितं स्वेष्टमर्थं कल्पयामास। अस्य च मन्त्रस्यायमर्थः "यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्वतैः" इत्यादिप्रसिद्धो योऽसौ यज्ञपुरुषः, अस्य च आग्नेये पुरुरूपे चत्वारि शृंगाणि, त्रयः पादाः, द्वे शीर्षे, सप्त हस्ताश्च। त्रिधाबद्धः-अग्नित्रयरूपेण यायजूकैर्बद्धः।

---

परतापि स्यात्। तदा च शृंगादिपदमवयवव्युत्पत्त्या गौण्या वा तत्तदभिमतार्थपरम्। तथा च सूत्रे अभिधाने इति सप्तमीनिर्देशात् अभिधानपक्षवत् गौणार्थपरत्वपक्षोऽपि लभ्यते। सर्वथा अर्थवाद एव अर्थपर एव, न तु निरर्थक इत्युक्तं भवति। अत एवेति। शक्यत्वात् प्रयोगासमवेतार्थपरत्वस्यापि संभवादेवेत्यर्थः। तर्हि कथं वार्तिके अग्निभूतसूर्यपरत्वेन व्याख्यानम्। उच्यते। अत्र शाबरम्, चतस्रो होत्राः शृंगाणीवास्य। त्रयोऽस्य पादा इति सवनाभिप्रायम्। शीर्षे पत्नीयजमानौ। सप्त छन्दांसि। त्रिधा वेदत्रयेण। वृषभः वर्षुकः, मर्त्यान् आविवेश। मनुष्याधिकारत्वादित्येवम्। वार्तिकोक्तमग्नेरादित्यरूपेणस्तुतित्वम्—दिवसस्य चत्वारो यामाः। त्रयः शीतोष्णवर्षाकालाः। द्वे अयने। अश्वाः सप्तेति। तत्र—'त्रयोऽस्य पादाः' इति अस्येति निर्देशात् प्रयोगान्वयिवस्तुपरत्वौचित्यात् आग्नेयो मन्त्र इति प्रसिद्ध्या चैवमिति वार्तिकाशयः। अत्रापि शीर्षत्वादिकं कल्पनारूपम्। अकल्पितं वास्तवमर्थं तु स्वयमाह, अभिधाने इति सौत्रपदस्वारस्यं मनसिकृत्य 'अस्य च मन्त्रस्यायमर्थः' इत्यादिना। अत्राग्न्यन्वयिनः केचित्, अन्तर्याम्यन्वयिनश्चान्ये इति मन्तव्यम्॥

क्रियादिरूपेण वा त्रिधाऽवस्थितः । **वृषभः**—वृषभसमानावयवत्वात् । नरसिंह-महावराहादिवत् । अर्थिनां पुरुषार्थान् वर्षतीति वा । **रोरवीति**-श्रुतिमुखरमुखत्वात् । तथा च श्रूयते (बृ-उ 4.) "तस्य हवा एतस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदः" इति । **महाभारते** यज्ञानुबन्धिरूपान्तरप्रदुर्भावे पठ्यते—"ओंकारमुद्गिरन् वक्त्रात् सावित्रीं च तदन्वयात्" इति । **महोदेवः**-महान्-सर्वातिशायी; महनीय इति वा । यद्वा-**महः**-उत्सवः-यज्ञरूपशास्त्रीयोत्सवाधिदैवतत्वात् । **देवः**-जगद्व्यापारादिभिः शास्त्रीयैश्च स्वाराधनरूपैः कर्मभिर्दीव्यन् । मर्त्यान्-यज्ञाधिकारिणः पुरुषान् । आविवेश-"ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतम्" इति न्यायेन परिकरान् अध्यतिष्ठदिति ।

नन्वपांसूक्ते पठितोऽयं मन्त्रोऽदेब्वत्यः प्राप्तः, "समुद्रादूर्मिः' इत्यपां सूक्तमेकादशर्चकम्" इति स्नाने **शौनकेन** विनियुक्तश्चेति नैतादृशार्थपर इति चेन्न ;-पुरुषस्यैवापाम्पतित्वात् । यथोक्तं **स्नानयाज्ञवल्क्ये**-"प्रणवं वा त्रिरभ्यस्येत् स्मरेद्वा विष्णुमव्ययम् । विष्णोरायतनं ह्यापः स ह्यपाम्पतिरुच्यते ॥" इति । अतः स्नानेऽस्य विनियोगोऽप्युपपन्नः। अपां च विष्णुना सनाथतया पावनतमत्वादिलक्षणा प्रशस्तिर्दर्शिता भवति । न चान्यस्य कस्यचित् अप्स्वरूपानुबन्धिन एवं रूपमस्ति । अतोऽत्र रूपविशेषवत्परमात्मप्रतिपादकत्वं नानुपपन्नम् ।

---

**ननु तदर्थशास्त्रादित्यस्य अर्थवादो वेति सूत्रपर्यन्तैश्चतुर्भिः परिहारः। अथैकैकेन एकैकसूत्रपरिहारे क्रियमाणे अचेतनेऽर्थबन्धनादिति सूत्रमपरिहृत्य अर्थविप्रतिषेधादित्येतत्परिहार उपरि**

यत्पुनः "अचेतनेर्थबन्धनात्" इत्युक्तम्, तत्र साक्षादुत्तरस्य शारीरके समर्थनीयत्वादुक्तन्यायेनार्थवादत्वस्य सुवचत्वाच्च न [तत् ?] पृथक्सूत्रेण पर्यहार्षीत्। अचेतने हि चैतन्यारोपणेन स्तुतिः। यथा चेतनेषु तत्तत्सामर्थ्यद्वारा तत्तत्कार्यसिद्धिः, एवमचेतनेष्वपीति चेतनत्वोपचारः। साक्षादुत्तरं तु—सर्वं हि वस्तुजातं तत्तदभिमानि-देवताविशेषैरधिष्ठितं तत्तदात्मकत्वेन एकया वाचा निर्दिश्यते, अतस्तत्संबोधनादिकमुपपन्नमिति। "मैनँ हिँसीः" इत्यादिकमपि तत्तद्द्रव्यशरीरकचेतनपीडाहेतुत्वपरिहाराभिप्रायेण ॥ ४६ ॥

अर्थ[वि]प्रतिषेधं परिहरति—

4. सू. गुणादविप्रतिषेधः स्यात् ॥ १-२-४७ ॥ (सि-८)

अयमर्थः-यत्र निपुण निरूपणे विरोधो नास्ति, तत्र न किंचित्

---

कथमित्यत्राह यत् पुनरिति। अचेतनेऽर्थबन्धनस्यापि अविद्यमानव-चनविशेषरूपतया अभिधानेऽर्थवाद इति सूत्रमेवोभयार्थम्। देवतागतशृंगादिवास्तवार्थाभिधानपक्षे अचेतनवाचिपदैरभिमानि-देवताविवक्षा शारीरकवक्ष्यमाणरीत्या भवतु। अशृंगे शृंगत्वारोप इव अत्रापि चैतन्यारोपो वा भवत्विति भावः।

47. सूत्रे अविप्रतिषेधपदसद्भावात् अर्थविप्रतिषेधादिति सूत्रस्येदमुत्तरमिति स्पष्टम्। अदितिर्द्यौरिति प्रथममुदाहृतं शाबरे, अथ रुद्रवाक्यम्। तत्र प्रथमस्योत्तरं गुणादिति। गौणार्थस्वी-कारादित्यर्थः। माणवके सिंहत्वाद्यारोपवत् अदित्यां द्युत्वाद्यारोप इति। रुद्रवाक्येऽप्येवमारोपविवक्षेति न मन्तव्यमिति प्रथमं तदाह यत्रेत्यादिना। एकत्वशतत्वयोर्विरोधः देवताविग्रहस्वीकारात्

कर्तव्यम्, यथा-"एक एव रुद्र" इत्यादौ। अत्र हि न रुद्रनानात्वं व्युदस्यते। न च रुद्रेतरन्निषिद्ध्यते। नापि रुद्रतुल्यमितरन्नास्तीत्युच्यते। अपितर्हि कर्मविशेषस्यैव रुद्रदेवताकत्वमुच्यते, "आखुस्ते रुद्र! पशुः तं जुषस्व" इति वाक्यशेषानुसारात्। तथा च शाबरम्-"एकरुद्रदेवत्ये [कर्मणि] एको रुद्रः, शतरुद्रदेवत्ये शतं रुद्रा इत्यविरोधः" इति। यत्र तु मुख्यार्थे विरोधः स्फुटः, यथा-'अदितिर्द्यौ रदिति रन्तरिक्षम्' इत्यादौ, तत्र गुणादविप्रतिषेधस्स्यात्, एकस्मिन्नेव 'नरपतिरेव सर्वलोकः', त्वमेव मे माता पिता च' इत्यादाविवोपचारादविप्रतिषेधस्स्यात्। यत्पुनः—"पुरुष एवेदँसर्वम्" इत्यादि, तत्र विप्रतिषेधादिप्रसंगाभावः

---

ब्रह्मानुग्रहेण तपोबलेन एकस्य रुद्रस्यैकादशत्ववत् शतत्वादेरपि संभवात् सुपरिहरः। 'नद्वितीयोऽवतस्थे' इत्यपि अनेकरूपग्रहणप्राक्कालीभिप्रायेणेति सुवचम्। अथापि प्रकरणं प्रदर्श्य यथाशाबरं प्रकारान्तरेण निर्वहति कर्मविशेषस्यैवेति। एको रुद्रो न द्वितीयोऽवतस्थे,।' 'शतं रुद्राः' असंख्याताः सहस्राणि ये रुद्रा अधि भूम्याम् इति मिथो विप्रतिषेधोदाहरणमुक्तं शाबरे। एतत्परिहारश्चेह तत्रैवमिति भावः। आखुस्ते रुद्र/ पशुरिति रुद्रयज्ञद्रव्यता मूषिकस्योक्तेति एकरुद्रदेवत्यं शतरुद्रीयादाविवानेकदेवत्यत्वाभावात् न द्वितीय इत्युक्तमिति। तथा च सूत्रे गुणात्—एकस्यैव रुद्रस्य गुणात् गुणनात् बहुभावात्, एकत्वविशिष्टतया शतत्वादिविशिष्टतया च तत्र तत्र कर्मणि रुद्रदेवताया गुणभावादविप्रतिषेध इति। पुरुष एवेदं सर्वमिति वाक्यं शाबराद्यनुदाहृतमपि स्वयंप्राकु अर्थेविप्रतिषेधसूत्रोदाहृतमिति यत्पुनः इत्यादिवाक्यतो ज्ञायते।

स्थाने समर्थयिष्यते । अर्थवादोक्तगुणवादसमानयोगक्षेमत्वेऽपि मन्त्रेषु पुनरभिधानं मन्दमतीनां प्रतिसन्धानार्थम् ॥ ४७ ॥

यदुक्तं स्वाध्यायस्वरूपवत् अर्थज्ञाने संरम्भो न दृष्ट इति, तत्राह—

4. सू-विद्याऽवचनमसंयोगात् ॥ १-२-४८ ॥ (सि-९)

स्वाध्यायग्रहणकाले अर्थज्ञानाकरणं तदानीं कर्मभिरसंयोगात् । न ह्यध्ययनदशायामेव ज्योतिष्टोमादीनि कर्माण्यनुष्ठेयदशापन्नानि, येन तदानीमेव तत्तन्मन्त्रैरर्थप्रकाशने प्रयतेमहि । पश्चात्तु मीमांसमानैः भाव्यनुष्ठानोपकारायार्थज्ञानं सम्पाद्यते । 'न च तत् पूर्वं शक्यम्' इति शास्त्रादौ दर्शितम् । अथ तदानीमपि किमर्थमर्थज्ञानं नाभ्यस्यन्तीति चेत्—पटुतरज्ञानाभावादिति वदामः । भवादृशैस्तु पटुतरप्रज्ञै-

---

गुणवादस्तु (10) इत्यर्थवादाधिकरण सूत्रोक्तरीत्या निर्वाह-संभवात् कथं चोद्यं परिहारश्चेत्यत्राह अर्थवादेति । 47.

48. ननु अनुष्ठानकाले स्मृतिरपि संस्कारपाटवाद्वक्तव्येति पूर्वं मन्त्रार्थानुभवः कुतो न कृत इति प्रश्नं परिहरति अथेति । पटुतरज्ञानेति । तस्याध्ययनानन्तरभाविमीमांसाधीनत्वादिति भावः। मीमांसानिरपेक्षपटुतरज्ञानसंपन्नपुरुषविषये प्रश्ने किमुत्तरमित्यत्र, सकृदुपदेशात एव स्वाध्यायग्राहिपुरुषविषये स्वध्यायमन्त्राभ्यासोऽपि किमिति यथेति समाधिः। विद्यावचनमित्यत्र विद्याया अवचनमिति विग्रहः । ज्ञानस्य कर्मानुष्ठानार्थत्वस्येष्टत्वात् असंयोगादित्यस्य तदानीं कर्मणा संयोगाभावादिति, यथावस्थितज्ञानस्याजातत्वादिति च अर्थो ग्राह्यः । स्वकृतव्याख्यानान्तररीतौ तु विद्या अर्थज्ञानम् ; तदर्थमेव वचनम् , न तु मन्त्रयथावस्थितरूपप्रदर्शनार्थम् ; अध्ययनकालगृहीतस्वरादिसंयोगस्यानुष्ठानकाले अभावादित्येवमर्थः स्यात् ॥

र्थज्ञानवत् स्वाध्यायोऽपि सकृदेव गृह्यत इति किं तत्र न चोदयसि? अतो विषयानुरूपमधिकारानुरूपं च द्वयोरपि संभव एवेति ॥ ४८ ॥

यत्तु केषु चित् मन्त्रेष्वर्थज्ञानानुदयादप्रामाण्यमुक्तम्—तत्राह-

4. सू-सतः परमविज्ञानम् ॥ १-२-४९ ॥ (सि-१०)

"सृण्येव" इत्यादिमन्त्रेष्वपि प्रतिपाद्यत्वेन सत एवार्थस्य केवलमव्युत्पन्नानामविज्ञानम्। न च तावता निरर्थकत्वम्; पुरुषाणां प्रेक्षाव्युत्पत्त्योस्तारतम्यात् अनियमेन सर्वेष्वपि वाक्येष्वविज्ञातार्थतया प्रामाण्यभंगप्रसंगात्। अत एव स्वयमपरिज्ञानात् सर्वैरप्यविज्ञेयत्वं कल्पयितुं न शक्यम्। जानन्ति तावत् महर्षयः, तदुपदेशात् पारम्पर्याच्च वयमपि तथा ॥ ४९ ॥

---

49. अविज्ञेयादिति पूर्वपक्षस्योत्तरम् सत इति। परम् अविज्ञानम्—अर्थज्ञानाभावमात्रम्, न त्वर्थाभावः। 'अम्यक्सात इन्द्रऋष्टिरस्मे' इति मन्त्रः अगस्त्यकृतेन्द्रप्रार्थनारूपः। हे इन्द्र ते अम्यक्-सहस्थिता (अमाशब्दः सहार्थकः। सहाञ्चतीत्यर्थे अम्यक्-पदम्) सा प्रसिद्धा ऋष्टिः पाणिक्षेप्यायुधविशेषः अस्मे-धनकांक्षिणामस्माकमिति तदंशार्थः। 'सृण्येव जर्भरी तुर्फरीतु' इति मन्त्रः अश्विदेवतास्तुतिरूपः। भूतांशो नामर्षिर्जरामरणनिवृत्त्यर्थं तावस्तुतेति तत्रैवान्ते लक्ष्यते। सृणिः-अंकुशः। सृण्यौ-अंकुशार्हौ मत्तगजाविव स्थितौ, जर्भरी-जृम्भमाणौ, तुर्फरीतू-हिंसन्तौ इति तदंशार्थः। इन्द्रः सोमस्य काणुका। मकारस्थाने वर्णव्यत्ययः। कामुकेत्यर्थः। आकारश्छान्दसः। सोमस्य पूर्णानि सरांसि—पात्राणि काणुका-कामयमान इन्द्र इति तदर्थः। पूर्णमन्त्रानुपूर्वीतदर्थादि वार्तिके द्रष्टव्यम्। धातुपरिशीलनेन निगमनिरुक्तव्याकरणादिना तदभिज्ञ-महर्षिवचनाद्वा यथावदर्थग्रहणमिति। 49

4. सू-उक्तश्चानित्यसंयोगः ॥ १-२-५० ॥ (सि-११)

प्राक्तनानित्यसंयोगविवक्षायाम्, 'प्रागेव प्रवाहयुक्त्या परिहार उक्तः' इत्यर्थः । जनपदनगरादयोपि श्रुतिसिद्धास्तत्तन्नामादिविशिष्टाः प्रवाहानादयः । यदा तु मन्त्राणामनियतार्थयोगित्वमनित्यसंयोगोऽभिमतः, तदा विध्युक्तोऽयमनित्यसंयोगो विधिबलादेव स्वीकार्य इत्यभिप्रायः ।

एतदुक्तं भवति—एकैको मन्त्रो यत्रयत्रानेकेष्वर्थेषु विनियुज्यते, तत्र सर्वत्र प्रकाशनाय प्रयतताऽपि (तामपि) । यत्र मुख्यार्थो न बाध्यते, तत्र शक्त्या प्रवर्तते, तद्बाधे च उपचारतोऽवयवशक्त्या वेति सममत्र समाधानमिति ॥ ५० ॥

एवमविवक्षितार्थताहेतवः सर्वे परिहृताः ; अथ विवक्षितार्थत्वे हेतवश्च सन्तीत्युच्यते--

4. सू-लिंगोपदेशश्च तदर्थवत् ॥ १-२-५१ ॥ (सि-१२)

"आग्नेय्याऽऽग्नीध्रमुपतिष्ठते" इत्यादिषु या अग्न्यादिदेवता, तत्प्रतिपादनसामर्थ्येन च लिंगेन तदुपस्थानोपदेशो मन्त्रस्यार्थविवक्षाया-

---

50. अनित्यसंयोगादिति पूर्वपक्षिपदस्य प्राचीनव्याख्यात्रुकार्थपरत्वे, सूत्रे उक्त इति पदस्य, सोऽनित्यसंयोगः प्रागेव विचारित इत्यर्थः। स्वाभिमतार्थान्तरपरत्वे तु, अनित्यानाम्–अनियतानां नानाभूतानामर्थानां मन्त्रसंबन्धः उक्तः - विधिवाक्याभिमत इति नोपेक्ष्य इति । प्रयततापीत्यत्र पाठोऽन्यः स्यात् । अस्यैवेष्टौ तु, प्रयतता प्रयतत्वमपि, सर्वार्थप्रकाशनार्थं निष्कलङ्कत्वमपीति भाव्यम् ॥ 50

51. आग्नेय्येति पदं तावत् आग्नीध्रोपस्थाने मन्त्रान्तरस्मारकम्। आग्नेय्येत्यस्य अग्निशब्दघटितेन मन्त्रेणेति नार्थः। साऽस्य

मेवोपयुज्यते । योऽयं तद्धितप्रत्ययोपदेशः, सोपि तदर्थवत् मन्त्रेषु तदर्थेष्वेव । न हि अतदर्थेषु मन्त्रेषु तद्दैवतकस्तद्धितः । या तेनोच्यते सा देवतेति वा निरुच्यते । प्रधानतयोक्तिश्चात्र विवक्षिता । अन्यथा एकैकेषु मन्त्रेषु नानादेवताप्रसंगमात्रेण विशेषनिर्देशभंगप्रसंगात् । प्राधान्यं च अर्थविवक्षामन्तरेण न घटत इति प्रमाणतयाऽभ्युपगत-विनियोजकवाक्य नुसारेण मन्त्राणां विवक्षितार्थत्वसिद्धिरिति ॥ ५१ ॥

4. सू-ऊहः ॥ १-२-५२ ॥ (सि-१३)

ऊहश्च दृश्यमानो मन्त्राणामर्थविवक्षां साधयति । प्रकृता-वुद्दिष्टानां मन्त्राणां विकृतौ तत्तदुचितः प्रकृतिप्रत्ययाद्यूहो दृश्यते । यदि च प्रकृतौ अविवक्षितार्थाः मन्त्रा उच्चारणमात्रेणादृष्टार्था भवन्ति, विकृतावपि स्वयमविकृतास्सन्तः किमदृष्टाय न घटन्ते ? अथ प्रकृतौ अर्थप्रकाशनेनोपकुर्वन्ति, तदा यथोपदेशमुच्चारितैर्विकृतौ अर्थप्रकाशनासम्भवात् वचनाभावे चैन्द्रीन्यायानवतारादूहोऽर्थवान् ।

---

देवतेत्यर्थविहितदेवतातद्धितत्वात् अग्निरूपदेवताक-तत्प्रतिपादक-मन्त्रेणेत्येवार्थस्य वक्तव्यत्वात् । तथा च लिङ्गेन—देवताप्रतिपादन-सामर्थ्येन तद्धितप्रदर्शितेन क्रियमाण उपस्थानोपदेशः तदर्थवत्—तल्लिंगसंबन्धिदेवतारूपार्थविशिष्टं वाक्यमेव मन्त्रात्मकं गृह्णाति । न तु निरर्थकमन्त्रमिति सूत्रार्थः । तदर्थवत् इत्यत्र मतुप् अति-शायने प्रशंसायां वा । नानादेवताप्रतिपादनेऽपि यद्देवतास्तुतिरूपं तस्याः प्राधान्येन प्रतिपादकमित्युक्तं भवति । लिङ्गोपदेशपदेन तद्धितप्रत्ययमात्रग्रहणेऽपि तदर्थवत् इत्यस्य, सास्यदेवतेति तच्छब्दोक्तार्थविशिष्टमन्त्रमेव वक्तीत्यर्थः ।

ननु ऊहविधायकं न किंचिद्वाक्यं दृश्यते, न्यायेन चेत्—साध्येत, 'मन्त्राणां विवक्षितार्थत्वे न्यायेनोहः, न्यायसिद्धोहवलाच्च विवक्षितार्थता' इत्यन्योन्याश्रयणम् ॥ मैवम् , श्रुत्यैवोभयप्राप्तेः । तथाहि—"न माता वर्धते न पिता" इत्यूहप्रतिषेधस्तावत् प्रसक्तिमन्तरेण न घटते । विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वात् अन्यत्रोहोऽवगम्यते । कथमयमूहप्रतिषेधः ? इत्थम् । न ह्यत्र मात्रादीनामर्थानामवयवपुष्ट्यादिरूपा वृद्धिर्निषिध्यते, प्रत्यक्षविरोधात् । अतः प्रकृतमन्त्रस्थानां मात्रादिशब्दानां द्विवचनबहुवचनयोः सम्भवन्ती वृद्धिः ऊहात्मा निषिध्यते । अयं चोहो मन्त्रस्य विवक्षितार्थतया सर्ववस्तु(पशु?)विशेषणभूतमातापित्राद्युपादित्सायां प्रसक्तस्सन् प्रतिषेधमर्हति ।

ननु "न माता वर्धते" इत्यादौ न स्वयमूहः प्रतिषिध्यते ; किन्तु परार्थेषु मातृप्रभृतिषु सम्बन्धिभेदात् भिद्यमानेषु न्यायप्राप्तमनूह्यत्वं सिद्धमेवानूद्यते, अत ऊहस्य कथं श्रौतत्वमिति स्थितं मिथस्संश्रयणम् ॥ तन्न ; निष्प्रयोजनानुवादासम्भवात् । न्यायप्राप्तानूहानुवादस्य अनूहन्यायागोचरेषु स्थलेषु ऊहस्य शास्त्रीयताज्ञापनमेव प्रयोजनम् । तेन च प्रकृतौ विवक्षितार्थतामध्यवस्यामः ।

किञ्च "यद्यप्यन्यदेवत्यः पशुः, आग्नेय्येव मनोता कार्या" इति न्यायगोचरोऽनूहः संकीर्त्यते । इदमपि च प्रकृतावर्थविवक्षायामूहप्राप्तावेव स्यात् ॥ ५२ ॥

---

52. सर्ववस्तु इत्यत्र सर्वपशु इति पाठो वार्तिकानुसारात् औचित्याच्च युक्तः। अनेकपशुकस्थले मात्राद्यनेकत्वेऽपि न वचनान्तरं प्रयोक्तव्यमित्यर्थः । अन्यदेवत्य इति । अग्नीषोमरूप द्वन्द्वदेवताक-

4 सू-विधिशब्दाच(श्च?) ॥ १-२-५३ ॥ (सि-१४)

इतश्चार्थवन्तो मन्त्रा दृश्यन्ते। अयमस्य मन्त्रस्यार्थ इति विधानं ब्राह्मणं प्रायशोऽधीमहे-'इषेत्वोर्जेत्वेत्याह, इषमेवोर्जं यजमानो दधाति'' इत्यादिकम्। ब्राह्मणोक्तस्य च अर्थस्य वैशद्याय मन्त्राः संवाद्यन्ते- "तदेषाऽभ्युक्ता", "तदुक्तमृषिणा" इत्यादिभिः अप्रसिद्धं च मन्त्रस्थं पदं प्रसिद्धैः पर्यायैरर्थतोभिव्यक्ताः (क्तम्?) (व्यंक्तुम्?) अवयव-विभागादिना च निर्वक्ति निरुक्तं नामाङ्गम्। अविवक्षितार्थत्वे मन्त्राणां

---

त्वात् पशोः, अग्निमात्रदेवताकः 'त्वं ह्यग्ने प्रथमोमनोता' इति मनोतामन्त्रो न युक्त इति न मन्तव्यम्; स एव प्रयोज्य इत्युक्त्या लक्ष्यार्थं विनियोगोऽनुमन्यते। न चेदं वाक्यं निरर्थकत्वसाधकम्। तथा सतीदृशवचनवैयर्थ्यात्। 52

53. पूर्वसूत्रेष्विवात्रापि प्रथमान्तपाठ एव प्राच्यव्याख्या-ग्रन्थेषु दृष्टः। भाष्येऽप्यत्र पञ्चम्यन्तत्वगमकं न विशिष्य दृश्यते। विधिः विधानम् अर्थज्ञापनं तदर्थः शब्दश्चास्तीत्यर्थः। इषमिति। यतः इषे ऊर्जे इति इडूर्क्प्रतिपादकमन्त्रं प्रयुंक्ते ऋत्विक्, ततो यज-मान इषमूर्जं लभत इत्युक्त्याऽर्थपरत्वं मन्त्रस्य स्पष्टम्। इट् इष्टम्। ऊर्क्—अन्नम्। इषे इत्यादिमन्त्रः समुच्चित्य विभज्य च विनियुक्तो वत्सापाकरणार्थशाखाविषये, "इषेत्वोर्जेत्वेति तामाच्छिनत्ति" इति, "इषे त्वेत्याच्छिनत्ति, ऊर्जे त्वेति संनमयति अनुमार्ष्टि वा" इति च। आनन्दमयाधिकरणश्रीभाष्यसूक्ति मनसिकृत्याऽऽह ब्राह्म-णोक्तस्येति। अभिव्यक्ता इत्यत्र अभिव्यक्तमिति पाठ्यम्; अन्यथा वा।

विचित्रचित्रकाव्याद्यनुभाविनां 'जर्भरीतु' इत्यादावप्यर्थ-

कथमेतत्सर्वमुपपनीपत्स्यते ।

अयमभिप्रायः—मन्त्राणामर्थवत्त्वं व्युत्पत्त्यनुगुणया श्रुत्यैव कण्ठोक्तम् । अविवक्षितार्थता तु व्युत्पत्तिमर्यादामवधीरयद्भिस्तदर्थशास्त्रादिभिः कल्प्या । न ह्यर्थवत्त्ववत् अविवक्षितार्थत्वे कश्चिच्छब्दः । अतः तदर्थशास्त्रादयः सर्वे श्रुत्यैवापहृतविषया इति नाविवक्षितार्थत्वं साधयितुं प्रभवन्तीति ।

तस्मात् मन्त्राः प्रत्यक्षाद्यविरुद्धेष्वपूर्वेष्वर्थेषु अभिधया उपचारेण वा प्रमाणमिति सिद्धम् ।

78. ब्राह्मणैर्विधिशेषैस्तु मन्त्रार्थप्रतिपादकैः ।
अर्थप्रणाड्या मन्त्राणामङ्गयकार्युपकारिता ॥

79. विध्येकवाक्यताशून्या मन्त्राः क्वचिदपि स्थिताः ।
तथापि स्वार्थबोधेनानुष्ठानस्योपकुर्वते ॥

80. स्वापेक्षितार्थबोधेन प्रयोगक्षणभाविना ।
मन्त्रेण सहसा लब्धे नान्यो हेतुरपेक्ष्यते (गवेष्यते) ॥

81. अतोऽध्ययनसंसिद्धमन्त्रार्थस्मृतिपूर्वकम् ।
अनुष्ठेयं तदर्हैस्तदिति शास्त्रार्थनिश्चयः ॥

---

चिन्ता स्वरसत एव भवेदिति नूनं शब्दप्रामाण्यसिद्धस्यैवार्थवत्त्वस्य स्थूणानिखननन्यायेन स्थापनार्थमिदमधिकरणमित्याशयेनाऽऽह अयमभिप्राय इति ।

लब्धे—हेतुलाभादनुष्ठाने सिद्धे । अनुष्ठेयमिति । मन्त्रेणैव स्मर्तव्यमिति नियमसिद्धिरेकं फलमिति भावः ।

४२. परापरसमाख्यातदेवतावैभवेषु च ।
समर्थयिष्यमाणेषु सफलेयमिति(मधि ?)क्रिया ॥

४३. यद्वृत्तप्रमुखैर्येषां विधिशक्तिर्न हन्यते ।
तेषां विधिपरत्वं च मन्त्राणामिह सिद्ध्यति ॥

इति मन्त्राधिकरणम् ॥ ४ ॥

४४. पुमर्थशासने (साधने ?) विभोः प्रशासनानुवर्तिनि ।
प्ररोचनप्रकाशनप्रकार एवमाहितः ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेंकटनाथस्य वेदान्ताचार्यस्य कृतिषु
सेश्वरमीमांसाख्ये धर्ममीमांसाभाष्ये
प्रथमस्याध्यायस्य
द्वितीयः पादः ॥ २ ॥

—:○:—

(एतावदेवोपलभ्यते)

---

समर्थयिष्यमाणेष्विति । देवताकाण्ड ब्रह्मकाण्डयोरपीति शेषः। इतिक्रियेत्यत्र अधिक्रियेति पाठ्यम् । इयमधिक्रिया—इदमधिकरणम्। यद्वृत्तेति यच्छब्देत्यर्थः। ते च मन्त्राः "वसन्ताय कपिञ्जलान् आलभेत" इत्यादयः। पादार्थं पद्यन संगृह्णाति पुमर्थेति पुमर्थसाधनकर्मविषयं प्ररोचनमर्थवादैः, प्रकाशनं मन्त्रैरिति ।

1 औत्पत्तिकप्रभृतिभिः स्वगुरुं प्रकाश्य
श्रीबादरायणमशेषविचारलग्नः ।

श्रीजैमिनिर्हृदि कथं मनुतां विरुद्धं
व्याख्यातृभिः स्वयमकल्पि तदग्रहेण ॥

2 यदिदमिह विरुद्धं व्यक्तशारीरकोक्तेः
यत् इतरदपि सूत्राञ्जसादूरं परेष्टम् ।
अखिलतदपनोदादर्थ्यपथ्याखिलार्थ्या
श्रुतिशिखरगुरूक्तिः शोधिता यावदाप्ता ॥

3 लब्धे पादद्वयेऽस्मिन् नयपदरचनारीतिरन्या बहुल
व्याख्या सूत्रेष्वनेकेष्वितरगतिमुपेक्ष्याऽऽदृताऽन्यान्यरूपा ।
सूत्राणां भेदकॢप्तिः क्वचिदनभिमता कॢप्तमैक्यञ्च नेष्टम्
भाष्यं तद्वार्तिकञ्च स्फुटमनुसरतैवार्थदोषोऽप्यदर्शि ॥

4 निर्माय ग्रन्थमेतं बहुकृतिकरणादस्य पूर्तिः स्थितैव
प्रज्ञा श्रद्धा च शिष्येष्वपि न, यत इमे शीघ्रमन्तेऽरमन्त ।
कालेऽस्मिन् शास्त्रलोपः स्फुट इह सुतरां तन्त्रलोपस्तदेत-
त्प्राप्तिप्रत्याशया किं दृशिपदमुपरि त्वत्र यन्नैतदस्य ॥

5 इत्थं शाबर-वार्तिक तद्व्याख्याकाशिकादिकृतिदर्शी ।
सेश्वरमीमांसायाः भूषां सूक्ष्मार्थटीकयाऽकार्षम् ॥

6 श्रीरङ्गलक्ष्मणमुनेः शिष्ये श्रीवीरराघवे सुधियि ।
सेश्वरमीमांसेयं कुरुतां मयि पादुकाप्रसादमपि ॥

इति अभिनवदेशिकवात्स्यवीरराघवाचार्यविरचिता
सेश्वरमीमांसायाः सूक्ष्मार्थटीका ॥

शुभमस्तु ।

श्रीः

श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्ताचार्यविरचिता

# मीमांसापादुका

1. यस्य श्रीर्नित्यहृद्या निरुपधिगृहिणी नन्दतिच्छन्दवृत्त्या
यस्यापत्यं प्रजेशप्रभृति विहरणं यस्य विष्वक् परार्थम् ।
लीलाभोगापदेशव्यतिभिदुरमिदं यस्य विश्वं विभूतिः
सत्तासिद्धानुकम्पानिधिरवतु स नः सप्तलोकीगृहस्थः ॥

श्रीः

श्रीमल्लक्ष्मणयोगीन्द्र सिद्धान्तविजयध्वजम् ।
विश्वामित्रकुलोद्भूतं वरदार्यमहं भजे ॥

## परित्राणम् (व्याख्या)

श्रीमत्त्रय्यन्तसिद्धान्तदेशिकेन्द्रस्य सूनुना ।
वर्ण्यते वरदार्येण मीमांसापादुकान्वयः ॥

यस्येति । आचार्यः खलु श्रीमद्रामानुजाचार्यप्रणीतां शारीरक-सिद्धान्तप्रक्रियामभिरक्षितुं पुनः सेश्वरमीमांसामास्थाय शाबरादिभाष्य-व्यावृत्तं बोधायनवृत्त्यनुसारि भाष्यमपि व्यरचयत् । एतैः खलु पद्यैः सर्वाधपादार्थं सङ्गृह्योपदेक्ष्यन् तत्रादिममिदं प्रारिप्सितस्य प्रबन्धस्य अविघ्नपरिसमाप्त्यादिसिद्ध्यर्थं मङ्गलमाचष्टे । तत्राशेषजगत्पतेः श्रीपतेः आजानसिद्धकरुणापरिणामरूपेण, अन्तेवासिनाम् अन्येषामपि

श्रोतॄणामभिमतपुरुषार्थोपलम्भनेनाभिधीयमानेन अर्थात् आत्मनोऽप्या-शिषमाशास्ते । गृहस्थपदं रक्षणं सहजमेवेति द्योतनार्थम् ॥

श्रीः

## सत्पथसञ्चारः (व्याख्यान्तरम्)

वन्देय श्रीहयास्यं विधिहितविधये नष्टवेदोपदिष्टये
लब्धाविर्भावमादौ सुरमुनिविनुतं सर्वविद्याधिदेवम् ।
योऽसावुद्वेलदृप्यत्कलिपुरुषबलक्षुब्धलोकान्धकार-
क्षिप्त्यै देवो गुरुश्च श्रुतिविहृतिपरो वेंकटेशोऽजनिष्ट ॥

श्रीरङ्गलक्ष्मणमुनीन्द्रकटाक्षलब्ध-
श्रीवीरराघवसुधीर्विहितावधानः ।
निर्णीय मेयमिह सेश्वरतन्त्रकृत्याः
तत्पादुकान्वयगतिं यतते विवेक्तुम् ॥

श्रीमदाचार्यकुमारपादानुगृहीतात् परित्राणतः, सेश्वरमीमांसातः पश्चादियं पादुका प्रादुरभूदिति बुध्यते । मीमांसायाः पादमेकमञ्चति इयं पादुका । मीमांसापादुकाशब्दार्थः 171 श्लोके अक्षोचे-त्यादिना वक्ष्यत एव । तत्रेदं मङ्गलमाशीरूपमादौ निबध्यमानं यस्ये-त्यादि । गृहस्थधर्मभूयिष्ठकर्मकाण्डारम्भे श्रियःपत्युर्गृहस्थतयाऽनु-संधानं प्राप्तरूपम् । तत्रापि श्रियमादाय गृहस्थत्वं निरुपाधिकम् । यस्येत्येतत् हृद्या, गृहिणी, वृत्त्या इति पदेष्वन्वेति । श्रीर्यस्य भगवतो नित्यं हृद्या हृद्गता प्रिया वक्षस्स्थलस्थिता च; निरुपधि-गृहिणी । सर्वत्र गृहिणीत्वं सादि भंगुरमिति स्पष्टम् । भूमिनीलादीनां

गृहिणीत्वं अनादित्वाविशेषेऽपि लक्ष्मीसंकल्पायत्तत्वात् सोपधिकम्; लक्ष्म्यास्तु गृहिणीत्वं न तथाऽन्याधीनम्। 'यस्या वीक्ष्य मुखं तदिङ्गित-पराधीनः' इत्युक्तरीत्या भगवद्व्यापारान् स्वच्छन्दानुगुणमेव भवतः श्रीर्दृष्ट्वा नन्दति। स्वयं च स्वेच्छयैव स्वव्यापारान् तदानन्दनान् विधायैवं नन्दति। **प्रजेशः** ब्रह्मा; तत्प्रभृति सुरनरतिर्यक्स्थावरात्मकं सर्वं यस्यापत्यम्। यस्य **विष्वक्** व्यूहविभवादि विविधं **विहरणम्** अवतारः **परार्थम्**–'जगतामुपकाराय', 'धर्मसंस्थापनार्थाय' इत्युक्तरीत्या जीवार्थम्; परमप्रयोजनकञ्च। **लीलेति भोगेति** च विशेषणनिर्देशेन मिथोव्यावृत्ततया सिद्धं प्राकृताप्राकृतवस्तुसमुदायात्मकं सर्वं यस्य **विभूतिः** नियन्तव्यपराग्वस्तु। **सत्तासिद्धायाः–सत्तया** भगवत्स्वरूपेण सह तत्सद्भावातिरिक्तकारणमनपेक्ष्य सिद्धायाः। सहजाया इति यावत्। **अनुकम्पायाः** दयायाः निधिः। सप्तलोकी अस्य गृहस्थस्य गृहम्। पुत्रपौत्रादीनां स्थानानि परिकल्प्य तत्रतत्र श्रिया सह नानावतारपरिग्रहेण कुटुम्बभोगमनुभवन् अयं सप्तलोक्यन्तर्गतानां सर्वैहिकामुष्मिकफलानामपि मोक्षस्येव दाता तदर्थकर्मप्रतिपादकमीमांसाशास्त्रयथावस्थितार्थग्रहणपरान् निरीश्वरपक्षदूरान् वः, युष्मभ्यं सेश्वरपक्षव्याख्यापरं माञ्च इष्टप्रापणेन परिपालयत्वित्यर्थः। गृहस्थस्य च स्थितिं श्रुतिरेवं दर्शयति—(बृ-उ. 3-4.) "आत्मैवेदमग्र आसीदेक एव। सोऽकामयत जाया मे स्यात्। अथ प्रजायेय। अथ वित्तं मे स्यात्। अथ कर्म कुर्वीयेति। एतावान् वै कामः। नेच्छँश्चन अतो भूयो

विन्देत् । तस्मादप्येतर्हि एकाकी कामयते, जाया मे स्यादथ प्रजायेय अथ वित्तं मे स्यादथ कर्म कुर्वीयेति । स यावदप्येतेषामेकैकं न प्राप्नोति, अकृत्स्न एव तावन्मन्यते" इति ॥

२. यस्मादस्माभिरेतत् यतिपतिकथितप्राक्तनप्रक्रियोद्यत्—
कर्मब्रह्मावमर्शप्रभवबहुफलं सार्थमग्राहि शास्त्रम् ।
तं विष्वग्भेदविद्यास्थितिपदविषयस्थेयभूतं प्रभूतं
वन्देयाऽऽत्रेयरामानुजगुरुमनघं वादिहंसाम्बुवाहम् ॥

प. एवं परमगुरुकीर्तनानन्तरम् अभीष्टफलस्य सहसैव सिद्ध्यर्थं पूर्वाचार्यानुष्ठानक्रमेण गुरुवन्दनमप्यभिधातुमभिसन्धत्ते यस्मादिति । अस्मिन् पद्ये खल्वाचार्यः विद्याप्रदानस्य सर्वोपकारविलक्षणत्वं बहुफलत्वं स्वाचार्यस्य समस्तविद्यास्थानस्थेयरूपत्वेन सर्वविद्वज्जनाधिकत्वं परमभागवतात्रिकुलसम्भवेन विष्णुभक्तकुलधौरेयत्वं, अन्यस्यानन्य-साधारणमाधिक्यमाचष्टे । वादिहंसाम्बुवाहमित्याचार्याणां श्रीमद्रामा-नुजसिद्धान्तप्रवर्तकसकलाचार्यदत्तं परपक्षप्रतिक्षेपसामर्थ्यप्रकटनप्रकटी-कृतसमस्तजगदुपकारमन्वर्थं नाम ॥ 2

स. पूर्वमीमांसाव्याख्यानप्रक्रिया स्वयमिह प्रदर्शयिष्यमाणा यन्मूलं स्वयमवधृता, तं साक्षात् स्वगुरुं प्रकाशयन् प्रणमति यस्मादिति । तस्य अद्वितीयत्वज्ञसये एकवचनम् । स्वेन सह बहुभिस्ततोऽधीतत्वव्यञ्जनाय अस्माभिरिति बहुवचनम् । एतत् इदानीं व्याख्यातुं गृहीतम् । प्रकृताचार्याद् ग्रहणस्य स्थितं वैलक्षण्यं तस्य संप्रदायलाभरीतिश्च दर्श-

-यति **यतिपतीति** । **शास्त्रं** विंशत्यध्याय्यात्मकमिदम् । बोधायन-वृत्तिद्रमिडभाष्याद्यादृततया प्राक्तनी या प्रक्रिया, तया उद्यतः क्रमेण कर्म-ब्रह्मोभयविषयकात् **अवमर्शात्** विचारात् प्रभवन्ति बहूनि फलानि काम्यत्याग – नित्यनैमित्तिकग्रहण – भक्त्यर्थानुष्ठान–भक्तियोगादिसिद्धि प्रभृतीनि **यतिपतिना** श्रीभाष्यकृता कथितानि यस्य शास्त्रस्य ; तत् **सार्थं** अनेककुदृष्टिकथितार्थनिरासियथावस्थितार्थविशिष्टतया अग्राहि । प्रकृतत्वादेतत् विशिष्योक्तम् ; "रामानुजार्यादात्रेया-न्मातुलात् सकलाः कलाः । अवाप विंशत्यब्दे यः" इत्युक्तरीत्या तत एव सर्वविद्याग्रहणात् । तदिदं **यस्मा**दित्यस्य सर्वविद्यागुरोर्यस्मादित्यर्थ-बलात् सिद्धं पुनरपि स्फोरयन् विशिनष्टि **विष्वगि**ति । **विष्वग्भेदानां** नानाविधानां **विद्यास्थानानां** ये विषयाः तत्र **स्थेयभूतं** विवाद-पदनिर्णेतारम् । तत्तद्विद्यास्थानं विशिष्य तीर्णवन्तोऽप्येतदाश्रयणत एव तत्रतत्र संशयमपोह्य निर्णयं भजन्त इत्यर्थः। सांख्य-योग-बाह्य-कुदृष्ट्यादि-ग्रन्थानामपि संग्रहाय एवं वा विग्रहः—विष्वग्भेदानां विद्यानां यानि स्थितिपदानि स्थापकवाक्यराशयः तेषां प्रमेयस्य स्थेयभूतोऽयमिति । तत्रौचित्यानौचित्यविमर्शनैपुण्यं न्यायकुलिशादिकृतोऽस्यार्थसिद्धं बिरु-देनाप्याविष्कृतमिह । एतन्निर्णीतार्थान्यथाभावप्रसक्त्यभावदर्शि स्थेयभूतमित्यत्र **भूत**पदम् । **आत्रेये**ति । श्रीभाष्यकारादस्याऽऽत्रेयत्वं विशेषः ; अन्यत्र सर्वत्र साम्यमेवेति । **प्रभूतं**–सर्वकल्याणगुणप्रचुरम् । बिरुदमाह **वादिहंसाम्बुवाह**मिति । यथा हंसाः अम्बुवाहं वर्षन्तमसह-मानाः दूरं गताः पश्चात् तद्वृष्टं पय एव प्राप्य पद्मादिमरन्दास्वादनेन

लब्धजीवना:, तथा वादिन: क्रमेणैतदुदितार्थग्रहणेनैव लब्धोज्जीवना इति भाव: । अत्रैवं मङ्गलार्थं कृतज्ञतानुसंधानार्थं यथावस्थितप्रमेयाविर्भावार्थश्चाचार्यैः कृतमेवेदं पश्चात् शिष्यैः अनुसंधान(तनियन् )पद्यत्वेन गृहीतम्, यथा यतिराजसप्ततिगतानि पूर्वाचार्यविषयपद्यानि । आचार्यैः स्वयमध्ययनकालेऽनुसंहितं पद्यं त्वन्यत् स्यात् । अग्राहीत्यादिपदस्वारस्याच्च ॥ २ ॥

3. वेद्यं वेदैरशेषैर्विधितदितरयोर्विश्वमाज्ञापयन्तं
धर्मैराराधनीयं पितृसुरमुखतः शाश्वतं धर्ममेकम् ।
साङ्गाधीताक्षरौघस्वरससमुदितापातधीजातरागात् (रागाः १)
मीमांसेमहनन्तं व्यवहितवपुषं कञ्चुकैरुज्झितं च ॥

प. एवमनुष्ठितमङ्गलाचारः—श्रियः पतिरित्युद्देशस्यार्थतस्सिद्धत्वात् लक्षणचतुष्टयाभिधानपूर्वकं मीमांसाशास्त्रप्रधानाभिधेयं भगवन्तं परीक्षितुं परीक्षाप्रवृत्तिहेतुविशेषनिर्देशपूर्वकं प्रकाशयन् तद्विषये स्वात्मनः परीक्षाप्रवृत्तिं प्रतिजानीते वेद्यमिति । यथास्थानमत्र विविधवेदवेद्यत्वं नित्यनैमित्तिकादिरूपसकलधर्मानुशासनेन सकलधर्मप्रवर्तकत्वम् अग्नीन्द्रादिमुखेन स्वात्मना च सर्वधर्मसमाराधनीयत्वम्, "फलमत उपपत्तेः" इति सौत्रप्रक्रियया सर्वेषां धर्माणां फलप्रदत्वमित्येतानि खलु चत्वारि लक्षणानि । अनेन भगवतः पूर्वमीमांसितव्यत्वं सुव्यक्तम् । साङ्गाधीतस्य वेदस्य अङ्गाध्ययनसामर्थ्यात् संस्कृतप्रायदेशवासाच्च प्रयोजनवदर्थापातप्रतीतौ मीमांसारम्भ इति हि सेश्वरमीमांसकानां सम्प्रदायसमधिगतोऽयं

निर्णयः । व्यवहितवपुषमिति अग्नीन्द्रादिमुखेन भगवदाराधनम्, कञ्चुकैरुज्झितमिति साक्षाद्भगवदाराधनमिति विभागः । सर्वत्र हि वेदे व्यवधानाव्यवधानाभ्यां विष्णुरेव यष्टव्यः इति वेदविदां निर्णयः । अत एवोच्यते, "वेदाः विप्राः केशवश्चैकराशिः" इति । वेदाः प्रमाणम्, वेदितारश्च ब्राह्मणाः, वेद्यं विष्णुरित्यैकराश्यं भवति । 8:

स. अथाचार्योपदिष्टरीत्या मीमांसनमारभते **वेद्य**मिति । धर्मजिज्ञासेत्यादिमसूत्रे धर्मपदेन ब्रह्मणोऽपि सनातनधर्मस्य ग्रहणमित्येतद् भवतु, मा वा । मनुधर्मशास्त्रदर्शितदिशा समाराध्यभगवच्छेषतयैव धर्मनिरूपणात् स्वाराधनमुखेन, आराध्यभूतस्वविभूतिमुखेन, स्वरूपेण च स भगवानेव मीमांसितुमिष्टः, तस्यैव सर्ववेदार्थत्वात् वेदरूपाज्ञाकर्तृत्वात् वेदवेद्यधर्माराध्यत्वात् तत्फलप्रदत्वाच्चेति भावः । **विधितदितरयोः** प्रवृत्तौ निवृत्तौ चेत्यर्थः । कुरु, मा कुरु इत्युभयमपि ईश्वराज्ञेति । **पितृसुरमुखतः** । 'हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक्' इत्युक्त्या देवमुखेन हव्यधृत्त्वात् पितृमुखेन कव्यधृत्वाच्च सर्वधर्माराध्यम् । येयजन्तीति स्मृत्या **मुख**शब्दः प्रभृतिवाची वा । पितृतो देवतः तद्भिन्नातिथिप्रभृतितश्चाराधनीयमिति । **शाश्वतं धर्ममेकम्** । पितृसुरगणे निर्वेशात् प्रागपि प्रलयं गते तद्देयफलप्रदत्वात्, कृष्णं धर्मं सनातनमित्युक्तरीत्या च साक्षात्फलहेतुतया सिद्धोपायस्यास्य धर्मता । **मीमांसेमहि** विचारयेम । तत्र हेतुः रागः । स च न स्वाध्यायोऽध्येतव्य इति विधिनाऽर्थज्ञानोद्देशेनाध्ययनविधानात् विचारस्यापि वैधत्वमिति

कल्पनया विध्यधीनः । तद्विधेः अक्षरराशिग्रहणार्थमेवाध्ययनविधायकत्वात् । [अतो वेदेन सह अङ्गानामप्यधीततया आपातज्ञानस्य स्वत एव जातत्वात् तत एव । धर्ममेकमिति । धर्मत्वेन मीमांसा कर्मकाण्डे, देवताव्यवहिततया मीमांसा संकर्षे, देवतारूपकञ्चुकत्यागेन साक्षान्मीमांसा शारीरके । यद्वा कञ्चुकैर्व्यवहितवपुषमिति षोडशाध्याय्यभिप्रायेण । धर्मतच्छेषद्रव्यदेवतादेः सर्वस्य कञ्चुकत्वात् । कञ्चुकोच्झनेन साक्षात्तु प्रायः शारीरके । व्यवहितवपुषमित्यस्य व्यवहितस्वरूपमिति, व्यवहितमित्येतावानेवार्थः ; न तु कञ्चुकपरमात्मस्वरूपयोर्मध्ये वपुरेकं प्रवेश्यम् ॥ ३ ॥

4. निर्दोषाध्यक्षसिद्धं कथककुहनयाऽपह्नवार्हं न किञ्चित्
न्यायैः कस्यापि क्लृप्तैः कथमपि न भवेदन्यथासिद्धिमद्भिः ।
निर्बाधान्नापि वाक्यादवगतमनृतं निश्चितेऽप्यान्यपर्ये
निस्थूणेऽस्मिन् प्रमाणैः स्थिरमतिभवने भाति मीमांसितोऽर्थः

४. अतःपरं मीमांसाशास्त्रार्थविशेषनिर्णयार्थं निर्णायकानां प्रत्यक्षादीनां त्रयाणामपि प्रमाणानां निर्दोषप्रवृत्तिप्रकारमाचष्टे निर्दोषेति । त्रीणि प्रमाणानि प्रत्यक्षादीनि न्यायविद्भिरुपादीयन्ते । इतराणि तु पृथक् नोपादेयानि । ऐतिह्यं पुनः प्रमाण्यनियमे न प्रभवति । अत्र निर्दोषप्रत्यक्षप्रमाणसिद्धमर्थतत्त्वं परित्यजन्ति माध्यमिका वादिनः, मायाविनश्च । तत्त लोकविरुद्धत्वादनास्थेयमेव । तथा अन्यथासिद्धिमद्भिरपि न्यायैः कश्चित् कल्पयन्त्यौलूक्याः । अक्षपादपक्षपातिनोऽपि

तान् अनुसरन्ति तत्र तत्र । तत्तु वार्तम् । अनन्यथासिद्धं खलु साधनं तत्त्वप्रसाधने प्रभवति । तेन कक्षानुमानवत् उपेक्षणीयं तदिदमिति तान् प्रतिक्षिपन्ति विचक्षणाः । गुरुमतानुसारिणः पुनः अर्थवादादीनामन्यपरत्वात् स्वार्थे प्रामाण्यं स्वतःप्रामाण्यन्यायसिद्धमपि कात्स्न्येन्यथयितुमुद्युञ्जते । तत् स्वपक्षोन्मूलनाय जायते । "यन्न दुःखेन संभिन्नम्" इत्यादिकमर्थवादवाक्यं स्वार्थे प्रमाणमिति ह्युद्घोषयन्ति, भाट्टकाः(?) । इत्थं "प्रतितिष्ठन्ति" इत्यादिष्वर्थवादवाक्येषु प्रतिपन्नं फलं स्वीकरोति रात्रिसत्त्रविधिरिति हि तान्त्रिकाणां नियन्त्रणा । तथा अपगोरणाशतयातनासाध्यसाधनभावादिरप्युदाहर्तव्यः । तेन अन्यपरमप्यबाधितमुपयुक्तमर्थजातं मन्त्रार्थवादयोरपि सङ्ग्राह्यमिति तन्त्रगोष्ठीनिष्ठानां प्रतिष्ठितो व्यवहारः । तेन अन्यपरत्वेऽप्यबाधितमुपयुक्तं [सर्वत्र?] सङ्ग्राह्यमिति स्वेनैवोक्तं भवति । एवं त्रिभिः पादैः त्रयाणां प्रमाणानां प्रवृत्तिप्रकारमुक्त्वा, अन्तिमपादेन न्यायवासीतक्षणपरिकल्पितप्रमाणत्रयरूपस्थूणात्रयपरिकर्मिते स्थिरमतिरूपभवने शारीरकदेवताकाण्डसहितकर्मकाण्डसहस्राधिकरणपरिमितमीमांसाशास्त्रनिर्णीतोऽर्थः निस्सङ्कटमेव निर्भरं सर्वतो वर्तते इति मीमांसापरिशीलनशालिनां विशाला शेमुषी सर्वार्थसंरक्षणविधानकुशलेति स्तूयते ॥ 4

स. अत्र मीमांसायां प्रथमः प्रमाणाध्यायः । तत्र वेदस्य कात्स्न्र्येन प्रामाण्यं प्रतिष्ठाप्यते । प्रत्यक्षानुमानयोर्लोकतो गौतमदर्शनतश्च सिद्धं प्रामाण्यं स्वीकृतमिति सत्संप्रयोगादिति सूत्रदर्शितम् । अतः प्रमाणत्रय-

मसदादृतमित्याह **निर्दोषेति**। कथकानां बौद्धानां बौद्धगन्धिनां मृषावादिनाञ्च **कुहनया** मायया, **अध्यक्षेण** प्रत्यक्षेण सिद्धानां पदार्थानामपह्नवो न युक्तः, दोषाभावात्। बौद्धजैनादिभिर्धर्मत्वेनोपदिश्यन्ते केचन विषयाः। न तत्र तेषां प्रत्यक्षमस्ति, न च युक्तयः पारलौकिकफलहेतुसमर्थने प्रक्रमन्ते। हेतवस्तैरुच्यमानास्त्वन्यथासिद्धाः। पयः पिब ; शिखा ते वर्धिष्यत इतिवत् विप्रलम्भका एव। अतः केवलतर्कक्लृप्तं सर्वं त्याज्यम्। मीमांसकंमन्याः केचित् देवताविग्रहादेः मन्त्रार्थवादादितोऽधिगमे सत्यपि न तत्र विश्वसन्ति, मन्त्रादेस्तत्र तात्पर्यं नास्तीत्याहुः। उक्तस्यार्थस्य यत्र बाधः, आदित्यो यूप इत्यादौ, तत्रैव वाच्यार्थत्यागः ; नान्यत्र। अर्थवादादेः स्तुत्यादिपरत्वेपि स्वार्थत्यागायोगात्। स्वतःप्रामाण्यात्। एवमंशत्रयं विनिश्चित्य प्रमाणयाथात्म्यवेदिना वेदप्रमेयनिर्णये प्रयतितव्यम्। प्रत्यक्षसिद्धं न शास्त्रेण ज्ञापनीयम्। प्रत्यक्षबाधितं शास्त्रेऽपि त्याज्यम्। प्रत्यक्षेणाऽऽगमेन वा बाधितमानुमानिकं त्याज्यमिति निर्णीय वेदार्थनिर्णयार्थमनुकूलतर्काः ग्राह्याः ॥ ४ ॥

**५. मीमांसेत्येकमेतद् श्रुतिविषयनयस्तोमसंग्राहि शास्त्रं षट्काध्यायांस्त्रिभेदैर्भिदुरतर(दैरिव भिदुरः)तनुः सा त्रिभिः काण्डभेदैः।**
**सङ्गत्या च त्रयाणां क्रमनियतिरपि स्यादिहौचित्यवत्या**
**विंशत्या लक्षणैः खल्वियमवयविनी वृत्तिकारोपदिष्टा ॥**

प. एवं मीमांसाशास्त्रोपजीव्यप्रमाणत्रयपरिशोधनं कृत्वा परवादिपरिकल्पितं मीमांसाशास्त्रैक्यप्रतिक्षेपं विषयैक्यकथनेन स्वयमपि प्रतिक्षिपति

मीमांसेति । अयं खलु परेषामाशय:–विषयैक्यात् प्रयोजनैक्यात् प्रवृत्तिप्रकारैक्याच्च शास्त्रैक्यं भवति ; यथा व्याकरणे सुशब्दापशब्दविभागो विषय:, तत्परिज्ञानं प्रयोजनम् , प्रकृतिप्रत्ययविभागोपदेशेन तत्परिज्ञानसिद्धिरिति प्रवृत्तिप्रकार: । एवं न्यायेऽपि षोडश पदार्था: परिज्ञातव्या:, तत्परिज्ञानं प्रयोजनम्, उद्देशलक्षणपरीक्षादिभिरर्थतत्त्वावधारणमिति प्रवृत्तिप्रकार: । एवमन्येष्वपि विद्यास्थानेषु विभज्य व्यपदेश: स्वयमेव कर्तव्य: । इह पुन: क्वचित् कर्म निरूप्यते, क्वचित् देवता, क्वापि परं ब्रह्मेति कथं मीमांसाशास्त्रैक्यमिति ।

निराकरोति मीमांसेति । विद्यास्थानविभागप्रदर्शनाय प्रवृत्ता: महर्षय: "पुराणन्याय...." इत्यादिषु तत्र तत्र बहुषु प्रकरणेषु मीमांसेत्येकं पदं काण्डत्रयविषयं प्रयुञ्जते । न कर्म–देवता–ब्रह्ममीमांसेति विभज्य विद्यास्थानत्रयं महर्षिभिरुपदिश्यते । तदा विंशतिविद्यास्थानत्वेन संख्याधिक्यात् अष्टादशेत्युपदेशो नष्टप्राय: स्यात् । तेन महर्षिभि: "अथातो धर्मजिज्ञासा" इत्यारभ्य "अनावृत्तिश्शब्दात् अनावृत्तिश्शब्दात" इत्येवमन्तं एकविद्यास्थानत्वेनोपात्तमिति जानीमहे ॥

कथं तर्हि विषयभेद: इति चोद्यमवशिष्यते । तदपि न ; **श्रुतिविषयनयो हि मीमांसाशास्त्रस्य विषय:।** तद्विषयवत्त्वैकोपाधिक्रोडीकृतत्वात् शास्त्रमप्येकमेवेत्याह श्रुतीति । अयमर्थ:—सामाचार्य-काशकृत्स्न–बादरायणरूपकर्तृत्रयप्रणीतं सूत्रमेव शास्त्रम् । तच्च वेदवाक्यार्थविचारौपयिकन्यायकलापमाचष्टे । स च न्यायकलाप: श्रुते: इतिकर्त-

च्यतारूपेण प्रवर्तते । सा च श्रुतिः वेदवाक्यार्थे प्रमाणतामाटीकते । ततश्च मीमांसा[शास्त्रस्य?]सूत्रात्मकस्य न्यायः साक्षात् विषयः, तद्विषया(यः?) श्रुतिः, तद्विषयः पुनः वेदवाक्यार्थ इति पारम्पर्यात् वेदार्थं विषयीकरोति मीमांसाशास्त्रम् । एवं वेदार्थो(वेदार्थनिर्णायकन्यायो?)पाधिकोडी-कारेणैक्यात् शास्त्रैकत्वसिद्धिः । अतः प्रयोजनैक्यमपि सिद्धं भवति । अर्थज्ञानस्यैव प्रयोजनत्वात् । प्रवृत्तिप्रकारैक्यमपि सुप्रसिद्धम् ; आकाङ्क्षायोग्यतासंनिधिपरामर्शरूपस्य प्रवृत्तिप्रकारस्य त्रिकाण्ड्या-मप्यविशेषात् ॥ पूर्वोक्तामर्थभेदशङ्कां प्रतिबन्द्या परिहरति षट्केति । पूर्वकाण्डे प्रकृतिविकृतिरूपार्थभेदात् षट्कभेदः ; अथापि कर्मविषयत्वात् न शास्त्रभेदः । उत्तरकाण्डेऽपि सिद्धसाध्यरूपविषयभेदेन द्विकभेदः, अथापि साक्षात् ब्रह्मविषयत्वात् न शारीरकशास्त्रभेदः । एवमध्याय-पादपेटिकाधिकरणसूत्रभेदाः स्वयमेव प्रतिबन्दीकर्तव्याः । अतः साधारणैक्ये सति अवान्तरभेदो न शास्त्रभेद[क?]कोटिमाटीकते इत्युक्तं भवति । नन्वर्थैक्यात् प्रयोजनैक्यात्, प्रवृत्तिप्रकारैक्याच्च शास्त्रैक्यम्, अथापि कथं सङ्गतिमन्तरेण शास्त्रैक्यम् इत्याशङ्क्याह सङ्गत्येति । शृणु तावत् सङ्गतिम्—अष्टवर्षं ब्राह्मणमुपनयीत ; तमध्यापयेत् इति वेदाध्ययनमशेषतान्त्रिकसम्मतमवगम्यते । अध्ययनं च अक्षरराशि-ग्रहणपर्यन्तमिति सर्वसम्मतम् । अतःपरं रागतोऽरागतो वा मीमांसा-श्रवणमपि जातमिति सर्वसम्मतिः । तदध्ययनकाले कर्मब्रह्मवाक्ययो-रनुक्रमेणाधीतत्वादिभिः, अन्यत्र, (अधिकरणसारावली) "प्रावण्यम्" इत्याचार्यपादसङ्गृहीतैः बहुभिरपि न्यायैः कर्मब्रह्मविचारयोः पौर्वापर्यं

सिद्धमेव । कर्माराध्य (कर्म विचार्य?) देवतानिरूपणमपि कर्माराध्य-त्वात् सुसङ्गतमेव । तथा च प्रथमकाण्डप्रतिपन्नसर्वकर्मसमाराधनीय-मध्यमकाण्डप्रतिपन्नसर्वदेवतान्तर्यामिरूपं परं ब्रह्म चरमकाण्डे प्रतिपाद्यते इति सुसङ्गतमेतच्छास्त्रम् । उक्तार्थे स्वकपोलकल्पितत्वव्यावृत्त्यर्थं वृत्तिकारसम्मतिमाह—**विंशत्येति** । यथोक्तं भाष्ये—"संहित-मेतच्छारीरकम्" इति । **खल्विति** ग्रन्थस्य परपक्षेऽपि प्रसिद्धिरुच्यते । अत एव परैरप्युच्यते **वृत्तिकारस्त्वित्यादिकं** तत्र तत्र । 5

**स. मीमांसितोर्थः** इति वेदार्थरूपार्थैक्यात् शास्त्रैक्यं व्यञ्जितम् । प्रमाणत्रयवत् मीमांसात्रयमिति न मन्तव्यमिति तदेवैक्यं स्थापयति **मीमांसेति** । मीमांसा नाम विचारः पूज्यार्थविचारः । वेदार्थविचार इति च परिष्क्रियते । विचारश्चायं "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" इत्यक्षपाददर्शितरीतिकः । तथा च श्रुत्यर्थनिर्णयार्थपक्षप्रति-पक्षसाधकन्यायद्वयादिरूपाधिकरणसमुदायरूपत्वं मीमांसात्वम् । कर्म-काण्ड-संकर्षकाण्ड-ब्रह्मकाण्डरूपभेदव्यवहारः नैक्यबाधकः । उपदेश-षट्कातिदेशषट्क-प्रमाणाध्यायभेदाध्यायादि – तर्कपादार्थवादपादादि-भेदैः द्वादशाध्यायीरूपशास्त्रैक्यं यथा न बाध्यते, तथा काण्डभेदैः कृत्स्नमीमांसैक्यं न बाध्यते । **भेदैर्भिदुरतरतनुरित्यत्र भेदैरिव भिदुरतनुरिति** पाठो ग्राह्यः । षट्कादिभेदस्य दृष्टान्ततायाः भाष्याधि-करणसारावल्यादिसिद्धत्वात् । प्रतिज्ञातषट्पदार्थीषोडशपदार्थीनिरूप-णादिस्थल इव, नयद्युमणिन्यायकुलिशादिविविधार्थकदम्बपरग्रन्थाना-

मिव च ग्रन्थैक्ये संभवत्यपि अवसरसंगत्यतिरिक्तविशेषसंगति-बलादप्यैकशास्त्यमस्तीत्याह संगत्येति। न तदसद्बुद्धिकल्पितम्। शास्त्रभेद एवार्वाचीनकल्पित इत्याह विशत्येति। संहितमेतदिति वृत्तिः श्रीभाष्ये दर्शितैव ॥ ५ ॥

6. विद्यास्थानानि चत्वार्यगणिषत पृथक् वेदरूपत्वसाम्ये
द्वे चाप्यन्ये विभक्ते ह्युपपदघटितं बृंहणत्वं(?) दधाने।
मीमांसाशास्त्रसाम्येऽप्यत्र इह घटते भिन्नविद्यापदत्वं
मैवं मन्वादिभिस्तत्पृथगनुपठनाभावतस्तत्प्रहाणात् ॥

प. अत्र कश्चिच्चोदयति विद्येति। यथा वेदत्वे सत्यपि ऋगादीनि चत्वारि विद्यास्थानानि विभज्य प्रदर्श्यन्ते, यथा लोकसिद्धे उपबृंहण-व्यवहारसाम्ये सत्यपि धर्मशास्त्रपुराणयोः पृथक्विद्यास्थानत्वेन परिगणना, एवं मीमांसाव्यवहारसाम्ये सत्यपि कर्मब्रह्ममीमांसयोः पृथग्विद्यास्थानत्वेन परिगणनायां को दोषः? परिहरति–मैवमिति। व्यवहारस्य नियामकं लक्षण-मस्माभिरभिधीयते, न पुनरस्मदुक्तेन येन केनापि लक्षणेन अनादिसिद्ध-व्यवहारान्यथाकरणं कर्तुं शक्यते। दृष्टश्च मीमांसेत्येकविद्यास्थानत्वेन व्यवहारो मनीषिणाम्। अन्यथा विद्यास्थानसंख्याधिक्यं प्रसज्येत। तथा च अष्टादशेति संख्यानियमो लुप्येत। तथा च मीमांसेति शास्त्रैक्यव्यवहारे सिद्धे तदनुगुणतया वेदवाक्यार्थविचारो मीमांसेति तद्व्यवहारेऽनु-वृत्तलक्षणमस्माभिरभिहितं योयुज्यते। वेदेषु तु अनादिसिद्धव्यव-हारानुरोधेन विद्यास्थानचतुष्ट्वं महर्षिभिरभिधीयते इति तदनुरूपकल्पनया

अस्माभिर्व्यवहर्तव्यम् । अपर्यनुयोज्यत्वात् अनादिसिद्धस्य महर्षीणां व्यवहारस्य । एतत् धर्मशास्त्रपुराणयोरपि तुल्यमिति स्वयमेव विदाङ्कुर्वन्तु सन्तः । तेन अनादिप्रयोगानुसारात् लक्षणैक्यसम्भवाच्च मीमांसेत्येकं शास्त्रमिति निरणैषुर्वृद्धाः । 6

स. पादत्रयेण शंकित्वा चतुर्थेन परिहरति **विद्येति** । विद्यास्थानैक्येऽपि न शास्त्रैक्यम्, वस्तुतो विद्यास्थानभेदोपीति पूर्वपक्ष्याशयः। वेदत्वरूपसामान्यधर्माक्रान्तत्वेऽपि चतुर्षु वेदेषु विद्यास्थानभेदः प्रसिद्धः। उपबृंहणत्वरूपसामान्यधर्मवत्त्वेऽपि पुराणधर्मशास्त्रयोरपि विद्यास्थानभेदः । एवं पुराणत्वरूपसामान्येऽपि अष्टादशानां पुराणानाम्, इतिहासत्वेऽपि द्वयोः, धर्मशास्त्रत्वेऽपि मानवादीनाम्, शिक्षात्वव्याकरणत्वादिसामान्येऽपि तत्तद्ग्रन्थानाम्, एकसूत्रव्याख्यानत्वरूपसामान्यधर्माश्रयत्वेऽपि नानाभाष्यवार्तिकटीकादीनां ग्रन्थभेदोऽपि सर्वेष्टः इति पूर्वपक्षः । **उपपदघटितं बृंहणत्व**मिति । बृंहणत्वं बृंहणशव्दवाच्यत्वं वाच्यतासंवन्धेनबृंहणपदवत्त्वम् ; बृंहणपदमिति यावत् । तत् उपपदघटितं दधाने । उपबृंहणपदबोध्ये इत्यर्थः । यद्वा **बृंहणत्वं** वैशद्यकरत्वं **उपपदघटितं** उपेति पदेन बृंहणपदात् पूर्वेण **घटितं** योजितं यादृशं तादृशमित्यर्थः । सामान्यभूतवेदवाक्यस्य विशेषरूपवेदवाक्यं बृंहणम्, महर्षिवाक्यं तु तदनुवादित्वात् उपबृंहणमिति । उपपदघटितां बृंहणोक्तिं दधाने इति वा पाठः । **विभक्ते दधाने** इति द्विवचनम् । पुराणधर्मशास्त्रे इति शेषः । **भिन्नविद्यापदत्वं** विभिन्नविद्यास्थानत्वम्

इह पूर्वोत्तरमीमांसयोर्घटते । सुतरां शास्त्रभेदः ॥ परिहरति मैवमिति । पृथगनुपठनं विभिन्नविद्यास्थानत्वेन मीमांसाद्वयत्वेन वा गणनम् । तत्प्रहाणात् भेदत्यागात् । एवं धर्मशास्त्राणीति तैर्बहुत्वेन निर्देशात् अष्टाविंशतिः स्मृतय इत्यादिगणनात् अष्टादशपुराणानीति विभजनादेवं रीत्या सर्वत्र भेदः, न तथा तिस्र इति द्वे इति वा मीमांसानिर्देशोऽस्ति प्राच्यग्रन्थेषु । नतरां भिन्नविद्यास्थानत्वेन । मीमांसा इत्येकवचनेनैव तु निर्दिश्यते । अत ऐक्यमेव, न साम्यमिति भावः । एवं सिद्धे ऐक्ये तत्पोषकः सामान्यधर्मः पूर्वं कथितः ; न पुनः सामान्यधर्ममादायाभेदानुमानमिति भावः ॥ ६ ॥

7. काले कौमारिलादिष्वधिकबहुमतौ कस्त्वदिष्टं ग्रहीता
कस्मै रोचेत पूर्वश्रुतहृतमनसे क्लृप्तिरन्येति चेन्न ।
स्वीकुर्वन्त्यस्मदुक्तं स्वमतगुणतिरस्कारकप्रत्यनीकं
प्रत्यग्विद्याधुरीणप्रथितबहुमहावंशजाता महान्तः ॥

प. पुनश्चोदयति काले इति । अपूर्वां क्लृप्तिमाचष्टे(क्षे ?) ; तत्प्रतिगृहीतार एव न भवन्ति, यतोऽयं कालः कौमारिलादिष्वधिकबहुमतिः । कस्मै खल्वेषा रोचते? । न कस्मैचित् । न हि श्रुतेन साधीयसा परिगृहीतमनसां अपूर्वा काचित् अल्पीयसी क्लृप्तिः परिग्रहाभिसन्धि जनयति । अथ कथमेतदुच्यते ? तत्राह–स्वीकुर्वन्तीति । न हि वेदविरुद्धां काञ्चन क्लृप्तिमाचक्ष्महे, लोकविरुद्धां वा; अपि तु प्रमाणानुगुणामेव । तेन भेदाभेदकल्पका[1] वा बौद्धानुबन्धिनो वा न

स्वीकुर्वन्तु। अन्ये पुनः अधीतवेदाः सत्त्वोत्तराः सदाचार्यकुलपारम्पर्येण प्रसूताः प्राज्ञाः संग्रहीष्यन्ति। ते च बहवः प्रत्यग्विद्याधुरीणत्वेन प्रथिताः; तेनास्मत्सम्प्रदायानुवृत्तिः अधुना वा आयत्यां वा वर्तिष्यते इति न सङ्कटं किञ्चित्। **स्वमतगुणतिरस्कारकप्रत्यनीक**मिति। स्वमतं श्रीमद्रामानुजसिद्धान्तः। तद्गुणतिरस्कारकौ राहुकबन्धमीमांसकौ, तत्प्रत्यनीकमसदुक्तमित्यर्थः॥ [1 जातिव्यक्त्यादिभेदाभेदवादिनो भाट्टाः] 7.

स. प्रामाणिकस्यापि ग्राहकपुरुषाभावादुपेक्षैव, 'अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न तु' इतिवदिति शंकते **काले** इति। कौमारिलः उपनिषदूषरत्ववादी शारीरकश्रद्धारहितः। शांकराः कर्मोपेक्षमाणाः कर्ममीमांसात्यागिनः। तदसंमतमैकशास्त्र्यमिति भावः। वस्तुतः एकशास्त्रत्वेऽपि विभिन्नाधिकारिविषयकत्वात् न मिथोऽपेक्षितमिति च शांकरमतम्। अबहुश्रुतविद्विष्टत्वेऽपि प्राच्यबोधायनादिमहर्षिपरिगृहीतत्वेन नोपेक्ष्यत्वम्। अन्यथा बुभुक्षुभूयोलोकविद्विष्टत्वेन मोक्षशास्त्रस्य मोक्ष एव स्यादिति भावेन समाधत्ते **स्वीकुर्वन्ती**ति। **स्वमतगुणतिरस्कारकप्रत्यनीकम्**। स्वमतस्य प्रत्यग्विद्यापरस्याभिमतस्य यो **गुणः** अतिशयोऽपेक्षितः तद्विरोधिनिवर्तकत्वादित्यर्थः। भक्त्यादौ कर्माधीनातिशयस्यैवावश्यकत्वादिति॥ ७॥

8. **किंचित् केनापि दृष्टं प्रतिहतविषयं तेन तत् ते च तैस्तैः (?)**
**द्वे चोपादायिषातां द्वितयमपि सदित्यप्रमत्तो न वक्ता।**
**इत्थं सत्येकभक्तैरितरपरिहृतौ न व्यवस्थानसिद्धिः**
**प्रत्येतव्यं तदर्थं पटुतरमतिभिः प्राक्तनं नूतनं वा॥**

प. अथापि पूर्वाचार्यबहुग्रन्थविरोधात् स्वयं नूतनत्वाच्च भावत्कोऽयं सम्प्रदायः कथमुपादेयः इत्याशङ्क्य यथोचितमिह परिहारमाह किञ्चिदिति। भट्टपरिकल्पितं प्राभाकरेण प्रतिहतविषयम्। तेन तच्च-प्राभाकरपरिकल्पितं भट्टपरिकल्पितवचनेन। न केवलं परस्परविरोधः। ते च तैस्तैः। उभे मते न्यायादिभिः प्रतिहतविषये। एवमप्युभे मते तत्तन्मतबुभुत्सुभिरुपादायिषाताम्। इत्थं सति उभयमपि सदिति अप्रमत्तो न वक्ति-परस्परविरोधात्। न हि परस्परविरुद्धयोः ऐकरस्यमातिष्ठन्ते सन्तः। नन्वेकस्मिन्नेव सिद्धान्ते भक्तिमन्तः तत् (तं?) गृह्णन्तु, अपरमपरे इति चेत्-तदपि वार्तम्। अव्यवस्थित [तया ?] परिहारप्रसङ्गात्; अतः कथमिति चोदनायाम् उत्तरमाह प्रत्येतव्यमिति। यत् अर्थ्यम्-अर्थादनपेतम्, तत् प्रत्येतव्यमिति यच्छब्दाध्याहारेण योजना। अथवा तदिति हेतुनिर्देशः। तत् तस्मात् पूर्वोक्तप्रकाराणामनुपपन्नत्वात्, "युक्तियुक्तं वचो ग्राह्यम्" इत्यभियुक्तवचनमादरणीयमित्यर्थः। अरत्नज्ञाः प्राक्तनम्, नूतनमित्याचक्षते। तदष्टु—तदात्वे सर्वेषां नूतनत्वात्, आयत्यां च पुरातनत्वात्। अतो युक्तियुक्तं पटुतरमतिभिर्ग्राह्यम् इति॥ ४

स. ननु प्राचीनत्वात् कौमारिलादि ग्राह्यम्, नवीनत्वात् भवद्व्याख्यानं त्याज्यमित्याह किञ्चिदिति। श्लोकः संकल्पसूर्योदयेऽपि। तेनेत्यत्र त्वेनेति पाठान्तरम्। अस्य मिथोविरुद्धसर्वविषयत्वेपि परित्राणे भट्टप्रभाकरग्रहणं प्रकृतानुसारेण। अयमर्थः—किञ्चिद्वस्तु केनचित् पुरुषेण केनाचित् प्रमाणेन केनापि धर्मेण विशिष्टं दृष्टम्। तदेव प्रतिहत-

तद्धर्मकत्वेन अन्येन दृष्टम् गृहीतम् । यद्वा धर्मिणि किञ्चित् धर्मभूतं केनापि **दृष्टम्** । तत्र अन्येन **प्रतिहतविषयं** बाधितं दृष्टम् । नेदं रज्जुसर्पादिवत् एकपुरुषविश्रान्तमित्याह **तैस्तैः द्वेचो-पादायिषातामिति** । ते द्वे मते तत्तद्रुचिभिर्बहुभिरुपगते । **द्वितयमपि** धर्मद्वयमपि मिथोविरुद्धं **सदिति** एकत्र वर्तमानमिति नाप्रमत्तो वदेत् । एवञ्च प्रमाणं विना भक्तिमात्रेण-अभिमानमात्रेण एकस्वीकारेणान्य-निरासश्चेत्, अन्यवस्था स्यात् । **तत्र** अतः **अर्थ्यम्** अर्थादनपेतं वस्तुतो धर्मिवृत्ति यत्र प्रथमगृहीतं वा पश्चात् गृहीतं वा तत् प्रत्येत-व्यम् अस्तीति । अन्यत् निषेध्यम् । रज्जौ सर्पत्वं प्रथमगृहीतम् । अथ रज्जुत्वम् । तत्र द्वितीयेनैव पूर्वबाध इति । **तेन तत्त्वेनेत्यपि** कश्चित् पाठः । संकल्पसूर्योदयव्याख्याने द्रष्टव्यम् । "तदात्वे नूतनं सर्वमाय-त्याञ्च पुरातनम्" इति यादवाभ्युदयपद्यमत्रानुसन्धेयम् ॥ ८ ॥

**9. शिष्याचार्यौ विरुद्धं न तु मतमधुना साधयन्तौ प्रसिद्धौ**
**स्वाभीष्टाच्छास्त्रमन्यत् सुरसचिवमुखैः कल्पितं किं न विद्मः ।**
**तस्माद् ब्रह्मज्ञजैमिन्युपरचितमिदं त्याज्यमेतन्निरीशं**
**मैवं व्याघातहानौ मुनिवचसि मुधा बाह्यवत् दृष्टिदौस्स्थ्यम् ॥**

प. प्रकारान्तरेणापि जैमिनीयबादरायणीययोः ऐकशास्त्र्यभङ्गशङ्कां अङ्कुरयति **शिष्येति** । बादरायणशिष्यः खलु जैमिनिः ; स पुनः देवतानिराकरणादिभिराचार्यविरुद्धमाचष्टे । अतस्तदुभयवाक्ययोः ऐकशास्त्र्यप्रसङ्ग एव न सङ्गच्छते ॥ जैमिनिर्ब्रह्मज्ञत्वेन बादरायणेनैव तत्र

तत्रोदाहृतत्वात् न देवतां निराचष्टे इति चेत्–तत् वक्तुं न शक्यते—ब्रह्मज्ञ एव हि बृहस्पतिश्चार्वाकमतमाचष्टे। एवं विरोचनाय असुरोपनिषदमाचष्ट प्रजापतिः। एवमन्यदप्युदाहर्तव्यम्। तथा जैमिनिः बादरायणशिष्योऽपि देवतानिराकरणादेः प्रत्यक्षदृष्टत्वात् अयथार्थं तन्त्रमाहेत्यकामेनापि स्वीकर्तव्यम्। अतः कथमेकशास्त्र्यमिति त्याज्यमेव जैमिन्युपरचितं निरीशतन्त्रम्। अत्रोत्तरमाह नैवमिति। वेदचार्वाकतन्त्रयोः परस्परविरुद्धार्थभूयस्त्वस्य प्रत्यक्षोपलब्धत्वात् बार्हस्पत्यं तन्त्रमनादरणीयम्। जैमिनिवचने तु न क्वापि वेदान्तविरोधो दृश्यते। ईश्वरनिराकरणादिकल्पनं अल्पज्ञानामेव जल्पः; न पुनः सूत्रस्वारस्यादभिधीयते। ये पुनः विरोधं कल्पयन्ति, ते खल्वल्पाः—अविरोधेन कल्पयितुं शक्येषु स्थलेषु विरोधकल्पनस्यायुक्तत्वादिति भावः॥ 9

स. जैमिनेर्व्यासशिष्यत्वं व्यासविरुद्धानभिमन्तृत्वञ्च स्वीकृत्यैव मीमांसाया उपेक्ष्यत्वं कश्चित् ऐकाश्ास्त्र्यभंगरुचिः शंकते शिष्येति। मीमांसोक्तं न जैमिनीष्टं तदाचार्यमतविरुद्धत्वात्, यत् यदीयाचार्यानभिमतं तत् तच्छिष्यानभिमतमपीति। अनभिमतं कथं ब्रूयादिति चेत्–यथा बृहस्पतिः प्रतारणायेति मन्यतामित्याह सुरसचिवेति। परिहरति नैवमिति। बार्हस्पत्ये चार्वाकग्रन्थ इव जैमिनिसूत्रे विस्पष्टविरोधे प्रतीते हि वञ्चनार्थत्वकल्पना; नात्र विरोध इति भावः। **बाह्यवत्** चार्वाकदर्शनादाविव **दृष्टिदौस्थ्यम्** मुनिवचोहेतुभूतज्ञानस्य दुःस्थत्वम्, जैमिनीयस्य बाध्यज्ञानाधीनत्वं मुधा न कल्प्यम्, व्याघाताभावात्। तथाव्याख्यानात्॥ ९॥

10. सूत्राणामैदमर्थ्यं स्वरसगतिवशात् सम्प्रदायाच्च सिध्येत्
बंहीयोभिः प्रमाणैः क्वचन बहुशिरःप्रत्ययः शान्तिमेति ।
सन्दिग्धे वाक्यशेषप्रभृतिरभिदधे निर्णयोपायभूतः
षड्भिस्तात्पर्यलिङ्गैरपि खलु निखिलं दुर्णयं निर्णयन्ति ॥

प. ननु युष्मदभिहित एव सूत्रार्थः ; न पुनरस्मदभिहित इति किमत्र निर्णायकमिति यः परिचोदयति, तं प्रतिक्षिपति—

सूत्राणामिति । ऐदमर्थ्यं इदमर्थभावः । तात्पर्यमित्यर्थः । तच्च शब्दार्थादिस्वारस्यात् पूर्वाचार्योपदेशपारम्पर्याच्च सिध्येत् । अयं भावः- भवन्तोऽपि व्याख्यन् ; वयमपि व्याकुर्महे । कुत्र स्वारस्यम् , कुत्र वा वृत्तिकारादिग्रन्थसंवादः इति मध्यस्थाः परिपश्यन्तु । किञ्च "द्वैधे बहूनां प्रामाण्यम्" इति सर्ववि[द्व ?]त्सम्प्रदायः ! प्रमाणबहुत्वाबहुत्वाभ्यां क्वचिद्विषये बहुशिरःप्रत्ययः नाना[र्थ]पक्षस्फुरणं प्रशान्तिमेति । अपि च "संदिग्धेषु वाक्यशेषात्" इत्यादिभिर्बहुभिस्सूत्रकलापैरालपन्ति निर्णयोपायं तन्त्रज्ञाः । इदमपि तेषामेव वचनमेवमाकर्ण्यते— 'उपक्रमोपसंहारौ' इत्यादि । तेन षड्विधतात्पर्यलिङ्गपरिकर्मितेन वाक्येन बहुधर्मतत्त्वनिर्णय इति धर्ममर्मज्ञानामेष निर्णयः ॥ 10

स. शाबरादिव्याख्यारीत्या जैमिन्यर्थस्य दुःस्थदृष्टिमूलकत्वेऽपि, नास्मदीयव्याख्यारीतौ तथा । कतरोऽर्थो ग्राह्य इति चेत्—तत्रेमानि नियामकानीत्याह सूत्राणामिति । अस्य सूत्रस्यायमेवार्थः, न स इति स्वारस्यदर्शनात् निर्णयम् । तदलाभे सम्प्रदायात् । क्वचित् बहुशिरःप्रत्ययः

नानाकोटिकज्ञानरूपः संशयः भूयसांन्यायेन शमनीयः। अन्यच्च प्रकृत-सूत्रकृतैवोक्तम् 'संदिग्धेषु वाक्यशेषात्' इति। मुनेर्वाक्यान्तरेण प्रकृतवाक्यार्थनिर्णयो भवेत्। यथा बादरायणाधिकरणस्य पाञ्चरात्र-प्रामाण्यपरत्वं भारतगततदुक्तिबलात्। षड्भिरिति। "उपक्रमोपसंहाराव-भ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इति वेदान्त्युक्तानि षड्विधतात्पर्यलिङ्गानि। दुर्णयं निर्णेतुमशक्यमपि ॥१०॥

11. सूत्रोक्तं नूनमन्यद्विदुरथ च मिथो व्याहतं वृत्तिकाराः
प्राज्ञैर्नारायणार्यैस्तदिह विदधिरे सम्मताः सूत्रभेदाः।
सामाचार्योक्तिरेषा समरमुखगता तत्र सत्सङ्गृहीतेः
नत्वा तुत्वैनमाह द्रमिडगुरुरपि ब्रह्मवित् वाक्यभाष्यम् ॥

सूत्रोक्तमिति। अन्यत्र हि सूत्रकारवचनेन व्याख्यातृवचनानां विरोधो दरीदृश्यते—यथा वा "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति शब्दार्थयोः सम्बन्धस्योत्पत्तिसिद्धत्वमाह सामाचार्यः। शबरस्वामि-प्रभृतयः पुनः मुख्यवृत्तिं परित्यज्य गौणीं वृत्तिं आश्रित्य, स्वाभाविकत्वम् औत्पत्तिकत्वम्; न पुनरुत्पत्तिसिद्धत्वमिति व्याचख्युः। एवं कति कति सूत्रस्वारस्यभङ्गाः वृत्तिकारग्रन्थेषु दरीदृश्यन्ते। ते चापि वृत्तिकाराः परस्परविरुद्धार्थानेव परिजगृहुः, यथा कार्यत्वेष्टसाधनत्व-शब्दभावनार्थभावनारूपविध्यर्थान्। तेन सूत्रकारवृत्तिकारविरोधात् वृत्तिकाराणामन्योन्यविरोधाच्च जैमिनितन्त्रमतन्त्रमेव श्रेयोर्थिनाम्। अत एव प्राज्ञा नारायणार्याः परिमितगभीराणि परस्परविरोधादिरहि-

तानि सूत्राणि प्रणीय अधिकरणानां पञ्चशतीमेव मीमांसाशास्त्रमाचक्षते। अन्यानि पुनरधिकरणानि पौनरुक्त्यादिदोषदूषितान्यकथयन्। इत्थं प्रतिभाशालिभिः पराकृतस्वभावत्वात् विद्वद्भिः वादाहवशस्त्राशस्त्रिमुखैः विनिहितं निहतमेव जैमिनीयं तन्त्रमिति कथं तेनैकशास्त्र्यसिद्धिः इति। उत्तरमाह—तन्नेति। तत्र हेतुमपि दर्शयति—सदिति। कर्म, देवता-ब्रह्मप्रतिपादककाण्डत्रयव्याख्याता प्रख्यातबोधवृत्तिः बोधायनो हि भगवान् व्याचष्टे "संहितमेतत्" इत्यादिना जैमिनीयशास्त्रस्य सङ्ग्राह्यत्वम्। तेन कथं निरासः? न केवलमयमेक एव; छान्दोग्य-व्याख्यानरूपब्रह्मनन्दिवाक्यव्याख्याता द्रमिडभाष्यकारः पुनः प्रबन्धारम्भे, "नमो जैमिनये वेदरहस्यसम्पुटनिगूढविष्फारयित्रे न्याय-प्रज्वलितचेतसे। नमोऽस्त्वाचार्येभ्यः" इति जैमिनिनमस्कारपूर्वकमेव इतराचार्याणां नमस्कारमाविश्चकार; अतः को वा अस्मादपरः प्राज्ञा-नामनुविधेयवचनः इति भवन्त एव परिपश्यन्तु। यत्तु प्राज्ञैः नारायणार्यैः सङ्गृह्य कथनम्, न तत् जैमिनीयवचनदूषणायते—जैमिनिर्हि मन्दा-मन्दसकलशिष्यजनसंवित्तिसौकर्यार्थं मन्दप्रयोजनानि अधिकरणानि पृथक् अनुकथयाञ्चकार। नारायणार्यास्तु प्रौढविद्वज्जनपरिग्रहाभिसन्धिना प्रधानार्थप्रकाशनेन तुल्यन्यायतया सर्वमप्यर्थजातं परिमितेन ग्रन्थसन्दर्भेण प्राचीकशन्निति द्वयोरप्यैकरस्यसिद्धिरिति न विरोधगन्धः। कति कति दृश्यन्ते मीमांसासङ्ग्राहकाः। वद्वदिदानीमपि कति कति वा विस्तरानुवादिनः इति। नत्वा नुत्वा—नमस्कृत्य स्तुत्वा चेत्यर्थः ॥ 11

नन्वर्थान्तरवर्णनेनापि जैमिनेः रक्षणं कुतः। अर्वाचीनव्याख्यातॄनिव जैमिनिमपि त्यजतेति शंकते सूत्रेति। वृत्तिकारादयः त्वत्संमतादर्थादर्थान्तरपरत्वेन सूत्राणि व्याचख्युः, यथा, तस्य निमित्तपरीष्टिः इत्यत्र प्रमाणपरीक्षणं न कार्यमिति। उपरि परीक्षायाः क्रियमाणत्वात् व्याहतमपि तत् सूत्रम्। हेतुवन्निगदाधिकरणे हेतुपक्षं व्युदस्यतं पुनरैच्छत् तत्र नवमे च। एवं तत्र तत्र मूले व्याहतिर्व्याख्यानतो दृश्या। अतो जैमिनिरुपेक्षणीयः स्यात्। भवतु काममुपेक्षणीयः यत्रानुपपन्नमित्येव वृत्तिकाराद्याशयेन भाव्यम्। अत एव भवत्सिद्धान्तनिष्ठा नारायणार्या अपि जैमिन्युक्ते नूनमर्थांशमुपैक्षन्त। यद्यपि स सामाचार्यो महान्, अथापि समरपातिसूत्राचार्य एव संवृत्तश्चेत्, भवतु तथा; किं तद्रक्षणप्रयासेनेति शंका। तत्र परिहारः तन्नेत्यादिना। बोधायनो महर्षिः संहितमेतदिति संगृहीतवान्। ब्रह्मवित् द्रमिडाचार्यो ब्रह्मनन्दिकृतच्छान्दोग्यव्याख्यानरूपवाक्यग्रन्थव्याख्यारूपेण भाष्यमारचयन् जैमिनिं प्राणंसीत् अस्तौषीच्च। अतोऽतिप्राक्तनपरिगृहीतस्य नोपेक्ष्यत्वम्। वृत्तिकारादिव्याख्यानमेव तु त्याज्यम्। नारायणार्याणां न जैमिनिनिराकरणे तात्पर्यम्। षोडशाध्यायीति भीताः द्वादशाध्यायीमात्रमर्वाञ्चो हि जगृहुः। अतो ग्रन्थविस्तरात् तदप्युपेक्षमाणान् अवेक्ष्य तत्रावश्यग्राह्यमात्रसंग्रहेण पठनसौकर्थाय ग्रन्थपरिमाणमल्पीकृतवन्तः, सर्वमन्यत् शिष्यबुद्धिवैशद्यायानुवादप्रायमित्याशयेन। न हि भगवद्यामुनरामानुजाद्याचार्याशयविरोधेन इमे प्रवर्तेरन्। तेषामाशयश्च सेश्वरमीमांसारम्भे सम्यगदर्शीति भावः॥ अनेन पद्येन सूत्रत्यागिनिरासः क्रियते;

व्याख्यातृनिरासस्त्वन्यत्र। औत्पत्तिकसूत्रे तत्तदुक्तार्थोऽस्माकमपीष्टः। इदमेव सेश्वरमीमांसायां समग्राहि, "अध्यस्य व्याक्रियादोषान् ये सूत्रमपि तत्यजुः। प्रायः स्फटिकमप्येते जह्युरेव जपाभ्रमात्" इति॥११

12. आदौ कृत्स्नप्रतिज्ञा ह्यधिगमसुभगा धीसमाधायकत्वात्
कर्माश्लिष्टां प्रतिज्ञामपि खलु घटयेत् तन्त्रमावर्तनं वा।
यद्वा भागप्रतिज्ञाप्रणयनफलिता कृत्स्नचिन्ताप्रतिज्ञा
त्रेधाऽपि ह्यत्र सौत्री गतिरियमुदिता सूत्रकृद्भावविद्भिः॥

अत्र कश्चिच्चोदयति-अस्त्वेकशास्त्रत्वम् अर्थानुगुणं सम्प्रदायानुगुणं च। अथापि किञ्चिदनुयुज्यते—"अथातो धर्मजिज्ञासा" इति शास्त्रारम्भप्रतिज्ञा काण्डारम्भप्रतिज्ञा वा। कदाचिदेकैव सिद्ध्यति। तथा च अन्यतराङ्गीकारे अन्यतरप्रहाणात् अपरिपूर्ण एव शास्त्रारम्भ इति॥ समाधत्ते आदाविति। अयं खलु शास्त्रारम्भसमयः। अत्र किल कृत्स्नशास्त्रारम्भकर्तव्यताप्रतिज्ञैव अधिगमस्य-शास्त्रस्य सुभगा, यत इयं बुद्धेः सौकर्यमादधाति॥ अस्तु कृत्स्नप्रतिज्ञापि; काण्डप्रतिज्ञापि कर्तव्येत्याशङ्क्याह-कर्माश्लिष्टेति। अयमर्थः-"तस्मादावर्तते सूत्रं तन्त्रं वा शक्तिभेदतः" इति सूत्रतन्त्रावृत्ती परिजगृहुस्तान्त्रिकाः। तेनेदमेकमेव सूत्रं कृत्स्नशास्त्रारम्भकर्तव्यताप्रतिपादनप्रवृत्तमपि तन्त्रेण आवृत्त्या वा कर्मकाण्डकर्तव्यतामपि प्रतिपादयति। अयमेको मार्गः। अन्ये पुनराचार्याः प्राहुः—अथातो धर्मजिज्ञासेति कर्मकाण्डप्रतिज्ञा। इत्थम् अथातो ब्रह्मजिज्ञासेति शारीरकशास्त्रारम्भप्रतिज्ञा। उभाभ्यामपि सूत्राभ्याम् उन्नीयते पुनः, 'अथातो वेदार्थजिज्ञासा' इति सूत्रान्तरम्।

इत्थं तन्त्रावृत्तिसूत्रान्तरोन्नयनरूपगतित्रयं न सूत्रकाराभिमतमित्याशङ्क्य त्रितयमप्येतत् आचार्याभिमतमित्याचष्टे त्रेधापीति। प्रकारत्रयस्यापि परस्परविरुद्धत्वादन्यतमग्रहणमेव न्याय्यमिति। 12

एवमुपोद्घातं निर्वर्त्य सूत्रव्याख्यामारभते आदाविति। धर्मजिज्ञासेति किं वेदार्थसामान्यप्रतिज्ञा, उत सामान्यस्य कर्मरूपविशेषस्य च प्रतिज्ञा, किंवा कर्ममात्रस्येति विकल्पोद्भवं विमृश्य सर्वथा न दोष इत्याह। सर्वत्राऽऽपातप्रतीतिमत्पुरुषगता हि जिज्ञासा सर्वविषयिण्येव स्यात्। तादृशशिष्याधिगमानुरूपा सुग्रहा प्रतिज्ञा कृत्स्नप्रतिज्ञैवेति। तत्र वेदार्थजिज्ञासेत्यनुक्त्वा धर्मपदप्रयोगात् स्वकर्तव्यतत्प्रतिज्ञापीष्टा। तत्र धर्मपदस्य विचार्यवेदार्थान्तर्गतधर्मेति वाऽर्थ उच्यताम्; धर्मजिज्ञासापदं द्विरावर्त्यतां वा। तृतीयं पक्षमाह यद्वेति। धर्ममात्रप्रतिज्ञाप्रणयनं जैमिनिकृतम्। ब्रह्ममात्रसंबन्धि बादरायणकृतम्। उभयजिज्ञासातश्च कृत्स्नशास्त्रग्रहणे कृत्स्नप्रतिज्ञा कृतप्रायेति ॥१२॥

13. सूत्रे भाष्यादिके च क्वचिदुपचरणावृत्तितन्त्रानुषङ्गाध्याहाराः कल्पनीयास्तदिदमनुमतं पण्डितैस्तत्रतत्र।
सत्यामक्लिष्टवृत्तौ ह्यनुचितमितरत् नैव सर्वत्र तस्मात्
अस्मत्सिद्धान्तवर्त्मन्यवहितमतिभिर्व्याहृतं न प्रणोद्यम् ॥

ननु तन्त्रावृत्त्यादिकं क्लिष्टकल्पना। तत् कथं भवतैवानुमन्यते इत्याशङ्क्य तान्त्रिकाणां व्याख्यानप्रस्थानप्रदर्शनेन सर्वमपि क्लिष्टं अगत्याऽनुमतं भूषणायते इत्याह—सूत्र इति। यथाऽऽह शबरस्वामी—"लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति सम्भवे तदर्थान्येव सूत्रेष्व

भ्युपगन्तव्यानि, नाध्याहारादिभिरेषा परिकल्पनीयोऽर्थः परिभाषितव्यो वेति। अयमत्र भाष्यार्थः—अविद्यमानस्य शब्दस्य आनयनेन वाक्यपूरणमध्याहारः। एकत्र प्रयुक्तस्य स्थलान्तरेऽपि योजनमनुषङ्गः; लिङ्गवचनव्यत्ययो विपरिणामः; व्यवहितान्वयो व्यवहितकल्पना; मुख्यार्थप्रहाणेन औपचारिकार्थकल्पना गुणकल्पना; एकवाक्यत्वं परित्यज्य पृथगर्थकल्पनं वाक्यभेदः; साङ्केतिकव्यवहारः परिभाषा; एकवारं प्रयुक्तस्य शब्दस्य अर्थद्वयपरिग्रहेण योजनं तन्त्रम्; एकत्र प्रयुक्तस्य अर्थान्तरप्रतिपादनार्थं पुनः पठनमावृत्तिः। एतादृशवाक्यदोषाः सम्भवन्त्यां गतौ परित्याज्या एव। अगत्यां तु संग्राह्या एवेति सर्वविद्वज्जनसङ्गृहीतोऽयं मार्गः। तेन सूत्रेषु सति सम्भवे-सम्भवन्त्यां गतौ नैव सङ्ग्राह्याः अगत्यां तु सङ्ग्राह्या एवेति। एतत् सर्वमाह तदिति। अनुमतं पण्डितैः-शबरस्वामिभिरित्यर्थः। तदनुमतिप्रकारमेव विशदयति सत्यामिति। तस्मादस्माभिरुक्तं तन्त्रावृत्तिसूत्रान्तरपरिकल्पनादिकम् अगत्या परिगृहीतत्वात् अप्रणोद्यमिति निगमयति—तस्मादिति। अध्याहारादिस्वीकाराभावे सर्वमपि शास्त्रम् अनुपपाद्यत्वात् भवतोऽपि परित्याज्यं स्यादिति भावः॥ 13

ननु किमित्येवमारम्भप्रभृति क्लेशवहनम्। ईदृशक्लिष्टार्थवर्णनपरानेव भवदेवतुल्यान् मत्वा शबरस्वामी गम्भीरमारभते लोक इत्यादि इत्यत्राह सूत्रे इति। अथशब्दस्य सांगसशिरस्कवेदाध्ययनानन्तरमित्यर्थस्यैव स्वरसत्वात् एकदेशार्थजिज्ञासायां तदन्वयायोगात् कृत्स्नवेदार्थविचारप्रतिज्ञेति प्राचीनैरेवोक्तमिति अद्वैतिप्रभृतिभिरप्यादृतम्। तत्र

न वयं क्लेशकारिणः। पूर्णप्रतिज्ञां कृत्वा धर्ममात्रेण जैमिनेरुपरमस्यायुक्तत्वात् एकदेशप्रतिज्ञाऽपि ग्राह्या भवति। यत्तु शाबरवाक्यमुपात्तम्, तत्र **सतिसंभवे** इति पदे अवधानं कार्यम्। तैरनेकत्र व्यवधानविपरिणामाध्याहारादिकमंगीकृतमिति **सेश्वरमीमांसायामपि** 1-1-26 इत्यादौ दर्शितमनुसंधेयम्। तथा हि "केचिन्नानार्थवाचिनः। समुदायादवच्छिद्य **भवदासेन** कल्पितात्। शक्तितोऽवयवश्चैव वर्णयन्त्यष्टमादिवत्" (वार्तिक 1-93) इति **भवदासनिरासिना शबरस्वामिनैव** अध्याहारादयः स्वीकृता इति वर्णितं **वार्तिके,** "शेषभाजां भवेल्लोपः" इत्यादिषु 54....श्लोकेष्विति भावः। तथाऽनुमतं सर्वैः पण्डितैः सर्वत्र ग्रन्थे। व्याहृतं-तन्त्रावृत्त्यन्यतरस्वीकारेण प्रतिज्ञाद्वयपरत्वादिकमुक्तम्। सकृत्प्रयुक्तस्यैव पदस्यार्थद्वयस्वीकारः तन्त्रम्। द्वितीयार्थग्रहणाय तस्यैव पदस्य पुनः पठनमावृत्तिरिति स्पष्टं **परित्राणे** ॥ १३ ॥

14. **निर्दिष्टा सूत्रकर्त्रा प्रथमत इह चेत् कृत्स्नवेदार्थचिन्ता**
**किं पश्चात् ब्रह्मचिन्ता पृथगनुपठिता संमतं चैकशास्त्र्यम्।**
**सत्यं कृत्स्नप्रतिज्ञाकरणकवलितास्तत्तदर्थाः पुरस्तात्**
**अध्यायादौ विभज्य स्फुटमभिदधिरे तद्वदत्रेति पश्य ॥**

प्रकारान्तरेणोक्तमर्थं विघटयति—**निर्दिष्टेति**। **अथातो धर्मजिज्ञासेति** कृत्स्नशास्त्रारम्भप्रतिज्ञा चेत्—ब्रह्मजिज्ञासायाः कृत्स्नशास्त्रान्तर्गतत्वात् प्रतिज्ञातस्य प्रतिज्ञानायोगात् **अथातो ब्रह्मजिज्ञासा** इति पुनः प्रतिज्ञा न कर्तव्या। **सम्मतं चैकशास्त्रत्वमिति**। कर्मब्रह्मशास्त्रयोः भिन्नशास्त्रत्वे पुनः प्रतिज्ञा युज्येतापि। न पुनः भवद्भिर्भेदो-

ऽङ्गीक्रियते इति भावः । इदमपि चोद्यं प्रतिबन्द्या परिहरति—सत्य-मित्यादिना । यथा खलु भवद्भिः अथातो धर्मजिज्ञासा इति द्वादश-लक्षणीप्रतिज्ञाने सत्यपि अथातः शेषलक्षणम्, अथातः क्रत्वर्थ-पुरुषार्थयोर्जिज्ञासा इत्यादिका स्वीक्रियते, तद्वदिहापि । शिष्याणां तत्तदर्थविशेषाभिमुख्यविशेषसिद्ध्यर्थं सत्यामपि सामान्यप्रतिज्ञायाम् अनुकम्पाविशेषेण गुरुणा विशेषप्रतिज्ञाः क्रियन्ते इति समाधीयते । स च समाधिः ब्रह्मजिज्ञासायामपि समान इति जोषमास्व ॥ 14

धर्मजिज्ञासेत्यत्र ब्रह्मजिज्ञासाप्रतिज्ञानस्याप्यन्तर्भावपक्षे अथातो ब्रह्मजिज्ञासेति प्रतिज्ञा न कर्तव्या ; अत एव पृथक्छास्त्रत्वावगम इति शंका । मीमांसका एव धर्मजिज्ञासेत्यस्य वेदार्थजिज्ञासेत्यर्थं वर्णयन्ति ; अधर्मादिविचारस्यापि मीमांसायां कृततया तत्संग्रहस्याऽऽवश्यकत्वात् । तावता ब्रह्मविचारो न तदिष्टः, उपनिषदामूषरप्रायत्वेन विचारणीयां-शाभावस्य तदिष्टत्वात् । तद्रीतौ, वेदार्थजिज्ञासेत्यर्थवर्णनेऽपि कामं ब्रह्मविचारपृथक्प्रतिज्ञा युज्यते । न तु ऐकशास्त्र्यवादिभवन्मते ; ब्रह्मणोऽपि वेदार्थत्वेन गृहीतत्वादिति व्युत्पादयितुं संमतश्चैकशास्त्र्यमि-त्युक्तम् । परिहरति सत्यमिति । धर्मजिज्ञासेति प्रथमप्रतिज्ञया गृहीतानां विशेषाणामपि पृथक्पृथक् पुनः प्रतिज्ञा तृतीयतुरीयाद्यध्यायेषु जैमिनीये दृश्यते तत्तदध्यायप्रतिपाद्यानां वैलक्षण्यावगमनाय । तथा अन्तिम-काण्डप्रतिपाद्यस्यापि विशिष्य प्रतिज्ञा सामान्यप्रतिज्ञान्तर्भावेऽपि युज्यत एवेति ॥ १४ ॥

15. योऽसौ शारीरकांशे निरवधिमहिमा साध्यते विश्वकर्ता
यो वा को वा स भावी तदितरसदृशः सोऽपि यष्टव्य इष्टः।
निर्धारस्तस्य पश्चादथ तु परमिहानागतावेक्षणं स्यात्
कर्मैवं किं न पश्चात्तनमिति नः विमोऽशुद्धधीर्नात्र मृग्या ॥

ऐकशास्त्र्ये सत्यपि कश्चिदाक्षेपं प्रस्तौति–य इति। अयमत्र-चोदकस्य भावः—ऐकशास्त्र्यवादिभिः कर्मविचारपूर्वकत्वे ब्रह्मविचारस्य कर्मणां ब्रह्मणोपजीव्यत्वं हेतुत्वेनोच्यते। एवं कर्मानुष्ठानकालेऽपि ब्रह्मभागस्योपजीव्यत्वं वक्तुं शक्यते,—आग्नावैष्णवादिकर्मसु विष्णोरपि यष्टव्यत्वात्; तस्य च वेदान्तनिर्धार्यत्वात्। यदि चानागतावेक्षण-न्यायेन कर्मविचारस्य पूर्वत्वम्; तर्हि तेनैव न्यायेन कर्माङ्गक ब्रह्मोपस-नादिविचारादिकमेव पूर्वं क्रियताम्। तथा च कर्मविचारस्य पूर्व-भावित्वं ब्रह्मविचारस्य पश्चाद्भावित्वमिति विभागो न स्यादिति। अयमत्र शब्दार्थः—यस्तु वेदान्ते कश्चिदीश्वरोऽभिधीयते, स तु ब्रह्मादिष्व-न्यतमो भवतु। कोऽपि कर्मकाण्डे यष्टव्य इष्टः। तस्य निर्धारो वेदान्त-भागे। वेदान्तनिर्धार्यपरमपुरुषोपजीवनेन यथा आग्नावैष्णवादिकर्म-प्रवृत्तिः—तथा कर्मनिरूपणं पश्चात्तनं भवतु; तदुपजीवनेन कर्मसाका-ङ्क्षोद्गीथाद्युपासनविचारः पूर्वं स्यादिति पौर्वापर्यव्यत्ययोऽपि स्यादिति। अत्र परिहरति नेति। कर्माधिकारिणामनुष्ठाने विष्णुरिति किञ्चिद्दैवत-मिति सामान्यज्ञानमेवापेक्ष्यते; न पुनः वेदान्तवेद्यं परं ब्रह्मेति। उद्गीथाद्युपासनकाले तु साङ्गं कर्म विशेषेण ज्ञेयम्। तथा ब्रह्मविद्याङ्ग-भूतकर्मविचारकालेऽपि फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयमन्तरेण

विशेषपरिज्ञानाभावात् विशेषतः [कुतः?] कर्मविचारस्यैव ब्रह्मचिन्तया-मधिकार इति वैषम्यदर्शनात् कर्मविचारपूर्वको ब्रह्मविचार इति निश्चलोऽयं निर्णयः ॥ 15

शंकते **यद्यपीत्यादिना पश्चात्तन**मित्यन्तेन। परिहरति **इति नेत्या**दिना। ब्रह्मविचारानन्तरमपि कर्मविचारस्य कर्तुं शक्यत्वात् ब्रह्मकाण्ड एव प्राच्योऽस्तु; अयं तु पश्चात्। तथा चेत्, ब्रह्मजिज्ञासेति कृत्स्नवेदार्थ विचारप्रतिज्ञा, धर्मजिज्ञासेति श्रुतमात्रस्येति स्यात्। अतो विनिगमका-भावात् ऐकशास्त्र्यं नेति शंकितुराशयः। ननु ब्रह्मकाण्डे उद्गीथादिर्वि-चार्यते, तस्य कर्मान्तर्गतत्वात् तदर्थं कर्मविचारः कार्य इति चेत्-ब्रह्म-विचारोपि कर्मविचारात् पूर्वं कार्य एव। विष्णुरुपांशु यष्टव्यः, आग्ना-वैष्णवमेकादशकपालमित्यादिकर्मज्ञानस्य विष्णुज्ञानसापेक्षत्वात्। तस्य विश्वकर्तृत्वादिविशेषाकारेण ज्ञानाभावेपि सामान्यज्ञानमात्रेण यष्टव्यता स्वीकर्तव्या। अन्यथा तदितरेषामग्नीन्द्रादीनामपि विचारं कृत्वा पश्चादेव धर्मविचारस्याऽऽरम्भणीयत्वापातात्। विशिष्य देवताज्ञाना-भावेऽपि कर्मणः फलजनकत्वमस्तीति ज्ञापनार्थं देवतान्तरविचारः प्रथमं न कृत इति चेत्-विष्णुविषयेऽपि तुल्यमेतत्। एवञ्च यथा सामान्यतो विष्णुज्ञानं कर्मविचारस्य पर्याप्तम्, तथा सामान्यतः कर्मज्ञान-मेव ब्रह्मविचारस्यापि पर्याप्तमिति उद्गीथादिविचारघटितब्रह्मविचारं पूर्वं कृत्वैव कर्मविचारः क्रियतामिति। **योवाकोवा स भावी**। अज्ञात-यत्किञ्चिद्रूपवानस्तु। **निर्धारइति**। सामान्यज्ञानेनापि यष्टुमर्हस्य विशेषजिज्ञासा यदि कस्यचिद्भवति, भवतु तन्निर्धारः पश्चादित्यर्थः।

नन्वेकोनसहस्राधिकरणवादो मीमांसकानाम् । एकेनाधिकरणेन कस्मिंश्चिदर्थे विमृश्यमाने तत्काले तदन्याधिकरणानां तदनन्तरभाविनामपि विचारितार्थकत्वभावनं कार्यमिति तदाशयः । अतः **अनागतस्य** भविष्यतोपि विष्णुविवेकस्य **अवेक्षणं** पूर्वस्थितत्वभावनं प्रतीक्षणं वेति । प्रश्नमनूद्याह **अथत्विति** । यदि विश्वकर्तृविषयमनागतावेक्षणमिष्यते । तर्हि **कर्मैवं किं न पश्चात्तनम्**—भविष्यद्विचारकर्मावेक्षणेन पूर्वं ब्रह्मविचार एव किं न भवतीति । परिहारे हेतुमाह **विभोरिति** । विशिष्य कर्मज्ञानाभावे उद्गीथाद्यनुष्ठानं न भवति । विशिष्य विभुज्ञानाभावेपि कर्मानुष्ठानं भवति । 'विभुविषयकनिष्कलङ्कज्ञानस्यानपेक्षितत्वात् नास्य पूर्वत्वमिति ॥ १५ ॥

16. **अन्तर्यन्तारमेकं निखिलदिविषदां प्राप्यबुद्ध्यैव**
(**प्रागबुध्वैव?**) **केचित्**
**तज्जातीयं च बुद्ध्वा कतिचन यदि वा सन्दिहाना यजन्ते ।**
**तेषामस्त्यन्तवत्तु स्मृतमिह हि फलं नैवमध्यात्मशास्त्रं**
**तत्त्वे बुद्धे यथावस्थितभजनदशालम्भितस्तत्पदाप्तेः ॥**

उक्तमेवार्थं पुनरपि वैशद्यार्थमुपपादयति-**अन्तर्यन्तारमिति** । लोके हि केचिदग्नीन्द्राद्यन्तर्यामिरूपं परमात्मानं(नम?)बुध्वापि यजन्ते, केचित् किञ्चित् प्रबुध्यापि अग्निन्द्रादितुल्यजातीयताबुद्ध्या; अपरे पुनः संदिहाना एव । तेषामप्यन्तवत्तु फलं भवति । तेन कर्मानुष्ठानकाले ब्रह्मयाथात्म्यज्ञानं नावश्यम्भावीति ब्रह्मविचारस्य पूर्ववृत्तत्वं न युज्यते ; अध्यात्मशास्त्रे तु वैपरीत्यमित्याह **नैवमिति** । तत्त्वहितपुरुषार्थपरि-

ज्ञानपूर्वकयथावस्थितकर्मयोगज्ञानयोग[परिज्ञान]पूर्वक भगवदुपासनादेव ब्रह्मप्राप्तिरिति वेदान्तवाक्यनिर्णयः, तथा साङ्गकर्मपरिज्ञानमन्तरेण कर्मज्ञानाङ्गकब्रह्मविद्यापरिज्ञानाभावात् कर्मविचारपूर्वको ब्रह्मविचार इति सिद्धम् । 16

उक्तं परिहारं विशदयति **अन्तर्यन्तार**मिति । अग्न्यादिदेवता अपि यथावदज्ञात्वा, तज्ज्ञानेऽपि तदन्तर्यामि ब्रह्म परम् अज्ञात्वा केचित्, तस्य ब्रह्मणः अग्न्यादितद्देवताजातीयत्वं ज्ञात्वा परे, प्रमाऽभावेऽपि संदेहरूपज्ञानपूर्वमन्ये कर्म कुर्वन्ति चेत्–तत्रापि फलमस्ति, परं तु **अन्तवत्** विनाशि । अतः कर्मशास्त्रस्याध्यात्मशास्त्रापेक्षा नास्ति । **नैवमध्यात्मशास्त्रं** कर्मशास्त्रानपेक्षम् । कर्मतत्त्वे बुद्धे सात्त्विकत्याग-पुरस्सरतदनुष्ठानोपकारबलादेव यथावस्थितभजनदशायाः लभ्यत्वात् । तदभावे तत्पदप्राप्तिरूपमोक्षाभावादित्यर्थः ॥ **प्राप्यबुद्ध्यैवकेचि**दिति पाठे ब्रह्मविद एवोक्ताः स्युः, तथा सति ब्रह्माज्ञानेनाप्यनुष्ठानसंभवरूपस्य वक्तव्यस्यार्थस्यानुक्तया न्यूनता ; **तेषा**मिति पदेन एषां ग्रहणायोगाद-नन्वयश्च । अतः **प्रागबुध्वैवेति** पाठ इति ध्येयम् ॥ **परित्राणेऽपि** 'परमात्मानमबुध्वाऽपि' इति अकारघटितः पाठः स्थित इति वाक्यशैल्यैव ज्ञायते। अत्र श्रुतिः, 'एतद्वै तदक्षरं गार्गि अविदित्वा तपश्चर्यते.... अन्तवदेवास्य तद् भवति' इति। स्मृतिश्च, 'अन्तवत्तु फलं तेषाम्' इति ॥ १६

**17. चिन्तारम्यत्वसूत्रे किमपि हि तदुपस्थापकं ख्यापनीयं**
**तेनातश्शब्द उक्तो न खलु स विफलः पूर्वसंपिण्डितो वा ।**

**नासावार्षोपदेशो नयपदमनुसंधित्सतां सूत्रसृष्टे-**
**स्तस्माच्चिन्तार्थचिन्तास्पदमधिकरणं स्यादुपोद्घात एषः ॥**

एवं सूत्रसामर्थ्याद्यनुरोधेन ऐकशास्त्र्यसमर्थनमुक्त्वा तस्यैव सूत्रस्य शास्त्रोपोद्घातत्वमप्युपपादयति चिन्तेति । अयं भावः—उपोद्घातो हि नाम प्रकृतचिन्तार्थचिन्तान्तरम् । यथाहुर्न्यायविदः—"प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्य प्रागेव तदर्थार्थवर्णनमुपोद्घातः" इति । मीमांसाप्रतिपाद्यो धर्मः, तेन धर्मप्रतिपादनाभिसन्धिना प्रथमसूत्रे धर्मविषयसूत्रारम्भ्यत्वमेव समर्थ्यते । अतः उपोद्घातलक्षणोपेतत्वात् उपोद्घातत्वसिद्धिः । अतश्शब्दोऽप्यत्र शास्त्रारम्भ्यत्वसूत्रे हेतुतयोपयुज्यते, तदिदमाह-तेनातश्शब्द इति । अत्र केचिदाहुः—अतश्शब्दोऽत्र अथशब्दानुशासनम् अथयोगानुशासनम् इत्यादिष्विव अनर्थत्वादनपेक्षित एव । अथवा अपिचेत्यादिवत् "अथातः" इति सम्पिण्डितोऽयं शब्दः आनन्तर्ये प्रयुज्यत इति । तत् वार्तम्—प्रकृतापेक्षितार्थसद्भावे सति प्रयुक्तस्य शब्दस्य नैरर्थक्यकल्पनायोगात्, अप्रामाणिकानपेक्षितसम्पिण्डितत्वकल्पनायोगाच्च । उक्तमभियुक्तैः-"अथात इति शब्दोऽयं नानन्तर्ये प्रयुज्यते" इति । ननु महर्षीणामुपदेशाः अपर्यनुयोज्याः, यत् विवक्षितार्थात् अधिकमपि शब्दं प्रयुञ्जते इति चेत्—तत्राह—नासावार्षोपदेशः इति । पुराणादिष्वेव तादृग्विधव्यवहाराः सङ्कुचिताः । अत्र हि सूत्रकारो न्यायानुसन्धानसाकाङ्क्षाणामन्तेवासिनां सूत्रं प्रणीतवान्, तेन सौत्रशब्दस्य न्यायपरत्वावलम्बनेन अतश्शब्दस्य उपोद्घातत्वसमर्थनार्थत्वमेव स्वीकार्यम् । अत इदमधिकरणं

शास्त्रार्थसमन्वयाच्छास्त्रं, तच्चिन्तासमर्थनार्थत्वादुपोद्घातोऽपि भवतीति स्वीकार्यमित्याह तस्मादिति ॥ 17

वेदाध्ययनानन्तरं वेदार्थजिज्ञासेति सूत्रस्यार्थः । ब्रह्मजिज्ञासा-प्यत्र क्रोडीक्रियते, ऐकशास्त्र्यात् तथाग्रहणस्य स्वरसत्वादित्युक्त्वा ऐकशास्त्र्यमेवैतावदुपपादितम् । अथाधिकरणरचनां करिष्यन् सूत्रस्य न प्रतिज्ञामात्रत्वम्, किं तु उपोद्घातरूपत्वम् । तदुपस्थापकोऽतश्शब्द इत्युपोद्घाताधिकरणमिदमित्याह **चिन्तेति** । अथ धर्मजिज्ञासेत्युक्तौ अथ धर्मचिन्ता भवतीत्यर्थः स्यात् । **अत** इति हेतुप्रयोगे तु चिन्तायाः साध्यत्वमारभ्यत्वं प्रतीयेत । तेनोपोद्घातत्वसिद्धिः । प्रकृतसिध्यर्थ-चिन्ता ह्युपोद्घातः । धर्मविचारस्य कर्तव्यत्वस्थापनं धर्मविचारसिद्ध्युपयोगि । तत्र हेतूपन्यासः अत इति । अतो न तस्य वैफल्यम् । अथात इति समुदितमानन्तर्यपरमिति भवदासोक्तं तु शाबराद्यनभिमतमिति वार्तिके उक्तमेव । अतो न तस्याथशब्दसंपिण्डितत्वम् । ननु सति पूर्वपक्षे हेतुपूर्वककिञ्चिदर्थस्थापनार्थमेवातश्शब्द इति कुतः । "अथातो धर्मं व्याख्यास्यामः" इति सच्छिष्यसंपत्त्या धर्मनिरूपणमिति कणादसूत्र इव स्थितकीर्तनमात्रत्वसंभवादिति चेत्—नासावार्षोपदेशः । पुराणेतिहास-वैशेषिकादिवत् नोपदेशमात्रता; किं तु न्यायनिबन्धनात्मकता । अतः प्रथममेव तद्भङ्गो न युज्यते । सन्न्यायविषयभूतार्थानुसंधान-साकांक्षान् प्रति हि अत्र सूत्राणि सृष्टानि । अतो धर्मचिन्तासिद्ध्यर्थ-तदारभ्यत्वचिन्ताविषयकत्वात् उपोद्घातरूपमिदमधिकरणम् ॥ १७ ॥

18. निष्पन्नापातबुद्धेर्विषयविशयनाभ्यूहनिर्धारणार्थान्
न्यायः पञ्चाधिकुर्वन् अधिकरणमिति व्याहरन्त्यार्यवृद्धाः ।
तस्मादेकैकशः प्रत्यधिकरणमिदं पञ्चकं प्रेक्षमाणः
शुद्धाङ्गन्यायदृष्टिः श्रुतिगणविषयभ्रान्तिमेदं प्रमार्ष्टि ॥

पूर्वश्लोकप्रयुक्तस्याधिकरणशब्दस्यार्थमञ्जसमेतं विशदं प्रकाशयति—निष्पन्नेति । आपातप्रतीतवाक्यार्थविषयो न्यायोऽधिकरणमित्युच्यते, तस्य च विषयादिपञ्चकमङ्गम् । तेन प्रत्यधिकरणमिदं परिशुद्धबुद्धि-परिशोधनीयमित्यर्थः । 18

प्रथमाधिकरणमुपोद्घात इत्युक्त्या अधिकरणसमुदायरूपत्वं ग्रन्थस्य गमितम् । तत्राधिकरणशब्दार्थमाह निष्पन्नेति । न्यायोऽधिकरणम् । सांगवेदाध्ययनादिवशात् अनवधारणात्मकापातबुद्धिर्यस्य तस्य पुंसोऽपेक्षितो यो न्यायः विषयवाक्य-संशय–पक्षप्रतिपक्षोपपत्तिपरि-शीलन–तदधीननिर्णय–तत्फलरूपांशपञ्चकग्राही, स एवाधिकरणमिति अभियुक्ता आहुरिति पूर्वार्धस्यार्थः । न्यायघटकत्वं विषय–संशय-विचार-निर्णय–तत्संपाद्यफलरूपाणां पञ्चानाम् । विषयादिपदानामर्थ उपरितने श्लोके । तथा च किञ्चिद्विषयगोचरः तद्विषयप्राप्तसंशयाधीन-पूर्वपक्षयुक्तिवारकः सप्रयोजननिर्णयकरो न्यायोऽधिकरणमित्युक्तं भवति । अतएवाधिकरणमाला न्यायमालेत्येवं नयविशेषपरतयैवाधिकरणपदव्यव-हारः । साधकवाक्यकलापरूपन्याये सूत्राण्यन्तर्भवन्ति । एकैकशः तत्तद्विषयविशयादिविशेषग्रहणेन इदं प्रेक्षमाणः पुरुषः शुद्धाङ्गे शुद्ध-

पूर्वोक्तांगविशिष्टे तथा अङ्गपञ्चकसंपन्ननिर्दोषव्याप्तिपक्षधर्मताकहेत्वादियुक्ते न्याये दृष्टिमान् सन् विषयवाक्यस्यार्थनिश्चयेन पूर्वपक्षं परिहरतीति ॥ १८

**स्वेन ख्याति विषृ(षिः)ण्वन् विषय इह मतिस्संशयो निश्चयान्या**
**तेनाभ्यूहो विचारः प्रमितिरभिदुरा निर्णयस्तर्कमानैः ।**
**तत्साध्यं कर्तुरिष्टं फलमनितरजं तानि पञ्चाधिकुर्वन्न्यायो**
**बाधं विपक्षे प्रथयति विविधं स्वाङ्गदोषो न दृष्टे ॥ 19.**

स्वेनेति । "विषयो विशयश्चैव विचारो निर्णयस्तथा । प्रयोजनं च पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः" इति श्लोकोऽत्र पाठ्यः । 19

विषयादिशब्दानां व्याख्यानपूर्वकं न्यायकार्यमाह स्वेनेति । **सिनो**ति बध्नातीति सिन्वन् विषिण्वन्-बध्नन् विषय इति वाचस्पत्याद्युक्त्या **विषिण्वन्** इति पाठो युक्तः । यः **स्वेन** स्वतः स्वरूपेण विशेषविचाराभावे **ख्याति** अवधारणात्मकज्ञानं स्वविषयकं विषिण्वन् भवति, बध्नाति, सः विषयः । यथावदर्थप्रकाशरहितं विषय इत्युच्यत इति यावत् । **इह** एतद्विषये जाता निश्चयान्या मतिः **संशयः** विशयनम् । **तेन** तदधीनः **विचारः** पक्षप्रतिपक्षोपपत्तिपरिशीलनम् अभ्यूहः । सन्न्यायजन्यमबाध्यं ज्ञानं निर्णयः । स तर्करूपेतिकर्तव्यताविशिष्टप्रमाणजनितः । यदर्थमेतद्वाक्यार्थनिर्णयगवेषणम्, तत् फलम् । एतत्पञ्चकसंबन्धी न्यायः अधिकरणम् । **स्वाङ्गदोषो न दृष्टे** । एवमप्रकाशे विषये दृष्टे न्यायतः प्रकाशिते सति स्वाङ्गदोषः-विषयस्वरूपगतो दोषो न भवति । विषयत्वावस्था निवर्तत इति यावत् । "विषयो विशयश्चैव विचारो निर्णयस्तथा । प्रयोजनञ्च पञ्चांगं

आह्वोऽधिकरणं विदुः" इति प्रसिद्ध्यनुरोधेनेदम् । 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्' इति पूर्वार्धपाठे पूर्वपक्षपदं प्रथमकोटि-साधकन्यायपरम् । उत्तरपदं सिद्धान्तकोटिसाधकन्यायपरम् । तत्र निर्णयोऽन्तर्गतः ॥ १९ ॥

२०. आहुश्चान्ये दशाङ्गान्यधिकरणगणे वेद्यमाद्यं तथार्थे
संशीतिं तन्निदानं विविधमपि तथा संगतेश्च प्रकारम् ।
तादर्थ्यार्थं विचारं फलफलिभवनं पक्षयोर्न्याययुग्मं
निर्णीतिं तत्फलं चाप्ययमपि निपुणन्यायवित्संप्रदायः ॥

अत्र केचिदाचार्या दशाङ्गान्याचक्षते, यथाहुः—"सङ्गतिः विषयश्चैव संशयोत्थानकारणम् । संशयस्य प्रकारश्च तदर्था च विचारणा ॥ तस्यां फलफलित्वं च न्यायौ द्वौ पक्षयोर्द्वयोः । निर्णयस्तत्फलं चेति बोध्यान्यधिकृतौ दश" इति ॥ तदिदं सर्वमपि विशदमेवा-नुवदति—आहुरिति । अत्र हि सिद्धान्तन्यायस्यैव प्रधानाङ्गसमुच्चयेन अष्टाङ्गयोगव्यपदेशवत् दशाङ्गत्वव्यवहारः । अथवा परार्थानुमानवत् न्यायप्रतिपादकसूत्रस्यैव अधिकरणत्वेन दशाङ्गत्वसिद्धिः ॥ 20

अनेकाधिकरणस्थले पूर्वाधिकरणादुत्तराधिकरणस्य संगत्या सह विमृश्य अधिकरणस्याङ्गानि दश केचिदाहुः । तदाह आहुश्चेति । तत्राद्यमंगं तावत् वेद्यम् । विषय इति यावत् । द्वितीयं तदर्थसंशयः । तृतीयं तादृशसंशयोत्थितिहेतुः । चतुर्थं पूर्वाधिकरणेन साकमस्य संगतिः ; पूर्वाधिकरणविचारमूलतयैवात्र संशयस्योत्थानात् । पञ्चमं तत्संशयापाकरणार्थस्तदनुबन्धिविचारः । षष्ठं तादृशविचाराणां फलफलि-

भावः। सप्तमं प्रथमपक्षसाधकन्यायाभासः। अष्टममुत्तरपक्षन्यायः। नवमं निर्णयः। दशमं तत्प्रयोजनमिति। श्रुतप्रकाशिकायां चिन्तामणौ च तत्र तत्राधिकरणे एतदङ्गदशकं द्रष्टव्यम्। **तादर्थ्यार्थं** विचारमिति। तादर्थ्यं—तदर्थकत्वं तत्फलमेव। तस्मै **तादर्थ्यार्थम्** ॥ २० ॥

**21. अत्राहुः केचिदाद्याध्ययनविधिरसावक्षराणां गृहीत्यै तस्मादर्थे विवक्षा न भवति न ततस्तस्य चिन्तेति पूर्वः।**
**पक्षोऽन्यस्तु स्वशक्त्या प्रभवति निगमः स्वार्थबोधे सतर्कः तेनाधीतार्थचिन्ता स्फुरितबहुफला स्यादिति स्थापनेति ॥**

एवमधिकरणकल्पप्रकारमभिधाय शास्त्रोपोद्घातरूपस्य प्रथमाधिकरणस्य पूर्वपक्षसिद्धान्तप्रकारं कैश्चित्कल्पितं तावदनुवर्णयति अत्रेति। अयमभिप्रायः—"स्वाध्यायोऽध्येतव्यः" इति विधिः अक्षरराशिग्रहणे वेदाध्ययनं विनियुङ्क्ते; न पुनरर्थज्ञान इति भावत्कानां सम्प्रदायः। तथाच विनियोजकाभावान्नार्थपरत्वम्। तथाचाविवक्षितार्थत्वाद्वेदस्य वेदवाक्यार्थविचारात्मकं मीमांसाशास्त्रमनारम्भणीयमिति पूर्वपक्षः। सिद्धान्तस्तु "सिद्धे शब्दार्थसम्बन्धे" इति सर्वोपजीव्यशब्दन्यायानुसारात्, "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इत्यादिभाविसूत्रकलापाच्च शब्दस्यार्थपरत्वे स्वभावसिद्धे सति तदर्थमध्ययनविधिर्नापेक्ष्यः। न हि प्रत्यक्षादीनां प्रमेयप्रावण्यं विधायकवचनमपेक्षते। तेनात्र सहकारिलाभ एवान्वेषणीयः। ततश्च साङ्गाध्ययनसामर्थ्यात् संस्कृतप्रायदेशवासाच्च प्रयोजनवदर्थापातप्रतीतौ सिद्धायां

अधीतवेदः पुरुषः स्वयमेव प्रवर्तते। न हि रागतः प्राप्ते विधिरपेक्ष्यते। तेन समारम्भणीयं शास्त्रमिति। 21

स. अधिकरणशब्दस्यार्थः द्वेधा दर्शितः। अथ प्रथमाधिकरणरचनां भाट्टप्राभाकरवैलक्षण्येन स्वपक्षे दर्शयति। तत्र प्रथममेकदेशिमतमाह अत्राहुरिति। आद्याध्ययनेति। अध्ययनं त्रिविधं ग्रहणं धारणं जपश्चेति। तत्र धारणस्य जपस्य च तत्र तत्र फलं श्रुतमस्ति (सेश्वर-मीमांसा पु. 21.)। आद्यस्य त्वध्ययनस्य अक्षरराश्यवाप्तिरेव फल-मनुक्तिसिद्धम्। अतः अस्मत्पक्षे भाट्टादिपक्ष इवाध्ययनस्यार्थज्ञानार्थ-त्वाभावात् विचारो न कार्य इति पूर्वः पक्षः। सिद्धान्तस्तु–लोकवत् वेदस्यापि अर्थबोधकत्वस्वभावात्, यत्र स्पष्टमर्थग्रहणाभावः, तत्रापि लोकवत् तर्कपुरस्कारेण निधार्यत्वात् तथा निर्धारणस्य चतुर्वर्ग-फलोपायानुष्ठानहेतुतया वैयर्थ्याभावात् धर्मचिन्ता स्यादेवेति। स्थापने-त्यस्य, पूर्वः इत्युक्तप्रतिकोटितया, सिद्धान्त इत्यर्थः ॥ २१ ॥

22. अन्येऽनाघ्रातदोषान्निर्णीते निगमतः शक्यहेतौ पुमर्थे
मानत्वे निर्विशङ्केऽप्यवसरफलयोर्हानितो नार्थचिन्ता।
इत्युद्यत्पूर्वपक्षप्रशमनमनसा सूत्रमाद्यं प्रणीतं
कल्प्या तत्कालसिद्धिः फलमिह विशयभ्रान्त्यबोधव्युदासः॥

प. अपरे पुनरन्यथा पूर्वपक्षसिद्धान्तपरिकल्पनमारचयन्ति इत्याह अन्य इति। अयमर्थः–अनादिनिधनाविच्छिन्नसम्प्रदायत्वेव निर्दोषतया हि निर्णीतो वेदः। तस्य वेदस्य शब्दार्थसम्बन्धस्वाभाविकत्वादिना हेतुना बोधकत्वं सिद्धम्। तद्विषयश्च शक्यानुष्ठानेन यागदानहोमादिना

अभिमतहेतुना विशिष्टः पुरुषार्थः । वेदप्रामाण्यं च बहुभिरपि न्यायकलापैरज्ञानसंशयविपर्ययादिनिरासेनावधारितम् । अतः प्रयोजनवदर्थापातप्रतीत्या अधीतवेदः पुरुषः स्वयमेव प्रवर्तते मीमांसायामिति सुष्ठूक्तम् । अथापि अवसरालाभात् फलाभावाच्च पूर्वपक्षवादिना शास्त्रानारम्भ आशङ्क्यते । तन्निवारणार्थं इदं सूत्रं प्रणीयते इति सिद्धान्तारम्भोऽपि सिद्धः इति । "अधीत्य स्नायात्" इत्यध्ययनानन्तरमविलम्बेन स्नानं विधीयते । "अनाश्रमी न तिष्ठेत्तु क्षणमेकमपि द्विजः" इत्यादिना स्नानानन्तरम् अकालक्षेपेण गृहस्थाश्रमादिपरिग्रहोऽप्यवगम्यते । तथा च स्नानात् पूर्वोत्तरकालयोरुभयत्रापि मीमांसाश्रवणस्य क्वावकाशः । इत्थं फलाभावोऽपि वर्णनीयः, साङ्गाध्ययन-संस्कृतप्रायदेशवासाभ्यां अधीतवेदार्थे प्रतिपन्ने किमनेन अजागलस्तनायमानेन मीमांसाश्रवणेनेति । उभयीमप्याशङ्कामुन्मूलयति इत्युद्यदित्यादिना । प्रथमां शङ्कां परिहरति—कल्प्येति । यथा "अधीत्य स्नायात्" इत्यध्ययनानन्तरमविलम्बेन स्नानविधानेऽपि गुरुदक्षिणार्थमर्थार्जनादेरवकाशो लभ्यते, एवं स्नानपूर्वकं यावज्जीवानुष्ठेयसर्वाश्रमधर्मानुष्ठानसिद्ध्यर्थं ज्ञानार्जनस्याप्यवकाशो लभ्यताम् । तच्च ज्ञानं मीमांसाश्रवणमन्तरेण न सम्भवतीति लब्धं मीमांसाश्रवणमित्येषा दिक् । विस्तरस्तु श्रीमद्भाष्यव्याख्यानेष्वनुसन्धेयः। द्वितीयामाशङ्कां परिहरति—फलमिति । आपातप्रतीत्या यत्किञ्चिदेवावगम्यते, न पुनः साङ्गानुष्ठानाद्यौपयिकं सकलमपि । मीमांसया तु संशयविपर्ययादिनिरासमुखेन निखिलमपि निरवद्यमवगम्यमिति समारम्भणीया मीमांसेति ॥

स. अभिमतं पक्षान्तरमाह **अन्ये** इति। आहुरित्यनुषङ्गः। धर्मविचारो न कार्य इति शंकापरिहारार्थं धर्मजिज्ञासासूत्रम्। तत्राकार्यत्वशंका कथम्? स्वर्गादिफलाभावाद्वा रागादेस्तद्धेतुत्वाभावाद्वा तस्य मनुष्याशक्यत्वाद्वा तद्बोधकस्य निगमस्य दुष्टत्वाद्वा विचारप्रवृत्तिप्रतिबन्धनं न भवति। अस्मादृशस्त्वनुष्ठकर्महेतुकफलस्थितेर्निर्दोषात् वेदात् प्रतीतेः। न च जातमपि वेदजन्यं ज्ञानं न मानमिति शंक्यम्; ज्ञानानां स्वतः—प्रामाण्यात्। शंकाविरहाच्च। अतः स्वर्गाद्यर्थमध्ययनमिति पक्ष इव अक्षरग्रहणार्थत्वपक्षे विचारस्यानारम्भणीयत्वशंका नास्ति। यद्यप्येवम्—तथापि अवसरफलयोरभावादविचार्थत्वशंका। अवसराभावः स्नानविधिनाऽवरोधात्। फलाभावः सन्ध्योपासनादिवत् अर्थविचारमन्तरैव पूर्वपूर्वशिक्षया धर्माणां सुकरत्वादिति। तत्र क्वचित् अर्थसंदेहस्य, अन्यत्रान्यथाग्रहरूपभ्रान्तेः अपरत्र सर्वथैवार्थाज्ञानस्य च सत्त्वात् निश्शंकानुष्ठानायोगात् तन्निवृत्तये विचारः कार्य एवेति सिद्धान्तः। यत्तु अवसरो नास्तीति—तन्न, निर्णयं विनाऽनुष्ठानायोगात् तदर्थमवसरः कल्प्य इति। तत्कालसिद्धिः विचारावसरलाभः॥ २२॥

23. **आनन्तर्योक्तिरत्र ह्युचितमवसरं शक्तितो वक्तुमीष्टे**
**धर्मप्राथम्यसिद्ध्यै त्वथपदमिति यत् योजनाभेदतस्तत्।**
**हेतूक्तिर्निर्णिनीषावधिरिह गमयेन्निर्णयाप्तेः फलत्वं**
**तस्मात् तत्क्षेपणीयस्त्वयमुचिततया दर्शितः पूर्वपक्षः॥**

प. इत्थंपूर्वपक्षसिद्धान्तकल्पनायां सूत्रस्वारस्यमस्तीत्याह **आनन्तर्येति**। अत्र हि अथशब्दो वेदाध्ययनानन्तरकालस्य मीमांसा-

श्रवणयोग्यकालत्वमाह, तथाचावसरवचनात् अथशब्दस्वारस्यसिद्धिः। केचित्तु—'ब्रह्मजिज्ञासाप्राथम्यनिवारणेन धर्मविचारप्राथम्यमथशब्देनोच्यते' इत्याहुः। तदपि प्रकृतानुकूलत्वात् योजनाभेदसिद्धमिति नास्माभिर्निषिध्यते इत्याह धर्मेति। अतश्शब्द-जिज्ञासाशब्दयोः फलपरत्वे स्वारस्यमाह हेतूक्तिरिति। अतश्शब्दो हेतुपरः। हेतुश्च फलमुद्दिश्येति फलमपि प्रतिसंबन्धितया सिद्ध्यति इति। जिज्ञासापदमपि फलपरमेव। ज्ञातुमिच्छा जिज्ञासा; ज्ञानं च विचारात्मकं निर्णयपर्यन्तमत्र कर्मतया प्रतीयते; कर्म पुनः ईप्सिततमत्वात् फलमेव। तथाच विचारसाध्यो निर्णयः फलमिति जिज्ञासापदसामर्थ्यादेव निर्णयाप्तेः फलत्वं सिध्यति। तस्मादियमेव पूर्वपक्षसिद्धान्तकल्पना सूत्रकाराभिमता गरीयसीति निगमयति तस्मादिति॥ 23

स. अवसरस्य फलस्य च प्रदर्शकपदगुम्भनरूपत्वात् सूत्रस्य, अवसरफलयोरभावप्रयुक्तशंकावारणार्थत्वं सूत्रस्य ज्ञायते इत्याह आनन्तर्येति। अध्ययनानन्तरमित्यथशब्देनोक्ततया अध्ययनात् पश्चात् स्नानस्यैवावसर इति न मन्तव्यमित्युक्तं भवति। एकदेशिनः अनन्तरं धर्मजिज्ञासेत्युक्तिः ब्रह्मजिज्ञासायाः एतत्पूर्वत्वनिरासायेत्याहुः। तद् भवतु योजनान्तरम्। वेदार्थजिज्ञासेति सामान्यप्रतिज्ञाया अप्यस्मदिष्टतया तस्याप्यनुगुणतयैव तात्पर्यस्य वक्तव्यत्वात्। तदा हि ब्रह्मविचारोऽपि धर्मजिज्ञासापदार्थः। अतोऽवसरदर्शी अथशब्दः। अतश्शब्दः फलासद्भावशंकापरिहारकः। अतश्शब्देन केवलाध्ययनग्रहणे तस्य जिज्ञासाहेतुत्वायोगात् साङ्गवेदाध्ययनमेव हेतुः। वेदाध्ययनजन्यज्ञानमिति यावत्।

तच्च यदि निर्णयात्मकम्, तदाऽपि जिज्ञासां प्रति हेतुत्वायोगात् निर्णिनीषारूपोत्तरावधिका हेतूक्तिः अनिर्णयरूपापातार्थज्ञानविषयिणीति ज्ञायते। तेन निर्णयः फलमिति सूच्यते। अत उभयज्ञापकसद्भावात् अवसरफलयोरभावोद्भावनेन पूर्वपक्षोऽसदिष्ट इति ॥ २३ ॥

24. वेदाधीतेर्न पूर्वं न च सह घटते वेदवेद्यार्थचिन्ता
पश्चात्तु स्नानपूर्वैरवसरहरणं तत् कथं सेति चेन्न।
स्नानादेः प्राग्विचारस्तदनुगुणधनाद्यार्जनन्यायतः स्यात्
ऊर्ध्वं च श्रावयित्राद्यवसरनयतोऽमुष्य लब्धोऽवकाशः ॥

उक्तमेवार्थं स्थूणानिखननन्यायेन, सद्वारक निपुणन्यायोपदेशेन निष्कम्पं स्थापयति—वेदेति। अयमत्र पूर्वपक्षिणो भावः-किं वेदाध्ययनात्पूर्वं सह वा पश्चाद्वा मीमांसाश्रवणम्? पूर्वं तावत् अत्यन्तविरुद्धत्वान्न संघटते, सति कुड्ये हि चित्रं निर्मीयते। सहेति च न सम्भवति-आपादचूडमनवधारितस्य वाक्यस्य अर्थविचारासम्भवात्। पश्चादिति पक्षोऽवशिष्यते। सोऽपि न सम्भवति-स्नानाश्रमपरिग्रहादिभिः कृत्स्नस्याप्युत्तरकालस्यावरुद्धत्वात्। अतो यावज्जीवमनारम्भणीया मीमांसेति। तत् कथं सेति कालविशेषाभावः स्पष्टमुच्यते। परिहरति नेति। हेतुमाह स्नानादेरिति। न केवलं स्नानादेः प्रागेवावसरः, उत्तरत्राप्यवसरोऽस्ति इत्युच्यते ऊर्ध्वमिति। अयमत्र भावः-ब्राह्मणो हि षट्कर्मा। तस्य च यजनाध्ययनदानानि अवश्यकर्तव्यानि। याजनाध्यापनप्रतिग्रहाःपुनः वृत्त्यर्थतया नियम्यन्ते। पित्राद्यार्जितधनैस्तु वृत्त्यर्थं याजनादेरवश्यकर्तव्यत्वाभावात्, केवलं स्ववर्णाश्रमधर्मानुष्ठानाविरोधेन

श्रावयितृत्वादिकं यथारुचि ख्यातिलाभपूजार्थं स्वीक्रियते । एवमनधिगत-वेदार्थैरपि गृहस्थैः स्ववर्णाश्रमध-र्मानुष्ठानकालाविरोधेन मीमांसाश्रवणमपि यथावत् कृत्स्नवेदार्थावगतिपर्यन्तं क्रियते इति को विरोधः ? ॥ 24.

स. उक्तावेतपूर्वपक्षसिद्धान्तौ विशदं दर्शयति वेदेति । अध्ययनात् प्राक् नार्थचिन्ता ; वाक्यज्ञानतदर्थसंदेहोभयाभावात् । अध्ययन समकाल-मपि न चिन्ता, पूर्णवाक्याध्ययनानन्तरापनोद्यानामज्ञानानां तदा निवृत्तिवर्णनासंभवात् । अध्येतुः अनेकवाक्यमूलकसंदेहानां पश्चादेव प्रादुर्भावाच्च । अतः शिष्यते पश्चादिति । तदप्ययुक्तम् , अधीत्य स्नायादिति समावर्तनस्याध्ययनाव्यवहितोत्तरं विधानादवसराभावात् । परिहारे हेतुमाह स्नानेति । यथा गुरुदक्षिणा-विवाहाद्यर्थधनार्जनवशात् समावर्तने आनन्तर्यं निरुध्यते, तस्य तदुपयोगित्वात् । तथा विचार-स्यावश्यकत्वादप्यानन्तर्यं निरोध्यम् । अथवा समावर्तनादूर्ध्वमेवास्तु विचारः । न चानन्तगृहस्थधर्माक्रान्ततया अवकाशाभावः । श्रावयितु-र्गुरोरिवावकाशसंभवात् । अन्यथा गृहस्थो गुरुः कथमध्यापनार्थमप्यव-काशं लभेत, दूरे विचारार्थम् । फलाभावशंका तु प्रागेव शमिता ॥२४

25. **ज्ञातं किंचिन्न चिन्त्यं न च तदविदितं तत् क्व चिन्तेति चेन्न**
**ज्ञाताज्ञातांशभाजि स्वपरमतजुषां चिन्तनस्य प्रवृत्तेः ।**
**सामान्यात् तन्निरासे विहतिरविहता को विशेषो विशेषे**
**विशत्यध्याय(प्य?)तोऽसौ अविशदविशदीकारसाफल्यकल्प्या ॥**

प. अत्र कश्चित् पण्डितंमन्यः खण्डनकृत्सृष्ट्यनुसारेण चोदयति— ज्ञातमिति । किं ज्ञातं चिन्त्यम् , किंपुनरज्ञातम् , अथवा ज्ञाता-

ज्ञातमेकमेव ? । आद्ये ज्ञातत्वादेव न ज्ञातार्थ(वेदार्थ ?)चिन्ता, अन्यथा नित्यमपि चिन्ताप्रसङ्गात् । अज्ञाते पुनः चिन्ताप्रसङ्ग एव नास्ति; अविषयत्वादेव बुद्धेः । ज्ञाताज्ञातत्वमेकस्य व्याहतत्वादेव न सम्भवति । अतः कथमत्र चिन्ता इति भावः । परिहरति नेति । ज्ञाताज्ञातांशवति वस्तुतत्त्वे चिन्तेति ब्रूमः । न पुनर्वयमेव, भवतामपि इयमेव प्रवृत्तिरित्याह स्वपरेति । चिन्तनं हि सर्वसाधारणम् । सर्वो हि जनः पूर्वं साधारणादिधर्मज्ञानेन सन्दिग्धे ; विशेषं पुनः जिज्ञासते ; पश्चात् असाधारणधर्मदर्शनेन तद्विशेषं साधयति; स्वयं च व्यवहरति; शिष्याणामुपदिशति । शिष्यैरप्यवगम्यते । तेन जिज्ञासानुपालनं सर्वेषां साधारणत्वादभञ्जनीयमिति । इममेवार्थं विशेषतः प्रकाशयितुं विकल्प्यापि दूषयति—सामान्यादिति । किं जिज्ञासासामान्यं भवता खण्ड्यते, उत विशेषतो वा धर्मजिज्ञासा इत्याशङ्क्य पूर्वत्र स्वस्यापि शिष्याचार्यपारम्पर्येण जिज्ञासा भव्येतेत्युक्त्वा, परत्र विशेषो नास्तीत्याह—क्व इति । पथि गच्छतः पुनः जिज्ञासा द्वादशलक्षण्यामेव विश्राम्यतु इति । अत आह-विंशतीति । उक्तानां न्यायानां विषयव्यासैर्वक्तव्यत्वात् अनुक्तानां च न्यायानां विद्यमानत्वात् विंशतिलक्षणीमन्तरेण न वेदवाक्यार्थनिर्णयसिद्धिरिति ॥ 25

स. असंभवं नैष्फल्यञ्च कलयन् कश्चिदाह ज्ञातमिति । ईदृशविचारः शाबरशांकरादावप्यस्ति । अध्ययनानन्तरधर्मजिज्ञासा न भवतीति वा, धर्मजिज्ञासा न भवतीति वा किं विशेषेण; जिज्ञासैव न भवति । तथाहि-सा अर्थे ज्ञाते स्यात्, अज्ञाते वा । नाद्यः, ज्ञातत्वादेव जिज्ञासायाः

नैष्फल्यात्, नान्त्यः, अत्रजिज्ञासेति विषयनिर्देशायोगादिति । इदं परिहरति **इतिचेन्नेति** । सामान्यतो ज्ञाते विशेषेणाज्ञाते जिज्ञासा सर्वत्र सर्वजनप्रसिद्धा । आहुश्च **न्यायभाष्यकाराः** "नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तते; किंतु संशयितेऽर्थे" इति । संशयापनोदकन्यायनिबन्धनान्येव सूत्राणि । एवं वक्तव्यमुक्त्वा पूर्वपक्षिणं गर्वक्षपणेन व्युत्पादयति **सामान्यादिति** । अयमर्थः–त्वया किं जिज्ञासा सर्वापि न कर्तुं शक्यतेत्येच्यते, उत जिज्ञासाविशेष इति । नाद्यः, त्वयेदानीं कृता या जिज्ञासा, 'जिज्ञासा ज्ञाते वाऽज्ञाते वा' इति, सापि न स्यात् । त्वया तु क्रियते, अतो विहतिः सुस्था । नाद्यः, असत्कृतजिज्ञासामात्रवारणे विशेषहेत्वभावात् ॥ ननु सुहृद्भूत्वा पृच्छामि––अज्ञातांशे किल लोके जिज्ञासा । स चेदज्ञातः, कथम् अस्मिन् विशेषे मे जिज्ञासेति ब्रूयात । स विशेषो ज्ञातश्चेत्, कथं जिज्ञासेति ॥ उच्यते । विशेषं स्वरूपेणाज्ञात्वा अस्ति कश्चिदिति सामान्येन ज्ञात्वा, स्वरूपेण ज्ञानार्थं पृच्छतीति न दोषः । विस्तरेणेदमुपापीपदाम **परमार्थभूषणे** । **अतः** जिज्ञासासंभवात् **अविशदस्य** विशेषरूपेणाज्ञातस्य विशदीकारेण यत् साफल्यं ततः विंशत्यध्यायी रचनीया भवति । **विंशत्यध्यायत** इत्येव पाठ्यम् । परित्राणमप्यनुगुणम् । न तु **विंशत्यध्यायत** इति ॥२५॥

**26. ख्यातस्तर्कोऽप्रतिष्ठःस्वयमिह मुनिना सूत्रितं चैवमेतत्**
**तस्मान्मीमांसमानैरपि निगमगतिर्दुर्निरूपेति चेन्न ।**
**तर्कस्य ह्यप्रतिष्ठां क्वचिदभिदधता दर्शितो यस्तु पन्थाः**
**तत्संवादेन सर्वं न भवति शिथिलं शिक्ष्यमाणं सुधीभिः ॥**

प. अपरोऽपि कश्चिच्चोदयति–ख्यात इति। तर्को हि मीमांसा; "मीमांसासंज्ञिकस्तर्कः" इति तान्त्रिकैरेव वचनात्। तर्काप्रतिष्ठत्वं सुप्रसिद्धम्। 'तर्कोऽप्रतिष्ठः' इत्यादिना तर्काप्रतिष्ठानादिति सूत्रेण च व्याख्यातत्वात्। तस्मात् मीमांसमानैरपि वेदवाक्यार्थगतिर्दुर्निरूपेत्याह–तस्मादिति। तत् प्रतिक्षिपति नेति। तदेव विवृणोति–तर्कस्येति। तर्कस्याप्रतिष्ठत्वं अभिदधता महर्षिणा "महाजनो येन गतः स पन्थाः" इति महाजनपरिग्रहस्यैव प्रतिष्ठाहेतुत्वमुक्तम्। तेन श्रुतिस्मृत्यनुकूलतर्कानुमत्या अर्थनिर्णयः कर्तव्यः। श्रुतिस्मृतीतिहासपुराणविरुद्धास्तर्काः प्रलापमात्रत्वात् परस्परविरुद्धत्वाच्च नादर्तव्या इति तानेव अभिसन्दधते तर्काप्रतिष्ठानादित्यादय इति सुसङ्गतमेतत्॥ 26

स. मीमांसायाः न्यायनिबन्धनात्मकत्वात् न्यायानाञ्चासाधकत्वाद् वैयर्थ्यं शंकते ख्यात इति। तर्कस्य तर्कान्तरेणापनोद्यत्वात् अर्थप्रतिष्ठापकत्वाभावोऽनुभवसिद्धः। 'तर्कोऽप्रतिष्ठः' इति स्मृतिश्च। बादरायणेन च'तर्काप्रतिष्ठानादपि' इति सूत्रितम्। अतो मीमांसाबलेन वेदतात्पर्यं दुरवधरमिति चेन्न—सांख्यादिभिस्तर्केणार्थसाधनमशंक्य तर्कस्याप्रतिष्ठितत्वादिति स्वयं तर्कमेव किल प्रयुंक्ते। तथा "तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको ऋषिर्यस्य मतं प्रमाणम्। धर्मस्य तत्त्वं निहितं गुहायाम् महाजनो येन गतः स पन्थाः" इति महाजनमार्गस्य सत्पथत्वसाधनाय तर्क एव ह्याद्रियते। तर्काप्रतिष्ठातर्कोऽयं यदि विवक्षितसाधनम्, तर्हि कथं तर्कसामान्यनिरासः। यद्यसाधनम्, कथमनेन सांख्यादिनिरसनम्। अतः महाजनमार्गरूपः, तर्काप्रतिष्ठावादिना यः

पन्था दर्शितः, "अतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणम्, तदुपबृंहणायैव तर्क उपादेयः" इति तदादृतशास्त्ररूपश्च, तत्संवादेन तर्कस्याशिथिलत्वम्। तदर्थनिर्णयार्थश्च तर्क उपयुज्यते लौकिकवाक्यार्थनिर्णयार्थमिवेति ॥२६॥

**27. नास्तिक्यारम्भकत्वं मुनिभिरभिहितं यत्तु मीमांसकानां**
**तत् प्रायो हैतुकेषु प्रविशति, यदि वा पूर्वपक्षप्रवृत्तौ।**
**शास्त्रज्ञानं च बुद्धेश्चलनजनकमित्युक्तिरन्याशया स्यात्**
**नो चेत् रोचेत शङ्काकवलितमनसे केवलः क्वोपदेशः ॥**

प. प्रकारान्तरेण मीमांसाशास्त्रस्य त्याज्यत्वमाशङ्क्य परिहरति—**नास्तिक्येति**। मीमांसाशास्त्रं वेदवाक्यार्थनिर्णयोपकरणमिति यदिदमन्यैरभिधीयते, तत् महर्षिवचनविरुद्धम्—श्रूयते हि महाभारतमाहात्म्यकथने महर्षिणैवाभिहिते—"देवतातीर्थतपसां भारतात् यस्य निर्णयः। न जन्यते नास्तिकता तस्य मीमांसकैरपि" (उ-सं.) इति। तेन मीमांसका हि पर्यायचार्वाकाः। कथं तत्परिगृहीतेन शास्त्रेण वेदार्थनिर्णयः?। अत्रायं परिहारः—अत्र मीमांसका इति वेदार्थचिन्तका जैमिनीया नोच्यन्ते; अपितु "हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्" इत्युक्ताः केवलहेतुवादिनः। ते तु सुगतादयः (कपिलादयः?)। यद्वा वैनाशिकादयो भवन्तु—"काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः" इति तेषामपि महर्षिभिर्निरस्तत्वात्। अथवा "मीमांसका" इति पूर्वपक्षवादिन उच्यन्ते; तदिदमाह—**यदि वेति**। पुनरपि चोदकाभिप्रायमाशङ्क्य परिहरति-**शास्त्रेति**। "शास्त्रज्ञानं बहुक्लेशम्" इत्यादिकं हि न शास्त्रस्य वेदविरुद्धत्वमाह; अपितु मन्दबुद्धीनां न शास्त्रमुखेन

परिज्ञानं कर्तुं शक्यते ; तेषामुपदेश एव शरणमित्यभिप्रैति ; तदिदमाह—**अन्याशयेति**। उक्तार्थस्थेम्ने विपक्षे बाधकमाह **नोचेदिति**। शङ्काकलङ्कितचेतसो हि तर्कमन्तरेण कथमिव मतिकार्कश्यमतिलङ्घयेयुरित्यर्थः ॥ 27 ॥

**स.** नन्वनुष्ठानौपयिकोऽर्थनिर्णयः महाजनोपदेशमूलमेव लब्धव्यः, न तु मीमांसादिशास्त्रपुरस्कारेण; मीमांसकानां निन्दितत्वात्, विचारशास्त्रपरिचयस्य निषिद्धत्वाच्चेति शंकां परिहरति **नास्तिक्येति**। भारतादिमूलकार्थनिर्णयवतः मीमांसकैर्नास्तिक्यं नोत्पादयितुं शक्यत इत्युक्त्या तेषां नास्तिक्योत्पादकत्वं हि गम्यत इति भावः। **हैतुकेष्विति**। तत्कृतहेतुवादस्य वस्तुतः पूज्यार्थविषयकत्वात् मीमांसकपदप्रयोग उपपन्न इति भावः। (परित्राणे **सुगतादय** इत्यत्र कपिलादय इति रीत्या पाठोऽन्यः स्यात्। वैजाशिकादीनां प्रमाणपुरस्सरं पक्षान्तरे उक्तेः।) **पूर्वपक्षप्रवृत्ताविति**। मीमांसका हि सिद्धान्तप्रमेयस्थापनकौशलाविश्चिकीर्षया वेदवाक्येषु परानुद्भावितानपि बहून् अपार्थान् स्वबुद्ध्या कल्पयन्ति। तदिदं प्रत्यधिकरणं व्याख्यानुव्याख्यादिषु द्रष्टव्यम्। एवमेव हि सेश्वरा अपि आनुमानिकेश्वरनिराकरणे नैपुणमधिकमाविष्कुर्वन्ति, निरीश्वरवादिभिरपि दुरूहया स्वयमीश्वरनिराकरणपरिपाट्या। **अन्याशयेति**। शास्त्राभ्यासो नैव कार्य इत्याशयका न ; किंतु शंकाप्रसक्तिरहितानां मन्दाधिकारिणां स मा भूदित्यभिप्राया। नानामतप्रचारमूलनास्तिक्यवृद्धिदन्तुरे देशे परकृतक्षोभाभावाय क्षोभकमनःक्षोभणाय च कुशलैः शास्त्रमभ्यसनीयमेव। मन्दैस्तु उद्देशलक्षणपरीक्षणात्मनि शास्त्रे **तर्कसंग्रहादिवत्** परीक्षांशरहितशास्त्रभागाध्ययनमा-

वश्यकम् । अत एव **तत्त्वत्रयचिन्तनाधिकारे** वक्तव्यं सर्वमुक्त्वा एतदधिकविमर्शाभावेऽपि न दोष इति ज्ञापयितुं 'शास्त्रज्ञानं बहुक्लेशम्' इत्येतत् उदाहृतम् । अद्यत्वे शास्त्रज्ञानमावश्यकम् ; दुर्मतप्रचारभूयस्तया प्रायश्शंकाकलङ्कितमनस्कत्वात्, अन्येषामपि सांगाम्नायाध्यायिनां स्वतोऽपि शंकासंभवाच्चेति ॥ २७ ॥

**28. धर्मज्ञानां मुनीनां मतमिह भिदुरं धर्मविद्वाक्यसिद्धं**
**स्वोक्तार्थाद्वैपरीत्यं(?) स्वयमभिदधते तत् क्व चिन्तेति चेन्न ।**
**कर्तव्यानां विकल्पे मुनिवचनमिते धर्मतैवोभयत्र**
**व्याख्याभेदाद्विकल्पे त्वनवगतिभवे शिष्टमेवैकशेष्यम् ॥**

अत्र कश्चिच्चोदयति **धर्मज्ञाना**मिति । ननु शास्त्रप्रणेतारः परस्परं विरुद्धमेव प्रणयन्ति । अन्यथा नानाशास्त्रानुदयप्रसङ्गात् । इदमेव महर्षिणाऽप्युच्यते—"न चानृषेर्दर्शनमस्ति किञ्चित्" इति । तदिद-माह—**धर्मविद्वाक्यसिद्धम्** इति । किञ्च महर्षयोऽपि **स्वोक्तविरुद्धमेव** (मपि) तत्रतत्र पुराणेतिहासादिषु उपदिशन्ति । अतः शास्त्रानुसारात् तद-नुकूलपुराणाद्यनुसारादाम्नायार्थतत्त्वनिर्णय इत्यसङ्गतमेतत् । तदिद-माह—**तत् क्वचिन्तेति** । प्रतिक्षिपति—**नेति** । मुनयः खलु द्विप्रकाराः— वेदवाक्यार्थानुकूलवादिनः मन्वादयः । तत्प्रतिकूलवादिनः कपिला-दयः । प्रतिकूलवादिनां तावत् वाक्यं त्याज्यमेव ; प्रमाणविरोधाभावे तदुपादीयतां वा । अनुकूलवादिनां तु वादे यत्र क्वापि विरोधे सत्यपि वेदवाक्यार्थसंवादप्राचुर्यादेव अनुष्ठानविषयविरोधे विकल्प एव सङ्ग्राह्यः । तत्त्वविषयविरोधे तु "द्वैधे बहूनाम्" इत्यादिन्यायेन

प्रमाणसंवादभूयस्त्वाभूयस्त्वाभ्यां उपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्ग-परामर्शाच्चैकशेष्यं न्याय्यम्—अनवगतिहेतुकत्वाच्च व्याख्याभेदस्य। ऐकशेष्यं—एकस्यैव पक्षस्य निर्णय इत्यर्थः ॥ 28

स. ननु यद्यद्वाक्यात् यद्यदर्थप्रतीतिर्जायते, तस्य तस्य धर्मत्वमस्तु। अलं मीमांसया। न च मिथोविरुद्धं कथं धर्मत्वेनेष्येतेति शंक्यम्; मिथोविरुद्धमुनिवाक्यार्थयोरिव धर्मत्वसंभवात्। धर्मज्ञाधर्मज्ञमध्ये धर्मज्ञस्यैव ग्रहणम्, मुन्यमुनिमध्ये मुनेरेव ग्रहणमिति सत्त्वेऽपि धर्मज्ञमुनित्वे उभयोरविशिष्टे हि न कस्यापि त्यागः संभवति। ननु तत्र पुरुषभेदात् विरोधः संभावितः। अपौरुषेयश्रुतिकदम्बके कथं तत्प्रसक्तिरिति चेत्—एकमुनिकर्तृकमिथोविरुद्धवाक्यस्थले किमुत्तरम्। अतो विचारो व्यर्थ एव सर्वत्र। तत् क चिन्तेति शंकते **धर्मज्ञानामिति**। **वैपरीत्यं स्वयमभिदधते**। विपरीतमेव **वैपरीत्यम्**। स्वोक्तविरुद्धमपि स्वयं वदन्तीत्यर्थः। न तु स्वोक्तार्थे मिथोविपरीतत्वमस्तीत्यपि ते वदन्ति। उपरि **स्वयमभिहितम्**मिति वा पाठः। पूर्वं **स्वोक्तस्यैवं विरुद्ध**मिति वा। **कर्तव्याना**मिति। विरुद्धो वाक्यार्थः क्रियारूपः वस्तुरूपो वा। आद्ये, विरोध एव नास्ति, उभयथाऽप्यनुष्ठानसंभवात्। अन्त्ये तु, अविरोधेनार्थो वर्णनीयः। क्रियास्थलेऽपि अविरुद्धतया व्याख्यानसंभवे विरुद्धपरव्याख्या न ग्राह्या। व्याख्यातुरज्ञानात् आपतितो विकल्पः यथावद्व्याख्यानेन परिहार्यः। अतस्तत्र **ऐकशेष्यम्** एकशेषकत्वं एकार्थपरिशेषणं महदुपदिष्टम्। सुतरामेकस्यैव वाक्यस्यार्थद्वयत्रयप्रतीतौ एकमात्रग्रहणम्। सकृत् प्रयुक्तः शब्दः सकृदेवार्थं गमयतीति। तत्रैकतरपरिशेषणाय मीमांसनमावश्यकम्॥२८॥

29. न्यायाख्यं धर्मविद्यास्थितिपदमुदितं तत्र तत्राऽऽप्तशास्त्रे
तेनैवालं तदन्यद्भवति कुतकरं नीतिमात्रप्रवृत्तेः ।
इत्येत(व?)न्नानुयोज्यं नयपथविषयो मानतर्कादिमात्रं
मीमांसायां तु तत्तच्छ्रुतिगतिविषया नीतिभेदा निरूप्याः॥

प. अस्तु वेदोपकारकत्वं शास्त्रस्य; अथापि न्यायमीमांसयोरपि तर्कात्मकन्यायशास्त्रस्य विद्वत्परिगृहीतत्वात् न्यायशास्त्रप्रतिपाद्यस्य परार्थानुमानरूपपञ्चावयववाक्यस्य "[पञ्चावयवयुक्तस्य वाक्यस्य ?] गुण-दोषवित्" इति महाभारते नारदब्रह्मर्षिप्रशंसायां उपादेयतमत्वेनोक्तत्वाच्च न्याय एवास्तु वेदोपकरणम्; किमनेन कुतकरेण मीमांसाशास्त्रेण, इति कश्चिच्चोदयति न्यायेति । तदेतत् प्रतिक्षिपति इत्येतदिति । तत्र हेतुतया विषयभेदेन वैषम्यमाह नयेत्यादिना । प्रमाणादिषोडश-पदार्थवर्णनं न्याये । मीमांसायां तु वेदवाक्यार्थविचारात्मकत्वात् प्रत्यधिकरणं आकाङ्क्षादिपरामर्शोपस्कृतन्यायविशेषाः निरूप्या इति विभागः । तेनोभयमपि शास्त्रं वेदोपबृंहणाय भवति ॥ 29

स. ननु तर्कैरर्थावधारणमंगीकुर्मः । तथापि मा भून्मीमांसा । न्यायशास्त्रत एव कार्यसिद्धेः । न च विनिगमनाविरहः । "प्रदीपः सर्व-विद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणाम्" इति तस्य सर्व-विद्यार्थमावश्यकत्वात् । वेदार्थमीमांसयाऽनया तत्तत्कार्यासिद्धेः । मीमांसा-शास्त्रस्य पक्षसाध्यहेतुदृष्टान्तन्यायवादजल्पादिस्वरूपविवेकपरत्वाभावेन न्यायशास्त्रसापेक्षत्वाच्चेति शंकते न्यायाख्यमिति । विद्यास्थिति-

पदम् विद्यास्थानम् । आप्तशास्त्रे अर्थशास्त्रादौ । नीतिमात्रप्रवृत्तेः । न हि मीमांसाशास्त्रमपि न्यायप्रदर्शनातिरिक्तं प्रयोगशिक्षणादिकं करोति । इत्येवंनानुयोज्यमिति पाठ्यम् । एतदिति पाठे एतत् तदन्यदिति प्रागुक्तं मीमांसाख्यं तन्त्रम् इति नानुयोज्यम्—इत्याकारकानुयोगविषयो न भवतीत्यर्थः । इत्येतत् एवं प्रश्नविषयभूतं नानुयोज्यं न प्रश्नार्हमित्यर्थो वा । न्यायशास्त्रेण तर्कसामान्यज्ञानेपि प्रकृतवाक्यार्थापेक्षिततर्कस्वरूप-तदनेकबलाबलादिकस्यावगतिर्नेति भावः ॥ २९ ॥

30. वेदार्थव्यक्तिरस्तु स्मृतिगणसहितैस्सेतिहासैः पुराणैः
अङ्गैरन्यैश्च किं तत् वद पुनरपि यत् तत्र मीमांसितव्यम् ।
तन्न स्मृत्यादिकेऽपि ह्यवितथसरणिर्नीतिशुद्ध्यैव साध्या
सद्भिःसाफल्यविद्भिस्तदिह बहुफला कल्पितेयं त्रिकाण्डी ॥

अत्र कश्चिदास्तिकः न्यायमीमांसयोः प्रतिक्षेपेण पुराणादिभिरेव वेदोपबृंहणमस्त्वित्याशङ्कते वेदार्थेति । तत् प्रतिक्षिपति-तन्नेति । अयमर्थः-पुराणेतिहासधर्मशास्त्रव्याकरणादिष्वपि तत्त्वार्थनिर्णयो न्यायमीमांसाविषयनीतिवर्गद्वयेन विना न सङ्घटीति, किं पुनर्वेदे । तेन न्यायमीमांसाभ्यां निपुणनिरूपितैः अङ्गैः स्वयं निरूप्यमाणो वेदो न केवलं पुराणादिभिरेवोपस्क्रियते ; अपितु न्यायमीमांसाभ्यामपि इति न तयोर्निरासः । एतत् सर्वमप्याह सद्भिरिति । साङ्गे वेदे सर्वत्रापि न्यायमीमांसयोः साफल्यमुच्यते । त्रिकाण्डी-कर्मदेवता-ब्रह्मविषयकाण्डत्रयसमाहारः ॥ 30

स. न्यायेन मीमांसायाश्चरितार्थता नेत्युक्तम्। इतिहासादिना चरितार्थता नेत्याह वेदेति। सांगवेदाध्ययनात् पश्चात् किल मीमांसनम्। वेदाध्ययनसमय एवाङ्गानां शिक्षादीनामिव धर्मशास्त्रादिरूपविद्यास्थानानामप्यधीयमानतया धर्मतत्त्वनिरूपणार्थमेव तेषां स्थितत्वाच्च न किञ्चित् विचार्य निर्णेयं भविष्यति मीमांसयेति चेन्न–निर्णयार्थप्रवृत्तेषु स्मृत्यादिष्वपि मिथोविरोधादिना अर्थानिर्णये प्राप्ते मीमांसानिरूपितसरण्यैव निर्णयस्य कार्यत्वात्। कथं हि विरुद्धवदवभासमानानां बहुमहर्षिवाक्यानाम्, एकपुरुषोक्तत्वेऽपि दशाभेदसमापतितसत्त्वरजस्तमोगुणवैषम्यमूलमिथोविरोधानां धर्मविषयाणां तत्त्वविषयाणाञ्च मीमांसामन्तरेणार्थनिर्णयः? अतः द्वादशाध्यायी–संकर्ष–शारीरकरूपकाण्डत्रयन्यायाः अंगार्थग्रहणार्थमप्यपेक्षिता इति ॥ ३० ॥

31. शिक्षां वर्णस्वरादेः सुपदविभजनं तन्निरुक्तं विचित्रां
छन्दोवर्गव्यवस्थां समयनियमनं साध्वनुष्ठानक्लृप्तिम्।
स्मृत्याद्यैर्भागयुग्मप्रथनमथ नयस्थापनं च श्रयन्ती
मीमांसा वेदवाक्येभ्य(ष्व?)पनयदमनी वृत्तिमर्थ्यां व्यनक्ति ॥

प. तर्हि मीमांसैव वेदस्योपकुर्यात् किमितरैः विद्यास्थानैः इत्याशङ्कमानस्य शिष्याभासस्योत्तरत्वेन उत्तरश्लोकमाचष्टे–शिक्षामिति। अयमर्थः—मीमांसाशास्त्रस्वरूपं सर्वविद्यासापेक्षमेव, तेन सकलविद्यास्थानसध्रीचीयं मीमांसा वेदवाक्यार्थविचारमातनोति; न पार्थक्येन वेदान्वयो मीमांसाशास्त्रस्य। उक्तं चाभियुक्तैः मीमांसाशास्त्रप्रयोजनोपवर्णनवेलायाम्, "मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता।

न शुश्रूषयितुं शक्या प्रागनुक्त्वा प्रयोजनम्" इति । तथा अध्यात्मविद्भिरैरपि-"शिक्षायां वर्णशिक्षा पदसमधिगमो व्याक्रियानिर्वचोभ्यां छन्दश्छन्दश्चितौ स्यात् गमयति समयं ज्यौतिषं रङ्गराज । कल्पेऽनुष्ठानमुक्तं ह्युचितगमितयोः न्यायमीमांसयोः स्यादर्थव्यक्तिः पुराणस्मृतिषु तदनुगास्त्वां विचिन्वन्ति वेदाः" (श्रीरंगराजस्तवे) इति । स्पष्टमन्यत् ॥ 31

स. नन्वेवं मीमांसाजनितार्थनिर्णयैः स्मृत्यादिभिस्सह वेदस्याध्ययने वृत्ते पश्चात् मीमांसेत्युक्तिर्मिथस्संश्रयादिदोषदुष्टेत्याशंकायाम्, तत्तद्विद्यास्थानकार्यं विशिष्य निर्दिश्य तत्तत्कार्योपयोगितर्काणां तदनन्तर वेदवाक्यार्थनिर्णयोपयोगितर्करूपमीमांसायाश्च भेदं व्युत्पाद्य न कश्चिद् दोष इत्याह शिक्षामिति । न्यायस्वरूपव्युत्पत्तेः न्यायशास्त्रजन्यत्वेऽपि तां विनाऽपि लौकिकव्यवहारेष्विव शिक्षाद्यर्थविषयेऽपि व्यवहारप्रसिद्धतर्कमात्रेण कार्यनिर्वाहः । तच्च कार्यं शिक्षातो वर्णस्वरमात्रादिज्ञानम् । व्याकरणात् साधुपदविवेकः, तन्निरुक्तं-तेषां पदानां मध्ये केषाञ्चिन्निर्वचनं निरुक्तात्; छन्दश्शास्त्रात् वृत्तादीनां निर्णयो विविधः, ज्योतिषः कालमुहूर्तादिविवेकः, एवं क्रमेणेदमनुष्ठेयमिति प्रयोगक्लृप्तिः कल्पसूत्रात्, मानवादिस्मृतितः वर्णाश्रमाचारविज्ञानं पुराणात् तत्त्वज्ञानम्, कर्मकाण्डब्रह्मकाण्डरूपवेदभागार्थप्रकाशनस्य तत्कार्यत्वात् । **नयानां** न्यायानां तदङ्गपक्षसाध्यहेतुदृष्टान्तपञ्चावयवसाध्वसाधुविवेचनं न्यायशास्त्रेण । इदं सर्वं संपादितं **श्रयन्ती** उपजीवन्ती मीमांसा वेदवाक्यार्थनिर्णयाय भवति । वेदवाक्यानां विपरीतार्थनिर्णयहेत्वपन्यायदमनेन यथावस्थित वाक्यार्थप्रदर्शनं मीमांसाकार्यम्। अतः सदर्थादनपेता शक्तिर्लक्षणा

च वृत्तिरवधार्यंते यथायथम् । इमे न्यायमीमांसे उचितगमिते अङ्गत्वाहं-तया निरूढे ग्राह्ये । न्यायदर्शनस्य न्यायपरिशुद्ध्येव, मीमांसायाः सेश्वरमीमांसयेव परिष्कारः कार्यः । अतः सर्वेषां कार्यभेदात् नैकेनान्यस्य गतार्थता । एवमङ्गाद्यर्थज्ञाने जातेऽपि कदाचिद्विशेषविचारे न्यायशास्त्रमूलनयज्ञानस्य मीमांसान्यायातिदेशस्य च तत्तत्त्वापेक्षा भवेदपि । तावता, विषयभेदात्, न मिथस्संश्रयादिदोष इति ॥ ३१ ॥

32. **मीमांसाशास्त्रवृत्तिप्रभृति निगमवन्न स्वरूपेण नित्यं**
**विच्छेदश्च प्रवाहे नियत इतरथा पूर्वहानाद्ययुक्तेः ।**
**तस्मात् तन्मध्यकालेष्विव भवतु सदा नैरपेक्ष्यं श्रुतीनां**
**तन्न प्रज्ञापराधप्रशमनरुचिभिः सूरिभिस्सूत्रकलृप्तेः ॥**

प. पुनरपि मीमांसानैरपेक्ष्यं श्रुतेः प्रकारान्तरेण चोदयित्वा परिहर्तुमुपक्रमते—**मीमांसेति** । मीमांसाशास्त्रं तावत् न वेदवत् अनादिनिधनाविच्छिन्नसम्प्रदायम् ; वेदत्वप्रसङ्गात् । जैमिन्यादिकर्तृत्वविरोधप्रसङ्गाच्च । तेन प्रवाहरूपेण तच्छास्त्रं प्रवर्तते इति वक्तव्यम् । प्रवाहश्च सन्तानरूपत्वात् प्रदीपादिसन्तानवत् अत्यन्तोच्छेदवान् । यथा मीमांसाशास्त्रोच्छेदकाले वेदोऽयमेवार्थं प्रतिपादयति, तथैवास्मिन्नपि काले वेदः स्वयमेव प्रतिपादयतु । मध्ये मीमांसाशास्त्रोच्छेदाभावे च तत्कर्त्रभावेन मीमांसाशास्त्रप्रणयनमपि न स्यादिति चोदकाभिप्रायः । तदिदं परिहरति—**तन्नेति** । **प्रज्ञापराधेति**—अयमत्र भावः—न वेदः कदाचिदपि स्वार्थतत्त्वप्रकाशकमीमांसादिकमपेक्षते—स्वत एव स्वार्थप्रकाशकत्वात्, स्वतःप्रामाण्यन्यायेन नित्यमेव प्रमाणत्वाच्च ।

प्रतिपत्तारो हि मन्दाः नित्यमेव वेदार्थप्रतिपत्तिसिद्ध्यर्थं मीमांसादिकमपेक्षन्ते । जातिसरजैमिनिप्रभृतयः प्रतिभावन्तः प्राचीनग्रन्थसन्दर्भविच्छेदेऽप्युत्तरोत्तरवचनानि प्रणयन्ति ; तदर्थानुष्ठाने च प्रवर्तयन्ति । मध्ये मीमांसाविच्छेदसम्भवेऽपि महापुरुषोपदेशमात्रादनुष्ठानपारम्परी न विच्छिद्यते । विच्छिद्यतां वा कञ्चित् कालम् । उत्तरकाले भगवता तन्निघ्नैर्वा महर्षिभिर्मीमांसाशास्त्रनिर्माणात् तदुपस्कृतवेदार्थनिर्णयस्तदनुष्ठानं च भवतीति रमणीयम् ॥

32

स. केषाञ्चित् पुरुषाणां मीमांसां विनैवार्थनिर्णयस्य वाच्यतया सर्वेषामपि तथाऽस्त्वित्याशंक्य परिहरति **मीमांसेति**। जैमिन्यादिकृता मीमांसा। तद्व्याख्याभूतवृत्त्यादिकं तदनन्तरैः। अत एतद्ग्रन्थानां वेदवन्न नित्यता। एभिरेषामपूर्वतया कृतत्वादेव ततः प्राक् स्थितानां मीमांसादिग्रन्थानां मध्ये विच्छेदो ज्ञायते । अन्यथा तदुपेक्षणायोगात् । तथाप्युपेक्षायां पूर्वग्रन्थानां विपरीतार्थबोधकत्वेन दुष्टत्वमित्यापतेत् । तत्र विच्छेदावसरेऽनुष्ठानं यथा, तथा सर्वदैव मीमांसानिरपेक्षं तत् भवत्विति शंका । परिहरति **तन्नेति**। ग्रन्थानामभावेपि महाजनोपदेशपारम्पर्येण सदर्थनिर्णयो भवत्येव । कदाचिदुपदेशो मतिभ्रंशादन्यथा भवेदिति पुरुषाशक्त्यादिपर्यालोचनया ग्रन्थरूपेणोपदेशो रक्ष्यते महर्षिभिः । एतदभावेऽपि महाजनोपदेशेन विच्छेदकाले अर्थनिर्णयः ॥ सर्वदैव तथास्तु इति चेत्– अत्रोक्तं **शतदूषण्याम्**, "विचारसागरे संप्लवमानानां जैमिनिनायत् कर्णधारायितम्, स एष क्षम्यतामपराधः" इति । सर्वदा सर्वत्र सर्वप्रवचनसमर्थमहाजनलाभः सर्वेषामिति हि नैव सुवचम् । प्रवक्तुरभावेपि विषय-

विसरणेऽपि ज्ञानदुर्भिक्षं मा भूदित्येव हि लोके सर्वेषां सद्ग्रन्थानां ग्रथनम्। सम्प्रदायप्राप्तस्यैव निबन्धनं जैमिनिनेति न्यायरत्नाकरे(1-1-1-23)॥

33. **धर्मादेर्निर्णये हि श्रुतिरिह करणं सा च नित्यानपेक्षा**
**मीमांसा क्वोपकुर्यादिति न, यत इदं सेतिकर्तव्यताकम् ।**
**न स्यादत्रानवस्था विधिषु चरमविश्यन्तवर्जैरपेक्ष्यात्**
**सिंहारण्यादिनीत्या मिथ उपकुरुतो मानतर्कौ यथार्हम् ॥**

प. वेदस्य स्वतो नैरपेक्ष्यमुक्त्वा सापेक्षत्वमपि प्रतिपत्त्रनुरोधेन प्रतिचोदनपूर्वकं पुनः स्थापयति धर्मेति । धर्मवेदने हि श्रुतिः करणम् । यद्यपि करणं सापेक्षम्, तथाऽपि श्रुतिरूपं करणं निरपेक्षमेव—; तथैव तान्त्रिकैः स्थापनात् । न हि प्रदीपस्य विषयप्रकाशने वर्तितैलादि-सहकारिसापेक्षत्वेऽपि प्रभाकरस्यापि तदस्तीति स्थापयितुं शक्यते । तथाच मीमांसाया वैयर्थ्यमिति शंकते मीमांसा क्वोपकुर्यादिति । परिहरति नेति । हेतुमाह—यत इति । सेतिकर्तव्यताकमिति । "न हि तत् करणं लोके वेदे वा किंचिदीदृशम् । इतिकर्तव्यतासाध्यो(ध्ये) यस्य चानुग्रहो मतः (ग्रहेऽर्थिता)" इति । अयमत्र भावः—यद्यपि वेदः स्वार्थसंबन्धे निरपेक्षः, तथापि संबन्धाधीनस्वार्थप्रकाशनरूपकार्ये सापेक्ष एव । न हि श्रोतारं वक्तारमन्तरेण वेदवाक्यमेव वेदं प्रकाशयति । एवमापादचूडं मीमांसाशास्त्रश्रवणरूपसहकारिलाभमन्तरेण वेदो न प्रकाशयत्येव । न हि सर्वत्रापि सहकारिलाभः करणानां करणत्वमव-रुन्धे, अपित्वनुरुन्ध एव करणशक्तिम् । तेन मीमांसाशास्त्रेण सेति-कर्तव्यताको वेदः स्वयं प्रकाशयतीति सुसंगतम् । ननु तर्ह्यनवस्था

स्यात् । वेदोपकाररूपकार्ये करणभूतस्य मीमांसाशास्त्रस्यापि इतिकर्तव्यतान्तरसापेक्षत्वादिति चेत्—न स्यात् । करणस्येतिकर्तव्यतासापेक्षत्वे इतिकर्तव्यतापारम्पर्ये चरमविघ्नन्तवत् नैरपेक्ष्यात् । यथा कर्मसु चरमानुष्ठाने नैरपेक्ष्यमातिष्ठन्ते तान्त्रिकवृद्धाः । तथा मीमांसाशास्त्रे स्वपरनिर्वाहकत्वादुन्मूल्यतामनवस्थाकुसृष्टिः । अपि च मा भून्मीमांसाया मीमांसान्तरेणोपस्कारः ; वेदवाक्यान्येव कानिचिदतिविशदत्वेन मीमांसाशास्त्रमुपस्कुर्वते । तच्च शास्त्रं वेदोपकारकमिति सुप्रसिद्धमेतत् । इत्थं परस्परोपकारकत्वात् सिंहारण्यन्यायेन वेदो मीमांसा चेति द्वितयमपि संरक्ष्यत इति ॥ 33

स. एवं बहुभिः श्लोकैर्मीमांसावैफल्यशंकाः परिहृताः । मुखान्तरेण वैफल्यं शंकते धर्मादेरिति । शाब्देऽर्थनिर्णये शब्दः करणमिति प्रसिद्धम् । अर्थस्य च धर्मब्रह्मरूपत्वात् वेद एव करणम् । वेदश्च नित्यनिरपेक्षः कथं मीमांसामपेक्षेतेति शंका । परिहरति इति नेति । करणानामितिकर्तव्यतासापेक्षत्वं प्रसिद्धम् । यथा—काष्ठद्वैधीभावे कुठारः करणम् । तत्र उद्यम्य निपात्य कुठारेण द्वैधीभावं साधयतीति उद्यमननिपातने इतिकर्तव्यते । तद्वदत्र मीमांसा इतिकर्तव्यता । ननु करणस्य स्वकार्यसाधने इतिकर्तव्यतासापेक्षत्वे, मीमांसया वेदोपकारं साधयेदिति वाक्ये मीमांसायाः करणत्वेन निर्देशात्, तत्रापि इतिकर्तव्यतापेक्षा वाच्येत्यनवस्थेति ॥ नैवम् । यथा अनेकांगविशिष्टांग्यनुष्ठाने, अङ्गस्याङ्गं तस्याप्यङ्गमिति परम्परायां चरमं भवत् अंगमितरनिरपेक्षं स्वपरनिर्वाहकतयां करणम्, तथा मीमां-

साऽपि अन्यानपेक्षा सती करणं भवत्विति । **विध्यन्तशब्दः** इतिकर्तव्यतार्थकः । किं कुर्यात् केन कुर्यात् कथं कुर्यादिति विध्यपेक्षितेषु कथमिति आकांक्षिताया इतिकर्तव्यताया अन्तरूपत्वात् । तस्याङ्गस्य चरमत्वं निरपेक्षत्वमिति । ननु मीमांसा नाम तर्कः । तस्य वेदोपकारकत्वमत्रोक्तम् । वेदशास्त्राविरोध्येव तर्क उपादेय इत्यस्यापि स्वीकारात् तर्कस्य वेद उपकारक इत्युक्तं भवति । तथाच अन्योन्याश्रय इत्यत्राह **सिंहेति** । सिंहेन वनं रक्ष्यते, वनेन च सिंह इति सिंहवनगुप्तिन्यायः प्रसिद्धः । तत्रान्योन्याश्रयो यथा न, तद्वत् । अंशभेदादविरोधः । निश्चितार्थकं वेदवाक्यं तर्कोपकारकम्, निश्चेयार्थकवाक्यं प्रति तर्क उपकारकः इति । उत्पत्तौ ज्ञप्तौ च अन्योन्याश्रयो दोषः, न गुप्तौ ॥ ३३॥

**34. नित्याम्नायप्रसाध्ये न खलु करणनिष्पादकं किञ्चन स्यात्**
**निष्पन्ने चानपेक्षं(क्ष्यं) करणमिति वदन् वक्ति च स्वेष्टभङ्गम् ।**
**योग्यत्वादेर्विमर्शो न हि भवति मुधा तर्कतोऽस्यापि तद्वत्**
**स्यादेवं सन्निपत्योपकृतिरितरथा वेति चिन्त्यं यथार्हम् ॥**

**प.** इत्थं मीमांसाशास्त्रस्य वेदेतिकर्तव्यतात्वे स्थापिते पूर्वपक्षवादी विकल्प्य दूषयति **नित्येति** । किं मीमांसाशास्त्रं तत्त्वप्रतिपत्त्युपकरणभूतस्य वेदस्य स्वरूपोपपत्तावुपयुज्यते ? उत फलोत्पत्तौ ? । नाद्यः— वेदस्य नित्यत्वेनोत्पत्त्युपकारापेक्षाभावात् । फलोत्पत्ताविति परिशिष्यते । तदपि न—व्युत्पन्नपदपदार्थस्य शब्दश्रवणानन्तरम् अपेक्षणीयाभावादिति । तदेतत् परिहरति **इतीति** । न हि लोके व्युत्पत्तिमात्रादर्थप्रतिपत्तिः; आकांक्षापरामर्शरूपस्य मिथोऽन्वयविचारस्यापि तदंगत्वात् ।

तदनङ्गत्वे स्वेष्टभंगः स्यादित्यर्थः । तदेव विवृणोति–योग्यत्वादेरिति । अस्तु योग्यत्वादेर्विमर्शः, मा भूत् तर्कानुसंधानमिति चेत्—तदपि प्रतिबन्द्या परिहरति—तर्कतोऽस्यापीति । अतिप्रसंगपर्यन्तानुसन्धान-मन्तरेण योग्यत्वादेः परामर्शो न परिसमाप्यते ॥ तथाऽपि किमिदं सन्निपत्योपकारकम् अथवाऽऽरादुपकारकमिति चिन्तनमवशिष्यत इति चेत्—नावशिष्यते । अध्ययनवेळायां वेदस्वरूपग्रहणोपकारकं शिक्षाव्याकरणादि विद्यास्थानं सन्निपत्योपकारकप्रायमस्तु, अधीतवेदस्यार्थप्रतिपत्तौ उपकारकं न्यायमीमांसादिकम् आरादुपकारकम् । अथ वा वेदस्य नित्यनिष्पन्नत्वात् सर्वमप्यारादुपकारकमिति भावः ॥ 34

ख. एवमितिकर्तव्यात्वमुक्तम् । तावतापि शंकापरिहारो न भवतीति मन्वानं प्रति आह नित्येति । नित्यनिरपेक्षो वेद इति हि प्रागेवोक्तम् । इतिकर्तव्यतात्वं हि करणनिष्पादकत्वम् । यथा स्वर्ग-करणयागनिष्पादकत्वं व्रीह्यवहननादीनाम् । अतः नित्यस्यानादेराम्नाय-स्योत्पत्तौ नैतदपेक्षा । नित्यत्वादेव निष्पन्नत्वात् पश्चादनपेक्षश्चेति । इति यः प्राक् शंकितवान्, सः स्वेष्टभङ्गमेव वदति । लोके वाक्यमेकं गृहीत्वा तस्य कोऽर्थ इति विचार्य निर्णयस्तत्तत्र क्रियत इति दृष्टम् । तत्र विचारो व्यर्थः स्यात्, वाक्यस्य प्रागेव स्थितेः। एवञ्च वेदवाक्यं विचार-निरपेक्षं सिद्धत्वादिति प्रयोगे लौकिकवाक्येऽपि विचारानापत्तिः । अतो निष्पन्नत्वेपि सापेक्षत्वमेष्टव्यम् । उत्पत्तौ अनपेक्षत्वेऽपि, पदार्थस्मृतौ च अनपेक्षत्वेऽपि, विशिष्टवाक्यार्थनिर्णयरूपफले उत्पादनीये वाक्यम् आकांक्षायोग्यतासंनिध्यादिसापेक्षं दृष्टम् । तत्र योग्यत्वतात्पर्यादि-

परिशीलने एतदितिकर्तव्यता उपयुज्यत इति । **अस्यापि तद्वत्**—नित्यस्य वेदस्यापि लोकवत् तर्कित इति । तर्हि करणनिष्पादकत्वम् इतिकर्तव्यतात्वमिति कथमित्यत्राह **स्यादेव**मिति । लोके यत् करणं जनयति, तत् करणव्यक्तिनिष्पादकं संनिपत्योपकारकं भवेत् । यत्तु तथा न, तदपि व्यक्तिनिष्ठकरणतानिष्पादकत्वात् करणनिष्पादकमित्युच्यते । यथा कुठारे उद्यमनादि । न हि मीमांसारूपतर्काभावे वाक्यमर्थबोधं प्रति करणं भवति । अत आरादुपकारकं सत् अंगम् । आरात् दूरे, करणोत्पत्त्यसंबन्धेनेत्यर्थः । संनिपत्येत्यस्य करणोत्पादकवस्तुनि उत्पत्त्यर्थं संबध्येत्यर्थः । **यथार्हम्** । न तु सर्वस्य करणोत्पत्त्यर्थत्वमेवेति भावः । **अनपेक्ष**मिति पाठे अपेक्ष्यांशरहितमित्यर्थः ॥ ३४ ॥

35. **श्रुत्यङ्कौ(?) शब्दतद्वच्छकनमथ सहव्याहृतिर्वाक्यमन्यै-**
**राकाङ्क्षा प्रक्रियाऽङ्गेष्वथ पुनरुदितः संनिधिस्संनिधानम् ।**
**नामाप्याध्वर्यवादि स्फुरदवयवशक्त्यन्वितं नामधेयं**
**तेषामेषां विरोधे प्रथममधिगुणं तेन पाश्चात्यबाधः ॥**

प. "श्रुति लिंग वाक्य प्रकरण स्थान समाख्यानां समवाये पारदौर्बल्य-मर्थविप्रकर्षात्" इति सूत्रार्थमभिप्रयन् आह — **श्रुत्यङ्कौ**—इति ॥ 35

स. ननु करणनिष्पादकमङ्गमिति स्वरसमात्रेणानुपरम्य किमित्या-रादुपकारकाङ्गकल्पनेति मध्ये शंकायाम् अङ्गताग्राहकप्रमाणानि दर्शयति **श्रुती**ति । अतो नायं श्लोकोऽसंगतः । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमा-ख्याः षट् अङ्गताग्राहकप्रमाणानि । एतदन्यतमप्रमाणेन एकः पदार्थोऽ-न्यस्य पदार्थस्याङ्गमिति निश्चीयते । एषु यदि एकं प्रमाणं कस्यचित्

किञ्चित्प्रति अङ्गत्वं, अन्यत् प्रमाणं च तस्य तदन्यत् प्रति अङ्गत्वं गमयेत्---तत्र विरोधात् बलाबलविचारः। उक्तानां षण्णां निर्दिष्टक्रमेण पूर्वपूर्वस्य प्राबल्यमुत्तरोत्तरस्य दौर्बल्यञ्चेष्टमिति **अधिगुणेन** पूर्वेण न्यूनगुणस्योत्तरस्य बाध इति पूर्वानुरोधेनांगत्वनिश्चयः। श्रुत्यादीनां षण्णां पर्यायवचनेनार्थमपि दर्शयति पादत्रयेण। **अङ्क**शब्दो लिङ्गवाची। अत्र पाठश्चिन्त्यः। श्रुतिः शब्दः लिंगं **शकनं** सामर्थ्यमित्येतावदलम्। तत्र सामर्थ्यं द्विविधं शब्दगतमर्थगतञ्चेति। तदुभयग्रहणाय शब्दतद्वच्छकनमिति प्रयोग इति स्यात्। तदा तद्वदित्यस्य तद्वान् शब्दवान् संज्ञी अर्थ इत्यर्थात् शब्दार्थोभयसामर्थ्यमिति संपद्यते। तदा श्रुतिशब्दस्य विवरणं न कृतं भवति। शब्दश्च तद्वच्छकनञ्चेति तयोस्समाहार इति एकवचननिर्वाहे पूर्वमपि श्रुत्यङ्कमिति समाहारो युक्तः। तदा **श्रुत्यङ्कं शब्दतत्तच्छकन**मिति युक्तः पाठः। **तत्त**दिति शब्दस्यार्थस्य च ग्रहणम्। **श्रुत्याऽङ्कः शब्दतद्वच्छकन**मिति वा पाठः। श्रुतिरङ्गताग्राहिकेत्यस्य निर्विवादत्वात् श्रुत्या सहेति पूर्वं निर्दिश्य अङ्कादिकमेव विव्रियते उपरि। शब्दतदर्थगतसामर्थ्यम् **अङ्कः लिंगम् उदितम्** उक्तम्। अङ्गाङ्गिनोः **सहव्याहृतिः** सहपठनम् सभिव्याहारात्मकं **वाक्यम्** उदिता। अङ्गिभिस्सहाङ्गेषु स्थिता आकाङ्क्षा उभयाकांक्षा **(प्रक्रिया)प्रकरणम्** उदिता। अङ्गाङ्गिनोः समीपपाठरूपः संनिधिः संनिधानम् **स्थानम्** उदितः। अवयवशक्त्याऽर्थप्रतिपादकनामाख्या समाख्या च उदिता। इमानि अङ्गत्वे मानानि भवन्तीत्यर्थः। शिष्टमुक्तम् ॥ ३५ ॥

36. **सर्वं(र्वे)स्रष्टा स देवः प्रकृतिपुरुषतत्कर्मपूर्वैः सहायैः**
**तद्वान् उक्तस्तदन्ये किमुत; जनिमतां किं न सामग्र्यधीनम्।**
**तर्केणानुग्रहोऽतः प्रमितिजनकतां प्राणयेत श्रुतीनां**
**स्पष्टे तर्कानपेक्षा क्वचिदपि; न तथाभावसार्वत्रिकत्वम् ॥**

प. अथापि वेदस्य नित्यनिरपेक्षस्य सापेक्षत्वं वक्तुमास्तिकानामयुक्तमिति आस्तिकचोदनां प्रतिबन्द्या परिहरति—**सर्वेमिति** । ईश्वरः खलु सर्वस्वतन्त्रः । अथापि प्रकृतिपुरुषावपेक्ष्य विश्वसृष्ट्यादिकं करोति । एवमीश्वरस्यापि सहकारिसापेक्षत्वे प्रमाणसिद्धे तत्प्रवृत्त(र्तित?) वेदस्य सहकारिसापेक्षत्वं कैमुतिकसिद्धम् । किंच सर्वमपि कारणं सहकारिसन्निधौ कुर्वत्स्वभावम् । अत एव सर्वं कार्यं सामग्र्यधीनमित्युच्यते न्यायविद्भिरित्याह **जनी**ति । एवं कारणानां सहकारिसापेक्षत्वे तर्केणानुग्रहो वेदस्य प्रमितिजनकतां संधुक्षयेदित्याह—**तर्केणे**ति । ननु तर्कनिरपेक्षाण्येव कानिचित् वाक्यानि अर्थप्रमितिं जनयन्ति, तद्वत् इतरेष्वपि वाक्येषु स्यादित्याशंक्याह—**स्पष्ट** इति ॥ 36

स. नित्यनिरपेक्षस्यापि कचिदंशे सापेक्षत्वं प्रागुक्तं दृष्टान्तप्रदर्शनेन कैमुत्येनोपपादयति **सर्वे**ति । **जनिमतां** कार्याणां मध्ये किं कार्यं सामग्र्यधीनं न भवति ? सर्वं तदधीनमेव । सामग्री च मिथस्सहकारिकारणकलापः । अतः कारणस्य कारणत्वं नाम न सर्वदा फलोपधायकत्वम् ; किंतु सहकारिणां समवधाने सति तदुत्पादकत्वरूपस्वभाववत्त्वम् । यदभावे यस्य कार्यजनकत्वं न भवति, तत् तस्य सहकारि । एवमीश्वरादीनामपीदृशमेव कारणत्वमिति न वेदस्य तथात्वे हानिः काचित् ।

अतः तर्केण क्रियमाणः **अनुग्रहः** उपकारः वेदानां प्रमाणतां पोषयेत् । अङ्गजन्य उपकारः अनुग्रह इत्युच्यते मीमांसाशास्त्रे । अनु—उपसर्जनतया ग्रहः—गृह्यमाण इति । पुरोविस्फारिताक्षो गजं धुरि तिष्ठन्तं निस्संदेहमवधारयति । तत्र न तर्कापेक्षा । स्थाणुर्वा पुरुषो वेति यत्र संशयप्रसक्तिः, तत्र प्रत्यक्षेऽपि तर्कोऽपेक्षित एव । एवं श्रुतौ यथायथमित्याह **स्पष्टे** इति । **तथाभावस्य** तर्कापेक्षत्वस्य तदभावस्य वा न सार्वत्रिकत्वम् ॥ ३६ ॥

37. **केनेदानीं सुसाधा जगति मितधिया कृत्स्नवेदार्थचिन्ता**
**मध्यः काण्डश्च लुप्तस्थितिरिह निगमैरल्पशेषैरभावि ।**
**अज्ञातव्ये सशेषे प्रमितमपि खलु स्यादनाश्वासपात्रं**
**तच्चिन्त्यं कल्पसूत्रप्रभृतिकृतधियः शक्यचिन्ता न दुष्येत् ॥**

प. अथाधिकारिदौर्लभ्यादिना चिन्तावैयर्थ्यमाशङ्कते **केनेति** । अयं भावः—जगति सर्वेषामेव मितधीत्वात् स्वाशक्यकृत्स्नचिन्तायां न कस्यापि प्रवृत्तिः । देवताकाण्डश्च नाममात्रशेषः । वेदाश्चाल्पशेषाः, तथा च अज्ञातव्यशेषे सति, प्रमितेऽपि नाऽऽश्वास इति । तदेतत् प्रतिक्षिपति **तच्चिन्त्यमिति** । मितधियां कृत्स्नवेदार्थचिन्ताऽसंभवेऽपि कल्पसूत्रपरिशीलनशालिनां स्वशक्यचिन्ता संभवत्येवेति भावः ॥ 37

स. एवमितिकर्तव्यतात्वयोगात्, चिन्ताया वैयर्थ्यं वा अनपेक्षा वा न भवतीत्युक्तम् । अथाशक्यत्वादनारम्भणीयत्वं शंकते **केनेति** । **इदानीं** संपूर्णवेदाध्ययनस्य, संपूर्णस्य मीमांसाशास्त्रस्य च अभावसमये अस्मिन् । अत एव मितधीत्वात् न कश्चित् मीमांसितुं प्रभवति ।

**कृत्स्नवेदार्थचिन्ता** कृत्स्नस्य चिन्ता । कृत्स्ना वा अर्थचिन्ताऽपि न भवतीत्याह **मध्य** इति । **मध्यः काण्डः** संकर्षकाण्डः। **लुप्तस्थितिरिति**। अत एव जैमिनीयः काशकृत्स्नीयो वेति विवाद इति। मध्ये सर्वात्मना लुप्तेऽपि संकर्षे साम्प्रतं तत्तदधिकरणप्रथमसूत्रप्रतीकमात्रमधिकरणार्थश्च खण्डदेवकालप्रभृति लक्ष्यत इव जैमिनीये । **अल्पशेषैरभावि** । भावे प्रयोगः। चतुर्ष्वपि वेदेषु एकैव शाखा अधीयत इवेति भावः। **अनाश्वासपात्रमिति**। अतः कर्मानुष्ठानं दुश्शकमिति भावः। प्रयोगग्रन्थानां सत्त्वात् नानुष्ठानहानिः । तत्र संभावितसंदेहापाकरणं स्थितमीमांसाभ्यासाद् भवतु नापह्नवार्हम् । अत्यन्ताभावादल्पसद्भावः श्रेयानिति भावेनाह **तच्चिन्त्यमिति** । **चिन्त्यम्**–अयुक्तत्वेन चिन्त्यम् । कृतचिन्तनसाधुत्वज्ञानञ्च कल्पसूत्रादितो दृढीभवतीति भावः ॥ ३७ ॥

**38. आदत्ते ब्रह्मचारी स्वविहितमनघं न स्वयं चिन्तितार्थः**
**तद्वत् कुर्याद्गृहस्थप्रभृतिरपि मुधा तत्र मीमांसनं चेत्(स्यात् ?)।**
**तत्राशेषैः परोक्त्या स्वचरितचरणं श्रद्दधानाभिनन्द्यं**
**मूलं जिज्ञासमानैः स्वयमधिगतये निर्विशङ्को विचारः ॥**

प. ननु कल्पसूत्रनिष्णातानामपि चिन्तामन्तरेणानुष्ठानं संभवतीत्याक्षिपति **आदत्त** इति । अत्रायमाशयः—ब्रह्मचारिणो ह्यक्षरग्रहणमात्रपराः । ते च स्वकर्तव्यतया विहितमुपदेशादेवानुतिष्ठन्ति, नार्थज्ञानेन ; अतिविततगहनगभीरत्वाच्छ्रुतेः । एवमेव गृहस्थादीनामपि भवत्वनुष्ठानम् । तथाच मुधा मीमांसनमिति । तदेतत् परिहरति **तत्रे**त्यादिना। मतिमतां तु गृहस्थानां नित्यं परोपदेशादेवानुष्ठाने, "मूढः पर-

प्रत्ययनेयबुद्धि:" इति न्याय: स्यात् । तथाच यावन्मीमांसाश्रवणं परोप-देशादेवानुष्ठानम् , तच्छ्रवणे सति स्वबुद्ध्येति श्रेयानयं न्याय:। तेन नित्यं परोपदेशैरेवानुष्ठानमिति श्रद्दधानाभिनन्द्यम् । अल्पज्ञाभिनन्द्यमित्यर्थ:। फलितमर्थं निगमयति–मूलमिति । वैदिकस्यानुष्ठानस्य मूलं जिज्ञासमानै: स्वयमर्थप्रतिपत्तये वेदवाक्यार्थविचारो निश्शंकमेव कर्तव्य इत्यर्थ: ॥ 38

स. विचाराभावेऽप्युपदेशबलादनुष्ठानसंभवेऽपि यथाशक्ति विचारमूलकमनुष्ठानमेव साधीय इत्याह आदत्ते इति । विचारनिर-पेक्षानुष्ठाने ब्रह्मचारी दृष्टान्त: । अध्ययनपूर्त्यनन्तरमेव विचारारम्भात् । स्वविहितं स्वकीयं विहितं स्वकर्म अनघं यथावदेव अनुतिष्ठति । स न स्वयं चिन्तितार्थ: । उपदेशकानां कदाचित् अर्थचिन्तनं स्थितं स्यात् । न त्वस्य, ब्रह्मग्रहणदशापन्नत्वात् । मीमांसनं चेदिति । मीमांसनं मुधेति चेत् इत्यन्वय: । इतिशब्दोऽध्याहार्य: । चेदित्यत्र स्यादिति वा पाठ: । आक्षेपं निरस्यति तन्नेति । अशेषै: सर्वैरपि चरणम् अनुष्ठानम् । स्वयमविचार्य परोक्तिश्रद्धयैव तत्तदनुष्ठानमशेषकर्तृकं भवितुमर्हतीत्येतत् तथाश्रद्धावत्कतिपयैकमान्यम् । ईदृशश्रद्धा न सार्वत्रिकीत्यर्थ: । उपदेष्टॄणां परेषां वचनेषु विवादप्रसक्तौ विचारक-पुरुषधौरेयापेक्षा ह्यवश्यम्भाविनीति भाव: । अत्यल्पफलेषु कर्माभासेष्वपि इतिकर्तव्यतासंदेहे सति विचारं रोचयन्ते, किमुत गहनेषु महाफलेषु धर्मेषु । अशेषैरित्यस्य चरणमित्यत्रान्वयं विहाय, परोक्त्या स्वचरित-चरणं श्रद्दधानाभिनन्द्यम् ; न तु सर्वाभिनन्द्यम् । अत: अशेषै: मूल-जिज्ञासावद्भि: विचार: कार्य इत्यन्वयार्थो वा ॥ ३८ ॥

39. स्वीकृत्यानर्थतां तद्विरहमपि विधेरान्यपर्यैतराभ्यां
पक्षौ पूर्वापरौ ये परिजगृहुरिह स्वोक्तिबाधादयः स्युः ।
व्युत्पत्त्यादिस्वभावात् स्वत उपजनितापातधीतः प्रवृत्तौ
मीमांसाक्षेपतत्स्वीकरणकथनयोर्न क्वचित् व्याहतिः स्यात् ॥

प. एवं मीमांसाश्रवणस्य कर्तव्यतामुपपाद्य पूर्वोक्तपूर्वपक्षसिद्धान्तक्लृप्तिद्वये प्रथमसूत्रप्रतिपाद्यतयोक्ते शिष्यशिक्षार्थं पूर्वोत्तरक्लृप्त्योः परस्परवैषम्यं निगमयति स्वीकृत्येति । अयमत्रान्वयः—विधेरान्यपर्यैतराभ्याम् अनर्थतातद्विरहोभयं स्वीकृत्य पूर्वपक्षसिद्धान्तौ ये परिजगृहुः, तेषां स्वोक्तिबाधादयः स्युः । विधिरन्यपरः, अत एव वेदस्य नैरर्थक्यमिति नैरर्थक्यवादिनोच्यते । तद् व्याहतमेव—अन्यपरत्वं हि विधिवाक्यस्य स्वाध्यायान्तर्गतस्यान्यार्थप्रधानत्वम् । तस्मिन् प्रधानभूतार्थे तस्यैव वाक्यस्य विद्यमाने सति कथं वेदराशेर्निरर्थकताशंका इति स्पष्ट एव व्याघातः । एवं स्पष्टव्याघातदुष्टत्वेन पूर्वपक्षानुत्थानात् निर्विषयस्य सिद्धान्तस्याप्यनुत्थानमिति । आन्यपर्यैतराभ्याम्—अन्यपरत्वतात्पर्याभ्यामित्यर्थः । पक्षान्तरेण पूर्वपक्षसिद्धान्तपरिक्लृप्तौ न तद्व्याहतिरित्याह व्युत्पत्तीति । अत्र ह्यवसरसदसद्भावाभ्यां पूर्वपक्ष सिद्धान्तपरिक्लृप्तौ न व्याहतिरिति पूर्वमेवोक्तम् ॥ 39

स. एवं स्वपक्षे पूर्वपक्षसिद्धान्तावुपपादितौ—वेदोऽर्थवानेव विवक्षितार्थ एव ; अथाप्यवसरफलयोरभावात् मीमांसा न भवतीति पूर्वपक्षः ; तयोः सत्त्वात् मीमांसा आरभ्येति सिद्धान्त इति । अथ परकीयरचनाप्रकारो निरस्यते । तत्र प्राभाकररचनामादौ निरस्यति

स्वीकृत्येति । स्वाध्यायस्यार्थपरत्वाभावः पूर्वपक्षे तदिष्टः, सिद्धान्त एवार्थपरत्वम् । भाट्टमतमप्येवम् । वयं तु पूर्वपक्षेऽपि विवक्षितार्थत्वमेवेच्छामः । एवं पूर्वपक्षे अनर्थतां सिद्धान्ते तद्विरहञ्च स्वयं कल्पयित्वा, एतद्विषये भाट्टाविशिष्टाः ये प्राभाकराः अध्ययनविधेरान्यपर्यात् अध्यापयितृपेक्षिताचार्यकार्थत्वात् अध्ययनेन तस्य निष्पन्नत्वात् न विचारः कार्य इति पूर्वपक्षम्, अध्ययनस्याध्यापनविधिप्रयुक्तत्वेऽपि नाध्यापनांगत्वम्, अपितु अध्येतृमाणवकसमवेतापूर्वार्थत्वमिति वेदस्यार्थपरत्वमेवेति विचारावश्यकतेति सिद्धान्तञ्च परिजगृहुः–इह तेषु स्वोक्तिबाधादयो दोषाः । अविवक्षितार्थत्वे अध्ययनविध्यध्यापनविध्योरप्यर्थपरत्वाभावात् आचार्यकार्थत्वादिशंका कथम्, अध्ययनारम्भ एव वा कथम् । अध्ययनस्य स्वविधिप्रयुक्तत्वे संभवति अनावश्यकाध्यापनविधिकल्पनेन तत्प्रयुक्तत्वकल्पनं गौरवग्रस्तम् । सिद्धान्ते अपूर्वार्थत्वेऽपि अर्थविचारमूलकमेव तदपूर्वमित्यत्र मानाभावात् न विचारावश्यकतेत्येवं दोषाः सेश्वरमीमांसायां 21–24 पुटेषु द्रष्टव्याः । पूर्वमस्मदुक्तप्रकारे न कश्चिद्दोष इत्युत्तरार्धेनाह व्युत्पत्तीति ॥ ३९ ॥

40. स्वाध्यायस्यार्थवत्वात् श्रवणमभिदधेऽधीतवेदस्य भाष्ये
तत् खल्वापातबोधप्रजननशकनव्यक्तिसिद्ध्यैव भाव्य(व्य)म् ।
नैरर्थक्यं तु शङ्कास्पदमिह न भवेत् सद्भिरध्यापितानां
नो चेत् शुश्रूषणादिप्रयतनकथनं दुस्सहं कः सहेत ॥

अत्रोक्तस्य भाष्यकारसंमतिविशेषादपि प्रागुक्तस्य पक्षस्य परित्याज्यत्वमेव निगमयति स्वाध्यायस्येति । "प्रयोजनवदर्थापातप्रतीते-

रधीतवेदः पुरुषः स्वयमेव प्रवर्तते" इति भाष्योक्तिरधीतवेदस्य स्वय-मेवार्थप्रतीतिजनकत्वशक्तिमभिव्यनक्ति, प्रतिक्षिपति च विध्यपेक्षाम् । तेन सद्भिरध्यापितानां स्वतोऽर्थप्रवणानां संस्कृतप्रायदेशवर्तिभिः परिगृहीतानां वेदानां नैरर्थक्यं शंकास्पदमेव न भवेत् । नैरर्थक्ये "स्वाध्यायोऽध्येतव्यः" इति विधेरपि वेदान्तर्गतत्वेन निरर्थकत्वं स्यात् । तथाचाध्ययनार्थं शुश्रूषणादिदुःखं माणवकः कथं सहेतेति श्लोकार्थः॥ 40

**स.** श्रीभाष्यवाक्यमेकं व्याख्यायापि समाधत्ते **स्वाध्यायस्येति**। ननु परमतनिराकरणे श्रीभाष्यवाक्यस्य प्रमाणीकरणं कथं युज्यते॥ नैवम् । एवमाशयात्-ननु पूर्वपक्षे वेदस्य नैरर्थक्यं सिद्धान्ते सार्थक्यञ्चास्मदुक्तं भवता निरस्यते । तदयुक्तम् ; श्रीभाष्ये एव, पूर्वपक्षे नैरर्थक्यस्वीकारस्य ज्ञापितत्वात् । तथा हि तत्र भाषितम् , "स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात् तन्निर्णयाय स्वयमेव श्रवणे प्रवर्तते" इति । अत्र सिद्धान्ते अर्थपरत्वोपपादनेन पूर्वपक्षे अर्थपरत्वा-भाव इष्ट इति व्यञ्जितमिति । इमामाशंकां परिहरति **स्वाध्यायस्येति** । वेदस्यार्थवत्त्वात् अर्थश्रवणमधीतवेदस्य भवतीति तावत् भाष्ये अभिदधे अभिहितम् । तेन श्रवणं न भवतीति पूर्वपक्षनिरासः। तच्छ्रवणं कदा भवेत् । वेदस्याऽऽपातबोधप्रजनकत्व एव । तदर्थमर्थपरत्वेनेत्यादिक-मुपात्तम् । तावता पूर्वपक्षे भाष्यकृतां वेदस्य **नैरर्थक्यम्** अर्थवत्त्वाभाव इष्ट इति नैव शंकितुमर्हम् ; लौकिकशब्दवैलक्षण्यादिरूपस्य नैरर्थक्यहेतोर भावात् । उभयसंमतापातप्रतीतेर्हेतुत्वोक्त्या पूर्वपक्षेऽपि सार्थक्यस्यैव तदिष्टत्वसंभवात् । अतः **सद्भिः**—अर्थानुभाविभिर्महद्भिरध्यापितानां

नैरर्थक्यं नैव कश्चित् पूर्वपक्षे कर्तुमर्हति। आचार्यकार्थमेव चेदध्ययनम्, माणवकस्य अध्यापने रुच्युत्पादनाय शुश्रूषणादिविधानं व्यर्थम्। आचार्यस्यैव माणवकवस्त्रनिर्णेजनादि कार्यं स्यादिति। अत्र पूर्वार्धस्यैवमेव भावो वर्णनीय इति **सेश्वरमीमांसायाम्** 24 पुटे **यत्तु** इत्यादिफक्किकातो ज्ञायते ॥ ४० ॥

41. **प्राञ्चं स्वाध्यायलाभं स्वयमिह तु फलं स्वान्यसिद्धं विहाय**
**व्यर्था कौमारिलानामनियतगतिमद्विश्वजिन्न्यायशङ्का।**
**चिन्तावैधत्वभङ्गे त्ववसरविहतिः स्नानशिष्टयेति मन्दं**
**स्यात् कालः श्राद्यितव्याद्यवसरवदिति स्थापितं पूर्वमेव ॥**

प. इत्थं नैरर्थक्येन पूर्वपक्षनिरासं निगमय्य विश्वजिन्न्यायेन पूर्वपक्षनिरासमपि निगमयति—**प्राञ्चमिति**। अर्थज्ञानानुष्ठानाभ्यां स्वर्गादिपर्यवसितं जपादिना स्वरूपेणापि पर्यवसायिनं प्राञ्चम्, अव्यवहितम्, स्वान्यसिद्धं स्वपरपक्षपरिगृहीतं स्वाध्यायलाभं परित्यज्य कौमारिळानां अनियतगतिमद्विश्वजिन्न्यायशंका व्यर्था! **अनियतगतिमत्त्वम्**—असार्वत्रिकत्वम्। न हि विधिवाक्यश्रुतफलेषु स्वर्गकामादिवाक्येषु अर्थवादश्रुतफलेषु रात्रिसत्रादिवाक्येषु, विश्वजिन्न्याय आशंक्यते। केवलमश्रुतफलेषु, विश्वजिता यजेतेत्यादिवाक्येषु, "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" इति स्वर्गफलक्लृप्तिः। अत्र स्वरवक्षरराशिग्रहणमेवाव्यवहितं फलमालक्ष्यते। अतोऽत्र विश्वजिन्न्यायस्य शंकाऽपि नांकुर[य]ति। यत्तूक्तम्-चिन्तायाःरागप्राप्तत्वे स्नानविधानादवसरालाभ इति, तद् द्रव्यार्जनन्यायेन प्रागेव परिहृतमिति न विस्तृणीमहे ॥

स. अथ भाट्टरचनानिरासः प्राञ्चमित्यादिना । ते एवमाहुः- स्वाध्यायोऽध्येतव्य इति विधीयमानस्याध्ययनस्य फलापेक्षायां विश्वजिता यजेतेत्यत्रेव स्वर्गः फलं कल्प्यते । फलाश्रवणे स्वर्गकल्पनस्य विश्वजिदधिकरणन्यायसिद्धत्वादिति पूर्वपक्षः । दृष्टे संभवति अदृष्टकल्पनायोगात् अर्थज्ञानार्थत्वमेवेति सिद्धान्त इति । तदयुक्तम्; नात्र विश्वजिन्न्यायः प्रवर्तते । दृष्टे संभवति अदृष्टं न कल्पनीयमित्यस्य नवमद्वितीये, "कर्म वा विधिलक्षणम्" इत्यधिकरण (2) सिद्धत्वात् । अध्ययनस्याऽऽप्तिसंस्कारकतया स्वाध्यायग्रहणरूपे दृष्टे फले स्पष्टे को ह्यदृष्टं शंकेत । इदञ्च फलं स्वान्यसिद्धं पूर्वपक्षिसिद्धान्त्युभयसंमतम् । तस्मादध्ययनविधेश्चरितार्थत्वात् गृहीतस्य च वेदस्य जपादावुपयोगसंभवात् मा भूदर्थविवक्षेति कामं पूर्वपक्षः क्रियताम्; न तु त्वदुक्तरीत्या । वस्तुतस्तदपि न भवति । अध्ययनजपादिविधेरर्थविवक्षणात् । किञ्चार्थज्ञानोद्देशेनाध्ययनविधिरिति सिद्धान्तोऽपि न युक्तः; प्राचः पूर्वभाविनः स्वाध्यायलाभस्यैव तव्यप्रत्ययबलेन फलत्वसंभवेन परस्ताद्भाविनोऽर्थज्ञानस्य फलत्वकल्पनानुपपत्तेः । ननु वेदलाभो न स्वयं पुरुषार्थ इति चेत्--अर्थज्ञानमपि तथैव । परम्परयेति चेत्--तुल्यम् । किञ्च विश्वजिन्न्यायः अनियतगतिः । न सर्वत्र प्रसर्पति । रात्रिसत्रे तदभावात् नित्येषु कर्मसु च तदप्रवृत्तेः ।। प्रकारान्तरालब्धफल-फलाकांक्षस्थल एव तत्प्रवृत्तिरिति चेत्—अत्र प्रकारान्तरेण लाभस्य स्पष्टत्वात् न तस्यावसर इति । ननु अर्थज्ञानार्थमध्ययनविधाने सति अर्थज्ञानस्य विचारमन्तरेणायोगात् विचारोऽप्यङ्गतया विधेय इति वैधेन विचारेण मीमांसाख्येन

अधीत्यस्नायादिति स्नानकालबाधः स्यात्; चिन्तायाः विचारस्य वैधत्वभंगे रागप्राप्तत्वेष्टौ तु अध्ययनानन्तर्यरूपावसरो विहन्येतेति चेत्—इदं मन्दम्-गुरुदक्षिणाद्यर्जनार्थविळम्बवत् विचारविळम्बस्य आव्युपयोगाय ग्राह्यत्वात्। मा भूद्वा स्नानकालबाधः; गृहस्थो भूत्वैव मीमांसताम्॥ यजनादिव्यापृतस्य कथमवकाशलाभ इति चेत्-श्रावयितुर्गुरोर्गृहस्थतया तस्य कुटुम्बिनोऽप्यवसरलाभेऽस्य कथमलाभ इत्यादिकं (श्लो. 24.) प्रागेवोक्तम्॥ ४१॥

42. अव्युत्पन्नस्य शब्दः कथमिव जनयेत् काञ्चिदापातबुद्धिं
स्याङ्गैश्चेत् तत्र चैवं ग्रह इह तु स किं साङ्ग इत्यल्पमेतत्।
साङ्गेष्वापातबोधं स हि सह जनयेत् संस्कृतप्रायदेशे
दृष्टश्चाङ्गोपकारस्तदनुगुणमतस्तद्ग्रहं केचिदूचुः॥

प. उक्तस्यैवार्थस्य द्रढिम्ने पुनरापातप्रतीत्युत्पत्त्यादिकमाक्षिप्य समाधत्ते अव्युत्पन्नस्येति। अव्युत्पन्नो हि बालः केवलं वेदपाठकः। तस्य कथं श्रुतिरापातबुद्धिं जनयेत्॥ अङ्गाध्ययनसामर्थ्यादिति चेत्—तत्र चैवंग्रहः—तत्राप्यंगेऽर्थावगतिर्न स्यादित्यर्थः। किंशब्दार्थः क्षेपः। अंगिग्रहवत् अंगग्रहोऽपि निरर्थ इत्यर्थः। तेनांगाध्ययनसामर्थ्यादापातप्रतीतिसिद्धिरिति असिद्धमसिद्धेन साध्यत इति। इमामाशंकां प्रतिक्षिपति—इतीति। तदेव विवृणोति सांगेष्विति। संस्कृतप्रायदेशे सांगेषु वेदेष्वक्षरराशिग्रह एवार्थापातप्रतीतिं सहसैव जनयेत्। अयमर्थः—"न म्लेच्छितवै नापभाषितवै" इत्यादिभिर्महर्षीणां कुलेषु प्रायेण म्लेच्छभाषैव नास्ति; तेन बाला अपि संस्कृतमेवाभ्यस्यन्ति। परस्परमपि

तथैव भाषन्ते । अतो वेदेष्वापातप्रतीतिरुपजायते । वेदेषु प्रकृति-प्रत्ययादिविपरिणामभूयस्त्वेन आपातप्रतीत्युत्पत्तिविलम्बेऽपि अंगेषु तादृशविपरिणामाभावात् सहसैवाऽऽपातप्रतीतिर्व्यक्तैवोत्पद्यते । अतः संस्कृतप्रायदेशवासात् सांगाध्ययनसामर्थ्याच्च प्रतिवासरमापातप्रतीतिरुत्त-रोत्तरमभिवर्धते इति । एकदेशिनां पक्षमाह दृष्ट इति । अंगेषूपकारो दृष्ट एव दृश्यते, "उच्चैरुदात्तः" इत्यादि ह्युच्चारणदशायां सौष्ठवमेवो-पदिशति । तत्तत्सूत्रार्थप्रकाश[न ?]मन्तरेण तत् कारयितुं न शक्यते । एवमध्ययनकालादिप्रदर्शकेषु ज्योतिश्शास्त्रादिषु दृष्टोपकारो द्रष्टव्यः । तथा च अर्थार्थमंगाध्ययने सार्थकमेवाध्ययनमिति वेदे स्वरूपमात्राध्ययनम्, अंगेषु तु सार्थकमिति । न च वैरूप्यदोषः—अंगाध्ययनसिध्यर्थस्य तस्य वैरूप्यस्य सोढव्यत्वस्य न्यायप्राप्तत्वादिति ॥ 42

स. यदि अक्षरराशिग्रहण मात्रार्थत्वमध्ययनस्य, तर्हि आपातप्रीति-रल्पाऽपि न भवेत् ; अतः कथं विचार इत्याक्षेपमनूद्य परिहरति **अव्युत्पन्नस्येति** । वेदमधीयानस्य शब्दार्थव्युत्पत्तेः प्रसक्त्यभावात् अधीतः शब्दः **कामपि**—किञ्चिदर्थविषयिकामपि आपातबुद्धिं न जनयेत् । अथ **स्वाङ्गैश्चेत्**—"वेदाङ्गानि समस्तानि कृष्णपक्षेषु संपठेत्" इति वेदशब्देन सह तदङ्गानामप्यधीयमानतया तैरयं शब्दः आपातबुद्धिं जनयेदिति चेत्—**तत्रचैवंग्रहः**—वेदाङ्गा-नामप्यध्ययनस्यैव विहितत्वात् अध्ययनस्य च अक्षरग्रहणमात्रार्थत्वात् **तत्र** अङ्गेष्वपि **एवं** वेद इवाक्षरग्रह एव ; नार्थज्ञानम् । अत **इह** वेदे सांगे सति **सः** 'निर्विशङ्को विचारः' इत्युक्तो विचारः

किं ? कुतो भवेत् ? एवं वेदे सांगे सति सः शब्दः आपातबुद्धिं जनयेत् किमिति । निराकरोति **इत्यल्पमेतदिति** । आर्याणां संस्कृतेनैव व्यवहारात् संस्कृतप्रायदेशे आशैशवात् तत्र व्युत्पत्तिर्भवत्येव । तत्तत्कुटुम्बभाषाशिक्षणं तैस्तैर्व्यवहारार्थं क्रियत इत्यस्यानुभविकत्वात् अवर्जनीयत्वाच्च आर्याः संस्कृतशिक्षां बालानां कथं न कारयेयुः । अतः संस्कृतप्रायदेशे अङ्गिनि अङ्गेषु च शब्दः आपातबोधं जनयेदेव । अलमेतावत् पूर्वपक्षं परिहर्तुम् । अथाप्यधिकं समाधानान्तरमाह दृष्टश्चेति । वेदस्येव शिक्षाव्याकरणादीनामपि शब्दपाठरूपाध्ययनमात्रमेव, विधेस्तावतैव चारितार्थ्यादिति हि प्रश्नः । एवंसति एभिरङ्गैरधीतैः अङ्गिनः क उपकारः कुतो भवति । मा भूदुपकार इति चेत्—तर्हि कथं तस्याङ्गाध्ययनत्वम् । शिक्षादीनां वेदस्य चाङ्गाङ्गिभाव एव कथम् । वर्णस्वरपदच्छन्दःप्रभृतिकं यथावत् ज्ञातं भवति चेत्, तदैवाध्ययनं यथावत् परिपालितं भवेदिति हि शिक्षादयः शिक्ष्यन्ते । तत् सार्थशिक्षणाभावे कथं घटेत । एकस्मिन्नेव शब्दे स्वरभेदो दृश्यमानः अर्थविवेकेनैवासंदेहेन रक्षणीयो भवति । अतस्तत्रार्थग्रहणमावश्यकम् । एवंस्थिते ज्योतिराद्यङ्गानामपि तुल्यरीत्या सार्थमेव पठनमिति । अतः अङ्गग्रहं **तदनुगुणम्** अङ्गकर्तव्योपकारानुरूपम् **तत्**-तस्मात्, **अनुगुणं** प्रकृतकालानुगुणञ्च अर्थविषयकमेव **केचित्** व्यासार्यादय ऊचुरिति ॥

43. **तत्साम्ये त्वर्थचिन्ताक्रमनियतिगतिर्नेक्ष्यतेऽङ्गाङ्गिवर्गे**
**दौष्कर्यं यौगपद्ये तत इह कथमारम्भ इत्यप्यचिन्त्यम् ।**

**सौकर्यं तारतम्यात् स्वयमुपनिपतच्छ्रावकादिक्रमाद्वा**
**स्वेच्छावैचित्र्यतो वा क्रम इति सकलारम्भसंपूर्तिसिद्धेः ॥**

प. एवं सांगाध्ययनस्य कर्तव्यतामुपदिश्य सर्वेषामंगाना-मध्ययनसाम्ये सति कथं तेषां विचारक्रमः इति परिचोद्य समाधत्ते तत्साम्ये इति। अध्ययनसाम्ये सति विचारपौर्वापर्यनियामकं किमपि प्रमाणं नोपलभ्यते। बहूनामंगांगिनां युगपद्ग्रहणं तु दुश्शकम्। अतः कथमंगांगिग्रहणमिति। तत्पूर्वपक्षं प्रतिक्षिपति इतीति। तदेवोपपादयति–सौकर्य इति। सूचीकटाहन्यायेन सुकरं पूर्वमभ्यस्यत इति वा, स्वयमागतश्रावयितृसब्रह्मचारिलाभाद्वा स्वेच्छावैचित्र्याद्वा क्रमेणानुष्ठानमिति तत्रतत्र सकलविद्यास्थानार्थविचारसंपूर्तिसिद्धिरिति ॥

स. कर्मचिन्ताब्रह्मचिन्तयोः क्रमौचित्यवत् अङ्गानां मिथः, तेषामङ्गिनश्च चिन्तायां पौर्वापर्यनियामकं नास्तीत्येवमाशंकापूर्वकमाह तदिति। अङ्गानामध्ययनमपि अङ्गिनोऽध्ययनेन समानमिति पक्षे, तदर्थविचारे अयमेव क्रम इति क्रमस्य **नियमे** व्यवस्थायां गमकं न दृश्यते। युगपदिति पक्षे दुष्करत्वमेव। तस्मात् तत्र कस्योपक्रमः, कथं क्रम इति चेत्—एवं न चिन्तनीयम्। यत् सुकरतमं तत् पूर्वम्, अन्यत् ततः इत्येवं सौकर्यतारतम्यानुरोधात् क्रमः। यस्याध्यापकः पूर्वं लभ्यते, तस्य प्रथममिति वा। यथेच्छं वेति आरम्भः संपूर्तिश्च सर्वस्य यथायथमिति ॥

**44. सिद्धं साध्यं च धर्मं प्रभवति गदितुं धर्मशब्दोऽथवाऽर्थात्**
**आराध्यादेर्विचारः स्फुरतु निगदितः कृत्स्नचिन्तोद्यमश्च ।**

**स्वाध्यायत्वाविशेषे स्थितवति निखिलेऽधीतनानांशचिन्ता ;**
**केषांचित्त्वेकदेशाध्ययनमगतितस्ते तु नात्र प्रसक्ताः ॥**

एवं विधिपूर्वात् रागात्, विषयवैलक्षण्यजनितात् रागादेव वा मीमांसाशास्त्रस्य श्रोतव्यत्वे सिद्धे तत्प्रतिपाद्यधर्मशब्दार्थं चिन्तयति सिद्धमिति। "अथातो धर्मजिज्ञासा" इति हि सर्वाद्यं सूत्रम्। अस्मिन् सूत्रे सर्वोऽपि शब्दार्थः प्रकाशनीयः। धर्मशब्दः केवलकर्मैव प्रकाशयतीति, पूर्वोक्तमर्थं विस्मृत्य, वदतः शिष्यस्य विशदं प्रकाशयति। अत्र धर्मशब्दो धृतिसाधनत्वेन–प्रीतिसाधनत्वेन [च] व्युत्पत्त्या सिद्धधर्ममीश्वरं साध्यधर्मं यागदानहोमादिकं [च ?] सहैवाचष्ट इत्येको निर्वाहः। अथवा धर्मशब्देन यागदानहोमादिरेवोच्यते ; तदनुबन्धात् आराध्यादेर्विचार इत्यपरः। "देवतामुद्दिश्य द्रव्यत्यागो याग इति" इति यागलक्षणम्। तत्तु देवतामन्तरेण न संभवति। "द्रव्यदेवते हि कर्मणो रूपम्" इति मीमांसकाः। अतोऽयमपि पक्षः परिग्राह्य एव। नन्वनेन सूत्रेणैक [देश ?] विचारारम्भः किं न स्यात् ? नेत्याह निगदित इति। कृत्स्नचिन्तारम्भस्य प्रागेव स्थापितत्वादित्यर्थः। चः शंकानिवृत्त्यर्थः। तदेव कृत्स्नचिन्तारूपत्वं स्थापयति स्वाध्यायत्वेति। अयमत्र विकल्पः—किं भागान्तरस्य स्वाध्यायरूपत्वाभावादेकदेशचिन्ता, किं वा तदंशाध्ययनाभावात्, अथवा स्वेच्छातः ? न प्रथमः—असिद्धेः। न द्वितीयः ; एकदेशाध्ययनस्यान्यायमूलत्वात्। न च तृतीयः ; न्यायप्राप्तस्य चिन्तनस्य स्वेच्छातः प्रहाणे वेदाध्ययनादेः कृत्स्नस्यापि विधिगोचरस्य प्रहाणप्रसंगादिति। ननु कर्मभागमात्रमेवांगीकुर्वते केचित् ;

अपरे पुनः ब्रह्मभागमात्रम् । तदेव तैश्चिन्त्यते । तत् कथमिति चेत्, अगत्येति परिपश्य । न हि अन्धबधिरजडादिवत् अगतिकानां प्रक्रियामिह वयमाचक्ष्महे । अपित्वधिकारिणामेवेति भावः ॥ 44

स. ननु सूत्रे धर्मजिज्ञासेत्येव प्रयोगात् कर्ममात्रविचारस्यैव प्रतीतेः कर्मभागमात्रं वेदमधीत्यात्र प्रवर्तेत । अतो वेदान्तविचारस्याप्यत्राप्रसक्तौ साङ्गवेदचिन्तेति कृत्वा कोऽयं पौर्वापर्यविचार इत्यत्राह **सिद्ध**मिति । धर्मशब्ददर्शनात् कर्मकाण्डमात्रविवक्षेति न वक्तव्यम्, धर्मशब्दस्य ब्रह्मार्थकत्वस्यापि सद्भावात् । न च भिन्नशक्त्या अर्थद्वयग्रहणं सकृत्प्रयुक्तशब्दादयुक्तमिति वाच्यम्; शक्त्यैक्यात् । वेदबोधितश्रेयस्साधनताकत्वं धर्मलक्षणम् । यागादिक्रियायाः तज्जन्यप्रीतिभाजो देवतायाश्च श्रेयस्साधनत्वं वेदबोध्यमेव । अथ विहितस्यैव धर्मत्वम्, न तु देवताया इति चेत्–देवताऽपि विहितैव । ननु–कर्मांगत्वेन सा विधीयते ; न तु तेनाकारेण श्रेयस्साधनत्वम् ; किन्तु कर्मजन्यप्रीतिभाक्त्वेनेति चेत्–आस्तामयं विचारः । अर्थादेव तद्विचारो भवतु ; न तु धर्मत्वात् । अथापि कृत्स्नचिन्तोद्यमः प्रागेव निगदितः ; अधर्मविचारस्यापि क्रियमाणतया धर्मशब्दस्य सामान्येन वेदार्थपरतायाः मीमांसकेष्टत्वेन ब्रह्मणोऽपि तद्वत् ग्रहणमिति । न ह्यधर्मप्रतिपादकभागं विहाय यागादिमात्रपरभागाध्ययनं कश्चिदिच्छेत् । स्वाध्यायोऽध्येतव्य इति स्वाध्यायत्वेनोद्दिष्टत्वात् तदविशेषात् । एवं अधर्मपरभागात्यागे संमते, निखिले तत्रैव उपनिषदादिभागेऽपि सोऽविशेषः स्थित एव । अतस्तस्मिन् स्थितवति, एकदेशाध्ययनस्याप्रामाणिकत्वात् अधीतकर्मकाण्ड — ब्रह्मकाण्डरूप-

सर्ववेदचिन्तैव भवतीति ॥ अशास्त्रार्थानुसारिण उद्दिश्य तत्त्वगतिरन्यथयितुं न शक्यते । तथासति वेदमनधीत्यापि मीमांसापठनात् अध्ययनानन्तरमित्यर्थोपि त्याज्यः स्यादित्याशयेनाह केषाञ्चिदिति ॥

एतत्पद्यविवक्षितार्थविवरणमेवाथ बहुभिः पद्यैः क्रियते—

45. धर्मः सूत्रे द्वितीये ननु परिपठितश्चोदनालक्षणोऽर्थः
तेनास्मिन् सिद्धधर्मग्रहणमनुचितम्; तन्न तल्लक्षणैक्यात् ।
शास्त्रोक्तेष्टाभ्युपायः स इति खलु समं लक्षितौ सिद्धसाध्यौ
स्वीकार्यः स्वेष्टसिद्ध्यै य इह स तु भवेत् तस्य तस्मिन्नुपायः॥

एवं धर्मशब्देन सिद्धसाध्ययोः संग्रहेणाभिधानं लक्षणसूत्रविरोधादाक्षिपति धर्म इति । लक्षणं ह्यसाधारणधर्मः । स च अव्याप्त्यतिव्याप्तिशून्यः । चोदनालक्षणत्वं तावत् साध्यधर्मस्यैव विद्यते ; न पुनस्त्वदभिमतसिद्धधर्मस्येति । परिहरति तन्नेति । "चोदनेति क्रियायाः प्रवर्तकत्वम् (तकं ?)" इत्यादिकं [1]नानुवृत्तं लक्षणम् । अपि तु साध्यधर्ममात्रलक्षणम् । अनुवृत्तं तु शास्त्रोक्तेष्टसाधनत्वमिति । तेन तु लक्षणेन सिद्धसाध्यधर्मौ सममेव लक्षितौ । धर्मशब्दार्थविवरणोपयुक्तमुपायशब्दार्थमपि विवृणोति स्वीकार्य इति । इदं लक्षणं सिद्धसाध्ययोः साधारणम् । कुठारस्य तदुद्यमननिपातनादेश्च स्वेष्टसिद्ध्यै स्वीकार्यत्वाविशेषादिति ॥ [[1]इत्यादिकम्—इत्यादिशाबरभाष्योक्तम् ।] 45

स. ब्रह्मणो धर्मत्वं जैमिन्यसंमतम्, तदुक्तलक्षणाभावादिति शंकां परिहरति धर्म इति । "चोदनालक्षणोऽर्थो धर्मः" इति द्वितीयं सूत्रम् । चोदना लक्षणं प्रमाणं यस्य स धर्म इति तदर्थः। "चोदनेति क्रियायाः

प्रवर्तकं वाक्यमाहुः" इति शाबरभाष्यात् चोदनालक्षणत्वं प्रवर्तक-वाक्यबोधितत्वम्। न चेदं ब्रह्मणि; सिद्धपरवाक्यज्ञेयत्वात् तस्य इति प्रश्नः। निषेधति तन्नेति। शास्तीति शास्त्रमिति शास्त्रशब्दव्युत्पत्तावपि, यथा शास्त्रपदं सिद्धसाध्योभयविधापूर्वार्थिकवाक्यपरम्; अत एव हि शास्त्रयोनित्वादिति सूत्रम्, तत्त्वपरग्रन्थेष्वपि शास्त्रशब्दव्यवहारश्च-तथा चोदनाशब्दोऽपि, 'वेदाच्छास्त्रं परं नास्ति' इत्युक्तोत्कृष्टशास्त्रपरः। अतः एव मन्त्रार्थवादादीनामपि धर्मे प्रामाण्यं पूर्णप्रथमाध्यायवक्ष्यमाणं चोदना-सूत्रेण संगृहीतं भवति। कतिकति धर्मास्तदुन्नेयास्सन्ति। एवञ्च शास्त्रेणेष्टोपायत्वेन बोधितत्वं धर्मलक्षणम्। तत् ब्रह्मणोऽप्यस्त्येवेति। नन्वेवं स्वर्गोऽपि धर्मः स्यात्; स्वर्गरूपदेशस्य सुखरूपेष्टसाधनताया वेदबोधितत्वात्। तत्राह स्वीकार्थ इति। इदमिष्टसाधनं भवतु इति वेदप्रामाण्याधीनपुरुषापेक्षाविषयत्वं धर्मत्वम्। अपेक्षा च प्रार्थना संकल्पाद्यात्मिका। एतत्संकल्पसत्त्व एव धर्मात् फलं भवति। परमात्माऽपि रक्षापेक्षाप्रतीक्षः फलं प्रयच्छति। नैवं स्वर्गादेः सुखसाध-नत्वमस्माभिः प्रार्थनीयम्; स्वभावत एव भावात्। तस्य तदधीन-देवतान्तराणाञ्च प्रार्थनावैकल्येऽपि फ[illegible]ावपि प्रार्थनमेव मुख्यः कल्पः। तथा च स्वेष्टसिद्ध्यै येन पुरुषेण यः स्वीकार्यतया–वेदबोधितः, तस्य तस्य पुरुषस्य सः तस्मिन् विषये तदिष्टे [illegible] इत्युच्यत इति न दोषः॥

**46. आसंसारं प्रसिद्धे भगवति सहसा बिभ्यतोऽपह्नवोक्तेः,**
**नेशानः क्षिप्यते किं त्वनुमितिरिति ये भक्ततां भावयन्ति।**

भद्रास्ते भारतादिप्रणिहितमनसां नास्तिकत्वं कुतः स्यात्
नित्यं धर्मं जहुर्ये विचिनुम इह तान् वेदवादान् कुवाचः ॥

प. सिद्धधर्मस्यापि भगवतो धर्मशब्दवाच्यत्वेन मीमांसावेद्यत्व-मुक्त्वा तद्विषये विप्रतिपत्तिरहितान् आस्तिकमीमांसकान् स्वीकृत्य नास्तिकानेव धिक्कुरुते **आसंसारमिति**। अत्र केचित् यावत्संसारं प्रसिद्धे भगवत्यपह्नोक्तेर्भीता एव, "अनुमानं निरस्तम्, नेश्वर" इत्याग-मिकेश्वरनिराकरणं प्रतिक्षिपन्ति। तान् संभावयति—**भद्रा** इति। तेषां तादृग्विषयबुद्धिर्भारतादिपरिचयादित्याह **भारता**दीति। अय-मर्थः देवतातीर्थेति श्लोकेन प्रागेव (27) विवृतः। उक्तं च **कुमारिलैः**— इतिहासपुराणेति (सेश्वरमीमांसायां.) ये तु मूर्खाः वैदिकत्वं परिगृह्यैव वेदवेद्यं परं ब्रह्म प्रतिक्षिपन्ति, तानेव तत्र तत्र परिशोध्य दूषयिष्याम इत्याह-**विचिनुम** इति। [वेद ?] वृक्षाणामुपहतिहेतुस्तेषामेव जायमानां-गुळिविच्छेदाविशेषो वादः कुशब्देनोच्यते ; निरीश्वरमीमांसकानां वाणी-नानाश खोपस्कृतानां शाखिनामुपहतिहेतुरित्युक्तं भवति ॥ 46

स. जैमिनीया एव केचित् सेश्वरवादिनोऽपि सन्तीति दर्शयन्, ये ईश्वरमेव नेच्छन्ति, तमिष्ट्वाऽपि तस्य धर्मत्वं वा नेच्छन्ति, तेषामत्र निरास इत्याह **आसंसारमिति**। आसंसारं प्रसिद्धिमुपपाद्य, "भगवति भवे संदेह एव कुतः" इति **उदयनाचार्यः**। भवत्यस्मात् जगदिति भवशब्दो जगत्का-रणमात्रवाचीति तत्र व्याख्यातारः। कुतः। तैर्मूर्त्यनंगीकारात्। **भवः** संसारः। संसारे वर्तमानानाम् आसंसारं प्रसिद्धे भगवति कुतः संदेह इत्य-प्यर्थः। मीमांसकस्तु **भवनाथः** ईश्वरनिरसने प्रवृत्तो निगमयति "एतावता

ईश्वरानुमानमेव निरस्तम् ; नेश्वर:" इति । तेनाऽऽगमिकश्चेदीश्वर:, न तन्निरसनं मीमांसकेष्टमिति सिद्धम् । सर्वमिदमहार्दमित्याशयेनाह **सहसे**-ति । ये भगवद्विषयकापलापसाहसात् **बिभ्यतः** भीता:, 'नास्माभिरीश्वर: क्षिप्यते, किं तु तद्विषयकमनुमानम् । अनुमानेनेश्वर: साधयितुं न शक्यत इत्येवोच्यते' इति वदन्तः स्वात्मनो भक्तानिव दर्शयन्ति, ते **भद्राः** परमास्तिका भविष्यन्ति । अभिनय इति किम् । वस्तुत एव स्यादास्तिक्यम्–उक्तं हि प्रागेव, "देवतातीर्थतपसां भारतात् यस्य निर्णय:। न जन्यते नास्तिकता तस्य मीमांसकैरपि" इति। अथापि ये भंगुरान्यागादिधर्मान् परम् आहत्य, कृष्णं धर्मं सनातनमिति प्रसिद्धं नित्यं धर्मं जहति, तस्य धर्मत्वं नेच्छन्ति, तेषामत्र निरास: । शास्त्रेण धर्मशब्देनैव निर्दिष्टस्य धर्माणां धर्मत्वावहस्य परमस्य धर्मत्वं कथं त्यज्येत । शास्त्रदर्शितसर्वलक्ष्यसंग्राहकं लक्षणमेव तु शिक्षणीयमिति भाव:। **वेदवादान्** वेदव्याख्यातॄनपि **कुवाचः** कुत्सितव्याख्याकारान् **विचिनुमः** । वेदशाखाविषयकाण्यपि तेषां वाक्यानि लवनीयानि । यथा वृक्षलतादीनां शाखासु जाताः केचित् प्रतीकाः तदभिवृद्धिप्रतिबन्धकत्वात् लूयन्ते, तद्वत् । रुग्णाया अंगुलेर्विच्छेदो हि शरीरारोग्यहेतुरिति ॥ ४६ ॥

**47. सद्वाराद्वारवृत्तिद्वितयनियतया वाचकानां प्रवृत्त्या**
**सर्वश्रुत्यर्थभूतः श्रुतिभिरभिहितस्तस्य चोक्त्या तथाऽन्यैः ।**
**तस्मादीशो वितन्वन् निजमहिमबलात् विश्वमेकातपत्रं**
**प्रख्यातः सार्वभौमः पशुभिरिव न संवेद्यते मोहनिघ्नैः ॥**

प. ईश्वरस्यैव सकलवेदवेद्यत्वं निखिलविद्वज्जनपरिगृहीतैर्मीमांसकधौरेयैर्नाभिधीयते । केवलमितिहासपुराणप्रामाण्यवादिभिरीश्वर इति कश्चित् कचिदनुमन्यत इति कश्चित् प्रलपति । तं प्रतिक्षिपति सद्वारेति । "सर्वे वेदा यत्रैकं भवन्ति" इति ह्यग्नीन्द्रादिशब्दैः सद्वारवृत्त्या विष्ण्वादिशब्दैरद्वारवृत्त्या च विष्णुरेव तैरभिधीयते इति निपुणं निर्णीतम् । न केवलं श्रुत्यैव, तदुपबृंहणभूतैर्भगवद्गीतादिभिरपीत्याह तस्येति । "वेदैश्च सर्वैरहमेव वेद्यः" इति गीतावचनम् । तथा, अन्यैः—पराशरादिभिरित्यर्थः । "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इत्यादिना सर्वकर्मानुष्ठानमन्त्राणां साक्षात् परंपरया वा भगवद्वाचकत्वमेवाभिसंधीयते । "सर्वे वेदा यत्पदमामनन्ति" इत्यादिकं सहस्रमौपनिषदं सुप्रसिद्धम् । सोपपत्तिकमुपपादितमर्थं निगमयति तस्मादिति । सार्वभौमः–सकलवेदवेद्यः सर्वदेवतान्तर्यामी सर्वकर्मसमाराध्यः सर्वकर्मफलप्रदो महाराजः दैवतानां दैवतमित्यर्थः । पितामहोऽपि "यो ब्रह्माणम्" इत्यादिना भगवतैव दत्तैश्वर्य इत्याम्नायते । किमुतान्ये किंपचानाः ? गुरुकुमारिलादिमतानुसारिभिः पुरुषपशुभिरेव पुरुषोत्तमस्य सर्वैश्वर्यं न संवेद्यत इति मोहनिघ्नानेव तान् मन्यामहे ॥ 47

स. "भारताद्यस्य निर्णयः" इति विशिष्य भारतोक्तेर्भावं विशदयति सद्वारेति । तत्र भारते श्रीनारायणीयादौ भगवतः सर्वकर्मसमाराध्यत्वम्, देवतान्तराणां तत्प्रसादादाराध्यत्वलाभः, सर्वश्रुतितात्पर्यम्, बहुमहर्षिहृदयम्, भगवत्कृतगीतोपदेशादि च व्यक्तं ग्राह्यम् । तत् नास्तिकतम-

-मप्यास्तिकाग्रेसरं कुर्यादिति तन्निर्देश इति भावः। वाचकानां प्रवृत्तिर्बोधन-व्यापारः। स द्विप्रकारः-किञ्चिद्द्वारा परमात्मबोधनम्, साक्षाद्वेति। अग्निशब्देनाग्निरूपवस्तुशरीरकत्वेन परमात्मबोधनं सद्वारकम्। अग्रं नयतीति व्युत्पत्त्या तस्य नयनरूपस्य व्यापारस्य साक्षात् परमात्मन्येव स्थितस्य बोधनं द्वितीयम्। द्वितीयपक्षे जैमिनेरादरः ब्रह्मसूत्रे प्रादर्शि। ईदृशः स कथं निरीश्वरः स्यात्। वृत्तिद्वयरूपाऽपि प्रवृत्तिः परमात्मानमेव विशेष्यमाकलयतीति। अतः सर्वशब्दवाच्यः सर्वात्मा। **नियतये**ति पदं यथार्हं वृत्तिद्वये एकैकस्याः व्यवस्थां दर्शयति। **तस्य चोक्तया** सर्वश्रुत्यर्थभूतभगवदुक्तिरूपगीतादिकया। **अन्यैः** नानामहर्षिवचनैः। स्मृतीतिहासादेः सर्वस्य ग्रहणम्। **सार्वभौमः प्रख्यातः** सर्वत्र ग्रन्थेषु अर्थेषु च प्रसिद्धः॥ ४७॥

48. **धर्मद्वारा विचार्यं निखिलमनुसृतं छत्रिनीत्याऽथवा स्यात्**
**तात्पर्यारोहि सर्वं प्रथयितुमजहल्लक्षणेयं समीची।**
**आपातस्फूर्तिसाम्यादनभिमतपरीहारनित्योन्मुखानां**
**हेयप्रख्यापनार्थं ध्रुवमियमखिलैरत्र निर्धारणीया॥**

एवं धर्मशब्दस्य सिद्धसाध्योभयविधधर्मवाचकत्वेन सिद्धान्तः समर्थितः। इदानीं साध्यधर्ममात्रवाचकत्वेऽपि छत्रिन्यायात् सिद्ध-धर्मस्यापि चिन्तनमत्राभिधीयते इति निर्धारयति **धर्मे**ति। यथा छत्रिणो गच्छन्तीत्यत्र छत्रिशब्दस्य छत्रिमात्रवाचकत्वेऽपि लक्षणया तदन्येषामच्छत्रिणामप्युपादानम्, एवं "धर्मजिज्ञासा" इत्यत्र धर्म-शब्दस्य साध्यधर्ममात्रवाचकत्वेऽपि सिद्धधर्मभूतान्तरात्मादीनामपि

लक्षणया बोधनं योयुज्यते। ननु लक्षणा जघन्येति चेत्, अस्तु। अथापि वाक्यतात्पर्यानुरोधेन लक्षणैव ज्यायसीत्याह— तात्पर्येति। जहल्लक्षणैव स्वार्थपरित्यागादत्यन्तजघन्या, अजहल्लक्षणा तु स्वार्थस्यापरित्यागात् स्वीकार्यैवेति दर्शयति अजहदिति। वाक्यतात्पर्यानुरोधित्वमेवोपपादयति। आपातेति। आपातप्रतिपन्नार्थचिन्तनं कर्तव्यमिति हि सूत्रतात्पर्यम्। आपातप्रतीतिर्हि सिद्धासिद्धरूपसकलवेदार्थविषयिणी। ततश्चेदमपि चिन्तनीयमिति। इयं लक्षणा भवतामप्यनुमन्तव्येत्याह अनभिमतेति। अनभिमतं–शतयातनादिकम्। तत्परिहारनित्योन्मुखानां भवतां धर्मजिज्ञासेत्यत्र धर्मशब्दलक्षणा स्वीकार्या— अपगोरणादेः तत्फलरूपशतयातनादेस्साधनस्याधर्मत्वात् तस्यापि परिहारार्थं जिज्ञास्यत्वादिति धर्मशब्दे लक्षणावश्यम्भावः सिद्ध एव॥ 48

सिद्धंसाध्यमिति पद्ये प्रथमः पाद एवं श्लोकत्रयेण विवृतः। अथ द्वितीयपादविवरणम्—धर्मद्वारेति। धर्मजिज्ञासा धर्मस्वरूपप्रमाणसाधनफलैश्चतुर्धा भवतीति मीमांसकोक्तरीत्या सपरिकरधर्मविषयकत्वात् सर्वविचारो भवति। अनुबन्धिपर्यन्तविचारः शेषषष्ठीग्रहणे स्यात्, न कर्मणिषष्ठीग्रहणे इति न मन्तव्यम्; अनुबन्धिविचाराभावे तद्विचारस्य पूर्त्यभावेन तस्याप्याक्षेपात्। सर्वविचारशाब्दत्वसिद्धये पक्षान्तरमाह छत्रीति। यथा वक्तृतात्पर्यविषयसर्वग्रहणाय छत्रिणो यान्तीत्यत्र छत्रिपदेन अच्छत्रिणामपि लक्षणया ग्रहणम्, अन्यथा बहुत्वानन्वय इति वा, प्रधानाग्रहणापत्तिरिति वा–तथा धर्मपदेन विचार्यसर्वग्रहणमजहल्लक्षणया। तत्र हेतुमाह आपातेति। धर्म इव फलसाधनादिष्वपि

आपातप्रतीतिसत्त्वात् सर्वजिज्ञासैवेहास्तीति । धर्मविचारप्रतिज्ञायां प्रमाणसाधनफलानामर्थादाक्षेप इति वदतां पक्षेऽपि अधर्मस्य तत्तान्तर्भूतत्वात् तदर्थमजहल्लक्षणा स्वीकार्येत्याह **अनभिमतेति** । अयमधर्म इति विशिष्य निर्णयाभावे कथं तत्त्यागसिद्धिः । प्रवर्तनापेक्षया निवर्तनाया एव तु मुख्यं ज्ञेयत्वम् । विधेर्निषेधो बलीयानिति न्यायात्। **अनभिमतपरीहारेति** । निषिद्धकर्मरूपाधर्मजन्यं नरकादिफलं ह्यनिष्टम् । तस्य परिहरणे इत्यर्थः। **नित्योन्मुखानामित्यनेन** ; काम्यकर्मज्ञानं क्रतुकरणशक्तैकापेक्षितम्, नैवमधर्मज्ञानम् । सर्वदासर्वापेक्षितत्वादिति दर्शितम्। **इयम्** अजहल्लक्षणा । साम्यादिति हेतोरत्राप्यन्वयः॥

**49. धर्मादेव प्रयुक्तादभिदधति सतां धर्मकामार्थमोक्षान्**
**नान्यार्थौ काममोक्षौ धनमबहुफलं दोषवर्गान्वितं च ।**
**सिद्धानेकाधिकारैर्धृतिकृदयमतस्सेव्यते सावधानैः**
**आदावेवं निबध्नन् विषयफलयुतं शास्त्रमाविश्चकार ॥**

ननु वेदेन हि चतुर्विधपुरुषार्थावाप्तिर्विषयतया प्रयोजनतया च निर्दिश्यते । अथापि कथं धर्म एवैकः सूत्रे जिज्ञास्यतया निर्दिश्यते इत्याशंक्य परिहरति **धर्मादिति** । अयमर्थः—धर्मस्य सर्वपुरुषार्थमूलत्वेन प्राधान्यात्, धर्मप्रतिपादने च इतरपुरुषार्थप्रतिपादनस्यार्थसिद्धत्वात् केवलधर्म एवात्राभिधीयते । धर्मो हि सर्वमूलम् । **काममोक्षौ तु नान्यार्थौ**–न पुरुषार्थान्तरसाधनभूतावित्यर्थः। धनं तु पुरुषार्थान्तरसाधनमप्यबहुफलं दुःखान्वितञ्च । तत्तत्पुरुषार्थकाङ्क्षिभिरनेकाधिकारिभिः, "अतस्करकरग्राह्यमराजकवशंवदम् । अदायादविभागार्हं

धनमार्जय सुस्थिरम्'' इति धर्म एव स्थिरधनत्वेनोपार्ज्यते। तेन धर्ममेवादौ निबध्नन् सूत्रकारः सर्वपुरुषार्थसमन्वितं धर्ममुपात्तवानिति धर्मोपादानादेव संपूर्णविषयमेव स्वं शास्त्रमाविश्चकारेति वक्तव्यमिह नावशिष्यते ॥ 49

स. ननु जिज्ञास्यानां बहूनां ग्रहणे इष्टे सति, विशिष्य धर्मपदप्रयोगः कुतः। धर्मार्थकाममोक्षाश्च लोके चत्वारः पुरुषार्थाः प्रसिद्धाः। तत्र फलमुखेनोपायस्याजहल्लक्षणया ग्रहणम्, उपायान्तरवाचिना अर्थादिपदेन वा धर्मग्रहणं कस्मान्नेष्टमित्यत्राह **धर्मादेवेति**। **सतां** वैदिकानां धर्मार्थकाममोक्षा भवन्ति। कस्माद् भवन्तीति जिज्ञासायां धर्मादेव **प्रयुक्तात्** अनुष्ठिताद् भवन्तीति वदन्ति शास्त्राणि। अतो भवति सर्वोक्तिः। अन्यदा कामस्य मोक्षस्य च निर्देशे तस्य केवलं फलत्वात् उपायत्वाभावादुपायो नोक्तः स्यात्। तदेकतरनिर्देशे—अन्यतरानुक्तिः, तदुपायानुक्तिः, तदसाधन-फलान्तरसाधनोपायानुक्तिश्च स्यात्। अर्थस्तु उपायः फलञ्च यद्यपि, अथापि, 'अर्थानामार्जने दुःखमार्जितानाञ्च रक्षणे। नाशे दुःखं व्यये दुःखम्' इति नानादुःखहेतुरपीति सोऽप्रशस्तः। धर्मपदस्य तु धृतिसाधनार्थकत्वात् फलसाधनोभयमपि निर्दिष्टं भवति। धृतिर्नाम प्रीतिः। तत्साधनम् इष्टाभ्युपाय इत्यर्थः। **सिद्धानेकाधिकारैः** चतुर्विधपुरुषार्थान्यतमापेक्षाशालिभिः **धृतिकृत्** तत्तदिष्टकृत् धर्मः सेव्यते। एवं धर्मपदव्युत्पत्तौ विषयफलोभयलाभ इत्यर्थातिशयः। अतो धर्ममेवाऽऽदौ निर्दिदेश। तत्र शास्त्रारम्भे निर्देष्टव्ययोर्विषयफलयोर्निर्देशः कृतो भवति; धृतीत्यनेन अर्थकाममोक्षाणां ग्रहणञ्चेति। ऐकशास्त्र्यादिह मोक्षक्रोडीकार उपपन्नः ॥ ४९ ॥

50. तत्तत्कर्मप्रवाहप्रभवरुचिभिदातारतम्यानुरोधात्
वेदे वात्सल्यभाजि व्यतिषजति चतुर्वर्गचर्योपदेशः ।
उक्तं मोक्षप्रधाने त्रिकमितरदपि ह्यादितो भारतादौ
विस्रम्भार्थं तु मुक्तेस्तदितरकथनं कीर्तितं सात्वते च ॥

प. अत्र कश्चिच्चोदयति–अस्तु मोक्षः पुरुषार्थः । अर्थकामावत्यन्त-जघन्यौ । धर्मोऽपि तत्साधनत्वेन विषसंपृक्तान्नवज्जघन्य एव । अध्यात्मविद्भिः काम्यं कर्म परित्यज्यते । शास्त्रं च "शास्त्रं हि वत्सलतरम्" इति माता-पितृसहस्रेभ्योऽपि वत्सलतरमभिधीयते । कथं शास्त्रेण तत्त्वतः प्रतिकूल-भूत धर्मार्थकामतत्साधनोपदेश उपपद्यते इति । अत्र परिहारमाह—तत्तदिति । अयमाशयः—अनादिः खलु सांसारिकप्रवाहः । "त्रैगुण्य-विषया वेदाः" इति न्यायेन स्वकर्मानुरूप्येण गुणत्रयवश्यानामधि-कारिणां तत्तदभिलाषानुरूपस्वर्गस्वाराज्यादिफलसिध्यर्थं ज्योतिष्टोमवाज-पेयादिसाधनोपदेशमेव करोति वेदः । तथा प्राचीनपापनिमित्त-निरयादिपतनपरिहारार्थं प्रायश्चित्तरूपं कृच्छ्रचान्द्रायणादिकमुपदिशति । तथात्राधिकारिणामिष्टप्राप्त्यनिष्टनिवृत्तिरूपपुरुषार्थसाधनोपदेशेन वेदानां वत्सलतरत्वसिद्धिः । न हि अभिमतपुरुषार्थप्रतिपादनाभिसंधिमन्तरेण मातुरपि वात्सल्यमन्यदुपलभ्यते ॥ अस्तु बुभुक्षुमुमुक्षुसाधारणोपदेश-प्रवणत्वात् वेदस्य तत्तदभिमतोपदेशेन वात्सल्यसिद्धिः ; मोक्षप्रधानस्य महाभारतस्य कथमुपक्रमे पुरुषार्थान्तरोपदेशकरणमित्याशंक्य परिहरति–उक्तमित्यादिना मुक्तेरित्यन्तेन । यद्यपि मोक्षप्रधानं महाभारतम् , तथा-ऽपि पुरुषार्थान्तरकथनम्–"शरीरारोग्यमर्थांश्च भोगांश्चैवाऽऽनुषंगिकान् ।

दुदाति धर्मायिनां नित्यमपवर्गप्रदो हरिः" इत्युक्तप्रकारेण मोक्षप्रदातरि भगवति विश्वासार्थम् । अल्पबुद्धयः खलु भक्ताभासाः स्वाभिमतपुत्रादि-प्रदानाभावे मोक्षप्रदानेऽपि निर्विश्वासा भवन्ति । तेनैवाविश्वासेन स्वतोऽपि(?) भ्रश्यन्ति । अतो भगवतः सर्वफलप्रदत्वमुच्यते महर्षिभिः । न केवलं महर्षिभिः ; [1]भगवताऽप्युच्यते इत्याह तदितरेति । विस्रम्भार्थं तु युक्तेः इति उत्तरत्रानुषज्यते ॥ [1. सात्वतं हि भगवदुक्तम् ।] 50

स. ननु मोक्षजिज्ञासामारभ्य तदुपायादिविवेचनमात्रमिह युक्तम्, किं क्षुद्रधर्मनिरूपणेन प्रवृत्तिधर्मवर्धनेनेत्यत्राह तत्तदिति । ईश्वरेणे-दृशविविधलोकसृष्टिः किमर्थं क्रियते ; मुमुक्षुमात्रसृष्ट्या तत्पुरुषार्थलम्भ-नस्यैव युक्तत्वादिति प्रश्नतुल्योऽयमनुयोगः ॥ तत्तत्कर्मपरिपाकस्य संपाद्यत्वात् तद् युज्यत इति चेत्—तुल्यमेतदिहापि । तदर्थत्वात् । अतश्चतुर्वर्गोपदेशो वेदे स्थितः वात्सल्यनिबन्धन एव । जना हि प्रायः क्षुद्रपुरुषार्थक्षिप्रप्रतिलम्भनाभिनयपरानेवाऽऽचार्यान् अनुसरन्ति । तथाच वस्तुतस्तादृशपुरुषार्थप्रापणे इतः सत्येव विश्वस्य वेदमादृत्य कालक्रमेणान्यदपि अवश्यग्राह्यं गृह्णीयुरिति वात्सल्यातिशय एव तस्य । सकलफलप्रदो हि विष्णुरत एव भवति । अतो वेदो वस्तुतो मोक्षप्रधान एव । अत एव तथा मोक्षप्रधानतया निश्चितः पञ्चमवेदोऽपि तदनुसारेण धर्मार्थकामान् त्रीनपि प्रथममाह । विस्रम्भार्थमिति । यथा योगे प्रवृत्तस्य प्रधानफले पश्चाद्दास्यमाने सत्यपि, प्रथमतः काश्चन सिद्धयः प्रदर्श्यन्ते योगे विस्रम्भजननार्थम्, तथा परमपुरुषार्थोपायोप-कारकाणामेव कर्मणां क्षुद्रफलजनकत्वमपि यथायथं भगवदभिसंहितमनु-

कम्पाबलात् । तदुक्तं पञ्चरात्रवक्त्रा भगवता सात्त्वतसंहितायां "प्रत्ययार्थं तु मोक्षस्य सिद्धयः संप्रकीर्तिताः" इति । अतस्तदनुसारेण सर्वधर्मनिरूपणमेव युक्तम् । वेदार्थजिज्ञासुपुरुषप्रीणनार्थत्वान्मीमांसायाः ॥५०॥

**51. अस्यासौ ग्रन्थराशेर्विषय इति मतिः प्रेक्षितॄणां स्वतस्स्यात्**
**मोघा पूर्वं तदुक्तिः, नतिरिव न हि सा भाविनी भद्रचर्या ।**
**उद्देशोऽप्यर्थसिद्धस्तदुचितवपुषो लक्षणस्य प्रणीतौ**
**सत्यं संक्षिप्तदृष्टेर्मतिरवदधती संदिदृक्षेत शेषम् ॥**

प. अन्योऽपीह कश्चिदन्यथाऽऽशंकते—अस्येति । इदं सूत्रं विषयप्रयोजनकथनार्थमिति हि भवतोच्यते । निरर्थकमिदं विषयकथनार्थमादिमं सूत्रम् । आदित एव चोदनालक्षणोऽर्थो धर्म इति लक्षणाभिधाने धर्मविषयत्वं स्वत एव विज्ञायते । अतो विषयोक्तिः प्रथमं मोघा–निष्प्रयोजनेत्यर्थः । तर्हि विषयोक्तिर्मंगळाचारो भवत्वित्याशंक्य परिहरति नतिरिति । न हि नमस्कारादिवत् विषयाभिधानमपि मंगाळाचार इति महर्षिभिः परिपठ्यते । ननु शास्त्रप्रवृत्तेस्त्रैविध्यात् उद्देशार्थं प्रथमसूत्रे विषयाभिधानमित्याशंक्य परिहरति–उद्देश इति । उद्देशानुरूपं हि लक्षणं प्रणीयते । द्वितीयसूत्रे लक्षणप्रणयननान्तरीयकत्वेनैव धर्मोद्देशस्य सिद्धत्वात् किम् आदिसूत्रे तदुद्देशनिर्देशेन इति भावः । अर्धाङ्गीकारेण परिहरति सत्यमिति । अस्त्वतिशयितबुद्धीनां भवदुक्तैव प्रक्रिया । तथाऽपि मन्दबुद्धीनां संक्षेपविस्तराभ्यामुपदिष्टे वस्तुन्यवदधती मतिः शेषं संदिदृक्षेत–परीक्षामधिकुर्यादित्यर्थः ॥ 51

स. ननु विषयफलयुतत्वं शास्त्रस्याऽऽविश्चकार प्रथमसूत्रेणेत्युक्तम् । तत् द्वितीयसूत्रादित एव ज्ञायत इति व्यर्थमेवेदम् । न हि वक्ष्यमाण-विषयकप्रतिज्ञाऽपि आशीर्नमस्क्रियादिवत् मङ्गलत्वेन स्वीकृताऽस्ति ; येन तदर्थतया वा साफल्यं स्यात् । वस्तुनिर्देशोऽपि मङ्गलमिति चेत्—तत् द्वितीयसूत्रत एव सिद्धम् । ननु उद्देशो लक्षणं परीक्षेति क्रमात् लक्षणवर्णनात् प्राक् लक्ष्यनिर्देशः कर्तव्य इति चेत्—तर्कशास्त्रे द्रव्यगुणादिवत् अत्रानेकेषां वक्तव्यत्वे कामं स स्यात् । एकस्य तु धर्मस्येह वचनात् लक्षणसूत्रमेवोद्देशमपि कुर्यात् । 'धर्मश्चोदनालक्षणोऽर्थः' इति वा तत् सूत्रं पठ्यताम् । अतः उद्देशोपि, तदुचितवपुषः उद्देशानुरूपस्वरूपात्मकस्य निर्दिश्यमानधर्मपदप्रवृत्तिनिमित्तभूतस्य लक्षणस्य प्रणयनादेवार्थात् सिद्ध इति । इमां शंकां परिहरति सत्यमिति । सत्यमित्यर्धाङ्गीकारे । आर्षोपदेशात्मक काणादसूत्रादिस्थले एष प्रश्नो रोचते, नात्र ; अनारभ्यत्वशंकाप्रतिक्षेपार्थन्यायोपन्यासार्थं सूत्रस्यावश्यकत्वात् । ततःपरमेव लक्षणादिकथनस्यावकाशात् । अथाप्युच्यते इति सत्यपदाभिप्रायः । किमुच्यते । तदाह संक्षिप्तेति । अधीते वेदे पुंसो जिज्ञासाः बह्व्य उत्पन्नास्सन्ति । तावज्जिज्ञासाव्याकुलस्तत्तत्र पौर्वापर्यमप्यजानानः वेदवाक्यपाठक्रमेण विचारणे प्रवृत्तिं मेने । तं प्रति गुरुरुपदिशति, 'अत्र वेदे मुख्यं प्रमेयमेतत् । एतन्निरूपण-प्रणाली काचित् शिक्ष्यते, तदधिगमे सर्वविघापातप्रतीतिनिवृत्तिस्ते भविष्यति' इति । अयमर्थः—नानाजिज्ञासाव्याकुलमतेः पुरुषस्य दृष्टिं धर्मविषये प्रवर्त्य तं संक्षिप्तदृष्टिं करोति गुरुः । तेन तस्य मतिरत्रावधानं

कुर्वती अन्यदन्यत् परित्यज्य शेषं वक्ष्यमाणं द्रष्टुं प्रवर्तेत । मीमांसामवधाय गृहीत्वा, शेषं स्वसन्देहस्थलमपि एतद्रीत्या पश्चात् दिदृक्षेतेति । एवमप्यर्थः-सर्वाध्यायप्रमेयोपि धर्म एवेति सर्वसंग्रहेण दृष्टचर्थमिदमिति । अस्य वाक्यस्यायमप्यर्थः--संक्षिप्तदृष्टेः अनारभ्यत्वशंकया दृष्टिसंक्षेपं प्राप्तस्य मतिः आरभ्यत्वसाधकन्य ये अवधानं कृत्वा विचारे प्रवर्तेतेति ॥५१॥

52. आप्तत्वं ग्रन्थकर्तुर्यदि विमतमिह स्वेन किं तत्फलोक्त्या
तन्निर्धारे ततस्तत्फलमनुमिमते निष्फला सेत्यसारम् ।
सन्देहेपि प्रवृत्तिं प्रजन(सफल)यितुमियं कल्पते विश्वदृष्टचा
निश्शङ्कानां निजेष्टं प्रमुखयति ततो धुक्षयेत् संजिघृक्षाम् ॥

प. एवं विषयाभिधानाक्षेपं परिहृत्य प्रयोजनाभिधानाक्षेपमपि परिहर्तुमनुवदति आप्तत्वमिति । अयमिह विकल्पप्रश्नोदकस्य—किमाप्तो वक्ता शिष्यस्य, उतानाप्तः? आप्तत्वे तावत्, आप्तवाक्यत्वादेव आचार्यवाक्यं सफलमिति शिष्यः स्वयमेवानुमिनोति फलम्; किमनया फलोक्त्या? अनाप्तत्वे पुनः, उक्तमपि फलं न विश्वसिति शिष्यः; किमनया फलोक्त्येति ॥ तदेतत् प्रतिक्षिपति–असारमिति । त्रिधा ह्यत्र प्रक्रिया--अनाप्तत्वनिश्चये प्रवृत्तिरेव नास्ति । न ह्यनाप्तत्वनिश्चये गुरूपसत्तिरेव संभवति । आप्तत्वानाप्तत्वसंदेहे पुनः तत्फलमपि संदिह्यते । संदिग्धमपि तत्फलम्, 'मा सन्दिह्यताम्; सर्वथापि सफलम्' इति सनिर्बन्धमेव गुरूक्त्या संधुक्ष्यते । संधुक्षणेन शिष्यस्य प्रवृत्तितारतम्यं जायते । विश्वदृष्टचेति लोकसंवादमाह । लोकेपि संदेहेन प्रवर्तमानाः पुरुषाः प्रवर्तकवचनेन पुनःपुनः संधुक्ष्यमाणाः प्रवृत्तितारतम्यं भजन्ते; लभन्ते च प्रायशः

फलमिति लोकसिद्धमेतत् । आप्तत्वनिश्चये पुनः वक्तुराप्तत्वात् सफलत्व-सामान्यमनुमिनोति । स्वाभिमतफलविशेषं तु वक्तृवाक्यादिति वक्तॄणां फलनिर्देशः सफल एवेत्यर्थः ॥ 52

स. नन्वस्तु विषयनिर्देश आदौ । फलनिर्देशो नापेक्षितः । वक्ताऽयमनाप्त इति निश्चये सहस्रकृत्वः फलसद्भाववचनेऽपि तत्राप्य-नाप्तत्वनिश्चयात् प्रवृत्तेरप्रसक्तेः । स्वेन किम् । जैमिनीयग्रन्थपठने फलमस्तीति अन्यो यदि ब्रूयादाप्तः, तदा गृह्यते । अयमनाप्त एव स्वोक्तेः फलं वक्ति चेत्, क आद्रियेत । तन्निर्धारे वक्तरि आप्तत्वनिश्चये सति तु-शिष्याः एतदुक्तेः फलमस्तीति स्वयमेवानुमिन्वन्ति । अतः सा फलोक्तिरादौ व्यर्था । समाधिं वक्तुमाह इत्यसारमिति । अनाप्तत्व-निश्चयवन्तं प्रति न वक्तव्यम् । तस्याश्रोतृत्वात् । आप्तत्वसंदेहवति इयं सफला । संदिहानस्य प्रवृत्तिः शिथिला लक्ष्यते । तां प्रकर्षेण जनयितुमियमुपयुज्यते । कुतः ? विश्वदृष्ट्या । लोके संदिहानानामी-दृशवाक्यश्रवणेन प्रवृत्तेर्दृश्यमानत्वात् । आप्तत्वनिश्चयवद्विषयेऽपि फलमाह निश्शंकानामिति । अपेक्षितस्य फलस्यावश्यम्भाविताया आदौ कीर्तनम् उपदिश्यमानार्थे संजिघृक्षाम् उपादानेच्छामभिवर्धये-दिति । विश्वदृष्ट्येत्यस्य उपर्यप्यन्वयः । विश्वेषां श्रोतॄणामेतद्गुरुस-विधेऽर्थश्रवणेन तृप्तानां दर्शनेन स्वयं निश्शंकानां निवृत्तशंकानामित्यर्थः॥ जिज्ञासाफलस्य निर्णयस्येतो ग्रन्थात् अवश्योत्पत्तिरित्येवंरूपफलकथनपरत्वं सूत्रस्येत्यभिप्राये एवं समाधानमुक्तम् । वेदप्रतिपाद्यमानो धर्म एव फलवान् वा न वेति संदिहानम्, वेदेऽनाप्तत्वसंदेहवन्तं प्रति सूत्रश्चेत्

तदाऽयमर्थः—**संदेहेऽपि** धर्मस्य धृतिहेतुत्वे संदेहे सत्यपि, वेद आप्त एव, अयं धर्म एवेत्युक्त्वा प्रवृत्तिं जनयितुमिदं सूत्रम् । **अपिना** अनाप्तत्वनिश्चयग्रहणम् । विपरीतबुद्धिकमप्याह्वयति, 'तवानाप्तत्वबुद्धिं वेदस्यातिशयप्रदर्शनेन वारयिष्यामि ; श्रूयताम्' इति । **विश्वदृष्टेत्य-**स्योपर्यन्वयादेवमप्यर्थः—"विफला विश्ववृत्तिर्नो न दुःखैकफलाऽपि वा" इति **न्यायकुसुमाञ्जल्युक्तरीत्या** विश्वमहाजनप्रवृत्तिदर्शनेन धर्मस्य धृतिजनकत्वे शंकारहितानामपि धृतिरूपफलजनकत्वोक्तिः धर्मानुष्ठानश्रद्धां संधुक्षयेदिति ॥ ५२ ॥

**53. सूत्रेऽस्मिन्नास्ति नीतिर्विषयफलकथामात्रमेवोपजीव्यं**
**यत् साम्नां वक्ष्यमाणं तदनुसरणतोऽधीतिरध्यायशेषः ।**
**इत्याहुः केचिदेतन्मृदुफलम् ; अपिंचाधर्मचिन्ताऽप्यकारो-**
**पश्लेषात् कल्पनीयेत्यपि परिजगृहुः क्लिष्टगत्यन्तरं तत् ॥**

प. एवमार्थं विषयप्रयोजनादिकथनरूपमर्थम् , शाब्दं मीमांसारम्भकर्तव्यतोपपादकन्यायं च प्रतिपादयति सूत्रमिति प्रतिपाद्य, केवलविषयाद्यनुकथनमेव सूत्रे, न पुनः मीमांसारम्भकर्तव्यतोपपादकन्यायोपवर्णनमिति केषांचिदाभासानां मतमनूद्य दूषयति— **सूत्र** इति । अध्ययनविध्यादिचिन्तामुखेन शास्त्रारम्भसंमर्थनन्यायप्रदर्शनं नास्ति ; केवलं विषयप्रयोजनकथनमेव । तर्ह्यध्ययनस्याक्षरराशिग्रहणद्वाराऽर्थज्ञानपर्यन्तत्वं कुत्र सिध्यति इति चेत्, यथा "साम्ना स्तुवीत" इत्यत्र साम्नामक्षराभिव्यक्तिद्वारेण स्तुतिसाधनत्वं निर्णीतम्, एवमध्ययनस्याप्यक्षरराशिग्रहणद्वारेणार्थज्ञानसाधनत्वं तत्रैव निर्णीयताम् । तदिदमाह—**यदिति** ।

अनुष्ठितात् कर्मणः फलसिद्धिः, तच्चानुष्ठानमर्थज्ञानादेव । तच्चार्थज्ञान-मक्षरराशिग्रहणमन्तरेण न भवतीति स्वाध्यायस्याध्ययनं प्रति शेषित्व-मुत्तरत्रैव सिध्यतीत्यर्थः । इदं त्वेकदेशिनां [1]मतम् । दूषयति एतदिति । शास्त्रारम्भवेळायां शास्त्रारम्भोपपादकन्यायकलापोपवर्णनं न्याय्यम्; न तु विषयादिमात्रकथनम् । अपिच—अथातोधर्मजिज्ञासेत्यत्र अधर्म-चिन्तनं च विधिविशेषेण अकारोपश्लेषानुपश्लेषाभ्यामभिधीयत इति केचिदूचुः ; तच्च मन्दम् ; धर्माधर्मयोस्तुल्योपादानस्यानर्हत्वात् । तेन सूत्रे धर्म एव प्राधान्येनोपादीयते, अधर्मः पुनः अवगोरणादिः अजहल्लक्षणया धर्मशब्देन बोध्यत इति भावः [[1]मीमांसकैकदेशिनाम् ] ॥

स. विषयफलयुतं सूत्रमाविश्चकारेति प्रागुक्तम् । अथ पद्यद्वयेन विषयस्य फलस्य च कथनमादौ न व्यर्थमिति शंका क्रमेण परिहृता । एवञ्चानारभ्यत्वशंकाप्रतिषेधिन्यायनिरूपणार्थप्रवृत्तमिदं सूत्रम् अर्थात् विषयफले दर्शयतीति मन्तव्यम् । तथाऽनुक्त्वा पार्थसारथिमिश्रः शास्त्रदीपिकायां प्रथममनारभ्यत्ववारणार्थमित्येव निरूप्य तदुक्तरीतौ पौनरुक्त्यदोषमालोच्य न्यायनिरूपकत्वरूपं पक्षमेव परित्यज्य अथवे-त्यारभ्य, साङ्गाम्नायाक्षराभिव्यक्तिरूपदृष्टार्थत्वमेव, नादृष्टार्थत्वमिति नवमे (9-2-2) वक्ष्यमाणतया तत एवाध्ययनस्य दृष्टार्थत्वस्य सिद्ध-त्वात् सूत्रमिदं शास्त्रप्रयोजनं धर्मज्ञानमिति कथयितुम्; न पुनराक्षेप-समाधानरूपाधिकरणरचना काचिदित्यवोचत् । तदनन्तरञ्च, "धर्म-ग्रहणञ्चोपलक्षणार्थम्, अधर्मस्यापि हानाय जिज्ञास्यत्वात्" इति प्राचीनोक्तरीतिं प्रदर्श्य, अथवेत्यारभ्य, "अकारप्रश्लेषेण वा सूत्र-

मधर्मजिज्ञासायामपि व्याख्येयमित्यभाणीत् । तदिदम् अथवाद्वयोक्तं निरस्यति सूत्रे इति । नास्ति नीतिरिति । अधिकरणरचना काचिन्नेत्यर्थः। अयमंश एवात्र निरस्यः ; अन्यदिष्टम् । अधीतिरध्यायशेष इति । स्वर्गार्थि स्वाध्यायाध्ययनं विधीयते इति पूर्वपक्षिमते, स्वर्गसाधनमध्ययनम् । 'तस्यांगं स्वाध्यायः । नवमे सामोच्चारणेन स्वाध्यायरूपऋगक्षराभिव्यक्तिं कुर्यादित्युक्त्या स्वाध्यायार्थमध्ययनं भवतीति स्वाध्ययोऽङ्गी, अध्ययनं तदङ्गम् । एवं नवमाधिकरणसिद्धत्वात् पूर्वपक्षो नोदेतीति । अस्मन्मतेपि अक्षरराशिग्रहणार्थमध्ययनमित्युक्तत्वात् स्वाध्याय एव शेषी, अंगमेवाध्ययनम् । एतन्मृदुफलमिति । अधिकरणवृन्दात्मकं शस्त्रमारभमाणः प्रारम्भ एव स्वादतरीतिं सूत्रकृत् तत्याजेति ह्यत्यन्तमनुचितम् । अधिकरणरचनाक्रमश्चास्माभिरधस्तात् दर्शित इति भावः । अथवान्तरनिरासमाह अपिचेति । अस्य खण्डनांशेऽन्वयः । तत् गत्यन्तरमपि च क्लिष्टम् । सकृत्प्रयुक्तः शब्दः सकृदेवार्थं गमयतीति रीत्या एकरूपपदविभाग एव युक्तः । अर्थद्वयविषयप्रतिज्ञाद्वये क्रियमाणे अधिकरणस्य, तथा शास्त्रस्य च एकार्थकत्वभंगश्च स्यात् । अतो धर्मपदमुपलक्षकमिति प्रथमपक्ष एव ज्यायान् । तथा केवलप्रयोजनवर्णनपक्षमुपेक्ष्याधिकरणरचनापक्ष एवाऽऽदर्तव्य इति ॥ ५३ ॥

54. वक्तुं(कर्तुं?) कश्चित् प्रबन्धं यदि विषयफले तस्य पूर्वं ब्रवीति
स्पष्टः संबन्धवर्गः किमिति पुनरिमं वर्णयेतेत्यवर्ण्यम् ।
तत्तत्सम्बन्धवर्गप्रमथनकथनोद्दण्डवैतण्डिकोक्ति-
व्यामुग्धच्छात्रषण्डभ्रमभिदुरगिरामानृशंस्यं न शास्यम् ॥

उक्तमिह विषयप्रयोजनाभिधानोपयोगसमुदगम्य संबन्धाभिधानं स्पष्टत्वादनुपजीव्यमिति कश्चित् वदति ; तदिदमनुवदति वक्तुमिति । तत् प्रतिक्षिपति–इतीति । विवृणोति–तत्तदिति । उद्दण्डाः खलु खण्डनवादिनो विशेषणविशेष्यभाव—विषयविषयिभाव–प्रयोजनप्रयोजनिभावादीन् शब्दसंबन्धान् खण्डयन्ति । तथा हि—विशेषण एव विशेषणत्वम् ; न विशेष्ये ; तथा विशेष्य एव विशेष्यत्वम् , न विशेषणे । अत उभयानुवर्ती एकः संबन्धः कोपलक्ष्यत इति ॥ अयं प्रलापो दूष्यदूषणभावादिष्वपि वक्तुं शक्यः । अतः, 'असदुक्तैर्दूषणैरेवंविधाः संबन्धा दूषिताः' इति तेषां प्रलापः प्रमुषित इति सन्तः परिहर(न्तु?)न्तु । संयोगादिसंबन्धेष्वेव एकस्योभयाश्रितत्वमित्यादिर्निर्बन्धः, न पुनः प्रमाणप्रमेयभावादिषु सर्ववादिसंमतेषु संबन्धान्तरेष्वपीति नीतिविदः । शब्दार्थस्तु—तत्तत्संबन्धवर्गं दूषणकथनोद्दण्डवैतण्डिकोक्तिभिर्व्यामुग्धानां छात्राणां भ्रमं निवारयितुं प्रवृत्तानां महर्षीणामानृशंस्यं सर्वार्थप्रकाशनकृपालुत्वम् अस्माभिः, न शाखम्—नियन्तु न शक्यत इत्यर्थः । कारुणकाः खल्वाचार्याः दुर्वादिनिर्वापितमर्थतत्त्वं शिष्याणां व्यक्तमेवोपदिशन्तीति हृदयम् ॥ 54

ननु प्रतिग्रन्थमादौ अनुबन्धिचतुष्टयं वक्तव्यमित्याहुः, विषयः प्रयोजनं संबन्धोऽधिकारी चेत्येवम् । तत्र विषयफले धर्मशब्देन दर्शिते । अथशब्दादर्थतोऽधिकारी च ज्ञातः । संबन्धः किं नोच्यते । अत्र (1-1-1-17-25) श्लोकवार्तिके समाधानमुक्तम्, 'शास्त्रं प्रयोजनश्चैव संबन्धस्याश्रयावुभौ ।' तयोर्ज्ञाने संबन्धोऽपि ज्ञायत एवेति । अथ तत्रैव, 'सिद्धिः श्रोतृप्रवृत्तीनां संबन्धकथनात् यतः । तस्मात् सर्वेषु

शास्त्रेषु संबन्धः पूर्वमुच्यते' इति पुनराक्षेपः कृतः । 'अथातो धर्मं व्याख्यास्यामः' इति वैशेषिकदर्शनमारभमाणः कणादः अथेत्यादौ प्रायुङ्क्त । तस्य शिष्यप्रश्नानन्तरमित्यर्थः । एवञ्च शिष्यापेक्षितार्थेन सह प्रतिपाद्यप्रतिपादकभावसंबन्धस्तस्योक्तो भवति । एवमिहापि वक्तव्यमिति तदाशयः । अयमाक्षेपो न युज्यत इति अत्र शंकाग्रन्थेन कथ्यते । "धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्" इति धर्मस्य विषयत्व-प्रयोजनत्वयोर्दर्शितयोः संबन्धोपि ज्ञात एव । एवं कणादसूत्रादावपि सुगमत्वात् पृथक् संबन्धवर्णनमनपेक्षितमिति । इदमत्र दर्शितं वक्तुमि-त्यादिना । वक्तुमित्यत्र कर्तुमिति पाठो वा ।

**संबन्धवर्ग** इति वर्गपदमनेकसंबन्धस्थितिज्ञप्तये । धर्मस्य विषयत्वात् तस्य शास्त्रस्य च प्रतिपाद्यप्रतिपादकभावः संबन्धः । अयमेक एव प्रायः सर्वत्रोच्यते । अन्येऽपि सन्त्येव । धर्मस्य प्रयोजनतया शास्त्रधर्मयोः फलफलिभावः । धर्मज्ञानस्य शास्त्रजन्यत्वात् ज्ञानमादाय फलफलिभावः इति केचित् । तदा प्रतिपाद्यप्रतिपादकभाव एवोक्तो भवेत् । अतो धर्मस्यैव फलत्वम् । शास्त्रात् ज्ञात्वा धर्मस्यानुष्ठानात् उत्पादनात् तदेव फलम् । कर्तव्यस्य कथं फलत्वमिति चेत्-स्वर्गादिफलजन-कत्वात् । तथा धर्मस्वर्गादिफलयोः धर्मानुष्ठानधर्मज्ञानयोः ज्ञानशास्त्रयोः शास्त्रतत्कर्त्रोरिति बहुलं जन्यजनकभावः । धर्मतज्ज्ञानयोश्च विषय-विषयिभावः, धर्मतद्वक्त्रोर्विचार्यविचारकभावः, धर्मतच्छ्रोत्रोः ज्ञेयज्ञातृ-भावः, वक्तृश्रोत्रोर्गुरुशिष्यभाव इत्येवं बहुत्वाभिप्रायेण **वर्गपदम्** । अस्य सर्वस्यार्थलभ्यत्वात् संबन्धकथनं कुत इति पृष्टं भवति ।

समाधातुमाह इत्यवर्ण्यमिति । हेतुमाह तत्तत्संबन्धेति । तत्तद्ग्रन्थाद्येकैकगतसंबन्धवर्गेत्यर्थः । कथनं-कथा-वादः । एकैक-ग्रन्थस्यापि उक्तविधाः सर्वे संबन्धा भवन्ति । एषां सद्भावकथनं युज्यते । लोके कस्मिंश्चित् वैतण्डिके किमपि वक्तुमुपक्रान्तवति सति कश्चि-दाह-त्वदुक्तेः प्रकृतविषयस्य च कः संबन्ध इति । तत्र स वैतण्डिकः सहसा प्रत्याह-संबन्धस्यैव दुर्घटत्वात् संबन्धप्रश्न एव न युक्तः । स हि संबन्धिनो-रुच्यते । यथा संयोगः । स द्विष्ठः । इमे तु संबन्धाः जन्यजनक-भावादयः न तथा । जन्यत्वं वा जनकत्वं वोभयं वा जन्यजनकभावः । तत्र किमपि द्विष्ठं न भवति । उभयमिति पक्षे तदुभयं मिलितं कुत्रापि नास्ति । अतः संबन्धं विनैव सर्वो व्यवहारः । अतो मद्वचने क आक्षेप इति । ईदृशवैतण्डिकोक्तिश्रवणेन व्यामोहभाजां भ्रमस्य निवारिका भवन्ति गिरः संबन्धान् दर्शयतां महताम् । अतस्तेषां यत् आनृशंस्यं कारुणिकत्वम्, न तत् आक्षेप्यम् । संबन्धसद्भाववर्णनं वैतण्डि-कनिरसनायेति भावः । सर्वसंबन्धापलापे खण्ड्यखण्डकभावसंबन्धस्या-प्यभावात् खण्डनग्रन्थस्य कुतोऽवतारः इति च प्रत्यस्तम् ॥

इदमत्राऽऽकूतम्-बौद्धाः फलाजनकमेव धर्मत्वेन फलजनकत्वेन दर्शयन्ति, एवञ्च धर्माप्रतिपादकमेव स्वशास्त्रं प्रतिपादकत्वेन कल्पयन्ति । केचित् वक्तारो विवक्षितमनुक्त्वा किमप्युक्त्वा कालातिक्रमेणोपरता भवन्ति । केचिदानाप्तकर्तृकमाप्तकर्तृकत्वेन प्रदर्श्य वञ्चयन्ति । केचित् संदेहास्पदमेव सर्वमुपनिबध्नन्ति । एतादृशरीतिदर्शिनां श्रोतॄणां श्रवणोत्साहजननाय ऋजुवादिना प्रतिपाद्यप्रतिपादकभावादिसंबन्ध

इहास्ति, न शंकनीयमिति परवैलक्षण्याय संबन्धकथनमपि युज्यत एवेति।

उक्तविधवैतण्डिकवादेऽन्तर्भूतमेव–धर्मः जिज्ञासाकाल एव ज्ञात इति कुतो 'जिज्ञास्यते। ज्ञातमपि न जिज्ञास्यम्, अज्ञातमपि न जिज्ञास्यम्। अतो जिज्ञासैव न भवतीत्यादिकम्।

आस्तामेतत्। अद्विष्ठानां कथं संबन्धत्वमिति प्रश्नस्य किमुत्तरमिति चेत्—अद्विष्ठानामेषां संबन्धत्वदर्शनात् एकानुयोगिकोऽन्यप्रतियोगिकः सर्वः संबन्धः। उभयनिष्ठत्वं न तत्र प्रयोजकमित्येवोत्तरम्।

एवं तर्हि जैमिनिः प्रतिपाद्यप्रतिपादकभावं संबन्धं नाचष्टेति स्यादिति चेत्–न; विषयं प्रदर्श्य अनन्तरसूत्रेण तल्लक्षणप्रमाणकथनादेव तस्यार्थिकत्वात् संदेहावसरस्याभावात् ॥ ५४ ॥

55. काम्यं कर्मैव धर्मः सुखजनकतया दुःखहेतुस्त्वधर्मो
धर्मोऽधर्मश्च न स्यादनुभयजनकं नित्यमित्याहुरेके।
मन्दं तत्प्रत्यवर्गेऽप्यनभिमतनिवृत्त्याद्यभीष्टार्थवत्त्वात्
धर्मत्वे दुर्निवारे पृथगभिलपनं गोबलीवर्दवत् स्यात् ॥

काम्यमिति। अत्र केचिच्चोदयन्ति—काम्यं तावत् सुखजनकत्वाद्धर्मः, निषिद्धश्च दुःखजनकत्वात् अधर्मः। तेन अकारोपश्लेषानुपश्लेषाभ्यामुभयोरुपादानं युक्तम्। नित्यं तु कर्म न सुखजनकम्, नापि दुःखजनकम्। अतः कथमस्मिन् सूत्रे तस्यापि चिन्तनीयत्वं प्रतिज्ञायते इति। तत् प्रतिक्षिपति–मन्दं तदिति। नित्येष्वपि करणे प्रत्यवायपरिहाररूपफलमभ्युपगम्यते। अन्यथाऽत्यन्तनिष्फलत्वे विद्वद्भिस्तदनुष्ठानाभावप्रसंगात्। तेनापि रूपेण सर्वत्र सफलत्वमेव। कथं तर्हि सर्वस्यापि

सफलत्वे 'काम्यान्नित्यस्य पृथगभिलापः स्यादित्याशंक्य परिहरति पृथगिति। यथा गोशब्देन वृषभस्याभिधानेऽपि पृथग्ग्रहणम्, गामानय, बलीवर्दं चेति, तद्वदत्रापि। नित्यस्यापि धृतिसाधनत्वे सत्यपि पृथगभिधानमवश्यकर्तव्यत्वादिविशेषोक्तिविवक्षयेति समाहितमेतत् ॥ 55

स. अधर्मविचारवत् नित्यकर्मविचारोऽपि धर्मविचारशब्दमुख्यार्थो न भवति, धर्मलक्षणे इष्टसाधनत्वप्रवेशात्; नित्यस्येष्टसाधनत्वाभावात्। तथासति काम्यत्वापत्तेः। अधर्मजिज्ञासेति पदच्छेद पक्षेऽपि नित्यं न गृह्यते, अनिष्टसाधनत्वरूपाधर्मत्वस्याप्यभावात्। न हि धर्मभिन्नत्वमधर्मत्वम् इति संबन्धसूचकद्वितीयसूत्रोपस्थितिमूलकम् आक्षेपमाह काम्यमिति पूर्वार्धेन। अनभिमतनिवृत्त्यादीति। अनभिमतं पापम्; तन्निवृत्तिः 'धर्मेण पापमपनुदति', 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्' इति वचनात् नित्यकर्मसाध्या। 'प्रायेणैव हि मीमांसा लोके लोकायतीकृता' इति लोकायतरीतिकमीमांसकाः केचिदुक्ताः। (1-1-1-10) 'भर्तृमित्रादयस्ते, नित्यस्य कर्मण इष्टं फलम् अनित्यस्य कर्मणः अनिष्टं फलञ्च नास्तीति तत्पक्षः' इति न्यायरत्नाकरे। प्राभाकराः प्रत्यवायपरिहारमेव नित्यस्थले मन्यन्ते। स आदिपदग्राह्यः। तत्परिहारो नाम प्रत्यवायानुत्पत्तिः। प्रत्यवायप्रागभावपरिरक्षणमिति यावत्। जातेष्ट्यादिसंबलिताधिकारनैमित्तिकस्थलेऽन्यदपि फलमस्ति। सूत्रे इष्टसाधनत्वमित्यत्र सर्वसाधारणः प्रयोज्यप्रयोजकभाव एव विवक्षितः। एवं तर्हि काम्यं नित्यमिति कथं विभाग इति चेत्—कामनाविषयनिरूपितहेतुत्वरूपकाम्यत्वसत्त्वेऽपि नित्यस्य पृथगुक्त्या काम्यपदं तद्व्यावृत्तविशेष-

परम्, गोबलीवर्दन्यायात्। तथाच काम्यत्वं कामनामात्रप्रयोज्यानुष्ठान-कत्वम्। नित्यं तु निमित्तप्रयुक्तानुष्ठानकम्। नित्यं नैमित्तिकमित्यत्रापि गोबलीवर्दन्यायात् नैमित्तिकपदम् अनियतनिमित्तककर्मपरम्। तत् राहु-परागस्नानादि। संध्योपसनादि नित्यं नियतनिमित्तकमिति भेदः ॥५५

**56. ज्ञानं सूत्रे विचारस्तदधिकरणतो निर्णयस्त्वर्थलभ्यः**
**चिन्तायां सम्प्रयोगो विधिपरिहरणात् रागसिद्धिं व्यनक्ति।**
**धर्मस्येत्यत्र षष्ठी प्रतिपदविहिता यद्यपि स्यात् तथाऽपि**
**प्रोक्ता कृद्योगजेयं समसनविषयः, शाबराकूतमन्यत् ॥**

ननु जिज्ञासेति ज्ञानेच्छाऽभिधीयते। किं तत् ज्ञानं विचारात्मकम् उत निर्णयात्मकमिति संशये, विचारात्मकमित्याह ज्ञानमिति। कथं तर्हि निर्णयसिद्धिरिति। तत्राह तदिति। तदधिकरणतः—तत्संबन्धात् निर्णयोऽप्यर्थलभ्यः—विचारस्य निर्णयान्तत्वात्। तर्हि सूत्रे ज्ञानमित्येव वक्तव्यम्, सम्प्रयोगः किमर्थ इत्याशंक्य स्वपक्षे सम्प्रयोगस्य साफल्यमाह–चिन्तायामिति। विचारस्य वैधत्वमाहुर्निरीश्वरमीमांसकाः। वयं तु रागप्राप्तत्वम्। तदेव सूत्रकारः सम्प्रयोगात् स्वयमेव व्यनक्तीत्यर्थः। तत्र समासार्थेऽनुपपत्तिमाशंक्याह–धर्मस्येति। यद्यपीयं षष्ठी प्रतिपद-विहिता, तथाप्यत्र समासः संघटते, कृद्योगा षष्ठी समस्यत इति प्रतिप्रस-वात्। प्रतिप्रसवो ह्यपवादापवादः। ननु शबरस्वामी "धर्माय जिज्ञासा" इति विगृहीतवान्। तच्चायुक्तम्; प्रकृतिविकृतिभावाभावात्। तादर्थ्य-समासे प्रकृतिविकृतिभावग्रहणं कर्तव्यमिति शाब्दिकाः। उक्तं च वार्तिक-कारैः, "प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्तं समस्यते। तादर्थ्ये यूपदार्वादौ

तेनास्मिन्न समासता" इति । अतः कथमेतत्? समाधत्ते शाबरेति । "धर्माय जिज्ञासा" इति न विग्रहवाक्यम् । धर्मस्य जिज्ञासेत्येव विग्रहः । अत एवोच्यते शबरस्वामिनाऽपि-"सा हि तस्य ज्ञातुमिच्छा" इति षष्ठीसमासः । तेन धर्मायेति निर्देशो धर्मस्य प्रयोजनत्वख्यापनाय । 56

स. धर्मजिज्ञासेत्यत्र धात्वर्थो ज्ञानं निर्णयः । तथाच धर्मनिर्णयरूपप्रयोजनमपि कण्ठोक्तम् । सन्प्रत्ययस्य विचारे लक्षणा । तेन द्वयोः संबन्धोऽपि सिद्ध्यति । किञ्च शाबरे धर्माय जिज्ञासेति चतुर्थीविग्रहः प्रादर्शि । अतोऽपि साध्यसाधनभावादिसंबन्धसिद्धिरिति मन्वानं प्रतिवक्ति ज्ञानमिति । ज्ञाधातोः निर्णयात्मकज्ञानं वा विचारात्मकज्ञानं वाऽर्थ इति विमर्शे निर्णयरूपफलेच्छानन्तरमेव विचाररूपोपायेच्छाभावात् निर्णयात्मकज्ञानग्रहणमिति स्यात् । तद् विहाय विचाररूपज्ञानपरत्वं युक्तम् । तस्यैव साक्षात् अतश्शब्दार्थकार्थत्वात् । आरभ्यत्वरूपप्रतिज्ञेयांशान्वयस्य तत्रैवोचितत्वात् । निर्णयेच्छायां सत्याम् महदुपदेशतोऽपि निर्णयसंभवेन विचार एव कर्तव्य इत्यस्य ज्ञानासंभवात् । विचारात्मकशास्त्रारम्भसमये विचारनिर्देशस्यैव युक्तत्वाच्च । निर्णयलाभस्तु विचारस्य तदर्थत्वात् स्वत एव भवति । तदधिकरणतः, विचारे पुरुषस्याधिकृतत्वे भवति निर्णयः । अतः प्रथमजन्यस्य विचारस्य ग्रहणम् । किञ्च निर्णयग्रहणे सन्प्रयोगवैयर्थ्यम् । विचारग्रहणे, 'विचारो न वैधः, किंतु रागप्राप्तः' इति अध्ययनविधिप्रमेयज्ञापनं प्रयोजनम् । यत्तु धर्मायेति चतुर्थीविषयकमुक्तमवतारिकायाम्, तत्राह धर्मस्येति । शेषषष्ठीग्रहणे संबन्धविशेषालाभात् कर्मषष्ठीग्रहणे प्रतिपद-

विहिततया समासायोगात् संबन्धविशेषलाभाय चतुर्थीसमास इति न; प्रकृतिविकारभाव एव तादर्थ्यचतुर्थ्याः अनुमतत्वात् अत्र चतुर्थीविग्रहायोगात्। प्रतिपदविहितत्वेपि, 'कृद्योगा षष्ठी समस्यते' इति प्रतिप्रसवसद्भावेन समासस्यानुशासनसंमतेः। तदियं षष्ठी कृद्योगजत्वात् समासविषय एव। शाबरे चतुर्थीनिर्देशस्तु धर्मस्य विषयत्ववत् प्रयोजनत्वमप्यस्तीति ज्ञापनाय। विचारे कृते निर्णये सति धर्मानुष्ठानात् तस्य प्रयोजनत्वम्। विषयत्वरूपकर्मत्वमेवार्थ इत्यत्रापि भवति शाबरं प्रमाणम्, "सा हि तस्य ज्ञातुमिच्छा" इत्युक्तेः॥ ५६॥

**57. जिज्ञासां निर्णिनीषां विदुरिह कतिचित् तत्र गम्यो विचारः**
**तस्यैवारम्भयोगादिह स तु भवतु ज्ञानमिच्छाधिरूढम्।**
**सामान्योक्तिर्विशेषे प्रकरणवशतो विन्दते स्वां प्रतिष्ठां**
**नो चेत् विश्रान्तिरस्याः कथमिह भवतां निर्णयाख्ये विशेषे॥**

प. अत्र जिज्ञासाशब्दे धातुना विचारोऽभिधीयत इति पक्षांगीकारेण पूर्वं सूत्रं व्याख्याय, "वेदानां(दार्थ ?) निर्णयोऽभिधीयते" इति पक्षान्तरांगीकारेण व्याचष्टे जिज्ञासामिति। ननु ज्ञानशब्देन यदि निर्णयोऽभिधीयते, कथं तद्विचारसिद्धिः ? विचार एव हि मीमांसा, सैव हि समारम्भणीयेति–तत्राह–तत्रेति। निर्णयस्य विचारसाध्यत्वात् गम्यते विचारः। एतस्मात् पक्षात् प्रागुक्तस्यैव ज्यायस्त्वमाह तस्येति। विचारस्यैव समारम्भणीयत्वात् इह सूत्रे स एव विचारः इच्छाधिरूढं ज्ञानमस्तु। विचार एव ह्यस्मिन् सूत्रे समारभ्यते, न पुनर्निर्णयः, तेन जिज्ञासापदे धातुवाच्यो विचार एव समुचित इति

प्रागुक्त एव पक्षो ज्यायानित्यर्थः ॥ ननु ज्ञानमिति सामान्येनोच्यते, न पुनः विचार इति। कथं विचारसिद्धिः ? तत्राह सामान्येति। यद्यपि ज्ञाधातुर्ज्ञानसामान्यमाह, तथाऽप्यर्थप्रकरणादिना विचाररूपं विशेष माहेति को विरोध इत्यर्थः। नो चेत्, त्वत्पक्षेऽपि जिज्ञासापदेन न निर्णिनीषारूपविशेषसिद्धिरित्याह-नोचेदिति । न हि त्वत्पक्षेऽपि ज्ञाधातुर्ज्ञानसामान्यमुक्त्वा निर्णयं चाचष्टे(ज्ञानसामान्यं मुक्त्वा निर्णयं व्याचष्टे ?) इति प्रतिबन्द्या परिहारः ॥ 57

स. श्लोकवार्तिके, "न चाप्यत्राथशब्देन शास्त्रसंबन्ध उच्यते। संबन्धं क्रिययोर्ह्येष ब्रूते शास्त्राच्च ते पृथक् (25)" इत्युक्तम्। तत्र न्यायरत्नाकरे, 'अध्ययन-जिज्ञासाक्रिययोः संबन्धम् अथ-शब्दो ब्रूते । न हि जिज्ञासाशब्दो मीमांसापर्यायः। श्रोतृक्रिया हि ज्ञानेच्छा जिज्ञासा, वक्तृक्रियात्मिका विचारात्मिका जिज्ञासा' इत्युक्तम्। तेन निर्णिनीषैव जिज्ञासेति ज्ञायते । ब्रह्मजिज्ञासेत्यत्राद्वैतिनोऽपि, निर्णयेच्छा जिज्ञासा, तया विचाराक्षेप इत्यवोचन्। तथा मा भूदित्याह जिज्ञासामिति। विचारस्य गम्यत्वे आवश्यके सति ज्ञाधातुवाच्यत्वं युक्तम्। तस्यापि ज्ञानरूपत्वात् एतत्सूत्रविधेयस्यारभ्यत्वस्य तत्रै-वान्वययोगात् इह सूत्रे इच्छामधिरूढं तदेव भवतु । सामान्य शब्दस्य विशेषे पर्यवसानमुभयेष्टम् । तत्र भ्रमसंशयादिज्ञानानि अग्राह्याणि । निर्णयः फलम्; विचार उपायः। प्रकरणवशादेव विशेषे पर्यवसानं शब्दानां सर्वेष्टमिति । पूर्वश्लोकव्याख्याने विनिगमकमुक्त-मत्रानुसंधेयम् ॥ ५७ ॥

58. रागप्राप्तो विचारो यदि वितथमिदं तद्विधानाय सूत्रं
मैवं विष्यन्तरत्वात् न हि तदकरणे पापमत्र प्रकाश्यम् ।
प्राप्ता रागात् प्रवृत्तिस्त्ववसदनवती पूर्वपक्षोक्तयुक्त्या
प्रत्यापद्येत सिद्धान्त्यभिहितनयतः सेष्टहेतुः प्रसिद्धा ॥

प. अत्र कश्चिच्चोदयति–रागेति । ननु यदि रागप्राप्तो विचारः, तदा 'धर्मजिज्ञासा कर्तव्या' इति विधानमेव न युज्यते । अस्य सूत्रस्य विधिपरत्वं भाष्यकारा एव व्याचख्युः—"इष्यमाणं ज्ञानमिह विधीयते" इति । तदेतत् प्रतिक्षिपति–मैवमिति । तत्र हेतुमाह विष्यन्तरत्वादिति । तदेव विवृणोति–न हीति । द्विविधं विधानम्–अकरणे प्रत्यवायसूचनेनात्यन्ताप्राप्तविषयमेकम् ; परं तु रागप्राप्तविषय एव प्रतिबन्धकव्यपनयनमात्रम् । तदेवात्र भाष्यकारैः विधीयत इत्यभिधीयते । न प्रागुक्तम् अत्यन्ताप्राप्तविषयतारूपं विधानम् । अतो विधिनिषेधस्य, विधीयत इति वचनस्य च विषयभेदात् न विरोधः । अत्र पूर्वपक्षयुक्तिः प्रतिबन्धिका, सिद्धान्तयुक्तिस्तदुत्तम्भनं करोतीति विवेको ज्ञातव्यः । इदं च सर्वाधिकरणसाधारणमित्यवगन्तव्यम् । मीमांसाप्रवृत्तिरिष्टहेतुरिति पूर्वमेव प्रसिद्धा । केवलं पूर्वपक्षयुक्त्याऽवसीदन्ती सिद्धान्तयुक्त्या पुनः प्रतिष्ठाप्यत इति भावः ॥ 58

स. ननु विचारस्यारम्भणीयत्वमेतत्सूत्रार्थ इति प्रागुक्तम् । तेन विचारो विधीयत इत्युक्तं भवति । तथैव भाष्यादिष्वप्युक्तम् । तत् कथमिदानीं रागप्राप्तत्वमुच्यते । एवं सति सूत्रं व्यर्थं स्यादिति शंकते रागेति । परिहरति मैवमिति । विष्यन्तरत्वात् अत्यन्ताप्राप्तविषय-

कविधिरूपापूर्वविधितोऽन्यविधिरूपत्वात् । अपूर्वविधित्वाभावं दर्शयति नहीति । यागहोमादेरिव विचारस्य स्वरूपेणाज्ञातत्वं नैवास्ति । किं च किं नित्यतया अत्यन्ताप्राप्तस्य विधानम्, काम्यतया वा । आद्ये विचाराकरणे प्रत्यवाय इह सूत्रे वक्तव्यो भवति । न हि हेतुपूर्वककिञ्चिदर्थसाधनप्रवृत्तस्य सूत्रस्य तादृशविधिपरत्वं भवति । तर्हि किमत्र प्रकाश्यमित्यत्राह प्राप्तेति । आपातप्रतीतिबलाधीननिर्णयविषयकरागमूलकात् विचारविषयकात् रागात् प्रवृत्तिर्जातैव, समावर्तनादिनोपरुद्धत्वादवसरो नास्तीति पूर्वपक्षयुक्त्या प्रतिबद्धा, स्नानस्मृतिर्न बाधिकेति सिद्धान्तिदर्शितयुक्त्या प्रत्यापद्येत । पुनरानीयते सैव **अवसन्नवती** प्राप्तह्रासा प्रवृत्तिः । तथा च प्रतिबन्धकविघटनमेवात्र विधानम्; न त्वप्रवृत्तप्रवर्तनम् । अत एव काम्यतया विधानरूपमप्रवृत्तप्रवर्तमपि न भवतीत्याह सेति । यागादेः स्वर्गादिसाधनत्वमिव विचारस्य निर्णयसाधनत्वं न हि वेदादवगन्तव्यम् । अतः सा मीमांसाप्रवृत्तिरिष्टहेतुत्वेन लोकतो ज्ञातैवेति न काम्यतयापि विधानमित्यर्थः ॥ ५८ ॥

59. सम्यङ्न्यायैः परीष्टिः करणमवगतं लोकतस्तत्त्वबोधे
नैवास्मिन् विध्यपेक्षा न यदि कथमसौ नेष्यते भोजनादौ ।
रागप्राप्ते हि तस्मिन् नियमयति विधिः प्राङ्मुखत्वादिमात्रं
तद्वन्मीमांसमाने स्वयमथ नियमाः केवलं सन्तु केचित् ॥

प. पूर्वोक्तामिष्टहेतुप्रसिद्धिं विवृण्वन् तदपेक्षितान् अर्थानाह सम्यगिति । पठितस्याक्षरराशेराकाङ्क्षादिपरामर्शादर्थविशेषप्रतिपत्तिरिति मुक्तकश्लोकादिपठनवेळायामेव लोकतः प्रसिद्धम् । अतोऽस्मिन्नर्थे न

विध्यपेक्षा । एतदनंगीकारे दोषमाह नेति । साध्यसाधनभावे प्रज्ञातेऽपि विध्यपेक्षाऽस्ति चेत्, भोजनस्यापि क्षुन्निवारणहेतुत्वे विध्यपेक्षा स्यादित्यर्थः । अस्तु तत्र नियमविधिः शुश्रूषायाः ; शिष्यस्याप्राप्ते विषयः कति दृश्यन्त इत्याशंक्य तत्रोत्तरमाह—तद्वदिति । यथा भोजने नियमविषयः प्राङ्मुखत्वादिविषयः, एवं "श्रोत्रियं ब्रह्मनिष्ठम्" इत्यादिविषयोऽपीति न मीमांसाश्रवणस्य विधिप्राप्तत्वसिद्धिरिति ॥ 59

मीमांसाया विचारविशेषरूपत्वात् विचारसामान्यस्य निर्णयहेतुतायाः लोकनिर्ज्ञातत्वात् भोजनादेरिव तद्विधानं न भवत्येवेति उक्तमेवार्थं विशदयन् विधिवचननिर्वाहरीतिमाह सम्यगिति । समीचीनन्यायसाध्यं परीक्षणं तत्त्वबोधसाधनमिति लोकत एव ज्ञातम् । न यदि, तत्रापि विधिर्भवति चेत्—भोजनादावपि स्यात् । ननु प्राङ्मुखो भुञ्जीत, आचान्तो भुञ्जीत, स्नातो भुञ्जीत, सुप्रक्षालितपाणिपादो भुञ्जीत, वाग्यतो भुञ्जीत, अकुत्सन् भुञ्जीत इति भोजनविधयोऽपि सन्त्येवेत्यत्राह रागेति । प्राङ्मुखत्वादेरिव अप्राङ्मुखत्वादेरपि कदाचित् संभवात् पक्षप्राप्ततन्निरसनाय प्राङ्मुखत्वादिनिमयविधिमात्रम् ; न तु भोजनविधिस्तत्रेति । तद्वत् मीमांसाविषयेऽपि शिष्यलक्षण—सत्तमगुरूपसदनक्रमादिकं नियमविषयतयेष्यते ; न तु विचारविधिः । इदं तु सूत्रं न तत्तन्नियमार्थं प्रवृत्तम् । तस्य स्मृतित एवावगम इत्याशयेनाह तद्वदिति ॥ ५९ ॥

60. कृत्ये रागं वितन्वन् विधिरपि पुरुषं प्रेरयेत् तत्र काम्ये रागाभावान्निवृत्तो न भवति फलभाक् तेन न प्रत्यवेयात् ।

नित्ये स्यादन्यथाऽत्र त्वविधिसमुदितात् रागतःसंप्रवृत्तौ
शुद्धां विन्देत बुद्धिं तदभवन इह प्रत्यवायस्त्वनुक्तः ॥

प. प्रवृत्तिं केवलरागादुपपाद्य विधिप्रवृत्तावपि रागस्योपयोगमाह--कृत्य इति। द्वयी प्रवृत्तिरुपलभ्यते, काचित् रागाधीना, यत्र विधिरेव न दृश्यते ; यत्र विधिरस्ति, तत्र विधिमूलात् रागादिति सर्वत्र रागस्योपयोगोऽस्त्येव। विधिमूलरागप्रवृत्तौ नित्यकाम्ययोः परस्परवैषम्यमाह--तत्रेति। काम्ये हि विधितः प्रवृत्तौ स्वाभीष्टफलं प्राप्नोति ; रागाभावादप्रवृत्तोऽपि प्रत्यवायं न प्राप्नुयात्। नित्ये पुनरन्यथा। विधिमूलात् रागात् प्रवृत्तः फलं न प्राप्नोति ; विध्युलंघनेनाप्रवृत्तः पुनः प्रत्यवाय प्राप्नुयादिति विभागः। केवलरागात् प्रवृत्तस्त्ववशिष्यते। तत्रापि वैषम्य माह-अत्रेति। प्रयोजनवदर्थापातप्रतीतिमूलशास्त्रारम्भप्रवृत्तोऽधिकारी शुद्धां बुद्धिं—संशयविपर्ययादिविधुरां तत्तदधिकरणसाध्यां यथावस्थितबुद्धिं लभते। न पुनः तदप्रवृत्तो नरकादिपतनरूपं प्रत्यवायं प्राप्नुयात्। नन्वभिधीयते प्रत्यवायोऽत्रापि-"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्" इति-इति चेत्-तत्राह-तदिति। नात्र नरकादिपतनात्मकपारलौकिकप्रत्यवायः। अभोजने भोजनजन्यदेहपुष्ट्याद्यभावानुवादवत् रागप्राप्तमीमांसाश्रवणाभावे केवलप्रत्यक्षसिद्धप्रज्ञाभिवृद्ध्यभावानुवादमात्रमिति न रागप्राप्तत्वविरोधो मीमांसाश्रवणस्येति पश्यन्तु सन्तः॥ 60

स. ननु विध्यधीनाऽपि रागाधीनैव ; प्रवृत्तिसामान्यं प्रति रागस्य, निवृत्तिसामान्ये द्वेषस्य च कारणत्वात्। जानाति इच्छति यतत इति

हि क्रमः । किञ्च 'विचारो रागप्राप्तः, न विध्यधीनः, न हि तदकरणे पापमत्र प्रकाश्यम्' इत्युक्तं न घटते ; काम्यकर्मसु अकरणे पापाभावेऽपि विध्यधीनप्रवृत्तिदर्शनादित्याशंकायाम् स्वाशयं विशदयति कृत्ये इति । सत्यं विधिरपि रागद्वारैव कार्ये प्रेरकः । अत्रायं विवेकः—यस्य लोके स्वत एव कार्ये इष्टसाधनत्वादि ज्ञातम्, तस्य विधिं विना रागादेव प्रवृत्तिः । यत्र तदभावः, तत्र विधिज्ञाने तत इष्टसाधनताज्ञानात् रागात् प्रवृत्तिः, यथा काम्ये । नित्यस्थले तु नेष्टसाधनत्वज्ञानाधीनो रागः, किं तु अकरणे प्रत्यवायो भवेदिति यत् अकरणप्रसञ्जनप्रसञ्जितप्रत्यवायकत्वज्ञानं—प्रत्यवायहेतुभूताकरणप्रतियोगिभूतमिदं कर्मेति ज्ञानम्, तदधीनो रागः । अथवा इष्टसाधनत्वमेव द्विविधम् । इष्टफलजनकत्वम्, इष्टो यः प्रत्यवायाभावः तत्परिरक्षकत्वञ्चेति । तत्र द्वितीयविषयकज्ञानं नित्यस्थले । यथा राजाचार्यादिनियोगे अकरणेऽनिष्टमिति भीत्यैव प्रवृत्तिः, तद्वत् । तत्र काम्ये रागाभावे कार्यस्याकरणे फलाभावमात्रम्, न पापम् ; **न प्रत्यवेयात्** न पापं प्राप्नुयात् । नित्ये तु अकरणे पापम् । करणे तु प्रत्यवायाभावमात्रम्, फलं नास्तीति केचित् । 'धर्मेण पापमपनुदति' इति वचनात् पापक्षयः फलमित्यन्ये । **अत्र तु** प्रकृते तु अध्ययनस्य नित्यत्वात् तदितिकर्तव्यताभूतस्य विचारस्यापि नित्यतयैव वैधत्वम्, न तु काम्यतयेति, अकरणे प्रत्यवायो वक्तव्यः । स वस्तुगत्या नास्तीति सिद्धं केवलरागप्राप्तत्वम् । अत एव, न हि पापमत्र प्रकाश्यमित्युक्तम् ।

**त्यवायस्त्वनुक्तः** । "अनधीयाना व्रात्या भवन्ति" इत्यध्ययनविषय

इव विचारविषये अकरणे प्रत्यवायः नोक्तः । करणे फलं तु लोकवत् शुद्धबुद्धिलाभरूपमिति तदपि न विधिज्ञाप्यमिति ॥ ६० ॥

61. **स्वेच्छाया हेतुतायामनियतिरिति चेत् तन्न दत्तोत्तरत्वात्**
**क्वाचित्क्या त्वप्रवृत्त्या ऋतुगमननयात् सन्ततिं सा न जह्यात् ।**
**वैधत्वस्थापनेऽपि ह्यलस-जड-विधित्यागिनो न प्रवृत्ताः**
**तस्मादास्माकदृष्ट्या स्वयमिह यतनं तत्क्षमे स्थापनीयम् ॥**

प. रागप्राप्तत्वपक्षे दोषान्तरमुपक्षिपति स्वेच्छाया इति । यदि विधितः प्रवृत्तिः, तदा मीमांसाश्रवणनैयत्यं स्यात् । रागतः प्रवृत्तौ तु मीमांसाश्रवणप्रवृत्तेरनियतिरिति । तदेतत् प्रतिक्षिपति तन्नेति । तत्र हेतुमाह-दत्तेति । यथा भोजनादौ रागतः प्रवृत्तेऽपि प्रवृत्तिनियम एव, मीमांसाश्रवणेऽपि तथैव । तदेव दृष्टान्तान्तरेण सर्वलोकसंप्रतिपन्नेन द्रढयति क्वाचित्क्येति । यथा ऋतुगमनस्य रागतः प्राप्तत्वेऽपि यावत्कल्पं तत्संततिरनुवर्तते, एवं मीमांसाश्रवणस्य रागप्राप्तत्वेऽपि यावत्कल्पमनुवृत्तिर्न निवर्तते । इमामेवानुवृत्तिं विधिप्राप्तत्वेऽपि अलसजडविधिपरित्यागिप्रतिबन्द्या द्रढयति-वैधत्वेति । विध्युलंघनं केषांचिदलसजडादीनां दृश्यत इति लोके शक्तानामधिकारिणां शास्त्रानुष्ठानपारम्परी किं न दरीदृश्यते ? एवं प्रतिबन्द्या स्वपक्षं स्थापयित्वा स्वपक्षमेव साधकयुक्तिबाहुल्यान्निगमयति-तस्मादिति । न्यायप्राचुर्यात् अस्मत्सिद्धान्तानुसारेण यतनस्य रागप्राप्तत्वकथनम् । तच्च कर्मानुष्ठानसमर्थेष्वधिकारिष्वेव । न हि विधिप्राप्तत्वेऽप्यनधिकारिणोऽशक्तादीन् विधिः प्रेरयतीति भावः ॥ 61 ।

स. ननु मीमांसायाः विध्यभावे अधीयानाः सर्वे मीमांसन्त इति न स्यात्; अतो विधिरेष्टव्य इति शंकामनूद्य निरस्यति **स्वेच्छाया** इति । **अनियतिः** मीमांसननियमो न स्यात् । **दृष्टोत्तरत्वात्** । आपातप्रतीतेः सर्वसाधारणत्वात्, गार्हस्थ्ये कर्मानुष्ठानाय निर्णयस्यावश्यकत्वात्, परोपदेशमात्रे तृप्त्यभावाच्च मीमांसनस्यावश्यम्भावित्वस्योक्तत्वात् । भोजनदृष्टान्तस्य प्रदर्शितत्वाच्च । अथापि केचित् न प्रवर्तेरन्नित्यत्राह **क्वाचित्कत्वेति** । **ऋत्विति** । यथा "ऋतौ भार्यामुपेयात्" इति विधिः षोडशदिनात्मकर्तुकालमध्यकर्तव्यस्त्रीसंगमविषयको नापूर्वविधिः, किंतु नियमविधिः, केषाञ्चिदसंगमस्यापि कदाचित् संभवात् तत्परिहारार्थः । न हि एवं सति केचिन्न प्रवर्तेरन् इति अनियमः स्यादिति भिया तस्यापूर्वविधित्वमिष्यते । तद्वदत्रापि न भवत्यपूर्वविधित्वम् । अतः **सा** मीमांसा, जिज्ञासा वा **संततिम्** अध्येतृपरम्परां संततत्वं वा सदातनत्वं नियतिं न जह्यात् । विचारविषयकापूर्वविध्यभावमात्रे ऋतुवाक्यं दृष्टान्तः । न त्वत्राध्ययनविधिवाक्ये ऋतुवाक्य इव विचारस्य नियमविधिः । ऋतुवाक्यवत् जिज्ञासासूत्रं नियमविधिः पूर्वपक्षयुक्त्यधीनाप्रवृत्तिकपुरुषप्रवर्तनार्थत्वादिति वाऽस्तु । तत्र नियमस्य शास्त्रीयत्वात् अतिक्रमे प्रत्यवायः स्यात् । नत्वत्र; सौत्रत्वात् । अपूर्वविधित्वेऽपि कतिपयाप्रवृत्तिर्दुस्त्यजेति प्रतिवन्दीमाह **वैधत्वेति** । **अलसाः** तन्द्रालवः, **जडाः** अनुष्ठानहेतुज्ञानरहिताः । **विधित्यागिनः** विध्युल्लङ्घिनः । तस्मात् **यतनं** मीमांसने प्रवृत्तिः तच्छक्तविषये एव विधिपक्षेऽपि वक्तव्यम् । तत् अस्मत्पक्षदृष्ट्या विधिं विना स्वयमेवेत्यस्तु ॥ ६१ ॥

**अध्येतुः स्वोपयुक्तावगतिरथ मनाकृतद्बुभुत्सुः प्रवत्स्य(त्स्यं?)न्**
**संरुद्धः पूर्वयुक्त्या परत इह पुनः प्रस्थितः प्राप्स्यतीति ।**
**ज्ञात्वोत्स्वप्नायिताद्वा किमपि नयविविक्त्या हि (ऽऽह?) तन्न**
**व्यतिस्ते; रागादेव प्रवृत्तिः प्रथममिह विधिप्रेरणाकाङ्क्षिणोऽपि ॥**

प. अत्र परपक्षवादिनः प्राभाकरमतानुसारिणः कस्यचित् क्वचित् स्वपक्षानुमतिवचनमस्तीत्यनूद्य, तत् पारमार्थिकं चेत्, ज्ञानपूर्वकत्वात् साध्वेव । उत्स्वप्नायितं चेत्–तदाऽपि । वचनमात्रमसाधु इत्युपहासमुखेन प्रतिक्षिपति **अध्येतुरिति** । अध्येतुः प्रथमं स्वोपयोगमतिर्भवति । अथ मनाक् एकदेशेन प्रवृत्तः पूर्वपक्षयुक्त्या निवृत्तस्सन् पुनः सिद्धान्तयुक्त्या सुस्थिरं प्रवृत्तो भवतीति, ज्ञात्वा उत्स्वप्नायिताद्वा भवनाथेन प्रोक्तम् । तन्न व्यतिस्ते—तत्त्वमेवेत्यर्थः । ततस्तस्य किं दूषणमुक्त-मित्यत्राह–**रागादिति** । विधिप्रेरणाकाङ्क्षिणोऽपि प्रथमं रागादेव प्रवृत्ति-रिति व्याहतिमावहतीति सर्वदूषणसार्वभौमी व्याहतिरेव दूषणमित्यर्थः॥62

स. अस्माभिरुच्यमानोऽयं रागप्राप्तत्वपक्षः मीमांसकस्य **नयविवेक-कर्तुर्भवनाथस्य** मनसि भातः स्थित इत्याह **अध्येतुरिति** । **अध्येतुः** ब्रह्मचारिणः अध्ययनकाल एव स्वापेक्षिता कर्मानुष्ठानार्थावगतिर्भवति । **अथ** अध्ययनसमाप्त्यनन्तरं तदर्थपूर्णबोधेच्छया स मनाक्प्रवृत्तिं करिष्यन् भवति । तदैव एतदधिकरणपूर्वपक्षियुक्तिवञ्चितः **संरुद्धः** प्रति-बद्धप्रवृत्तिकः **परतः** सिद्धान्तयुक्त्या पुनः प्रस्थितः बोधं प्राप्स्यति । इति तावत् भवनाथो नयविवेकग्रन्थत आह स्म । तदिदम्, वैधत्वं विचारस्य न भवति, रागतः प्राप्तत्वमेवेति बुद्धिबलात् ज्ञात्वा वाऽस्तु, **उत्स्वप्नायि-**

वाद्वा-यादृच्छिकं यथार्थस्वप्नभानाद्वा भवत्वित्यर्थः । **नयविविक्तयाही**-त्यत्र **नयविवेकयाहेति** वा **नयविविक्तयाऽऽहेति** वा पाठः । नयविविक्तयेति, नयविवेकेनेत्यर्थः । **आहेति** क्रियापदम् । **तन्नान्यतिस्ते**—न तत् अन्यथा भवतीत्यर्थः । भवतु तावत् इदम् । भवनाथेन कुतस्तथा वक्तव्यमासीदित्यत्र हेतुं दर्शयति **रागा**दिति । अध्ययनविधेर्विचारविधायकत्वपक्षे, विचारः कार्य इति निर्णयानन्तरं विचारे प्रवृत्तिर्विधितोऽस्तु । अध्ययनविधिरर्थज्ञानोद्देशेन विधत्ते, अन्यथा वेति योऽयं प्राथमिको विचारः, स रागादेव किल वक्तव्यः । अतो मनाक्प्रवृत्तिरेष्टव्येति । श्लोके **प्रवत्स्यन्** इति अशुद्धम्; वस निवास इत्यतः प्रवासरूपार्थस्यानन्वयात् । वृतुधातोर्लृटि विशेषविधिना शतरि **प्रवर्त्स्यन्** इति रूपं ग्राह्यम् । **प्रवर्त्स्यन्** प्रवर्तिष्यमाणः ॥ ६२ ॥

63. **व्याप्तत्वासन्नताद्यैर्ग्रहणमिह फलं तेन चाऽऽवृत्तिसिद्धिः**
**वैतुष्यन्यायतः स्यात् फलति च नियमोऽप्यन्यतस्तद्वदेव ।**
**वर्णैः सामर्थ्यवद्भिस्त्रिभिरिति विधयः स्वर्गकामादिनिष्ठाः**
**संप्राप्ता नैरपेक्ष्यं न वदितरसहा द्रव्यभाव्ये यथा हि ॥**

प. एवं मीमांसाश्रवणे रागप्रवृत्तिमुपपाद्य विधिप्रवृत्तेरक्षरग्रहणे विश्रान्तिमाह **व्याप्तत्वे**ति । अक्षरग्रहणं हि हुफडादिष्वपि व्याप्तं विधेयरूपाध्ययनप्रत्यासन्नं चेति परपक्षवादिनामपि संमतम् । अक्षरराशिग्रहस्य फलत्वेऽप्यपशूद्राधिकरणन्यायप्रवृत्तिसिद्धिरित्याह—**वर्णै**रिति । इत्थं ह्यपशूद्राधिकरणप्रवृत्तिमाहुस्तान्त्रिकाः-"स्वर्गकामो यजेत" इत्यादिविधयः किं स्वर्गकामनाविशिष्टसर्वाधिकाराः, किं वा स्वर्गकामनाविशिष्टत्रै

वर्णिकाधिकाराः इति विशये, स्वर्गकाम इति स्ववाक्ये स्वर्गकामनामात्रस्यै-वाधिकारिविशेषणत्वेनोपादानात् सर्वाधिकाराः । एवं सर्वाधिकारत्वे सिद्धे सति उत्तरकर्मानुष्ठानस्य अग्निविद्यासापेक्षत्वेऽपि त एव विषयः स्वसामर्थ्यादेवाग्निविद्ये शूद्रादीनामपि प्रयुञ्जते । तथा [च ?] यथाकथंचित् अग्न्युपार्जनं पुस्तकपाठादिसिद्धां विद्यामपि संपाद्य शूद्रादयोऽप्युत्तर कर्माण्यनुतिष्ठेयुरिति पूर्वः पक्षः। सिद्धान्तस्तु—यद्यपि शूद्रादीनामपि स्वर्गादिपुरुषार्थाकांक्षा विद्यते, तथाऽपि स्वर्गकामादिविषयस्त्रैवर्णिका-धिकाराधानसाध्याग्निनैव निराकांक्षाः, तद्वदेव त्रैवर्णिकाधिकारोपनयनाग-काध्ययनसाध्यविद्यासिद्ध्यैव निराकांक्षाः । ते स्वत्रैवर्णिकानामग्निविद्या-साधनोपायान्तरं न प्रयुञ्जते । तेन येन केनाप्युपायेनाग्न्युपार्जनं पुस्तक-पाठादिना विद्योपार्जनं चानुष्ठानानंगत्वात् परित्यज्यते । तेन यथा अध्ययनगृहीतस्वाध्यायसंपाद्यज्ञानस्य कर्मशेषत्वेऽपशूद्राधिकरण-न्यायसिद्धिः कुमारिलमते, एवमध्ययनगृहीतस्वाध्यायात्मकमन्त्रस्यैव कर्मानुष्ठाने करणमन्त्रत्वात् तन्मूलज्ञानस्यैव स्वोपकारकतया कर्मविधिभिः परिगृहीतत्वाच्च स्वमतेऽप्यपशूद्राधिकरणसिद्धिरिति संतोष्टव्यं समदर्शिभिः। वर्णैः ब्राह्मणादि वर्णैः सामर्थ्यवद्भिः अग्निविद्यासिद्धिमद्भिः । नैरपेक्ष्यं संप्राप्ताः— अधिकार्यभावे हि कर्मविधिभिरधिकार्यन्तर-कल्पनिरपेक्ष्या । अत्र पुनः सिद्धैरेवाधिकारिभिर्निरपेक्षाणां कर्मविधीनां शूद्रादिषु पुस्तकपाठादिप्रयोजकशक्तिर्नास्तीत्यर्थः ॥ 68

स. नन्वर्थज्ञानार्थमध्ययनमिति पक्षे अध्ययनविधिसिद्धार्थज्ञान-शालिपुरुषलाभात् क्रतुविधीनां कर्त्राकांक्षायाः शान्तत्वात् न शूद्रादेः

ज्ञानाक्षेपपूर्वकं कर्तृतया स्वीकारेण क्रतुविधिप्रवृत्तिरिति ब्रूमः। यदि शब्दराशिग्रहणार्थमेवाध्ययनम्, तर्हि शूद्रेऽप्यर्थज्ञानमाक्षिपेयुर्विधयः। लोके च शब्दप्रयोगस्यार्थज्ञानार्थत्वदर्शनात् शब्दग्रहणार्थत्वादर्शनाच्चार्थ-ज्ञानमेवोद्देश्यं युक्तमित्यत्र स्वपक्षे फलान्तरं दर्शयन् प्रत्याह व्यासत्वे-त्यादिना। लोके अर्थज्ञानार्थं शब्दप्रयोग इत्येतावता अर्थज्ञानस्य मुख्यफलत्वं न भवति, फलान्तरसाधनत्वादेवार्थज्ञानमुद्देश्यम्। एवं सति अर्थज्ञानमिति कस्मादुच्यते। फलान्तरापेक्षया आसन्नत्वात्। तर्हि आसन्नतरत्वात् शब्दग्रह एव फलं भवतु। किञ्च निरर्थकानां साम्नां हुम्फडादीनाञ्चाध्ययने अर्थज्ञानस्यानुद्देश्यत्वात् सर्वानु-गतमेवोद्देश्यं कल्पनीयम्। तच्च शब्दग्रहणमेव। तस्य च जपद्वारा अर्थज्ञानद्वारा चोपयोगः। अपि च धारणद्वाराऽर्थज्ञानं फलमिति भवद्भिरिदं फलत्वेन स्वीकार्यम्। अन्यथा सकृदध्ययनं कृत्वा अकृतधारण एव पुस्तकनिरीक्षणादिनाऽर्थज्ञानं संपाद्य यागादि कुर्यात्। अतोऽवश्यस्वीकार्यत्वादपि ग्रहणमेव फलमिति अवहननस्ये-वाध्यपनस्याऽऽवृत्तिः सिध्येत्। उपायान्तरेणापि शब्दग्रहणं भवितुमर्हतीति चेत्—अर्थज्ञानपक्ष इवाध्ययननियम इष्यताम्। नियमफलं तु यद्भवताम्, तदेवास्माकमपि। अध्ययनजनितार्थज्ञानैः पुरुषैरेव कर्मविधीनां कर्त्राकांक्षाशान्तिरिति हि प्रयोजनम्। अत्रापि अध्ययन-गृहीत-प्रयोगसमवेतमन्त्रवतां तदध्ययनजनितापातप्रतीत्यधीनविचार-प्रवृत्तिमूलकार्थनिर्णयवतामेव लाभे शूद्रादेरग्रहणमिति तुल्यम्। अतः स्वर्गकामाद्यधिकारिकाः क्रतुविधयः, इति—एवमध्ययनाधीन-

सामर्थ्यशालिवर्णत्रयलाभात् निरपेक्षाः न तदितरशूद्रादिग्राहिणो भवन्ति, यथा द्रव्यभाव्ये अग्न्यादिरूपद्रव्यभाव्यकाधानादिस्वतन्त्रकर्मविधौ, तथाऽध्ययनविधावपि। तत्र त्रैवर्णिकानामेवाधानविधानात् आधानसिद्धाग्निमत्पुरुषलाभात् न शूद्रादेरग्न्याक्षेपः क्रतुविधिकार्यः। तथाऽत्रापि। नन्वाहवनीयादेः अदृष्टविशिष्टाग्निरूपत्वात् त्रैवर्णिकानामेवाधाने कर्तृतया विधानात् अन्यकर्तृकाधानात् तददृष्टोत्पत्तौ मानाभावात् शूद्राणामाहवनीयादिर्दुर्लभः। अन्याग्नौ च न होमादिप्रसक्तिः। इह तु दृष्टरूपार्थज्ञानमात्रे कर्महेतौ अध्ययनादेर्दृष्टविधया हेतुत्वात् उपायान्तरसिद्धतत्तदर्थज्ञानः शूद्रोपि वैदिकं कुर्यादिति चेत्--इदं चोद्यमर्थज्ञानोद्देशेनाध्ययनविधावपि तुल्यम्। वेदप्रदर्शितकर्तृलाभत एव नैराकांक्ष्यात् क्रतुविधिभिः शूद्रस्याग्रहणमिति समाधानमप्युभयत्र तुल्यम्। अतोऽध्ययनरहितानां कर्मण्यनधिकार एव॥

64. [1]प्रत्यक्षादिप्रमाणैर्निजविषयमितौ विध्यपेक्षा ह्यसिद्धा
शब्दोऽप्यर्थः स्वमर्थं प्रकटयितुमलं मद्रदीपादिनीत्या।
शक्तिर्नार्थे स्वकीया यदि नियमविधिर्दृष्टहानेर्न सिध्येत्
वाक्ये विध्युक्त्यभावेऽप्यवगतिरुचिता ह्यर्थवाक्ये यथा हि॥

प. पूर्वश्लोके अध्ययनविधेरक्षरग्रहणपर्यन्तत्वं साक्षादुक्तम्। तर्ह्यर्थपरत्वे विनियोजकाभावात् तन्न स्यादिति अजानानस्य कस्यचिन्मन्दस्य चोद्यं शिष्यशिक्षार्थं प्रतिबन्ध्यादिभिः परिहरति प्रत्यक्षादीति। प्रमाणमात्रस्यार्थपरत्वे विध्यपेक्षोच्यते, किं वा प्रमाणविशेषस्य वाक्यस्य, यद्वा तद्विशेषस्य वेदवाक्यस्य इति विकल्पं हृदि निधाय प्रथमपक्षं

प्रतिक्षिपति-प्रत्यक्षादीति । प्रमाणस्य स्वार्थप्रावण्ये विध्यपेक्षत्वे प्रत्यक्षादेरप्यपेक्षा स्यात् ; न चैतदस्तीत्यर्थः । अस्तु प्रमाणस्य स्वार्थपरत्वम्, तथाऽप्यन्यपरत्वेन विधिना विनियोगात् तदेव स्वार्थपरत्वं बाध्यत इति चेत्—तदपि नेति दृष्टान्तपूर्वकं दर्शयति भद्रेति । न हि देवतायतनादिषु मंगळार्थं प्र(वि)ज्वलितः प्रदीपः स्वार्थं न प्रकाशयति । किं च शब्दशक्तिरर्थप्रकाशने स्वकीया न चेत्, अर्थप्रकाशनरूपदृष्टफलप्राप्तौ अधीतेनैव स्वाध्यायेनार्थज्ञानं संपादयेत् इति नियमविधिरपि लुप्येतेत्याह-शक्तिरिति । दृष्ट एव ह्यवघातसाध्ये फले वैतुष्यलक्षणे साधनमवघातो नियम्यते। एवमत्रापि दृष्ट एव ह्यर्थावबोधलक्षणफले स्वाध्यायाध्ययननियतिर्योयुज्यत इति । पूर्वं प्रत्यक्षादिप्रमाणान्तरप्रतिबन्दिरुक्ता ; इदानीं सजातीयत्वेन संमतवाक्यप्रतिबन्दिरुच्यते व्यर्थवाक्ये इति । अनेनावशिष्टमपि विकल्पद्वयं दत्तोत्तरम् । वाक्यमात्रस्वार्थविवक्षायां विधिसापेक्षत्वे लौकिकवाक्ये व्यभिचारः । वाक्यविशेषस्य वैदिकस्य विधिसापेक्षत्वे विशेषाभावादप्रयोजकत्वम् । न हि वैदिकस्य वाक्यस्य स्वार्थप्रावण्यं विधिसापेक्षमित्यत्र साधकमस्ति। बाधकं तु विद्यते जैमिनीयादिकं वचनम्, "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः", "सिद्धे शब्दार्थसंबन्धे" इत्यादिकम् । वेदशब्दोऽपि "स्वतो वेदयति" इति व्युत्पाद्यते वैदिकैः [[1]इदं प्रत्यक्षेत्यादि श्लोकत्रयं व्याख्याकोशमात्रस्थमित्याहुः॥] 64

स. ननु यदुद्देशेन यद्विधीयते, तस्य तत एव सिद्धिः । न हि स्वर्गादिरग्निहोत्रादि विना सुलभः । अतोऽर्थज्ञानलाभः कथमित्यत्राह प्रत्यक्षेति । अर्थज्ञानं प्रति प्रत्यक्षादीनि प्रमाणानि त्रीणि करणानि ।

इन्द्रियानुमानयोर्विध्यभावेऽप्यर्थज्ञापकत्वात्। शब्दस्याप्यर्थज्ञापकत्वमनुभवसिद्धञ्च । नन्वथापि अन्यार्थं विनियुक्ते शब्दे तदन्यफलजनकत्वं कथमिति चेत्——तत्राह शब्द इति। यस्योपायस्य यत् फलं विधिमूलमेव ज्ञेयम्, स उपायोऽन्यत्र विनियुक्तः फलमन्यत्र जनयेत्। यथा स्वर्गाद्यर्थो दर्शादिप्रयोगः पुत्रादिकम्। विधिनिरपेक्षं स्वाभाविकफलं तु न हीयते, यथा विधिवलात् मंगलार्थमारोपितोपि दीपः दाहप्रकाशादिकमपि जनयत्येव। किञ्च शब्दो नादृष्टद्वाराऽर्थज्ञानजनकः; किं तु स्वाभाविकशक्तिवलात्। अत एवाध्ययनविधिर्नियमविधिः, न तु यागादिविधिरिवापूर्वविधिः। दृष्टफलकस्थल एवोपायान्तरसंभावनया नियमविधित्वस्वीकारात्। अतोऽर्थज्ञानं न विध्यायत्तं फलम्। दृष्टफलकोपायात् तत्फलजननं विध्यधीनं यथा न भवति, तथा 'न श्रोतव्यम्', इति निषेधनिवार्यमपि न भवतीत्याह व्यर्थवाक्ये इति। द्व्यर्थवाक्य इति वा पाठः ॥ ६४ ॥

65. स्वर्गे वाऽऽचार्यके वा फल इह कथिते जायते स्वार्थबुद्धिः
न ह्यन्यत्रोपयोगे विधिवचनवलात् वार्यते शब्दशक्तिः।
बाधो हेतोश्च दोषो न भवति निगमे मानताऽन्यानपेक्षा
तस्मान्नाम्नायभागे क्वचिदपि घटते पूर्वपक्ष्युक्तक्लृप्तिः ॥

प. अत्र केचित्——स्वाध्यायाध्ययनविधिवाक्यस्य आचार्यकस्वर्गाद्यर्थपरत्वेन वेदाध्ययनविधिपरत्वात् अधीतस्य वेदस्यार्थपरत्वाभावादनारम्भणीया मीमांसेति पूर्वपक्षमाशंक्य परिहरन्ति तन्नेत्याह। स्वर्ग इति। अत्र पूर्वपक्षोत्प्रेक्षैव फल्गुत्वादकल्प्येति हृदयम्। तदेव ह्युच्यते। स्वर्गे वा

आचार्यके वा मतभेदेन स्वाध्यायविधिफले परिकल्पिते स्वशक्त्या स्वार्थ-बुद्धिं स्वाध्यायः कुर्यादेव । एतदेवोपपादयति–न हीति । विधिनाऽन्यत्र विनियोगोऽस्तीति शब्दस्य स्वार्थप्रतिपादनशक्तिर्न निवार्यते । अन्यथा स्वाध्यायाध्ययनविधेरपि स्वाध्यायान्तर्गतत्वेन विनियुक्तत्वादर्थपरत्वा-भावेन नैरर्थक्यमेव स्यात् । तथाचाध्ययनमेव न निष्पद्येत । क पुनरधीतो वेदः, कस्य वा नैरर्थक्यमाशंक्येतेति सर्वोपप्लवः । किंच कर्मसु विनियुक्तस्य मन्त्रस्यार्थप्रकाशकत्वाभावान्मन्त्रत्वमेव हीयेत । अर्थ-प्रकाशको हि मन्त्र उच्यते । एवमर्थवादवाक्यस्य जपादिषु विनियुक्त-स्यार्थप्रकाशनाभावे कथं प्ररोचकत्वम् ? एवंच सति अप्रामाण्यादेव वेदानामर्थाविवक्षेति भवति वाच्यम् । तदपि वक्तुं न शक्यते ; कारणदोष-बाधकप्रत्यययोरभावादित्याह—बाध इति । मानताऽन्यानपेक्षा । स्वतःप्रामाण्यन्यायसिद्धत्वादित्यर्थः । तेनैव पूर्वपक्षकुल सिरपष्टुतरेति निगमयति तस्मादिति ॥ 65

स. एतदारभ्य श्लोकत्रयं मूलकोशेष्वविद्यमानं व्याख्याकोशमा-त्रस्थमित्याहुः । एवमर्थबोधनस्वभावस्य सद्भावादेव भाट्टैः प्राभाकरैश्च पूर्वपक्षे स्वाध्यायस्य निरर्थकत्वमुक्तमनुपपन्नमित्याह स्वर्ग इति । स्वर्गोद्देशेनाध्ययनविधिर्भाट्टरचनायां पूर्वपक्षे, आचार्यकोद्देशेन प्राभा-कररचनायाम् । नहीति । अनुभूयमानस्वार्थबोधनशक्तेरपलापायोगात् । अत एव वेदो निरर्थकः अन्योद्देशेन विनियुक्तत्वादित्यनुमानं पक्षे साध्यबाधात् बाधितहेत्वाभासः । दोषान्तरमाह न भवति निगमे मानताऽन्यानपेक्षेति । वेदस्यार्थबोधकत्वं प्रति अन्योद्देश्यकविध्यभाव-

सापेक्षत्वस्वीकारे विधिसत्त्वेऽपि विध्यभावभ्रान्तौ ज्ञानोत्पत्तेरेष्टव्यत्वात् विध्यभावो हेतुर्न भवति। अतो विधिज्ञानाभावः कारणमिति वक्तव्यम्। एवमन्यसापेक्षत्वे अन्यानपेक्षमानत्वं कथम्। विधिज्ञान-कालेपि वाक्येभ्यो बोधस्य जायमानतया जातस्याप्रमात्वं स्यात्। किञ्च स्वाध्यायोऽध्येतव्य इति विधिज्ञानात् परम् अध्ययनविधेरर्थबोधकत्वं यथा न भवति, तथा यागादिविधेरप्यर्थबोधकत्वं न भवति। तदाह तस्मादिति। ननु अविवक्षितार्थकत्वमेव साधयामः, न त्वर्थबोधन-शक्त्यभावरूपनिरर्थकत्वमिति चेत्—अत्राप्युत्तरम्। हेतुरत्राप्रयोजक इति द्वितीयपादार्थः। अथ च अध्ययनवाक्यमपि स्वर्गाद्युद्देशेन भवत्पक्षे गृहीतमेव। तत्र विवक्षितार्थकत्वस्य त्वदिष्टत्वात् बाधदोष एव। न चाध्ययनविध्यतिरिक्तवाक्यमात्रे अविवक्षितार्थत्वं साध्यम्; तथा सति अध्ययनविधिवाक्ये व्यभिचारात्। शेषं पूर्ववत्॥ ६५॥

66. स्वाध्यायप्राप्तये ह्यध्ययनमभिहितं पावकाधानसाम्यात्
 व्रीह्यादिप्रोक्षणादिः स्वकृतिषु गदिता संस्कृतिर्वादिमुख्यैः।
 सिद्धः संस्कार्यभावो निजनिगमगिरां भाविकार्योपयोगात्
 दृष्टान्यार्थो विभक्तेर्विपरिणतिवशात् सक्तुहोमस्त्वगत्या॥

प. एवमक्षरराशिग्रहणफलत्वमुपपादितं दृष्टान्तेनापि प्रदर्श्य स्वपरसिद्धान्तसम्मतं संस्कारविधित्वमप्युपपादयितुमुपक्रमते स्वाध्या-येति। "स्वाध्यायोऽध्येतव्यः" इति विधिरुपपादितप्रकारेण स्वाध्याय-प्राप्तिमात्रं फलमाचष्टे। "अध्येतव्यः" इति कर्मणि विहित तव्यप्रत्यय-श्रवणात्। कर्मत्वञ्च, "कर्तुरीप्सिततमं कर्म" इति फलरूपत्वात् स्वाध्याय-

शब्दस्याक्षरराशिमात्रवाचकत्वात्, अर्थान्तरप्रकाशने जघन्यवृत्तित्वाच्चेति। अत्रानुगुणं दृष्टांतमाह–पावकेति। यथा "अग्नीनादधीत" इत्याधान-विधिरग्निसिद्धिमेवाव्यवहितामाचष्टे, एवमत्रापि। अनयैव कर्मत्वोक्त्या स्वयमुपनिपतद् संस्कारविधित्वमपि सर्वैर्दुस्त्यजमित्याह–संस्कृतिरिति। 'व्रीहीनवहन्ति", "व्रीहीन् प्रोक्षति" इत्यादिषु कर्मत्वेनप्रतिपन्नव्रीह्या-दिषु संस्कारविधित्वमेवाश्रीयते सर्वैर्वादिभिः। ननु संस्कारशब्दस्य प्रवृत्ति-निमित्तं किमिति परिचोदनामाशंक्य तत्प्रवृत्तिनिमित्तं लोकानुसारेणात्रापि प्रकटयति सिद्ध इति। "संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्" इति भाष्यकाराः प्राहुः। एवं सामान्यतः संस्कारे सिद्धे दृष्टोपयोग-स्थलमेतत्, अथवाऽदृष्टोपयोगस्थलमिति ज्ञातव्यमवशिष्यते। तथा किं भूतोपयोगिस्थलम्, किं वा भाव्युपयोगिस्थलमिति। यथायोगं तत् स्वयमेव चिन्तनीयम्। अवघातादिषु दृष्टोपयोगः, प्रोक्षणादिष्वदृष्टोपयोगः। परिधिप्रस्तरप्रहरणादिषु भूतोपयोगः, अवघातप्रोक्षणादिषु भाव्युयोगः। इह त्वक्षरग्रहणे भाव्युपयोग एव संभवादाश्रीयते, यथाऽऽधानादिष्वित्यव-धातव्यम्। अत एव, "सक्तून् जुहोति" इत्यादिषु कर्मत्वबुद्धेर्व्यभि-चारप्रदर्शनं निरस्तम्। सक्तुप्रभृतीनां भूतभाव्युपयोगाभावेन कर्मत्वानर्ह-त्वात् विभक्तिविपरिणामेन 'सक्तुभिर्होमादिकं संपादयेत्' इति विधिराश्रीयत इति। पूर्वमक्षरराशिग्रहणपर्यन्तत्वमुपपादितम्; इदानीं संस्कारविधित्वमिति न पौनरुक्त्यम्॥ 66

स. अस्तु पूर्वपक्षे किमपि। सिद्धान्तेऽपि तैर्भाट्टादिभिर्यदुक्तम् स्वाध्यायं विहायाध्ययनस्यान्यार्थत्वम्, तदयुक्तमित्याह स्वाध्यायेति। स्वाध्यायो-

ऽध्येतव्य इत्यत्र तव्यप्रत्ययबलात् स्वाध्यायस्य कर्मत्वावगमात् अग्नीना-दधीतेत्यात्राधानस्य कर्मभूतपावकपदवाच्याग्निसंस्कारकत्ववत् अध्ययनस्य स्वाध्यायसंस्कारकत्वमेव युक्तम्। एवं व्रीहीन् प्रोक्षति, प्रोक्षिताभ्या-मुलूखलमुसलाभ्यामवहन्ति इति व्रीहिमुसलादिप्रोक्षणमपि कर्मसंस्कार-कमिष्टम्। आदिना अभिमन्त्रणादिग्रहणम्। **वादिमुख्यैः** वादि-श्रेष्ठैः। एवं दृष्टरूपसंस्कारादर्शनेऽपि द्रव्यसंस्कारकत्वांगीकारे आप्तिरूपदृष्टफलके अध्ययने स्वाध्यायसंस्कारकत्वं कथं नेष्यते। ननु संस्कृतस्योत्तरत्र विनियोगोऽपेक्षितः। सत्यम्। अत्रापि स्वाध्यायस्य जपे अर्थबोधकत्वादौ चोपयोगोऽस्त्येव। धारणाविरहे अर्थपरिशीलना-संभवात्। न हि श्रुतेः पुस्तकपाठोऽस्ति। ननु तर्हि सक्तून् जुहोतीत्यत्र सक्तुभिर्जुहोतीति तृतीयाश्रयणं कुत इति चेत्—तत्र होमेन सक्तूनां नाशात् तत्संस्कारकत्वायोगात् कर्मत्वेन दृष्टं विहायातिरिक्तकिञ्चिदर्थत्व-कल्पनमगत्या विभक्तिविपरणतिवशात्। विपरणतिरियमनुमता, "द्वितीया च होश्छन्दसि" इति। ननु सर्वत्र यागे प्रक्षेपोऽङ्गं द्रव्यसंस्कार-कमिष्टम्। प्रक्षेपश्च होम एवेति कथं सक्तुहोमे तथा नेति चेत्—न; तत्र प्रक्षेपस्य प्रतिपत्तित्वात् भूतोपयोगसंस्कारकत्वात्। पूर्वोपयुक्ते होमः संस्कारकः। सक्तवश्च नोपयुक्ताः, न चोपयोक्ष्यन्त इति॥ नव्यमीमांसकास्तु स्वाध्यायस्य श्रुतमुद्देश्यत्वमुपेक्षितुमपारयन्तः, अर्थज्ञान-साधनीभूतस्वाध्यायोद्देशेनेत्याहुः। तत् अर्थज्ञानस्यापि साक्षात् फलत्वा-भावात्, परम्परया फलत्वस्य स्वाध्याय एव संभवाच्चोपेक्षणीयम्॥६६॥

67. दृष्टार्था संस्क्रियेयं न भवति घटते ह्यन्यथाऽप्यत्र दृष्टं
नादृष्टार्थाऽपि वैधप्रकरणविरहे न ह्यसौ स्याद् तदर्था ।
तस्मात् स्वाध्यायसाध्याध्ययनविधिरसौ सक्तुहोमादिवत् स्यात्
न स्यादुक्तोत्तरत्वान्न कथमितरथाधानमर्थ्यं(मार्थं?)न योज्यम् ॥

प. उक्तमेवार्थं विकल्प्य दूषयित्वा समाधत्ते दृष्टार्थेति । अयमत्र विकल्पः—अध्ययनसंस्कृतिः किं दृष्टार्था, उतादृष्टार्था । नाद्यः—दृष्टस्याक्षरग्रहणरूपफलस्य पुस्तकपाठादिना सिद्धेः । न द्वितीयः ; व्रीह्यादिवत् क्रतुप्रकरणविहितत्वाभावादिति । तेनोपयोगाभावान्न संस्कार्यत्वसिद्धिः । अतः "सक्तून् जुहोति" इत्यादिवत् अत्राप्युपयोगाभावात् 'स्वाध्यायेनाध्ययनं संपादयेत्' इति विपरिणामेन योजनीयमिति । अत्राह–नस्यादिति । हेतुमाह–उक्तोत्तरत्वादिति । वैतुष्यस्य नखविदळन--प्रस्थपेषणादिसाध्यत्वेऽपि नियमादृष्टानुविद्धवैतुष्यस्यावघातेनैव साध्यत्वादवघातादिषु यथा दृष्टफलत्वमाश्रीयते तान्त्रिकैः, एवमत्रापि नियमादृष्टानुविद्धाक्षरराशिग्रहणस्याध्ययनेनैव साध्यत्वात् दृष्टफलत्वमाश्रीयताम् । अथापि कथमक्रतुप्रकरणपठिते नियमानुविद्धत्वमित्येतावदेव शिष्यते ; तत्राह–न कथमिति । एवमनंगीकारे आधानेऽप्यदृष्टानुविद्धाग्निसिद्धिफलकत्वं योजयितुं न शक्यत इत्यर्थः । उत्तरकर्मानुष्ठानोपकारकाग्निसिद्धिफलकत्वेन संमताधाने यथा तान्त्रिकैः फलवत्त्वं योज्यते, एवमुत्तरकर्मानुष्ठानोपकारकाक्षरराशिग्रहणफलकाध्ययनेऽपि फलवत्त्वमभिधीयतामिति । अत्रांगत्वोपकारकत्वादिविभाग-

चिन्तनमाधानादिवत् स्वकर्मैव चिंतनीयम् । अनंगभूतमपि नित्यकर्मा-
नुष्ठानादिकमुत्तरकर्मानुष्ठानाधिकारापादकमिति हि तत्र तत्र चिन्त्यते ॥

स. सक्तुहोमन्याय एवात्र युक्त इति शंकामुपपाद्य निरस्यति दृष्टार्थेति । अध्ययनविधेः संस्कारविधित्वे स संस्कारो दृष्टो वा स्यात्, अदृष्टो वा । नाद्यः, स्वाध्यायग्रहणादिरूपस्य दृष्टस्याध्ययनं विना उपायान्तरेणापि संभवात् विधिवैयर्थ्यात् । अदृष्टश्चेत् तस्य कुत्रोपयोगः । प्रोक्षणादिकं दर्शपूर्णमासादियागप्रकरणमध्यनिविष्टवाक्य विहितमिति तज्जन्यादृष्टस्य यागे उपयोगः । एतददृष्टाभावे च यागवैगुण्यमिति तत्सा-फल्यम् । स्वाध्यायोऽध्येतव्य इति वाक्यं त्वनारभ्याधीतम् । जुह्वादिवत् स्वाध्यायस्याव्यभिचरितः क्रतुसंबन्धोऽपि नास्ति । अतः कार्यान्तरे स्वाध्यायविनियोजकवाक्यस्य कस्यचिदेतत्प्रकरणे अदर्शनादयमदृष्ट-संस्कारो निष्फलः । एतेन दृष्टसंस्कारपक्षे अध्ययनेनैव स्वाध्यायः प्राप्य इति नियमादृष्टकल्पनाऽपि निरस्ता । तस्योपर्यनुपयोगात् । अतः स्वाध्यायविशिष्टाध्ययनं सक्तुहोमवत् स्वतन्त्रमिति स्वर्गार्थत्वशंका युक्तेति पादत्रयार्थः । **स्वाध्यायसाध्येति** । अध्ययनेन स्वर्गादि फलं भावयेत्, अध्ययनं स्वाध्यायेन साधयेदिति वाक्यार्थवर्णनात् अध्ययनं प्रति स्वाध्यायः करणं साधकमिति । निरस्यति **न स्यादिति** । **उक्तोत्तरत्वात्** पावकाधानसाम्यादित्युक्तत्वात् । अग्नीनादधीतेत्याधानवाक्यमपि अनारभ्याधीतमेव । तत्राग्निसंस्कारकत्वमाधानस्येष्टम् । न हि तत्रास्य नैष्फल्यम् । तद्वदत्राप्यस्तु । अत्राध्ययनं दृष्टार्थमेव । उपायान्तर-सत्त्वेपि अध्ययननियमे तात्पर्यम् । नियमादृष्टस्य आधानजन्या-

दृष्टस्यैवोपयोगः कल्प्य इत्यर्थः । अन्वयार्थस्तु—न स्यादिति खण्डनम् । उक्तोत्तरत्वान्न कथमिति वाक्यान्तरम् । कथं संस्कारकर्म न भवेदित्यर्थः। इतरथेत्यादि वाक्यान्तरम् । अर्थ्यमिस्य अर्थादनपेतमित्यर्थः । आर्थमिति वा पाठः । आधानमर्थकर्मतया कथं न योज्यम् । अर्थकर्मैव स्यात्, न तु संस्कारकत्वरूपगुणकर्मत्वं तत्रापीत्यर्थः । ननु आहवनीयाद्यग्नीनां यागहोमयोरेवोपयोगात् अव्यभिचरितक्रतुसंवन्धसत्त्वात् आधानजन्यस्यादृष्टस्य न नैष्फल्यम् । इयांस्तु विशेषः—प्रोक्षणादीनां प्राकरणिकत्वात् यागाङ्गत्वमप्यस्ति, आधानस्यानारभ्याधीतत्वात् न यागाङ्गतेति । अदृष्टोपयोगस्त्वविशिष्टः । तद्वदत्राध्ययनस्य साक्षाद्दृष्टसंस्कारत्वस्वीकारे वा नियमादृष्टार्थत्वस्वीकारे वा क्व क्व उपयोगः, स्वाध्यायस्याध्यापनद्रव्यार्जनादिलौकिकोपयोगस्यापि सत्त्वेनाव्यभिचरितक्रतुसंवन्धाभावादिति चेत्—उच्यते । स्वाध्यायस्य दृष्टादृष्टोभयार्थत्वे तत्र दृष्टार्थांशे अध्ययनविधिलभ्यस्यादृष्टस्यानुपयोगात् परिशेषात् स्वरूपसाध्यजपादि-अर्थज्ञानसाध्ययागादिकर्मस्वदृष्टार्थेष्वेवोपयोगः क्रियताम् । न च यदाहवनीये जुहोतीत्यादिना आहितस्याग्नेर्यागाङ्गतयेव अर्थज्ञानस्य यागाद्युद्देशेनाविधानात् ज्ञानस्यानुष्ठानहेतुताया लोकसिद्धत्वात् अग्न्यर्थज्ञानयोर्वैषम्यात् अदृष्टस्योपयोगो दुर्वच इति वाच्यम्—जपादौ स्वाध्यायोपयोगस्याक्षतेः । रथकाराग्न्याधानस्य यागे उपयोगाभावेऽपि तदधीनस्यादृष्टस्य किञ्चित्फलकल्पनेनाग्निसंस्कारकत्वात्यागवत् अत्रापि स्वाध्यायसंस्कारकत्वस्य प्रतीतस्याविरोधेन फलवर्णनमेव श्रेयः । एवमध्ययननियमस्य फलमुपायान्तर-

निवृत्तिः । तत्फलञ्च उपायान्तरमूलग्रहणे प्रत्यवाय इत्येवास्तु भोजन-प्राङ्मुखत्वादिनियमवत् । अध्ययनविधिसिद्धस्वाध्याय--तदर्थज्ञान-वत्पुरुषलाभेन निराकांक्षाः कर्मविधयः शूद्रादीन् अध्ययनानधिकारिणः कर्तृतया न स्वीकुर्वन्तीति फलं प्रागुक्तमप्यनुसंधेयम् । सर्वथाऽध्ययनं गुणकर्मेति ॥ ६७ ॥

68. अध्येतुस्संस्क्रियैषाऽध्ययनमिति किल स्यान्नियोगार्थतायां
तामेव प्रोक्षणादिष्वपि गतिमवदन् केचिदेतत्तु वार्तम् ।
भावार्थैर्द्रव्यनिष्ठैरतिशय उचितः कर्मभूतेष्वबाधे
तस्मात् स्वाध्यायसंस्कृत्युपपदनगतिर्भाष्यकारैरभाषि ॥

प. अत्र प्राभाकरसिद्धान्तानुसारिणः केचिदाभासा अध्ययनस्य नियोगार्थत्वमाश्रित्याध्येतृसंस्कारत्वमूचिरे । एवं स्वाध्यायस्य कर्मत्व-श्रवणेऽप्यध्येतृसंस्कारत्वाङ्गीकारेण प्रोक्षणादिष्वपि पुरुषसंस्कारत्व-मेवोचितम्, न द्रव्यसंस्कारत्वमिति प्राहुः । तदनुवदति-अध्येतुरिति । तदुभयमपि प्रतिक्षिपति-एतदिति । स्नानमर्दनाञ्जनाभ्यञ्जनादिन्यायेन द्रव्यनिष्ठैरेव भावार्थैः तत्तत्क्रियाकर्मभूतेष्वेवातिशयाधानमुचितम् । तत् पुनः अबाधे । बाधे तु सक्त्वादिष्विव विभक्तिपरिणामो न्याय्य इति नीतिविदां निर्णयः । उक्तमर्थं भाष्यसंमत्या निगमयति-तस्मादिति ॥ 68

स. अथैतदधिकरणश्लोकाः प्राभाकरनिरासकाः । ननु तमध्या-पयेदित्यत्र तमिति द्वितीयाश्रवणात्, आंक्ते अभ्यंक्ते इत्यादौ दीक्षितस्य कर्तुरञ्जनाभ्यञ्जनादिसंस्कार्यत्ववत्, अध्येतुः संस्कार्यत्वमस्तु । अत एव आचार्यकार्थत्वमध्ययनस्य पूर्वपक्षे वदता प्राभाकरेण माणवकनिष्ठ-

नियोगार्थत्वमध्ययनस्योक्तमिति स्यादित्यत्राह अध्येतुरिति। प्राभाकरोक्तरीत्या नियोगार्थत्वसिद्धान्ते नियोगस्यापूर्वस्य माणवकनिष्ठतया माणवकसंस्कारकत्वमध्ययनस्य स्यात्। न तु प्रोक्षणादेः कर्मकारकभूतव्रीह्याद्यर्थत्ववत् स्वाध्यायार्थत्वम्। न्यायाचार्यास्तु न्यायकुसुमाञ्जलौ प्रोक्षणादिस्थलेऽपि कर्मकारकसंस्कारकत्वमनंगीकृत्य,' "संस्कारः पुंस एवेष्टः प्रोक्षणाभ्युक्षणादिभिः" इति कर्तरि पुरुष एवादृष्टं संस्कारभूतमवदन्। तदुपपादनं तत्रास्मद्व्याख्याने विस्तरे द्रष्टव्यम्। तर्हि प्रोक्षणादिकं प्रति व्रीह्यादेः कर्मत्वं कथमित्याशंक्य, प्रोक्षणजन्यजलसंयोगरूपफलाश्रयत्वादिति परिहारस्तत्रैव कृतः। तद्वदत्रापि माणवकसंस्कारकत्वेऽपि विधिसार्थक्यं भवेदेव। अथापि श्रीभाष्यकारैः कर्मकारकसंस्कारकत्वमेवेष्टम्, "अध्ययनञ्च स्वाध्यायसंस्कारः" इति। भावार्थैः धात्वर्थैः क्रियारूपैः द्रव्यनिष्ठैः व्रीह्यादिद्रव्यकर्मकत्वेन ' निर्दिष्टैः द्रव्यनिष्ठजलसंयोगादिफलाश्रयतया कर्मभूतेषु उपस्थितेष्वतिशयजननमेवोचितम्। दृष्टसंस्कारकस्थले संस्कराश्रयत्वेन क्लृप्तत्वाच्च। अन्यपुरुषफलार्थतया तीर्थाद्यभिमन्त्रणे कर्तृसंस्कारस्यानपेक्षितत्वाच्च। अतस्तदुभयोक्तं वार्तम् असारभूतम्। अतिशयश्च नापूर्वं नियोगादिपदवाच्यं विलक्षणम्। अतो न कल्पनागौरवम्। किं तु शक्तिरूपपदार्थाङ्गीकरात् सैव वा, आराध्यभगवत्प्रीतिविशेषविषयत्वरूपो वेत्येतत् अनन्तरश्लोके विशदम् ॥ ६८ ॥

69. **स्वाध्यायं संस्क्रियार्हं कथमिव कथयेच्छब्दमद्रव्यमिच्छन्**
**द्रव्यं संस्कारमर्हेदिति हि नयविदस्तत्र तात्पर्यभेदात्।**

आराध्यप्रीतिरेव ह्यतिशय उदि(चि)तो नैगमैष्वोदितेषु
स्वाधीनस्स्यादसौ तद्विषय इति दशा तादृशी संस्क्रियाऽत्र ॥

प. उक्तं स्वाध्यायस्य संस्कार्यत्वं परः प्रकारान्तरेण प्रतिक्षिपति स्वाध्यायमिति । "भूतभाव्युपयोगे हि द्रव्यं संस्कारमर्हति" इति द्रव्यस्यैव संस्कार्यत्वमभियुक्तैरभिधीयते । भवद्भिस्तु गुणरूपशब्दात्मकस्वाध्यायस्य द्रव्यत्वं प्रतिक्षिप्यते । तत् कथं स्वाध्यायस्य संस्कार्यत्वसिद्धिः ? इति । तत् प्रतिक्षिपति-तदिति । हेतुमाह—तात्पर्येति । अस्मदाचार्याणां तात्पर्यमजानानेन भवतैवेत्थं चोद्यते, अस्माभिर्हि संस्काररूपेषु, यागादिषु चादृष्टं नाम ईश्वराभिप्रायविशेष एवाभिधीयते । तदिदमाह-आराध्येति । तस्मात्-'अनेनासौ स्वाध्यायः स्वाधीतः (अधीतः ?)' इतीश्वरप्रीतिविषयत्वमेव वेदार्थनिर्णयकारणभूतेषु वेदवाक्येष्वद्रव्यभूतेष्वप्यतिशयो युज्यत इति न संकटं किंचित् । द्रव्यमित्यभियुक्तानां वचनं करणमात्रोपलक्षणमिति भावः । अन्यथा त्वत्पक्षेऽपि द्रव्यात्मकवर्णस्य न करणता—तस्यावाचकत्वात् । पदं वाक्यं वा अभिधायकम् । तच्च वर्णसमूहत्वान्न द्रव्यम्, अथापि सन्दर्भविशेषस्य स्वपरपरिकर्मितस्याध्ययनसंस्कृतत्वेन करणत्वमिति भवद्भिर्वक्तव्यम् । एवमस्माकमपीति ॥ 69

स. ननु संस्कारो गुणाधानम् । तत् अद्रव्ये कथमिति शंकित्वा परिहरति स्वाध्यायमिति । शब्दमद्रव्यमिच्छन्निति । शब्दो द्रव्यमिति भाट्टानां शब्दिकानाञ्च पक्षः । अस्मत्पक्षे स्पर्शरूपरसगन्धवत् शब्दो गुणः । तत्समुदायश्च स्वाध्यायः । तदत्र कथं संस्कारं कथयेदिति ।

निरस्यति तत्रेति । **तात्पर्यभेदादिति** । द्रव्यस्य संस्काराहत्वमुक्तमस्तु । तत्र द्रव्यत्वं लिंगसंख्यान्वयित्वम् ; न तु तार्किकपरिभाषितम् । गुणत्वमपि अप्रधानधर्मत्वमेव, न तु तदिष्टम् ॥ धर्माधर्मयोरदृष्टयोस्तादृशगुणत्वमेवेति चेत्–तदपि न ; अस्मन्मते आराध्यदेवतागतप्रीतिरेव हि पुण्यम् ; अप्रीतिः पापम् । अयं संस्काररूपोऽतिशयोऽपि तत्प्रीतिरेवोदितो **नैगमैः**, स एवैनं प्रीतः प्रीणातीति, तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति, विश्वं बिभर्ति भुवनस्य नाभिः, भोक्ता च प्रभुरेव च इत्येवं श्रुतिस्मृतिवेदिभिः । कुत्र ? द्रव्येषु अद्रव्येषु वा **चोदितेषु** क्रियाङ्गतया विहितेषु । अनुमन्त्रणमन्त्रादिभिः कर्मतद्देवतागुणादिस्मरणादिकं हि कर्मगुणाद्यद्रव्यसंस्मारकमेवेति । देवतानिष्ठत्वात् प्रीतिरूपधर्मस्य चोदितवस्तुगतसंस्कारता कथमित्यत्रोपपादयति **स्वाधीत** इति । असौ स्वाध्यायः **स्वाधीतस्सन्** स्वेन शास्त्रानुमततद्वेदशाखाध्ययनार्हपुरुषेण अधीतस्सन् **तद्विषयः** देवताप्रीतिविषयो भवतीति तादृशप्रीतिविषयत्वरूपावस्थाश्रयत्वमेव **अत्र** स्वाध्याये संस्कार्यत्वम् । **स्वाध्याय**शब्दे स्वशब्दः अध्येतृपुरुषीयेत्यर्थकः । अत्र **स्वाधीत** इत्यत्र स्वशब्दः वेदाध्ययनार्हपुरुषेत्यर्थक इति भेदः । स्वेनाधीतः **स्वाधीत** इति ॥६९॥

70. **नित्यं चेन्निष्फलं स्यात् भवति तु फलवत् काम्यभावादनित्यं**
**मन्त्रं त्यागेन तादृग्ग्रहणफलवतः प्रत्यवायानुशिष्टेः ।**
**नैष्फल्यं सर्वथा चेत् कथमिव मतिमांस्तत्र बुद्ध्या प्रयस्येत्**
**तस्मान्नित्येऽप्यपूर्वं तदितरदपि वा स्यात् फलं तत्र तत्र ॥**

प. अत्र कश्चिच्चोदयति। नित्यमिति। वेदाध्ययनं नित्यम् अनित्यं वा ? नित्यं चेत्-निष्फलमेव स्यात्। सफलं चेत्, काम्यभावान्नित्यवन्नियतानुष्ठेयं न स्यादिति। तदेतदाह— नित्यमिति। तत् प्रतिक्षिपति—मैवमिति। हेतुमाह—त्यागेनेति। तादृग्ग्रहणफलवतः अक्षरराशिग्रहणरूपफलवतः तस्याध्ययनस्य त्यागेन, "योऽनधीत्य द्विजो वेदान् अन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" इति प्रत्यवायानुशासनात् नित्यवत्कर्तव्यत्वसिद्धिरित्यर्थः। अत्रानुग्राहकतर्कमाह—नैष्फल्यमिति। सर्वथा नैष्फल्यं चेत्-मतिमतां तत्र प्रवृत्तिर्न स्यादित्यर्थः। तेन नित्यत्वेऽपि साफल्यसिद्ध्यै तत्फलं यथायोगं यत्किंचित् दृष्टरूपमदृष्टरूपं प्रमाणानुरूपं समस्तमंगीकर्तव्यमित्यर्थः। अत्र तु नियमादृष्टानुविद्धमक्षरराशिग्रहणं फलतया स्वीकर्तव्यमिति भावः॥ 70

सु. अध्ययनं संस्कारकर्म नित्यञ्चेति मिथो विरुद्धमिति शंकामुद्घाट्य परिहरति नित्यमिति। अध्ययनं विहितं नित्यमिति पक्षे फलरहितमित्येव वक्तव्यमिति कथं संस्कारफलोक्तिः। फलवच्चेत्, अध्ययनं फलापेक्षायामेव कार्यत्वात् काम्यत्वात् नित्यं न भवेत्। परिहरति मैवमिति। तादृग्ग्रहणफलवतः संस्कारभूताक्षरराशिग्रहणरूपफलजनकस्याध्ययनस्य त्यागेन हेतुना प्रत्यवायस्य कीर्तनात् प्रत्यवायपरिहारार्थमवश्याध्येयत्वात् नित्यत्वमेव। यथा पारणायाः क्षुन्निवृत्तिरूपफलजनकत्वेऽपि स्नानस्यारोग्य-मलनिरासादिहेतुत्वेऽपि नित्यत्वम्, तद्वत्। सर्वत्रापि नित्ये फलमवश्यमंगीकर्तव्यमित्यप्याह नैष्फल्यमिति। अपूर्वम्

अदृष्टं भगवत्प्रीत्यादि । तदितरत् दृष्टमक्षरग्रहणादि । नित्यकाम्यविवेकः प्रागेव कृतः ॥ ७० ॥

71. दुःखाभावः सुखं वा तदुभयकरणं तस्य चोपक्रियार्हं
पुंसः प्रेप्सोः पदं(प्साप्दं?)स्यात् कथय तदितरत् कार्यमित्थं कथं ते।
तत्सिद्ध्या कर्मयोग्यो यदि भवति तथा स्यात् गृहीत्वाऽक्षराणां
वेदानध्यायपूर्वं तदितरयतने शूद्रतादि स्मरन्ति ॥

प. पूर्वोक्ताक्षरराशिग्रहणफलकत्वस्थिरीकरणायाध्ययनस्य कार्यशेषत्वपक्षं सप्रकारं प्रतिक्षिपति—दुःखाभाव इति । लोके हि दुःखाभावः सुखं वा, अनयोरुभयोः करणम्, तस्य चोपकारकमिति कर्तव्यताजालं वा फलाकांक्षिणामभिमतम् । भवतां पुनरध्ययनविधिसाध्यो नियोगस्तेष्वन्यतमो भवत्येव । तदितरत् कथं कार्यमिति कथय । उक्तार्थबहिर्भूतत्वात् अकार्यमित्यर्थः । अत्र पूर्वपक्षिणोक्तम् परिहारमाशंक्य प्रतिक्षिपति—तत्सिद्ध्येति । अध्ययनविधिसाध्यनियोगसिद्धिसामर्थ्यात् कर्मज्ञानं भवति । तेनार्थज्ञानसाधनत्वान्नियोगस्य कार्यत्वमिति यदि वदसि, तर्हि साक्षादर्थज्ञानसाधनत्वादक्षरराशिग्रहणस्यैव कार्यत्वमिति किं न वदसीति। किंच "योऽनधीत्य द्विजो वेदान्" इत्यक्षरराशिग्रहणाभावे शूद्रत्वस्मरणाव तद्ग्रहणस्यैव प्रेप्सास्पदत्वेनाऽऽवृत्त्या तद्ग्रहणमेव कार्यम् । तदभावेन गौडाध्ययनमात्रेण नियोगकार्यत्वांगीकारे शूद्रत्वं तदवस्थमेवेत्यर्थः ॥ 71

स. अध्ययनस्य नियोगार्थत्ववादिना प्राभाकरेणापि संस्कारकर्मत्वमेवोक्तं भवतीति प्रागुक्तम् । अध्येतृगतस्य तस्य नियोगस्य स्वतन्त्रत्वात् कथं क्रियान्तरशेषत्वमिति स मन्यते । अतस्तं व्युत्पादयति

दुःखेति। नियोगो नाम नाज्ञा, किं तु कार्यमिति त्वदुक्तम्। कार्यत्वञ्च कर्तव्यत्वं कृतिकर्मत्वम्। कर्तुरीप्सिततमं कर्म। कर्तुः प्रेप्सापदं कृत्या प्राप्तुमिष्टतमं कार्यं भवति। तत् मुख्यं सुखम्। दुःखाभावोऽपि, तच्छेषतया। तदुभयसाधनमपि तथा। तदुपकारकतया तदङ्गमप्येवम्। एवञ्च इत्थंभूतं कृतिकर्मभूतं कृतिभावभावि कृत्युद्देश्यभूतं कार्यं तदितरत् पूर्वोक्तफलतत्साधनतदङ्गव्यतिरिक्तं किं त्वदिष्टमस्ति। अपूर्वेणापि एतदन्यतमभूतेनैव भाव्यम्। एवञ्चाध्ययनस्य स्वर्गादिहेतुत्वास्वीकारात् फलसाधनयागादिकर्मयोग्यतैव नियोगवति पुंसि वक्तव्या। स च अक्षराणां ग्रहणादेव तथा कर्मयोग्यः स्यात्; अनावृत्तसकृदुच्चारणमात्रेण नियोगस्यायोगात्। अतोऽक्षरग्रहणार्थत्वमेवास्तु, किं नियोगेन। नन्वक्षरग्रहणार्थत्वे यस्य तन्नेष्टम्, स नाधीयेतेति चेत्—नियोगार्थत्वेऽपि तुल्यः प्रश्नः। अक्षरग्रहणस्याध्यापनादिकार्यान्तरोपयोगात् द्विता वा प्रवर्तेरन्; नियोगमात्रस्य फलत्वे तु तस्य साक्षात्परम्परया फलत्वायोगात् न कश्चिदपि प्रवर्तेत। अधीतवेदस्योत्तरकर्माधिकारात् तत्फलमेव फलमिति च तुल्यम्। वस्तुतः, "योऽनधीत्य द्विजो वेदान् अन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः" इति वेदस्यानध्ययने शूद्रत्वस्मरणात् अध्ययनं दोषपरिहारार्थमवश्यं कर्तव्यमिति ॥ ७१ ॥

72. **सत्रात् संम्माननादेरुपगत इह तङ् कर्त्रभिप्रायबाधी**
**त्रेधाऽन्योक्तां गतिं तु क्षपयति वरणाधानसाध्यावमर्शः।**

स्पष्टं कर्तर्यकर्तर्यपि हि फलमिदं पूर्वसूत्रप्रसूतं
संवेदित्रोर्द्वयोश्चाव्यवहितमपि तत् दृश्यतेऽकर्तृगामि ॥

प. प्राभाकराः प्राहुः–"स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति क्रियाफलस्य कर्तृगामित्वे विहितत्वादात्मनेपदस्य, "अष्टवर्षं ब्राह्मणमुपनयीत" इति प्रयुक्तमिदं आत्मनेपदमुपनयनफलस्योपनेतृनिष्ठत्वमाह तथा च कथम्, 'अष्टवर्षो ब्राह्मण उपनीतोऽधीयीत' इत्युपनयनफलस्याकर्तृरूपोपनेयनिष्ठाध्ययनशेषत्वेन व्याख्यानमिति। तदेतत् प्रतिक्षिपति सूत्रादिति। उभयं हि सूत्रम्। अत्रैकं कर्त्रभिप्रायार्थम्, स्वरितञित इति। इतरत् संमाननादिसूत्रम्। तेन संमाननादिसूत्रसिद्धम् उपनयीतेत्यात्मनेपदमकर्त्रभिप्रायार्थमेव। तेन माणवकनिष्ठाध्ययनशेषत्वमेवोपनयनस्य। आहुश्च शाब्दिकाः। अकर्त्रभिप्रायार्थः पुनरारम्भः इति। अन्यथा पौनरुक्त्यप्रसंगात्। अत्र प्राभाकराः समाधानत्रयमाहुः—कर्तर्येव फलान्वयः कर्त्रभिप्रायत्वम्। कर्तरि अकर्तरि च फलान्वयोऽकर्त्रभिप्रायत्वम्। तेनात्र शिष्याचार्यनिष्ठाध्ययनाध्यापनरूपोभयविधफलसत्वात् अकर्त्रभिप्रायार्थत्वमिति। तन्न— "अग्नीनादधीत" इत्यत्र कथं तर्हि कर्तर्यकर्तरि च फलान्वयेऽपि स्वरितेत्यादिसूत्रेणैवाऽऽत्मनेपदविधानम्? तत्र ह्यकर्तर्यग्नौ कर्तरि यजमानेऽप्याधानफलमुपलभ्यते। अग्नौ तावत् आधानसाध्यसंस्कारः, यजमाने पुनः अग्निसिद्धिरिति। तदिदमाह–स्पष्टमिति। द्वितीयमपि तदुक्तं समाधानमाशंक्य परिहरति—संवेदित्रोरिति। इति किल प्राभाकराः प्राहुः–"चेतनद्वयान्वयेऽकर्त्रभिप्रायसूत्रम्" इति। तच्च व्यभि-

चारि ; "ऋत्विजो वृणीते" इत्यत्र चेतनद्वयान्वयेऽपि कर्त्रभिप्रायसूत्रेणैवात्मनेपदविधानात् । तृतीयमाशंक्य परिहरति अव्यवहितमिति । तस्य अव्यवहितफलस्य कर्तृनिष्ठत्वे कर्तृगामित्वम्, व्यवहितस्य तन्निष्ठत्वे पुनः अकर्तृगामित्वमिति चेत्, तदुभयभ्रष्टम् । उभयस्यापि वरणाधानसाध्यस्याव्यवहितस्य ऋत्विगग्निसंस्कारस्य फलस्याकर्तृनिष्ठत्वात्; स्वरितेत्यादिना कर्त्रभिप्रायसूत्रेण तत्रात्मनेपदविधानाच्च। तेन-तदुद्देश्यतया प्रधानभूतं फलम् । तत् कर्तृनिष्ठं चेत्-तदेव कर्त्रभिप्रायम्-तत्र स्वरितेत्यादिसूत्रप्रवृत्तिः, तत् अकर्तृनिष्ठं चेत्, तदेवाकर्त्रभिप्रायम् । तत्र संमाननादिसूत्रप्रवृत्तिरिति शाब्दिकैश्चानुमते । तेन उपनयीतेत्यत्र संमाननादिसूत्रेणात्मनेपदविधानात् उद्देश्यतया प्रधानभूतस्याध्यायाध्ययनलाभ एव फलतया सिध्यतीत्यकर्त्रभिप्रायार्थत्वमनुवर्णनीयमिति ॥ 72

स. एवमध्ययनस्य नियोगार्थत्वं निरस्तम् । एवं प्राभाकरैरेवोक्तमध्ययनस्याऽऽचार्यकाध्यापनशेषत्वमपि निरस्यति सूत्रादिति । एवं हि तैरुच्यते—'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यत्राऽऽत्मनेपदं स्वरितञित इति सूत्रात् । अतः फलं कर्त्रभिप्रायमिति उपनयनफलमुपनेतरि आचार्ये स्थितमाचार्यकमेव । उपनयनमुपनेतृमाणवकासत्तिमुखेनाङ्गम् । माणवकस्यांगत्वं तदध्यापिताध्ययनादेवेति अध्ययनस्याध्यापनाद्यर्थतेति । तन्न; उपनयीतेत्यत्र संमाननेति सूत्रत एवाऽऽत्मनेपदमिति उपनयनफलस्याकर्त्रभिप्रायत्वमेव वक्तव्यम् । पूर्वसूत्रेणैव सिद्धे नीधातुविषये संमाननेति सूत्रारम्भो हि अकर्त्रभिप्रायार्थः । अतः अकर्तरि माणवके यत् अध्ययनं फलम्, तदङ्गत्वमेवोपनयनस्य । अतो नाचार्यकार्थत्वप्रसक्तिः ।

अथ तैरुच्यते—उत्तरसूत्रस्यैव प्रवृत्त्या क्रियाफलस्याकर्त्रभिप्रायत्वेऽपि आचार्यकार्थत्वं भवितुमर्हति। सूत्रे आचार्यकरणेति प्रयोगविशेषात्। येन स्वमाचार्यं करोति, स व्यापार आचार्यकरणम्। उपनयनमध्यापनद्वारा आचार्यकसाधनमिति तदर्थात् आचार्यकार्थत्वमवगम्यते। तर्हि कथमकर्त्रभिप्रायत्वमिति चेत्—कर्त्रभिप्रायत्वं नाम कर्तृमात्रगामित्वम्। अकर्त्रभिप्रायत्वञ्च कर्तृतदितरोभयगामित्वम्, उपनयनफलमध्ययनमुपनेयेनाकर्तृमाणवकगामि, अध्यापनाचार्यकरूपफलं तु कर्तृगामीति न दोष इति। अथ तत्परिष्करणेन कर्तृ-तदितरचेतनोभयगामित्वमकर्त्रभिपायत्वमिति द्वितीयः पक्षः। क्रियासमनन्तरफलस्य कर्तृगामित्वं कर्त्रभिप्रायत्वम्। अन्यत् अकर्त्रभिप्रायत्वमिति तृतीयः पक्षः। एवमुपनयनस्याचार्यकार्थत्वस्थापनायोक्तान् त्रीनपि पक्षान् अभिप्रेत्याह त्रेधेति। उपनयीतेत्यत्र तङ् आत्मनेपदविभक्तिः संमाननादेः सूत्रात्; न तु स्वरितादेः। संमाननशब्दः आद्यवयवः यस्य सूत्रस्य तत् संमाननादि; तस्मात्। अतोऽयं तङ् कर्त्रभिप्रायक्रियाफलबाधेन अकर्त्रभिप्रायक्रियाफलार्थः। अथैतदंगीकारेण या त्रिविधा गतिरुक्ता प्राभाकरैः, तां **वरणाधानसाध्यावमर्शः क्षपयति**। अग्नीनादधीतेति आधानजन्यं यत्, तत्फलपरिशीलनम्, ऋत्विजो वृणीते इत्यत्र वरणजन्यफलपरिशीलनञ्च तद्गतिनिरासकं भवतीत्यर्थः। अग्नीनादधीतेत्यत्र हि स्वरितेति सूत्रादेव तङ्; एवं वृणीते इत्यत्रापि। तत्राधानजन्यं फलं कर्तुराहवनीयाद्यग्निमत्त्वम् अकर्तुरग्नेः आहवनीयत्वादिरूपातिशयभाक्त्वञ्च। अतः कर्त्रभिप्रायेत्यस्य कर्तृमात्रगामीत्यर्थो वर्णयितुं न शक्यते।

एवं कर्तृतद्भिन्नचेतनोभयागामीत्यर्थोऽपि न; वरणफलस्य संस्कारस्य ऋत्विग्रूपचेतनगामित्वात् कर्तृमात्रगामित्वभंगप्रसंगात् । कर्तरि अधान-कर्तरि वरणकर्तरि च यथा अग्निमत्त्वं यागपूर्तिरिति फलम्, तथा अकर्तरि अग्नौ ऋत्विजि च फलमस्ति। अतः संवेदितोर्द्वयोश्च चेतनद्वयेऽपि तत्फलमस्ति । अतः कर्तृमात्रगामीत्यर्थो न वाच्यः। क्रियासमनन्तर-फलं कर्तृगामि चेत्, स्वरितेति सूत्रादात्मनेपदमिति तृतीयपक्षोऽपि न; अव्यवहितमपि हि फलमकर्तृगामि । आधानवरणजन्यस्य संस्कार-स्याग्नि-ऋत्विङ्निष्ठतया कर्तृगामित्वाभावात् स्वरितेत्यात्मनेपदानापत्तेः । तस्मात् क्रियाफलतया कर्तृगतस्योद्दिष्टत्वे स्वरितसूत्रात्, कर्तृभिन्नगतस्य तथोद्दिष्टत्वे समानसूत्रादिति यथाश्रुतार्थ एव शोभनः । अत उपनयनफलतया माणवकनिष्ठमध्ययनमेवोद्देश्यमिति नाचार्यकार्थता । पाणिनिसूत्रे आचार्यकरणेति पदम्, योऽध्यापनेनाचार्यो भवति तत्कार्य-मुपनयनमित्येव ज्ञापयेत्, न तु आचार्यकस्य फलत्वमपीति । श्रुतप्रका-शिका (पु. 30) सेश्वरमीमांसा (पु. 26.) च द्रष्टव्या ॥ ७२ ॥

73. निर्णीतं याजयेदित्यपि यजनविधौ तत्परं नीतिविद्भि-
स्तत्प्राप्या(योऽ?)ध्यापनोक्तावुपनयनमपि ह्यन्तरङ्गावरुद्धम् ।
तस्मादध्येतृसंस्कृत्युपनयनफलं तत्फलार्थक्रियार्थं
नो खल्वाचार्यकाख्यं किमपि फलमिहालौकिकं शक्यशङ्कम् ॥

प. अत्र पुनश्चोदकाभिमतमाशंक्य परिहरति–निर्णीतमिति । "अष्टवर्षं ब्राह्मणमुपनयीत ; तमध्यापयेत्" इत्याचार्यनिष्ठ ध्यापन-चार्थणिजन्तपदप्रयोगे सति, "अष्टवर्षो ब्राह्मण उपनीतोऽधीयीत" इति

विपरिणम्याध्ययनविधिः किमिति कल्प्यत इति चोदकाभिप्रायः। तत्रोत्तरम्–"एतयाऽन्नाद्यकामं याजयेत्", "निषादस्थपतिं याजयेत्" इत्यादिषु अन्नाद्यकामो यजेत, निषादस्थपतिर्यजेत इति विपरिणम्य(णामो?) भवद्भिर्वा कथं कल्प्यते इति। तत्र याजनस्य वृत्त्यर्थतया प्राप्तत्वात् यजनमेव विधेयतया कल्प्यत इति चेत्, एवं तर्ह्यध्यापनस्यापि वृत्त्यर्थतया प्राप्तत्वादध्ययनमेव विधेयतया स्वीक्रियतामिति। शब्दार्थस्तु–"याजयेत्" इति यजनविधौतत्परं निर्णीतं नीतिविद्भिः। तत्तुल्याध्यापनोक्तौ तथैवाध्ययनविधिर्निर्णीयतामिति वाक्यशेषः। अत्राध्ययनविधिपरत्वेनोपनयनस्याध्ययनांगत्वे न्यायानुग्रहोऽपि स्यादित्याह–उपनयनमिति। "अन्तरंगबहिरंगयोरन्तरंगं बलीयः" इति तान्त्रिकाणां न्यायः। उपनयनस्योपनेयनिष्ठाचार्यकार्थत्वे पुरुषान्तरगामित्वात् बहिरङ्गत्वमिति। निगमयति–तस्मादिति। अध्येतृसंस्काररूपोपनयनफलं तत्फलार्थक्रियार्थम्—माणवकफलशेषभूताध्ययनक्रियार्थमित्यर्थः। एवमध्येतृनिष्ठं फलमुक्त्वा, अध्यापयितृनिष्ठं फलमेव नास्तीत्याह–नो खल्विति। आचार्यकं हि फलमध्यापकनिष्ठमस्य भवद्भिरभिधीयते। तन्नास्ति; "तमाचार्यं प्रचक्षते" इत्यत्र–" आचार्यककामः" इति नियोज्यनिर्देशाभावात्। केवलमाचार्यशब्दव्युत्पत्तिमात्रं क्रियते; "तमाचार्यं प्रचक्षते"–इति शब्दव्युत्पत्तिमात्रस्यैव साक्षाच्छ्रुतत्वात्। न हि "एकां शाखामधीत्य श्रोत्रियः; सांगाध्याय्यनूचानः" इत्यादौ श्रोत्रियत्वानूचानत्वादिकं फलतया परिकल्प्यते, तत्र तु(अपितु?) तानि नामानि व्युत्पाद्यन्त इति। तद्वदिहापि द्रष्टव्यम्॥ 73

स. एवं तर्हि तमध्यापयीतेति अध्यापनस्य किमुद्देशेन विधानम्। आचार्यकोद्देशेनैवेति चेत्—तर्हि उपनयनादध्ययनसिद्धिः अध्ययनाद्ध्यापकत्वसिद्धिरिति सर्वस्याचार्यक एव पर्यवसानमित्याशंकायामाह **निर्णीतमिति**। अध्यापयेदित्यत्राप्यध्ययनमेव विधीयते। तमध्यापयेत् इत्यस्य सोऽधीयेतेत्यर्थः। नीतिविद्भिर्भवद्भिरेव अन्नाद्यकामं याजयेदित्यादौ अन्नाद्यकामो यजेतेत्यर्थस्योक्तत्वात्। याजयेदिति णिजन्तमपि पदं **यजनविधौ तत्परं निर्णीतम्**–यजनमात्रविधानपरत्वेन निर्णीतम्। याजनस्य वृत्त्यर्थतया स्वतःप्राप्तेः। **अध्यापनोक्तौ** अध्यापयेदित्यत्र **तत्प्रायः** तत्सादृश्यमेव। किञ्च उपनयनमन्तरङ्गेण स्वसंस्कार्योपनेयनिष्ठतया संनिहितेन फलेनावरुद्धं बहिरङ्गमाचार्यकं नापेक्षते। तस्मात् अध्येतृसंस्काररूपमुपनयनफलमुपनेतृसमवेतनानाफलसाधनाध्ययनार्थमेव। किञ्चाचार्यकस्य फलत्वमपि न भवति; सुखरूपत्वाभावात्। अलौकिकापूर्वरूपत्वं त्वप्रामाणिकम्॥ ७३॥

**74. शिष्यः किञ्चोपनीतो वरमथ गुरवे किं निमित्तं प्रयच्छेत्**
**आचार्यत्वं वरश्चेत्युभयमपि फलं कल्पयन् भ्रान्तकल्पः।**
**वृत्त्यर्था(र्थे?)ध्यापनं च स्मृतिभिरधिगतं क्वापि नाचार्यकार्थं**
**नो चेन्नानाप्रकारा विधय इह तथा तत्तन्त्राऽऽविलाः स्युः॥**

प. उक्तस्यैवार्थस्य द्रढिम्नेऽर्थान्तरमप्याह–**शिष्य** इति। यद्याचार्यकरूपालौकिकफलसिद्ध्यर्थं उपनयनादिकं कुर्यात, तर्हि गुरवे वरं शिष्यः किमर्थं दद्यात्? अलौकिकमाचार्यकम्, शिष्यदत्तं दृष्टफलं च यदि वदे:, तदा निरपेक्षत्वादुभयफलनिर्देशं वदतो भ्रान्तत्वमेव भवतः स्यात्। किं च

आचार्यकं नाम किमपि फलं यदि प्रमाणसिद्धम्, तर्हि स्मृतिषु यत्र कापि फलतया निर्दिश्येत । न तु तथा निर्दिश्यते । अपि तु वृत्त्यर्थतयैव केवलमभिधीयते । अन्यथा याजकत्वादिकमपि फलतया तत्र निर्दिश्येतेति भावः । **नानाप्रकारा विधयः** याजकत्व-प्रतिग्रहीतृत्व-श्रावकत्व-श्रोतृत्वादिफलकांक्षिणां सहस्रमपि कर्माणि निर्माणयोग्यानि विधीयन्तामिति विप्लवप्रसंगः ॥ 74

स. वरदानान्यथानुपपत्त्याऽपि उपनयनफलमुपनेयमाणवकगामीत्याह **शिष्य** इति । **किं निमित्तं**--केन कारणेन । किमर्थम् ; एतदभावेऽप्याचार्यस्य फलसिद्धेः । इदमपि फलमुद्दिश्यैवाचार्य उपनयत इति चेत्–उभयोद्देशे वाक्यभेद इत्याशयेनाह **उभयमपीति** । एवमवश्यग्राह्यो वर एवालमित्याशयेनाऽऽह **वृत्तीति** । याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदित्यादिभिरित्यर्थः । **नोचेदिति** । शिष्यः प्रीत्या निर्बन्ध्य वरं ददाति ; आचार्यस्य तु आचार्यकमेव प्रवृत्तिहेतुरिति चेदित्यर्थः । आचार्यकवत् याजकत्व—प्रतिग्रहीतृत्वादिकमप्यलौकिकं परिकल्प्य याजनादिविधीन् प्रधानीकृत्य यागादिविधीनां तदुपसर्जनत्वमिष्यताम् । यागादिफलानि त्यज्यन्ताम्, गुणफलविधित्वादिकं वा चिन्त्यतामिति व्याघातादयो बहवो दोषा इति ॥ ७४ ॥

75. **तत्तत्कामोपनीतावुपनयनफलं कर्तृगामीत्ययुक्तं**
**तत्सामान्यात् तदेकाश्रयफलमिह नस्त्वष्टवर्षोपनीतौ ।**
**सिद्धेऽन्यत्र प्रधाने गुणफलमुचितं तस्य नाद्यापि सिद्धिः**
**नित्यं काम्यप्रयोगे घटितमिति पृथक्कालिकत्वं तु सह्यम् ॥**

प. उपनयनफलस्याध्येतृनिष्ठत्वं पूर्वमन्तरंगन्यायादुपपादितम् । इदानीं न्यायान्तरेणाप्युपपादमति तदिति । उपनयनफलस्य माणवकनिष्ठत्वं "पंचमे ब्रह्मवर्चसकामस्य" इत्यादिषु प्रसिद्धम् । तत्साम्यात् "अष्टवर्षं ब्राह्मणमुपनयीत' इत्युक्तस्य नित्योपनयनस्य माणवकनिष्ठाध्ययनादिफलकत्वमेव वक्तुमुचितम् । अन्यथाऽत्यन्तविरूपक्लृप्तिप्रसंगात् । तदेकाश्रयफलं उपनयनैकाश्रयाध्ययनं फलम् ; न पुनराचार्यकं फलम् । नन्वाचार्यकं प्रधानफलमस्तु । "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यादिवत् अध्ययनादिकं गुणफलमस्तु इति चेत्–न–सिद्धे हि प्रधानफले गुणफलत्वक्लृप्तिः । न ह्याचार्यकस्य प्रधानफलत्वं सिद्धम् । तेन ब्रह्मवर्चसादेः स्वाध्याय लाभस्य च गुणफलत्वसिद्धिर्न शक्येति भावः । नन्वत्र काम्यवत् नित्यमपि यदि पृथगनुष्ठीयेत, तदा द्विरनुष्ठानप्रसंगः । न च तथाऽनुष्ठीयते । यदि न पृथगनुष्ठीयते, तदा स्वकालपरित्यागेनान्यकालसंसर्गप्रसंग इति चेत्––तत् सह्यमेवेत्याह नित्यमिति । नित्यानुष्ठानस्य काम्यानुष्ठानेनैव सिद्धत्वात् उपनीतस्योपनयनविधानाभावाच्चाष्टवर्षानुष्ठेयस्य नित्योपनयनस्य कालान्तरानुष्ठानेनापि सिद्धिरुपपद्यत इत्यर्थः ॥ 75

स. युक्त्यन्तरेणापि उपनयनफलं माणवकनिष्ठमित्याह तत्तदिति । अष्टवर्षं ब्राह्मणमुपनयीतेत्यादिविधिवत् फलकामनायां पञ्चमादिकालविशेषः स्मर्यते, 'पञ्चमे ब्रह्मवर्चसकामस्य' इत्यादौ । तत्तत्कामकर्तृकोपनयने तत्फलमुपनयनकर्त्राचार्यगामीति न युक्तमिति उपनेयनिष्ठमेवेति, तुल्यनयात् नित्येऽप्युपनयने तदेकाश्रयं तत्समानाधि-

करणमेव फलमित्यर्थः। अत्रान्यां शंकां परिहरति **सिद्धे** इति। काम्यस्थले यत् फलम्, तन्नोपनयनफलम्, किंतु उपनयाश्रितपञ्चमवयोरूपगुणफलम्; उपनयनफलं तु तत्राप्याचार्यकमेवेति शंका। नैषा युक्ता; **प्रधाने** उपनयनविषये **अन्यत्र** आचार्यकरूपफलान्तरे सिद्धे हि ब्रह्मवर्चसादेः कालरूपगुणफलत्वम्। यथा अग्निहोत्रस्य फले स्वर्गादौ सिद्धे दध्नेन्द्रियकामस्य जुहुयादिति तदाश्रितदधिफलमन्यत्। आचार्यकरूपफलं तु विचारदशापन्नत्वात् नाद्यापि सिद्धम्। अतो नित्याग्निहोत्रस्य स्वर्गाद्यर्थतयाऽनुष्ठानवत् नित्यस्योपनयनस्यैव काम्यतया अनुष्ठानमिति उपनयनफलमेव ब्रह्मवर्चसादि। तत्र नित्यमग्निहोत्रं यथा काम्यप्रयोगे निविष्टमिति न पृथगनुष्ठीयते, तथा नित्यमुपनयनमपि **घटितं** निविष्टम्। ननु दृष्टान्तो विषमः; तत्र कालैक्यात्। अत्र तु कालभेदात् स्वकालेऽष्टमे वर्षे निमित्तबलात् पुनः करणापत्तिरिति चेत्-तत्राह **पृथगिति**। यो हि मीमांसकः इह पञ्चमादिकालरूपगुणफलविधिं मन्यते, तन्मतेऽपि स्वकाले करणापत्तिर्भवत्येव। उपनयनफलस्याचार्यसमीपप्राप्तेर्निष्पन्नत्वात् पुनर्न करणमिति चेत्; तुल्यम्; अध्ययनस्य निष्पन्नत्वात्। एवमाचार्यकार्थमुपनयनमिति पक्षे काम्यस्योपनयनस्यानुष्ठानादेव अष्टवर्षमिति विहितस्य नित्यस्योपनयनस्य सिद्धिर्वक्तव्या। अतो नित्यं काम्ये निविष्टम्। नन्वेकस्योपनयनस्य वाक्यद्वये विधानं किमित्याश्रयणीयम्। प्राप्ताप्राप्तविवेकेन अष्टवर्षवाक्यविहितमुपनयनमाश्रित्य फलोद्देशेन कालविधिरित्यस्यैव युक्तत्वादिति चेत्--- अस्तु तथैव। तदापि गुणफले आश्रयभूतस्योपनयनस्यापि गुणफलसानाधिकरण-

प्रत्यवायपरिहारादिफलवहत्वमेव युक्तम्, न त्वाचार्यकार्थत्वमित्ये-तावदेव प्रकृतश्लोकविवक्षितमस्तु । काम्यस्थलक्लृप्तफलजातीयातिरिक्त-माचार्यकरूपं फलमसिद्धं न कल्प्यमिति । श्लोके **उपनयनफलमित्यस्य** उपनयनाश्रितगुणफलमित्येव तदाऽऽर्थः ॥ ७५ ॥

**76. यन्नित्यं ब्रह्मचारिण्यपरमपि कथं तस्य तस्मिन् प्रबोधः**
**पित्राद्यैश्शिक्षितत्वादिति तु सममिदं सर्वहानं न चेत् स्यात्।**
**संस्कर्तारं तमीप्सेत् तत उचितमधीयीत चेत्यादिदृष्ट्या**
**नेत्थन्तायाः प्र(अ?)बोधोऽस्त्यविदितनिगमेप्यष्टवर्षादिमात्रे ॥**

प. इत्थमपि प्राभाकराः प्रमाणविरुद्धमेवार्थं प्राहुः–"ब्रह्मचारिणो-ऽधिकारिणोऽप्रबुद्धत्वादध्ययने स्वविधिप्रयुक्तिर्नास्ति" इति । एत-दपि प्रागेव प्रतिक्षिप्तप्रायम् । अथापि शिष्यशिक्षार्थं विशदं प्रति-क्षिपति । यदिति । यद्यप्रबुद्धत्वाद् ब्रह्मचारिणोऽप्यध्ययनानुष्ठाने स्वतःप्रवृत्तिर्नास्तीत्युच्येत, तदा सर्वेष्वपि सामान्यधर्मेषु सत्यवचना-दिषु विशेषेष्वपि ब्रह्मचारिधर्मेषु तस्य प्रवृत्तिर्न स्यात् । तेष्वप्रवृत्तौ स्वाश्रमोचितधर्मानुष्ठानाभावात् स्वधर्मभ्रंशः स्यात् । तथाच कथं भ्रष्टाधिकारिणमाच योऽध्यापयेदित्याचार्यविधिरप्यस्तमियात् । ननु पित्राद्यैः शिक्षितत्वात् धर्मान्तराणामनुष्ठानमिति यदि वदेः, तदाऽस्य वाक्यस्याध्ययनानुष्ठानेऽपि तौल्यमस्ति । न चेत्, सर्वमरणम् । किंच "अभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत्" इत्यष्टवर्षं ब्राह्मण-मुद्दिश्य संस्कर्त्रपेक्षाविधानात् अप्रबुद्धत्वे तादृग्व्यपेक्षणविधाना-योगाच्च माणवकस्यात्यन्ताप्रबुद्धत्वमित्यसंगतमेतत् । प्रबुद्धाप्रबुद्धत्व

सर्वत्रापि साधारणम् । अविदितनिगमस्य केवल(लं)वेदाध्ययनमेव नास्ति ।
इतरः (इतरत्र?) सर्वत्र प्रवुद्धप्राय एवेत्यर्थः ॥ 76

स. ननु अनधीतवेदः अप्रबुद्धो ब्रह्मचारी अध्ययनविधिं कथं जानीयात् । आचार्यस्तु प्रवुद्धोऽध्यापनविधिवशः प्रवर्तेत । अतो न स्वविधिप्रयुक्तमध्ययनमित्यत्राह **यदिति** । यत् ब्रह्मचारिगतं धर्मजातमसाधारणं **नित्यकर्तव्यम्**, **यच्चापरं** ब्रह्मचार्यब्रह्मचारिसर्वजनसाधारणं विहितम्, तस्मिन् विषये **तस्य** ब्रह्मचरिणोऽप्रवुद्धस्य कथं बोधः ? **पित्रादिकृतशिक्षावशादिति** चेत्--अध्ययनविधिज्ञापनमपि तच्छिक्षावशादेवास्तु । **सर्वहानं न चेत् स्यात्** । न चेत्--हितकार्युपदेशबलादिति नेष्यते चेत्—नित्यकर्मानुष्ठानादि च न स्यात् । तथा च स्वधर्मभ्रष्टतया अध्याप्यो न भवेदिति सर्वहानिः स्यात् । किञ्चात्यन्ताप्रवुद्धताऽपि नास्ति ; "अभिजनविद्यासमुदेतं संस्कर्तारमीप्सेत् तस्मात् यदुचितं तदधीयीत" इति ईप्सादिश्रवणात् प्रबोधपूर्वकरुच्यादिसंभवो ज्ञायते । 'स ह द्वादशवर्ष उपेत्य' इति श्वेतकेतोर्गुरूपसदनं दृश्यते । सत्यकामो जाबालो गोत्राद्यज्ञानेऽपि स्वयं हारिद्रुमतमेयायेति च । अतः अनधीतवेदे बाले इदमित्थं कर्तव्यमिति इत्थंतायाः इतिकर्तव्यतायाः प्रबोधो नास्ति, न तु सामान्यज्ञानस्याप्यभावः । अबोध इति वा पाठः। अवगत्वा इदमध्येयमिति ज्ञानमस्त्येवेति। अत ईप्साद्युपपत्तिः ॥

77. **शिष्यस्य ब्राह्मणत्वप्रभृति तव मते यद्वदाचार्यकार्थं**
**शिष्योत्कर्षाय तद्वत् विधिरयमिह नस्तादृगाचार्यधर्मः ।**

**ऋत्विग्धर्मादयो वा कतिकति विहिता यायजूकादिसिद्धचै**
**तस्मात् योग्योपनीतः सनियमकमधीयीत चेत्यैव योज्यम् ॥**

प. "अभिजनविद्यासमुदेतं समाहितं संस्कर्तारमीप्सेत" इत्यादिषु आचार्यनिष्ठगुणोपादानात् तेषां गुणानामाचार्यनिष्ठाध्यापनार्थत्वमेव समुचितमिति यःकश्चित् प्राभाकरशिष्यः प्राह; तं प्रतिवन्द्या प्रतिक्षिपति। शिष्यस्येति। "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यादिषु यथा भवत्पक्षे शिष्यनिष्ठा अपि ब्राह्मणत्वादयो धर्मा आचार्यकार्था, तथा आचार्यनिष्ठा अभिजनविद्यासमुदेतत्वादयः शिष्यनिष्ठाध्ययनार्था इति स्वयमेवाभिधीयताम्; अभिजनविद्यासमुदेतत्वादयो हि शिष्यनिष्ठाध्ययनविधावेव साक्षादन्वितत्वेन श्रूयन्ते, संस्कर्तारमीप्सेदित्यादिना; न पुनः अध्यापनविधौ। उक्तार्थोपपादनाय दृष्टान्तान्तरमप्याह—ऋत्विग्धर्मेति। ऋत्विग्धर्माः यजमानार्थाः, प्रतिग्रहीतृधर्माः प्रदात्रर्थाः इत्यादिकम्। सर्वत्राप्येवमुपपादितमर्थं प्रकृते निगमयति—तस्मादिति। **योग्योपनीतः सनियमकमधीयीत चेतीदम्**, आचार्यधर्मं शिष्यधर्मं च समुच्चित्योभयमप्यध्ययनार्थमित्याह ॥ 77

स. नन्वध्यापनस्य विधेयत्वे तत्र कर्तृतया आचार्यस्यान्वयात् तदङ्गतया अभिजनविद्यासमुदेतत्वादीनामन्वयः स्यात्। अन्यथा तद्विशेषणोपयोगः कथमित्यत्राह **शिष्यस्येति**। त्वन्मते शिष्यस्याऽऽचार्यकार्थत्वे शिष्यगुणानां ब्राह्मणत्वाष्टवर्षत्वादीनां शिष्यद्वारा तदर्थत्ववत् अस्मन्मते गुरुद्वारा अध्ययनसंबन्धात् शिष्योत्कर्षार्थः स्यात् अभिजनविद्यासमुदेतत्वादिराचार्यधर्मः। **कतिकति** बहवः ऋत्विग्धर्मादयः

यायजूकादिसिद्ध्यै यष्ट्रादिगतसमृद्ध्ये विहिताः सन्ति । तस्मात् योग्येन गुरुणोपनीतोऽधीयीत, सनियमकं च यथातथाऽधीयेतेति आचार्ययोग्यताया अप्यध्ययनविध्यन्वयात् अध्ययनाङ्गमेव सर्वम् ॥७७

78. यच्चात्राध्यापयेदित्यभिदधति पदे स्वेष्टसिद्ध्यानुगुण्यं
तच्चोन्नीतं प्रमादाण्णिच इह न किलाकर्तृगामित्वमर्थ्यम् ।
विद्यादानाददृष्टं यदपि निजगदुस्तेन नाचार्यकं स्यात्
चत्वारश्चाश्रमास्तद्विधिमनुसरतां संप्रदानीभवन्ति ॥

प. "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्" इत्यस्मिन् वाक्ये णिच्प्रत्यय-योगात् णिचश्च हेतुकर्तृपरत्वादध्यापकनिष्ठाचार्यकपरत्वमध्ययनविधेरित्यस्मदानुगुण्यमिति प्रामाकैरुक्तम्—तदनुवदति यदिति । अनूदितमर्थं प्रतिक्षिपति तदिति । प्रामादिकत्वमेव विवृणोति—णिच इति । "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्' इत्यत्र णिजन्तं पदंप्रयुज्यते। णिचश्चेत्यात्मनेपदविधाने पूर्वसूत्रोक्तकर्तृगामित्वविवक्षाऽनुवर्तते । तेन कर्तृगामित्व विवक्षायामात्मनेपदं प्रयोज्यम् । प्रयुज्यते च परस्मैपदम् । तस्य चाकर्तृ-गामित्वं निर्णीतम् । तच्चाकर्तृगामित्वम् इह—युष्मत्पक्षे, नार्थ्यं—न युज्यत इत्यर्थः । ननु "त्रीण्याहुरतिदानानि" इत्यादिना विद्यादानाददृष्टमित्युच्यते ; तदेवादृष्टमाचार्यकमित्युच्यते इति पराभिप्रायमनूद्य परिहरति—विद्यादानादिति । विद्यादानाददृष्टमित्यनेन नाचार्यकमुच्यते-तस्य सामान्यविषयत्वात् ; आचार्यकं हि भवद्भिः सनियमोपनयन-पूर्वकसकल्पसरहस्याध्यापनफलमित्यभिधीयते । किंच ब्रह्मचार्यैक

एवाऽऽचार्यकार्थाध्यापनविधौ संप्रदानीभवति ; विद्यादाने तु सम्यगुप-
सन्नाश्चत्वारोऽप्याश्रमा इत्याह–चत्वार इति ॥ 78

स. अध्यापयेदिति परस्मैपदमपि आचार्यकरूपफलकल्पनप्रति-
बन्धकमित्याह **यच्चेति** । अत्र वाक्ये अध्यापयेदिति पदे प्राभाकराः
स्वेष्टसिद्ध्यनुगुणत्वं यत् **अभिदधति** वदन्ति, तत् अनवधानोन्नीतम् ।
**णिचोऽर्थवत्**—णिजन्तपरस्मैपदिधात्वर्थानपेतम् अकर्तृगामित्वम् इह
आचार्यकार्थत्वपक्षे हि न भवति । णिजन्तस्थले कर्तृगामित्वे आत्मने-
पदम्, अन्यथा परस्मैपदमिति व्यवस्थेति भावः । तथाचाध्यापनस्य
आचार्यकफलकत्वाभावात् उपनयनस्याध्यापनद्वारा आचार्यकार्थत्वं न
भवतीत्यर्थः । ननु मा भूत् अध्यापनवाक्यात् तत्सिद्धिः । दानसामान्य-
स्यादृष्टजनकत्वं प्रामाणिकम् । दानेषु च विद्यादानं विशिष्यते । अतः
तज्जन्यमतिशयितादृष्टमेवाचार्यकमुच्यते । तदेव चोपनयनफलमभिप्रेत-
मित्यत्राह **विद्येति** । सत्यमिष्टं तत्रादृष्टम् । परं तत्र 'उपनीय तु यश्शिष्यम्'
इत्युपनयनपूर्वकं ब्रह्मचारिनिरूपितमाचार्यकं यत् तद्रूपम्, ब्रह्मचारिभ्य
इवान्येभ्योऽप्याश्रमिभ्यो विद्यादानात् तेषां सर्वेषां तत्र संप्रदान-
त्वात् । संप्रदानत्वं हि प्रतिग्रहीतृत्वम् । **तद्विधिमनुसरतां** विद्यादान-
विध्यनुसारेण दानप्रवृत्तानां महताम् आश्रमचतुष्टयस्था अपि संप्रदान-
भूताः ; न ब्रह्मचारिमात्रमिति न तत् उपनयनफलमिति भावः ॥७८॥

**79. आचार्याख्यानिवेशे तदितरवदिह स्मृत्युपात्तं निमित्तं**
**सिद्धिर्या चानुषङ्गान्न हि किमपि तदुद्देशतः स्याद्विधानम् ।**

स्नानोत्कर्षः स्मृतेश्चेत्यसदुपनिषदि स्मृत्युपात्तक्रमोक्तेः
श्रौताधीत्योरसाम्यं स्मृतिगतमपि चापोह्य तौल्यार्थ्यमूह्यम् ॥

प. आचार्यकाख्यफलाभावे किं नाम, "उपनीय तु" इत्यादिनाऽध्यापनफलमभिधीयत इत्याशंक्य केवलं श्रोत्रियादिशब्दव्युत्पत्तिवत् आचार्यशब्दव्युत्पत्तिरेवाभिधीयते इत्याह । आचार्येति । अस्त्वाचार्यशब्दनिमित्तोपदेशः प्रधानफलम् । तथाप्यानुषंगिकमाचार्यकाख्यं फलमस्तु इत्याशंक्य परिहरति सिद्धिरिति । न ह्यनुषङ्गसिद्धफलान्तरार्थतया कर्म विधीयते—अवघातादेः स्वेदार्थतया विधानप्रसंगादिति । तथाऽन्यदपि गुरुकुमारिलसिद्धान्तिनोऽभिमतमर्थान्तरं प्रतिक्षिपति स्नानेति । बाधादिति शेषः । यद्यप्यर्थज्ञानपर्यन्तमध्ययनम्, एवमपि तन्न शक्यते; "अधीत्य स्नायात्" इत्यक्षरराशिग्रहणानन्तरं स्नानविधानादिति केनचिच्चोदिते, स्वाध्यायविध्यात्मकश्रुतिः स्मृतिमेव बाधत इति कर्ममीमांसा(सकक्रुता?)क्षेपपरिहारः । स वक्तुं न शक्यते । हेतुमाह—उपनिषदीति । "अधीत्याभिसमावृत्य" इति श्रुत्यैव साक्षादक्षरग्रहणानन्तरं स्नानविधानात् श्रुतिः स्मृतिमेव बाधते, न पुनः श्रुत्युपबृंहितां स्मृतिमपि । कथं तर्हि निर्वाह इत्याशंक्य सर्वानुकूलं निर्वाहमाह श्रौतेति । "स्वाध्यायोऽध्येतव्यः" इति तावत् श्रुतिरर्थज्ञानपर्यन्ताध्ययनविधायिनी । 'अधीत्याभिसमावृत्य' इत्यौपनिषदी श्रुतिरक्षरराशिग्रहणानन्तरं सद्य एव स्नानविधायिनी । तयोरन्यतरबाधे श्रुत्योरसाम्यं कल्पनीयम; औपनिषदश्रुत्यनुकूलस्मृतेश्च बाधः कल्पनीयः । तदुभयमपोह्य अध्ययनविधेरौपनिषदश्रुतेश्च

तौल्यःऽर्थसूत्रम् । तुल्यत्वेन परिग्रहः कर्तव्य इत्यर्थः । तथाच अध्ययनविध्यनुसारे स्नानात् पूर्वमेव मीमांसाश्रवणं कर्तव्यम् । औप-निषदश्रुत्यनुसारे पुनः अक्षरग्रहणानन्तरं सद्य एव स्नानं कृत्वा पश्चान्मीमांसाश्रवणमिति प्रागपि दर्शितमेतत् ॥ 79

स. ननु "उपनीय तु यः शिष्यं वेदमध्यापयेत् द्विजः । सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते" इति उपनयनप्रभृतिकस्याचार्यकृत्यस्या-चार्यकार्थत्वावगमात् उपनयीतेत्यत्राऽऽचार्यकोद्देशेन विधानं युक्तम् । वाक्यात् उपनयनाचार्यकयोः साध्यसाधनभावविषयकबोधस्य साक्षाद-नुत्पत्तावपि आचार्यकसिद्धेरपलापायोगात् तदुद्देशेनोपनयनविधानं कृतमेव भवति। यदिचोपनयनमध्ययनार्थम्, अध्ययनञ्चाक्षरराशिग्रहणमा-त्रार्थम्, तदा अधीत्य स्नायात् इत्युक्तस्य स्नानस्याक्षरग्रहणसमन्तरमेव कार्यतया स्नानोत्कर्षो न स्यात् । स्नानोत्कर्षश्च वक्तव्यः ; अन्यथा मीमांसालोपप्रसंगात्। न च मीमांसनमुपेक्षितुं शक्यते, "यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्। तावुभौ पुरुषौ लोके पंक्तिपावनपावनौ", "अधीत्य वेदान् सांगांस्तु यो विचारमुपेक्षते । सम्प्रयासञ्च विस्मृत्य प्रभ्रष्टः स्यान्न संशयः" इत्यादिस्मृतेस्तस्यावश्यकत्वात् । अधीत्यवेदा-निति ल्यप्स्वारस्यात् अक्षरग्रहणसमन्तरमेव मीमांसनस्य कार्यत्वात्। अत आवश्यकः स्नानोत्कर्षः । आचार्यकोद्देश्यकत्वे तु-सकल्पं सरहस्यञ्चे-त्युक्तसर्वानन्तरमेव तत्सिद्ध्या स्वत एव स्नानोत्कर्षसिद्धिरिति शंकायामाह आचार्येति। 'तमाचार्यं प्रचक्षते' इति वाक्यम् उपनयनादिसर्वकर्तुराचार्य-शब्दवाच्यत्वं ब्रवीति। एवमाचार्याख्यानिवेशनिमित्तं स्यात् उपनयनादि-

कर्तृत्वम्, न तु आचार्यकरूपादृष्टसाधकम्। यथा, 'वेदानां किञ्चिदधीत्य ब्राह्मणः, एकां शाखामधीत्य श्रोत्रियः, साङ्गमधीत्यानूचानः', एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयीत वृत्त्यर्थम्, उपाध्यायः स उच्यते', "गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः। अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते" इत्यादिवाक्योपात्ता धर्माः तत्तदाख्यानिवेशनिमित्तानि, तद्वत्। **सिद्धिरित्यादि**। यदुक्तम्—वाच्यार्थस्यान्यत्वेऽपि आचार्यकस्यार्थसिद्ध्या तदर्थविधिरेवोपनयनस्येति—तदयुक्तम्। अनुषङ्गसिद्धानामर्थानामुद्देश्यत्वाभावेन तदर्थविध्ययोगात्। अतएवाऽऽचार्यकोद्देशेनोपनयनविधानवादिभिः प्राभाकरैः वेदस्य विवक्षितार्थतया अर्थज्ञानसिद्धेरार्थिकत्वेऽपि तदुद्देशेन विधिर्नोच्यते। **स्नानेत्यादि**। यत्तु स्मृतिबलादुत्कर्ष इति— तदप्यसत्। यश्चेति श्लोकस्य अध्वरमीमांसके पंक्तिपावनपावनसमाख्यानिवेशमात्रबोधकत्वात् मीमांसनकालस्य ततोऽसिद्धेः, अधीत्येति श्लोकस्यापि प्रयोजनप्रभ्रष्टत्वपरिहरणमुखेन मीमांसनप्ररोचकमात्रत्वात् अधीत्य स्नायादिति स्मृतिमुपेक्ष्यावसरकल्पनस्य ततोऽसिद्धेः। स्वाध्यायोऽध्येतव्य इत्यत्र विचारवैधत्ववादिभिः श्रुत्या स्मृतिबाध इत्युक्तमपि न सम्यक्। स्मृतिमूलश्रुतेरपि, आचार्यकुलात् वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्येति समावर्तनेऽध्ययनानन्तर्यपरायाः प्रत्यक्षत्वात्। स्मृतिश्रुत्युभयविरोधेन अश्रुते कल्पिते विचारे आनन्तर्यस्वीकारायोगात्। एवंस्थिते विचारस्यावैधत्वपक्षे कथमानन्तर्यप्रसक्तिः। **श्रौतेति**। अपि चेयं स्नानोत्कर्षनिरूपणप्रक्रिया मीमंसकानां न घटते।

किं ते अध्ययनमर्थज्ञानपर्यन्तं मन्यन्ते, उताक्षरराशिग्रहणपर्यन्तम्। आद्ये, अधीत्य समावृत्य, अधीत्य स्नायादिति श्रुतिस्मृत्योरपि सविचाराध्ययनानन्तर्यस्यैव वक्तव्यतया विरोधाभावेनोत्कर्षवार्ता कथम्। अन्त्येऽपि विचारस्यावैधत्वात् स्नानात् पश्चादेव श्रावयितुरिव श्रोतुरप्यवसरलाभेन मीमांसनमिति अविरोध एव। अतोऽस्मद्रीत्यैव पूर्वोत्तरपक्षौ प्रवर्तयितव्यौ। तद् विहाय–अध्येतव्य इत्यत्र विचारपर्यन्ताध्ययनोक्तिः, अधीत्येत्यत्र अक्षरग्रहणमात्रार्थाध्ययनोक्तिरित्यर्थवैषम्यमयुक्तम्। अत एव "अधीत्येत्यधिगम्येति व्याख्याने त्वविरोधिता (92)" इति वार्तिके अर्थान्तरकल्पनमप्ययुक्तम्। श्रौतयोः अध्येतव्यः, अधीत्याभिसमावृत्येति शब्दयोः असाम्यम् अर्थभेदम्, तत्रैकेन सह स्मृतिगतस्य अधीत्येति शब्दस्यासाम्यञ्च विसृज्य सर्वत्रैकरीत्याऽर्थो वर्णनीयः। स च अक्षरराशिग्रहणमात्रार्थाध्ययनरूपः। भवत्प्रदर्शितवाक्येऽपि 'अधीत्य विचारमुपेक्षते' इति श्रवणात् तदसाम्यस्यायोगात्। प्रसिद्धश्च तदधीते तद्वेदेत्यादौ अययनं नाम शब्दग्रहणानुकूलव्यापार एवेतीत्यर्थः। तौल्यार्थ्यम् तुल्यार्थकत्वम्॥ ७९॥

80. **आचार्यायेत्यधीतिं वदसि परमते निर्निमित्तां परस्तात्**
**आचार्यस्येत्यधीतिस्तव किमु सनिमित्तत्वमस्येति पूर्वम्।**
**भाव्येऽर्थे लक्षणां चेत् कथयसि विहतेस्संभवात् सा जघन्या**
**भूते तु ज्यायसीयं तदिह सनियमाध्यापने शब्द एषः॥**

इति जिज्ञासाधिकरणम्

८. आचार्यशब्दस्याऽऽचार्यकसंबन्धार्थत्वं वदतः सनियमकाध्यापन-क्रियासंबन्धमात्रपरत्वे अध्यापनक्रियासंबन्धस्य निवृत्तत्वात् तदानीं "आचार्याय वरो देयः" इत्याचार्यशब्दो निरर्थकः स्यादिति पराभिप्रायमाशंकते आचार्यायेति । प्रतिबन्द्या परिहरति आचार्यस्येति । "आचार्यस्य बाहुमाले स्थित्वा अधीयीत" इत्यत्राऽऽचार्यशब्दः पूर्वम्-अध्ययनकाले भवत्कल्पिताचार्यकस्य भावित्वेन सद्भावाभावात् निर्निमित्तः प्रसज्येतेति तुल्योऽयं प्रसंग इति भावः । इमां प्रतिबन्दीं परिहरतः परस्याभिप्रायमाशंक्य दूषयति भाव्य इति । द्वयी ह्यत्र लक्षणा । भूतार्थ-लक्षणा अस्माकं, भाव्यर्थलक्षणा भवतः । तत्र भूतार्थलक्षणापेक्षया भाव्यर्थ-लक्षणा जघन्या ; भाविनोऽर्थस्य व्याघातसंभवात् । भूतस्य तु भूतत्वादेव व्याघातसंभवाभावात् । तदिदमाह विहतेरिति । इतरत्र ज्यायस्त्वमाह भूत इति । एवं परस्परवैषम्यमुपपाद्य स्वपक्षं निगमयति तदिति ॥ 80

इति निखिल तार्किक चूडामणिभिः नयनाचार्य-
कुमारवेदान्ताचार्यापरनामधेयैः श्रीमल्लक्ष्मणयोगीन्द्र-
सिद्धान्तविजयध्वजश्रीवरदगुरुभिरनुगृहीते मीमांसा-
पादुकापरित्राणे प्रथमसूत्रार्थविचारः समाप्तः ॥

श्रीमते वरदार्यमहादेशिकाय नमः ।
श्रीमते निगमान्तमहादेशिकाय नमः ॥

[एतावदेव परित्राणव्याख्यानमुपलब्धम्]

स. आचार्यपदस्य आचार्यकरूपादृष्टधर्मवानित्यर्थास्वीकारे दोषं प्राभाकरोक्तं परिहरति आचार्ययेति । आचार्याय प्रियं धनमाहृत्य इत्यत्र आचार्यशब्देन अध्यापनकर्तृत्वं न सुग्रहम्, तस्यातीतत्वात्; अदृष्टश्चेत्, तत् वर्तमानं स्यादिति हि प्राभाकरस्त्वं शब्दस्यास्मन्मते प्रवृत्तिनिमित्तं नेति वदसि। आचार्यस्य पादौ वन्दनीयौ, आचार्यस्य बाहुमात्रे स्थित्वा अधीयीत इत्यादौ पूर्वम् अध्ययनात्प्राक् का वार्ता; अदृष्टस्य तदानीमजातत्वात् ॥ अर्थस्य निमित्तस्य भावित्वान्न दोष इति चेत्, त्वदुक्तस्थले भूतत्वान्न दोषः इत्यस्तु । भाविनि लक्षणापेक्षया भूते लक्षणा युक्ता । निष्पन्नतया धर्मस्य, निश्चितत्वात्, भाविनि प्रतिबन्धवशादनिष्पत्तौ भावित्वस्याप्यभावेनानन्वयात् । तथाचाऽऽचार्यशब्दः, 'उपनीय' तु इत्युक्तरीत्या सनियमाध्यापनक्रियाकर्तृपर एव। तस्मादुपनयनमध्ययनाङ्गम् । अध्ययनमक्षरराशिग्रहणार्थम् । स्नानं तु समावर्तनं सकलब्रह्मचारिधर्मनिवृत्तिरूपं समन्तरमेव भवतु । केवलं गुरुसदनस्थितिमात्रेण विचारो भवतु । अनवकाशे, स्नात्वा भार्यामुपेत्य यथावसरं चेति मीमांसा भवत्येवेति ॥ ८० ॥

अथ धर्मलक्षणाधिकरणम् 2.

1-1-2. चोदनालक्षणोऽर्थो धर्मः ॥

81. धर्मश्चोद्दिश्यतेऽर्थात् स्वयमिह मुनिना तद्विचारार्थसूत्रे
लक्ष्मादृष्टेरचिन्त्यभ्रममिह नुदता चोदनासूत्रमूचे ।
तत्र त्वार्थं प्रमाणं तत इह न भवेत् वाक्यभेदप्रवृत्तिः
मानप्राधान्यपक्षान्तरमपि कतिचित् वैभवादाश्रयन्ति ॥

स. एवम् अशीत्या पद्यैः **अथातो धर्मजिज्ञासेति** प्रथमसूत्रं व्याख्यातम् ।

अथाधिकरणं द्वितीयं व्याख्यातुमारभते **धर्म** इति । **मुनिना** जैमिनिना इह मीमांसायां धर्मविचारस्याऽऽरम्भणीयत्वस्थापनार्थं प्रथमसूत्रे अर्थात् धर्म उद्दिश्यते च । अन्यार्थेनापि सूत्रेणेदमपि सिद्धम् । अत उद्देशो लक्षणं परीक्षेति क्रमे उद्देशस्य सिद्धतया लक्षणमारभ्यते । उद्देशो नाम नाम्ना निरूपणीयवस्तुज्ञापनम् । एवं लक्षणप्रतिपादकस्य सूत्रस्याप्यधिकरणरूपत्वात् विषय-विशय-पूर्वोत्तरपक्ष-प्रयोजनरूपाङ्गपञ्चकं वाच्यम् । अत इह पूर्वपक्षस्तावत्-धर्मस्य लक्षणं न शक्यते निरूपयितुम्; बहुभिर्बहुधोक्तेः। अतो लक्ष्मणोऽत्रादर्शनात् धर्मो न चिन्त्य इति। इमं भ्रमं **नुदता** निवारयता मुनिना लक्षणकथनार्थं द्वितीयं सूत्रमुक्तम् । लक्षणञ्च चोदनालक्षणार्थत्वम्—वेदप्रमाणकार्थत्वमिति यावत् । ननु **लक्षण**पदस्य प्रमाणार्थकत्वात् चोदना धर्मे प्रमाणमिति प्रमाणमप्यनेन सूत्रेणोक्तं स्यात्॥ सत्यम्, अथापि एकेन सूत्रेणार्थद्वयविधानस्यायोगात् लक्षणेन स्वरूपकथनं मुख्यम्; अर्थसिद्धं प्रमाणम् । **ततः** स्वरूपप्रमाणोभयविधानाभावात् न वाक्यभेददोषः । केचित्तु प्रमाणकथनार्थमेव सूत्रम्; लक्षणमर्थसिद्धमित्याहुः । तत् **वैभवात्** सूत्रस्य तदर्थपरत्वयोग्यतासत्त्वात् । न च लक्षणमेवार्थसिद्धं स्यादिति विनिगमनाविरहः; प्रमाणज्ञानस्य स्वरूपज्ञानोपजीवित्वात् प्राथम्यात् ॥ ८१ ॥

**८२ कश्चित् पित्रादिकल्पं प्रथयति पुरुषं चोदनाद्यु(नेत्यु?)क्तिरर्थात् वाक्यादेश्चोदकत्वग्रहणमनुचितं शास्त्रसिद्धोज्झनं च ।**

**त्याज्योपादेयवर्गत्यजनभजनविष्युन्मुखाज्ञाभ्यनुज्ञा-**
**किम्मीरो वेदराशिः किमिति न विदितः शासनं विश्वगोप्तुः॥**

स. चोदना(वेद)प्रमाणकत्वरूपलक्षणस्थापनार्थे चोदनाशब्दप्रयोगात् चोदकं पुरुषमन्तरेण चोदनाया असिद्ध्या अर्थसिद्धश्चोदकः। एवं चोदकं गमयितुमेव मुनिना वेदलक्षण इत्यनुक्त्वा चोदनालक्षण इत्युक्तम्। स च चोदकः सर्वशासिता भगवानेव। तदाह **कश्चिदिति**। लौकिकेषु प्रवर्तकवाक्येषु यथा पिता आचार्य इत्यादिः, अयमत्र प्रवर्ततामित्यभिप्रायवान् अस्ति—तथा वेदेऽपि तथाविधाभिप्रायवान् कश्चिदस्तीत्यपि अर्थात् ज्ञाप्यते चोदनेत्युक्तिस्वारस्यात्। यत्तु वेदस्य अपौरुषेयत्वात् प्रवर्तकपुरुषायोगात् वैदिकलिङादेरेव प्रवर्तनाश्रयत्व-मेष्टव्यमिति भाट्टाभिमतम्—तन्नोचितम्, आचार्यचोदित इति शाबरवाक्यरीत्या प्रवर्तनाया आशयविशेषरूपतया शब्दनिष्ठत्वा-योगात्। 'श्रुतिस्मृती ममैवाज्ञा' इत्यादिशास्त्रसिद्धशासितृपुरुषत्यागोऽपि वैदिकस्य दोष एव। तदेव विवृणोति **त्याज्येति**। सुरापानादि-त्याज्यवर्गविषयकत्यजनविधयः निषेधवाक्यानि। यागाद्युपादेयवर्गकर्मक-भजनविधयः प्रसिद्धाः। इमे आज्ञारूपाः। तत्र केचित् काम्यास्तु अभ्यनुज्ञारूपाः। आज्ञाभ्यनुज्ञाशब्दाश्च पुरुषाभिप्रायपराः प्रसिद्धाः। एवं नानृतं वदेदिति निषिद्धस्य, विवाहायानृतं वदेदित्यभ्यनुज्ञानं निषेधापवादरूपमपि द्रष्टव्यम्। ताभिः **किम्मीरः** विचित्रः वेदः सर्वः। अतो वेदाः शासनभूता इति स्पष्टम्। न हि शास्यानामेव शासकत्वम्। अतो जीवातिरिक्तः सः विश्वगोप्तैव॥ ८२॥

**83. नित्यत्वादीश्वराज्ञा न भवति निगमः पौरुषेयोऽन्यथा स्याद्**
**इत्येतत् क्षुद्रहृद्यं नियतनिजगिरा नित्यमाज्ञाप्रवृत्तेः ।**
**तन्त्रन्यायादमन्त्रेष्वपि विविधभिदां विश्वकर्ता विधित्सेत्**
**आचार्यत्वं च वेदेष्वगणि भगवतः कर्तृता चेतरेषु ॥**

**स.** नन्वीश्वरो न वैदिकार्थविधाता, वेदवाक्यविषयकस्वतन्त्र-कर्तृत्वाभावात् । यो यद्वाक्यप्रणेता न भवति, न स तद्वाक्यार्थ-विधाता भवतीति शंकामनूद्य परिहरति **नित्यत्वा**दिति । **अन्यथा** ईश्वराज्ञात्वस्वीकारे । **इत्येतत्** एवमाशंकनं **क्षुद्राणां** समाधाना-समर्थानामेव हृद्यं स्यात् । न तु समर्थानाम् । हेतुमाह **नियते**ति । **नियतया** व्यवस्थितया सर्वकल्पव्यापिन्या अनादिभूतया, अथापि **निजया** स्वकर्तृकत्वाभावेऽपि नियमेन स्वप्रवक्तृकतया निजभूतया गिरा वेदेनाऽऽज्ञाप्रवृत्तिसंभवात् । तथा च पूर्वोक्तो हेतुरप्रयोजकः । यो यद्वाक्यार्थविधाता, स तद्वाक्यस्वतन्त्रकर्तेति व्यतिरेकव्याप्तिरपि न भवति; चेष्टया गुरोराशयं ज्ञात्वा सब्रह्मचारिणा वाक्यप्रयोगेण अन्यस्मिन् इदं कुरु इति नियुज्यमाने विधातृत्वं गुरोः; वाक्यप्रणेतृत्वं तु सब्रह्मचारिण इत्यतो व्याप्तिभंगात् । अतो वेदस्य तत्प्रणीतत्वाभावेपि तदाशयप्रतिपादकत्वं युक्तम्, अर्थान्तरप्रतिपादनवत् । **नियत-निजगिरे**त्यस्य नियतवेदरूपगीर्विशिष्टेन स्वकर्तृकतया निजभूतपाञ्च-रात्रादिगीर्विशिष्टेन च भगवता स्वाज्ञाप्रवर्तनादिति वाऽर्थः ।

ननु वर्णानां तदातदा पुरुषप्रयत्नजन्यतया तत्समुदायरूपस्य वेदादेरप्युत्पद्यमानत्वेऽपि, यथा रघुवंशादीनामस्मदुच्चार्यमाणतया न

पौरुषेयत्वव्यवहारः ; किन्तु कालिदासाद्यादिमोच्चारणविषयतया-तथा वेदस्यादिमोच्चारणविषयता न भवति, ईश्वरेणापि पूर्वकल्पस्थितानुपूर्वी-स्मरणपूर्वमेवोच्चारणादिति हि अपौरुषेयत्वमुच्यते । तन्न ; तत्तत्कल्पे भिन्नानुपूर्वीकशब्दराशेरेव वेदत्वसंभवादिति चेत्-तत्रोत्तरार्धेन समाधिः । धाता यथापूर्वमकल्पयदित्यादिबलात् यथा ब्रह्माण्ड-तद्गतलोकादे-रेकरूपता, तथा तद्धेतुवैदिककर्मकलापस्याप्येकरूपतेति तत्प्रति-पादकानां वेदानामप्येकानुपूर्वीकत्वमेव । न च भिन्नानुपूर्वीतोऽपि तदर्थबोधसंभवात् कुतो नियम इति शंक्यम् —यथापूर्वमित्यादिवचन-बाधे प्रमाणाभावात् —उपस्थितानुपूर्वीत्यागेन अन्यादृशानुपूर्वी-कल्पनश्रमे कारणाभावात् । मन्त्राणां यादृशानुपूर्व्या पूर्वं शक्ति-मत्त्वम्, तदानुपूर्वीभंगे तच्छक्तेरयोगेन तथैव पाठ्यतया तथैव जपपारायणाद्युपयोगिनः कृत्स्नस्य वेदस्यानुपूर्वीभंगायोगात्—यागदान-होमादिविधयः सर्वदा एकरूपसांगप्रधानविषया एव सर्वदा । एवं निषेधविषयाणामप्येकरूपत्वमेव । अव्यवस्थितशासनाभ्युपगमे जग-त्क्षोभप्रसंगात् । अतोऽनुष्ठेययागादितन्त्रन्यायात् तदर्थप्रवृत्तमन्त्रन्यायाच्च अमन्त्रेष्वपि ब्राह्मणवाक्येष्वानुपूर्व्यैक्यमेव । ननु शाखाभेदेन मन्त्रब्राह्मणेषु पाठभेदो दृश्यते । तत्रैक एवेश्वरोपदिष्टः ; अन्ये तु अध्यापकप्रमादायत्ता इति चेन्न—विनिगमनाविरहात् । तत्तदधिकारि-भेदेन विविधां भिदां तत्रेश्वरोऽनादितयैव संकल्पितवानिति सुवच-त्वात् । सर्वोऽयं तृतीयपादार्थः । तन्त्रेति पाठात् तन्त्रम्—अनुष्ठानं कर्मप्रयोगः तस्यैकरूपत्ववत् अमन्त्राणां ब्राह्मणानामप्येकानुपूर्वीकतया

सर्वदा सत्त्वमित्याशयः। **अपिना** मन्त्राणामपि ग्रहणम्। मन्त्रानुपूर्व्यामैक्यस्यावश्यकत्वं **न्यायपरिशुद्धा**वुक्तम्। मन्त्राणां कर्मानुष्ठानोपयोगात् आनुपूर्व्यैक्यमस्तु, अमन्त्राणां न नियम इति शंकावारणाय अमन्त्रेष्विति विशिष्योक्तिः। एतत्स्वारस्यात् **तन्त्रे**त्यत्र मन्त्रेति पाठ उन्नीयते चेत्–अस्तु तदपि। **विविधे**ति पदं शाखाभेदेनानुपूर्वीभेदोपि नित्य इति ज्ञापनाय। गीताविष्णुस्मृत्यादितुल्यत्वं न वेदानामित्याह **आचार्यत्व**मिति। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, अपान्तरतपा नाम वेदाचार्यः स उच्यते इत्येवं श्रुतिस्मृतयः। गीतादिकं तु भगवत्कृतम्। तत्रानुपूर्वीभेदोऽपि युगभेदे स्यादिति ॥ ८३ ॥

**वेदार्थः कार्यरूपस्त्विति जगति मिथः(तः?)कश्चिदाचष्ट धार्ष्ट्यात्**
**विध्युद्देशांशमात्रे तदलमिह यतो वक्ष्यते सिद्धभागः।**
**शक्तिं संरुद्ध्य शाब्दीं श्रुतिमुनिवचसोश्छन्दवृत्तिं निरुद्ध्य**
**व्रीडानाघ्रातचित्तो वितथमिति वदन् वैदिकैरुज्झनीयः ॥ 84.**

प्राभाकरः, चोदनालक्षणोऽर्थ इत्यनेन चोदनापरपर्यायविधिवाक्यगम्यं कार्यमेव वेदार्थ इति ज्ञापनात् कार्यातिरिक्तः सिद्धरूपो न वेदार्थ इत्याह। तत् अनुभवात्यन्तविपरीतत्वात् धार्ष्ट्यादेव। **मिथः**–रहसि; स्वशिष्येण सहान्योन्यं वा। न तु सदसि तथा वक्तुमर्हतीति भावः। **विध्युद्देशांशः** अर्थवादाद्यतिरिक्तविधिभागः। तत्र तथाऽस्तु। सिद्धपरभागोऽपि वक्ष्यते उत्तरमीमांसायाम्; ततः प्रागपि। **शक्ति**मित्यादि। व्यवहाराच्छक्तिग्रहः कार्य एवेति तदुक्तमयुक्तम्,

चालादीनां सिद्धे शक्तिग्रहस्य श्रीभाष्यादौ दर्शितत्वात् तत्संरोधो हि न युक्तः ; तथा सिद्धपरश्रुतीनाम् इतिहासपुराणादीनां जैमिनीयमीमांसाशास्त्रस्य च अर्थप्रतिपादनवृत्तेर्निरोधायोगात् । वादप्रस्थाने स्वपरवाक्यार्थबोधो भवति न वेति विमर्शेच व्रीडितेनैव तेन भाव्यम् । एवं सर्वविद्याप्रलापिनः कार्यभागमात्रग्राहिणः कथं वैदिकत्वमिति ॥ ८४ ॥

85. **यत् कार्यं तद्धि सर्वं निगमविषय इत्येतदव्याप्तिदुःस्थं**
**यो वेदार्थः स कार्यात्मक इति च तथा तत्रतत्रातिचारात् ।**
**उद्देश्यादेर्विभागे बहुरिह विहतिर्दर्शिता वाक्यविद्भिः**
**किंचास्मिन् अर्थशब्दत्यजनभजनयोः स्यादयुक्तिर्विचित्रा ॥**

**स.** अथात्र प्राभाकरव्याख्याने तदभिमता सूत्रवचनव्यक्तिः कीदृशीति विकल्प्य निरस्यति **यदिति** । तैरुक्तं तावत्–चोदनाशब्दस्य प्रवर्तकार्थकत्वात् **चोदनालक्षण** इत्यस्य प्रवर्तकवाक्यप्रमाणक इत्यर्थः । तत्प्रमाणकश्चार्थः कार्य एव । धर्मशब्दस्य वेदार्थ इत्यर्थः । तथाच कार्यरूपोऽर्थो वेदार्थः इत्युक्त्या सिद्धवस्तुपरत्वे वाक्यमप्रमाणमिति । तत्र सूत्रार्थे उद्देश्योपादेयविभागः कथम् । यत् कार्यं स वेदार्थ इति वा, यो वेदार्थः स कार्यरूप इति वा । नाऽऽद्यः। कार्यत्वं यत्रयत्र, तत्रतत्र वेदार्थत्वमिति व्याप्त्यभावात् योजनेयं दुःस्था : गवानयनादिकार्येऽपि कार्यत्वस्यातिचारात् तत्र वेदार्थत्वस्याभावात् । नान्त्यः, यत्रयत्र वेदार्थत्वं तत्रतत्र कार्यत्वमित्यपि तथा व्याप्त्यभावात् दुस्स्थमेव । [स्वर्गादौ औपनिषदपुरुषादौ च वेदार्थत्वस्यातिचारात्, तत्र कार्यत्वस्यायोगात्। **उद्देश्येति**। **वाक्यविद्भिरिति**। पार्थसारथिमिश्रै।

शास्त्रदीपिकायां पूर्वरीत्या दोषो दर्शितः। यो धर्मः स चोदनालक्षण इत्यस्मिन् अर्थप्रकारे शब्दस्य सौत्रस्य कथमन्वयः॥ अर्थशब्दोऽभ्युदयवाची विधेय इति चेत्, तर्हि धर्ममुद्दिश्य चोदनालक्षणत्वमर्थत्वञ्च विधीयत इत्यनेकविधानाद् वाक्यभेदः स्यात्। तथा वेदार्थे श्येने अभ्युदयरूपार्थत्वापत्तिः। यदि योऽर्थभूतो वेदार्थः, स कार्यरूप इत्यर्थः, तदा अनर्थत्वेन त्वदिष्टस्य श्येनादेः कार्यत्वानापत्तिः। न चेष्टापत्तिः। तत्र विधिप्रत्ययसत्त्वात्। अर्थशब्दत्यागे च स एव दोषः। इदं सर्वमाह **किञ्चे**ति। अथ वेदार्थः **चोदनालक्षणः**—कार्यरूप इति एको वाक्यार्थः। श्येनोऽपि कार्यः। अथ अर्थो धर्म इति वाक्यान्तरम्। तेन श्येनादेर्धर्मत्वव्यावृत्तिरिति चेत्–पूर्वसूत्रे प्रतिज्ञातं किम्। तदेकमेवात्र लक्षणीयमिति कथमुभयोक्तिरित्यादिकमपि **शास्त्रदीपिकायामेव** द्रष्टव्यम्। सेश्वरमीमांसायामपि (पु. 35.) **स्यादयुक्तिर्विचित्रे**ति। अनुपपत्तिरनेका स्यादित्यर्थः॥ ८५॥

86. **निष्कृष्टं चोदनार्थं यदि नियमयति स्पष्टमेतन्न पाठ्यं**
**तस्मात् धर्मस्वरूपप्रभृतिकथनतः सार्थकं सूत्रमेतत्।**
**प्रामाण्यं कार्यशेषं प्रथयति यदि तत् ज्ञापितार्थं परस्तात्**
**अप्रामाण्यं तु सिद्धे वदति यदि, तदप्युत्तरत्रोपरोध्यम्॥**

**स. निष्कृष्ट**मिति। प्राभाकरदूषणमेवानुवर्ततेऽत्रापि। अर्थत्वेन निष्कृष्टं चोदनार्थं यदि नियमयति–अर्थ एव धर्मः नानर्थ इति यदि सूत्रार्थः, तदेतत् स्पष्टत्वान्न वक्तव्यम्। यदि चोदनैव कार्ये प्रमाणम्, नान्यदिति सूत्रमिदं वदति, तदपि **परस्तात्**। औत्पत्तिकसूत्रतः ज्ञापि-

तार्थेयं वचनव्यक्तिः ॥ कार्ये एव चोदना प्रमाणम्, न सिद्धे इत्यर्थ इति चेत्-तत् उत्तरत्र शारीरकादौ सिद्धे प्रामाण्यस्वीकरात् निरोधनीयम्। तस्मात् कतिपयार्थस्य बाधितत्वात् कतिपयार्थस्यान्यतः सिद्धत्वाच्च सूत्रस्य धर्मस्वरूपलक्षणकथनपरत्वमेव युक्तम्। प्रमाणद्योतनमर्थात्; तद्विवरणं परस्तादिति। अत्र श्लोके द्वितीयपादभूतः तस्मादित्यादिःचतुर्थ-पादत्वेन पाठ्यः। अथवा एवमेव स्यात् ॥

87. व्याकुर्वन्ति क्रियाप्रेरकमिह वचनं चोदनाद्यु(नेत्यु)क्तिवेद्यं
तस्यानाम्नायसाम्यान्नियतमिदमतिव्यापि धर्मस्य लक्ष्म।
मैवं वेदत्वयोगे सति खलु पुरुषप्रेरकं वाक्यमेतत्
वेदोक्तार्थे तु धर्मे कथय कथमतिव्याप्तिरव्यापनं वा ॥

स. लक्षणपरत्वे दोषमाशंक्य परिहरति व्याकुर्वन्तीति। चोदनेति क्रियायाः प्रवर्तकं वाक्यमाहुरिति शाबरम्। एवं प्रवर्तकवाक्यस्य चोद-नेति शब्दार्थत्वे गामानयेत्यादेरपि तथात्वादतिव्याप्तिः स्यादिति शंका। परिहरति मैवमिति। वेदत्वे सति प्रवर्तकवाक्यत्वं चोदनात्व-मिति तदाशयः। अतो नातिव्याप्तिः। नन्वेवं ब्रह्मणि धर्मत्वेनेष्टे लक्षणं न स्यादित्यत्राह वेदोक्तेति। प्रवर्तकत्वमविवक्षितम्। वेदबोधितेष्ट-साधनताकत्वमेव लक्षणम्। अतो नातिव्याप्तिः। स्मार्तधर्मेष्वपि नाव्याप्तिः; तेषामपि अर्थवादादिवेदगमितत्वात्। चोदनेति प्रयोगस्तु सिद्धो-पायोऽपि परमात्मा प्रवर्तकवाक्यज्ञापितसाध्यधर्मसापेक्ष एवेष्टसाधनं भवति; अर्थवादादिगम्यधर्मविषयेऽपि प्रवर्तकवाक्यकल्पनेन विधि-रेष्टव्यः इति ज्ञापनायेति न दोषः ॥ ८७ ॥

**88, यश्चाहिंसादिधर्मः श्रुतिभिरभिहितः सोऽपि ताभिः प्रतीतः**
**स्यात् धर्मो बाह्यतन्त्रैस्तदवगतिरवस्थाप्यते निष्फलेति ।**
**स्वाध्यायाधीतिसिद्धग्रहणफलधिया धर्मसिद्धिर्नियम्या**
**तस्मात् बौद्धागमाद्यैरिह तदवगतिर्गोपनिर्मन्थ्यवत् स्यात् ॥**

स. ननु अहिंसासत्यवदनादिकं बौद्धाद्युक्तमपि धर्म एव; तत् कथं वेदेति विशेषणमित्याशंकां परिहरति **यश्चेति** । यागाद्यनंगीकारिभिः बौद्धादिभिरंगीकृत एवाहिंसादिः वेदैरपि ततः प्रागेवाभिहितोऽस्ति । तस्य वेदप्रतीतत्वेनानुष्ठाने धर्मत्वम् । बौद्धादितन्त्राधीनं तज्ज्ञानं तु निष्फलम् । तज्ज्ञानाधीनमहिंसाद्यनुष्ठानं तु न फलाय । **धर्मसिद्धिः** धर्मस्य फलजनकता, स्वाध्यायाध्ययनसिद्धं यत् धर्मग्रहणं तत्फलभूतमिदमनुष्ठानमिति ज्ञानेन **नियम्या** व्याप्या । वेदजन्यज्ञानफलमेतदनुष्ठानमिति ज्ञानाभावे बौद्धोक्तत्वज्ञानाधीनत्वे सति तस्य फलजनकता न भवति । बौद्धोक्ततया तदनुष्ठानं गोपकृतो **निर्मन्थ्य** इव मथिताग्निरिव न कार्यकरम् । निर्मन्थ्यशब्दस्य तक्रपरत्वे यथा गोपात् दध्यादिग्रहणेऽपि तक्रं न गृह्यते, तथा बौद्धाद्धर्मो न गृह्यत इत्यर्थः । निमन्थ्येनेष्टकाः पचन्तीति वाक्यमादाय प्रथमचतुर्थे विचारितम् । निर्मन्थ्यशब्दो न वैदिकसंस्कारविशिष्टाग्निपरः, न वा जातिविशेषपरः । किं तु निर्मथनार्हत्वरूपयोगार्थपर इति । नन्वहिंसा-सत्यवदनादीनां वेदाधिकार्यनधिकारिसर्वजनसाधारणत्वात् संकल्पपूर्वकानुष्ठानाभावाच्च वेदाध्ययनजन्यज्ञानस्यानपेक्षिततया कथं तद्ग्रहणफलधीनियम्यत्वमुच्यते ॥ उच्यते । धर्मत्वं हि श्रेयस्साध-

नत्वम् । सत्यवदनादीनामनुष्ठानं लौकिकफलहेतुत्वमात्रेण चेत्—तस्य तदेव फलम् । तत्र शास्त्रं न प्रमाणम् । धर्मबुद्ध्या तदनुष्ठाने तु इदमलौकिकश्रेयस्साधनमिति ज्ञानमपेक्षितम् । बुद्धादयश्चोपदेशकाः वेददूषकाः केन प्रमाणेन प्रत्यक्षानुमानाग्राह्यं श्रेयस्साधनत्वमवधारयेयुः ? अनवाधार्योपदेशे च कथं श्रेयस्साधनत्वग्रहस्ततो भवेत् । न हि लौकिकफलसाधनत्वं धर्मत्वम् । सर्वेषां वेदाध्ययनाभावेऽपि अध्येतृ-पुरुषोपदेशपरम्पराधीनत्वात् धर्मबुद्ध्याऽनुष्ठानस्य वेदाधीनज्ञानं प्रति तस्य फलत्वमक्षतम् । यागादाविवालौकिकक्रियाजटिलत्वाभावान्नात्र साक्षादध्ययनापेक्षा । बौद्धमूलं श्रेयस्साधनत्वज्ञानं तु श्रद्धामूलकमपि भ्रमात्मकमेवेति ॥ ८८ ॥

89. धर्मोऽधर्मश्च लक्ष्यौ समुपनिपततश्चोदनालक्षणोक्त्या
तत्राधर्माद्विभागं प्रकटयितुमसावर्थशब्दः प्रयुक्तः ।
अर्थ्यत्वाद(दा)र्यभावादभिमतफलनिष्पादकत्वाच्च तस्मिन्
अर्थत्वं भाति केचिद्विदुरभिचरणा(ण?)क्षेपकं त्वर्थशब्दम् ॥

स. सूत्रे अर्थशब्दप्रयोजनं स्वाभिमतं पराभिमतञ्च क्रमेणाऽऽह धर्म इति । **चोदनालक्षण** इत्यस्य वेदप्रमाणक इत्येवार्थः । अधर्मेऽपि वेदप्रमाणकत्वसत्त्वात् धर्मलक्षणातिव्याप्तिः स्यात् । ननु चोदना-शब्दस्य प्रवर्तकवाक्यमात्रार्थकत्वात् निवर्तकवाक्यप्रमाणके अधर्मे कथं लक्षणमिति न शक्यम् ; निवर्तकवाक्यस्यापि निषेधविधिरूपतया प्रवर्तकपदस्य विधिप्रर्यायतया प्रवृत्तिनिवृत्तिरूपद्विविधपुरुषयत्नार्थक-वाक्यद्वयस्यापि प्रवर्तकवाक्यत्वात् । वस्तुतश्चोदनापदं सामान्यतो

वेदार्थकमित्यस्य प्रागुक्तत्वाच्च । इदम् अर्थपदमपि तत्र गमकम् । अतः अधर्मव्यावर्तनाय अर्थपदम् । अर्थशब्दार्थः अर्थ्यते अपेक्ष्यते, न तु द्विष्यत इति । यद्वा भगवद्गुणदर्पणे तत्त्वटीकायाञ्चोक्तरीत्या अर्यते प्राप्यत इति । अधर्मस्याप्राप्यत्वाद् वारणम् । ऋ गताविति धातोः थन्प्रत्ययः । यद्वा अर्थ्यत्वम् अपेक्षणार्हत्वम्---अभिमतफल-निष्पादकत्वम् । अधर्मस्तु अनभिमतफलहेतुः । अर्थशब्द-चोदनालक्षण-शब्दयोरथैकीकरणेन वेदबोधिताभिमतफलसाधनताकत्वमिति लक्षण-सिद्धिः । एतदर्थमेव तृतीयार्थस्वीकारः । प्राभाकरमतमाह केचिदिति । **अभिचरणक्षेपकम्** । अभिचारार्थश्येनयागव्यावर्तकम् । तस्य विहितत्वेऽपि धर्मत्वं नास्तीति तेषामाशयः ॥ ८९ ॥

**90. न भ्रातृव्यस्य हिंसा मरणमभिमतं मारणं श्येनपूर्वं**
**तच्चा(न्ना?) भीष्टाभ्युपायःश्रुतिविहित इति क्वार्थशब्दोऽत्र सार्थः।**
**सत्यं हिंसा पशूनां सुहिततमभत:(ता?)सा चिकित्सोपमा स्यात्**
**नैवं शत्रोः अतस्तद्धनननिरसने सार्थको ह्यर्थशब्दः ॥**

स. प्राभाकरोक्तमनुपपन्नमित्याक्षिप्य कथमपि तन्निर्वहति **नेति** । पूर्वार्धम् अर्थशब्दप्रयोजनं तदुक्तं न घटत इति पूर्वपक्षपरम् । उत्तरार्धे समाधिः । श्येनेनाभिचरन् यजेतेति वाक्येन श्येनाख्यः कश्चिद्यागः अभिचारोद्देशेन विधीयते । तत्राभिचारवारणार्थं वा श्येनवारणार्थ वा अर्थपदमिति विचार्यम् । अभिचारो नाम भ्रातृव्यस्य शत्रोर्हिंसा । अभिचारो हिंसा वा मरणं न भवति । तथासति अभिचरन् इत्यस्य म्रियमाण इत्यर्थः स्यात् । स्वमरणमेव यागफलमापतेत् । न हिंसादि-

दित्यस्य न म्रियेतेत्यर्थः स्यात्। सर्वा भूतानीति च नान्वियात्। अतो मारणमेवाभिचारो हिंसा च। तत् श्येनपूर्वं श्येनाधीनम्। न तु श्येन एव। तस्मात् फलत्वात् वेदचोदनालक्षणत्वं—विहितत्वं तत्र नास्तीति तत् इष्टोपायभूतं श्रुतिविहितं न भवतीति अतिव्याप्त्यभावात् न तद्वारणेनार्थशब्दः सार्थः। न च श्येनयागवारणं कर्तव्यम्। तस्य हिंसात्वाभावात्; श्रुतिविहिततया च धर्मत्वस्वीकारसंभवादिति। सर्वमंगीकृत्यैव कथञ्चित् समाधिमाह सत्यमिति। अग्नीषोमीयं पशुमालभेतेत्येवं विहिता या हिंसा पशूनाम्, सा मरणानुकूलव्यापारभूताऽपि सुहिततमतमा। अत्यन्तहितत्वेन शास्त्राभिमता। 'न वा उ एतन्म्रियसे' इति मन्त्रेण तदावेदनात्। सर्वस्वारो नाम यागः स्वमरणार्थो विहितः श्रुतौ। शरभङ्गादेः स्वयं मरणं स्मृतम्; पत्यनुमरणञ्च पत्न्याः। तत्र सर्वत्र विहितत्वात् हिततमत्वम्। तद्वदेवेहापीति। श्रीभाष्यानुसारेण पक्षान्तरमाह सेति। मरणानुकूलव्यापारो न हिंसा; किं तु वेदनाजनकव्यापारो हिंसा, पितृहा मातृहेत्येवमुपक्रोशकारिण्यपि हनधातुप्रयोगात् तत्साम्यात्। एवंसति चिकित्सायां हिंसात्व रावणा अधिकसुखोदर्कभिन्नो वेदनाजनकव्यापार एव हिंसेति वक्तव्यम्। पशुमारणस्य च विहितस्यैतत्पक्षे न हिंसात्वम् अधिकसुखोदर्कत्वात्। यथा तत्र विहितस्थले, तथा श्येनजन्याभिचारे विहितत्वं सुहिततमत्वं चिकित्सोपमत्वं नास्तीति अभिचरतः पापसंभवात् परम्परया पापहेतोः श्येनस्य ज्योतिष्टोमादिवत् अतामसधर्मत्वं न भवति। अतः अभिचारादिप्रवृत्तिवारणमनीषयाऽर्थपदप्रयोग

इति कथञ्चिन्निर्वाह इति भावः । शाबरभाष्यस्यैवं निर्वाहः कार्यः इत्याशयेनैवमुक्तम् । तथा च सद्धर्मविवेचनं कृतं भवतीति । शेषं सेश्वरमीमांसायाम् ॥ ९० ॥ इति धर्मलक्षणाधिकरणम् २.

अथ निमित्तपरीक्षणचिन्ताधिकरणम् ३.

**1-1-3. तस्य निमित्तपरीष्टिः**

**91. धर्मे वेदः प्रमाणं तदितरदपि वा नोभयं वोभयं वे-त्येवं सन्देहडोलाविहरणविहितानेकदिक्प्रसक्तान् (सुधीन् १) । जिज्ञासून् वेद एवेत्यवधृतिनियतावस्थितीन् कल्पयिष्यन् चक्रे सूत्रं तृतीयं चटुलमतिदशावारणारम्भणार्थम् ॥**

**स.** अथ तृतीयाधिकरणम् । प्रथमेऽध्याये धर्मप्रमाणपरीक्षा क्रियते । अथ द्वितीयादिभिरध्यायैः मानाधीना मेयसिद्धिरिति क्रमात् धर्मस्वरूपादिनिरूपणम् । अधीतवेदस्याऽऽस्तिकस्य वेदार्थविचारे प्रवृत्तस्य वेदप्रामाण्ये संदेहाभावात् किमिति प्रमाणपरीक्षा । अतो द्वितीयाद्यध्यायविवक्षितार्थनिरूपणमेव कार्यमिति कश्चिन्मन्येत । तं प्रतिबोधयितुं प्रमाणपरीक्षापि कर्तव्यैवेति जैमिनिरत्र प्रतिजानीते । तदाह **धर्म** इति । धर्मे वेदः प्रमाणम्, तथाऽनुमानादिकमपि प्रमाणम्, अत एव शैवबौद्धाद्यागमाविर्भाव इति केचित् । उभयमपि न प्रमाणम्; तादृशो धर्म एव नास्तीति चार्वाकाः । **उभयं वे**ति । यत् वेदोक्तं युक्तेरप्यनुरूपं भवति, स एव धर्म इति उभयं समुच्चित्य प्रमाणमिति पक्षान्तरम् । वेदप्रमाणके धर्मेऽनुमानादेः प्रमाणत्वं नास्ति, अप्राप्ते हि शास्त्रप्रवृत्तिरिति न; प्रमाणसंप्लवसंभवात् । यथा एकमेव

वस्तु प्रत्यक्षानुमानाप्तवाक्यैरवगम्यते, तथेत्यन्यः पक्षो वा उभयंवेत्यस्यार्थः । एवं संदेहरूपां विचित्रडोलामधिरुह्य विहरणात् दिग्द्वयाधिकदिक्का प्रसृप्तिः सञ्चारः विहिता यैस्तान् तत्त्वज्ञानेच्छून् पुरुषान् वेद एव प्रमाणमित्यवधारणं कृत्वा तदेकस्थितान् करिष्यति समनन्तरमधिकरणमारभ्य । एवं करिष्यमाणं यत् चञ्चलमतिवारणम् तदारम्भणरूपार्थप्रतिपादकं सूत्रमिदं चक्रे । अनेन—प्रमाणविषये विवादो नास्ति, अत एव धर्मस्वरूपमपि सिद्धम् ; अवान्तरभेदादिकमेव निर्धार्यम्—इति मतिरपाक्रियते विवादसद्भावप्रदर्शनेन ॥ ९१ ॥

92. अत्रायोगान्ययोगौ प्रशमयितुमियं चोदनामानतोक्तिः
सत्सूत्रादौ स्फुटं तत् समसनविषयक्षेपणीयक्रमेण ।
अध्यायस्थाप्यसिद्ध्यै प्रथममभिदधे तन्निमित्ते परीष्टिः
कर्तव्या नेति वा स्यादिह विनिगमना सूत्रकृत्काकुभेदात् ॥

स. एतत्सूत्रार्थं द्वेधा दर्शयति । चोदनासूत्रे धर्मलक्षणकथनार्थं प्रवृत्ते अर्थात् व्यवच्छेदद्वयं स्थितं समासभेदेन । तत्र चोदनैव प्रमाणं यस्येति समसनेन चोदनामानत्वोक्तौ अन्ययोगव्यवच्छेदः सिद्ध्यति । चोदना लक्षणमेव प्रमाणमेव यस्येति समासे चोदनायां प्रामाण्यायोगव्यवच्छेदः । एवं समासविषयेण शब्देन क्षेपणीयौ यथाक्रममन्ययोगः अयोगश्च । तत्क्रमेण तत् प्रशमनं स्फुटं सत्सूत्रे सत्संप्रयोगे इति चतुर्थसूत्रे, औत्पत्तिकसूत्रादौ च । चोदनान्यस्य हि प्रामाण्यं क्षिप्यतेऽनन्तरसूत्रे, अनन्तरञ्च चोदनाप्रामाण्यं स्थाप्यत इति । एवमेतदेकाध्यायस्थाप्यार्थसिद्धये इदं सूत्रं ततः पूर्वमन्यत्रेवाभिहितम् । अत्र सूत्रे तस्य धर्मस्य

निमित्ते प्रमाणे **परीष्टिः** परीक्षा कर्तव्येत्यर्थो वा, न कर्तव्येत्यर्थो वेत्यत्र विनिगमकं सूत्रगतस्वरविशेष एवेत्यर्थः । अभ्यनुज्ञास्वरपक्षे परीक्षा कार्येत्युक्तं भवति; प्रश्नस्वरस्वीकारे च न कर्तव्येत्युक्तं भवति । स्वरनिर्णयश्च तर्कसहकृतसंप्रदायावगम्यः ॥ ९२ ॥

**93. मानं धर्मे न चिन्त्यं दुरपलपतयेत्युत्थितस्याऽऽस्तिकस्य**
**प्रज्ञाचोरप्रसूतभ्रमपरिहृतये चिन्त्यमित्युत्तरं स्यात् ।**
**चिन्त्ये याऽस्मिन् प्रयुक्ते प्रथनकथनतस्तत्परीष्टिर्निषेध्या**
**छेकोक्तिः साऽपि यस्मादकरणमिषतस्तत्परीष्टिं करोति ॥**

स. अभ्यनुज्ञास्वरमादृत्याऽऽह **मान**मिति । अत्र पूर्वपक्षी आस्तिको धर्मजिज्ञासुः, वेदप्रामाण्यस्यापलपितुमशक्यतया धर्ममानविषयविचारो न कार्य इत्याह । धर्मविचारकस्तु सूत्रकारः मानं चिन्त्यम्, वेदः प्रमाणमिति या प्रज्ञा, कूटयुक्त्या तदपहारिभिः कैश्चित् भ्रमोत्पादनस्य संभावितत्वात् । तद्भ्रमानुत्पादनायाऽऽदौ प्रमाणविचारः कार्य इति । एवं द्वितीयसूत्रेण **प्रयुक्ते** निर्दिष्टे **अस्मिन्** चोदनारूपमाने **चिन्त्ये** विचार्ये सति, **प्रथनकथनतः** सर्वप्रसिद्धत्वोक्त्या, या **परीष्टिः** परीक्षा **निषेध्या** काकुस्वरेण, तन्निमित्तपरीष्टिर्न कार्येति, **तत्परीष्टिं** तां परीक्षां यतः अकरणव्याजेनोपरि करोति, अतः **साऽपि** न कार्येत्युक्तिरपि **छेकोक्तिः** अन्तस्तदभिप्रायं विनाऽन्यारूढोक्तिः प्रामाण्यज्ञानदार्ढ्यकल्पनाभिप्रायेणेति । **या** इत्यस्य **तत्परीष्टिं**मित्येतत् प्रतिसंबन्धि, न तु **से**ति ॥ ९३ ॥

94. सामान्यान्न प्रमाणं क्षममपलपितुं स्वोक्तिबाधादिदोषात्
तत्सिद्धिश्च प्रमाणात् स्वपरघटनतो नानवस्थाद्यतः स्यात् ।
धर्मे मानं तु चिन्त्यं प्रथितमपि बहिर्वादसंक्षोभशान्त्यै
नो चेन्नास्तिक्यनिष्ठैः प्रमितिपथजुषामत्र पार्ष्णिग्रहः स्यात् ॥

स. सूत्रेऽत्र तस्येति पदस्य प्रयोजनमाह सामान्यादिति । तस्येति पदं विना निमित्तपरीष्टिरित्येतावदुक्तौ प्रमाणमेव लोकेऽस्ति न वेति सामान्यतः परीक्षा स्यात् । सा न युक्ता । प्रमाणं नेति पूर्वपक्षिवाक्यस्य तेन प्रामाण्याभ्युपगमे सामान्येन निषेधायोगात् । अनभ्युपगमे पूर्वपक्षानुत्थानात् । ननु कस्यचित् प्रामाण्यं प्रकारान्तरेण साधनीयम्, तस्य प्रामाण्यं तदन्येन प्रमाणेनेत्यनवस्था ; द्वितीयस्य प्रामाण्यं प्रथमेन साध्यते चेत्, अन्योन्याश्रय इति चेत्——नानवस्थादि । प्रमाणस्य स्वपरनिर्वाहकस्य कस्यचित् संभवात् । अतः सामान्येन प्रामाण्यपरीक्षाया अनवसर इति धर्मस्य निमित्तमेव परीक्षितुं तस्येत्युक्तम् । सत्यपि वेदप्रामाण्यनिश्चये स्थूणानिखनन्यायेन स्थापनं सम्यक् । नो चेत्, निश्चयेनोपरिविचारं प्रति गच्छतां प्रामाणिकानां पार्ष्णिं पादपश्चाद्भागं गृह्णन् उपरि सञ्चारं नास्तिको निरुन्ध्यात् ॥९४

95. वेदो धर्मे निमित्तं स्वयमपि भविता तद्विधानात् तथाऽपि
प्रामाण्यं हि प्रसाध्यं प्रथमसमुदिते लक्षणे पादभेदैः ।
तस्माद्धर्मप्रक्षायां करणमिति धिया तन्निमित्तत्वमुक्तं
भक्त्या चोक्तिः प्रशस्ति प्रथयति महतीं मुख्यभावानुरूपाम् ॥

स. सूत्रे निमित्तपदार्थं विचारयति वेद इति। ननु निमित्तपदं कारणार्थकम्। तस्य धर्मस्य निमित्तं कारणं वेदो न भवति, अनुष्ठातुरेव तदुत्पादकत्वादिति न शंक्यम्। वेदोऽपि निमित्तं भविष्यति। वेदजन्यधर्मज्ञानपूर्वकमेवानुष्ठानात् वेदजन्य ज्ञान जन्येच्छा-जन्यकृतिजन्यतया वेदनिमित्तकत्वात्। एवं सुवचत्वेऽपि प्रकृते शास्त्रयोनित्वादित्यत्र योनिशब्दवत् निमित्तपदं प्रमाणपरम्। प्रामाण्यं हि प्रकृते साधनीयम् प्रथमसमुदिते प्रथमंनिर्मितेऽस्मिन् लक्षणे अध्याये चतुर्भिरपि पादैः विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेष-सामर्थ्यानाम्। तस्मात् तस्यनिमित्तमित्यस्य तत्प्रमाकरणमित्यर्थः इति मत्वा तथोक्तिः भक्त्याचोक्तिः लाक्षणिकः प्रयोगः प्राशस्त्यं प्रथयति। वेद एव धर्ममूलम्, एतदभावे किं स्यादिति प्रशस्तिः सिद्ध्यतीति। परीष्टिपदमवशिष्यते। तदर्थः सेश्वरमीमांसायां द्रष्टव्यः॥ ९५॥

अथ धर्मस्य प्रत्यक्षादिप्रमाणकत्वाभावाधिकरणम् 4

**1-1-4. सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्॥**

**96. धर्मस्तत्तत्क्रियादि श्रुतमिदमिह खल्वस्मदाद्यक्षवेद्यं**
**तस्माच्छास्त्रैकमानः स कथमिति यदि स्थूलमेतच्छलत्वात्।**
**धर्माख्यानं क्रियादौ धृतिजनकतया सा च नाध्यक्षवेद्या**
**दुर्दर्शार्थोपदेशान्निगमसफलता तेन सत्सूत्रसाध्या॥**

स. **अथ चतुर्थाधिकरणम्।** अत्र वेद एव प्रमाणं धर्मे, न प्रत्यक्षादि इति प्रथमावधारणनिरूपणम्। तदर्थं प्रत्यक्षं कियदंशग्राहीति

तत्स्वरूपं प्रदर्श्यते । अनुमानादेः प्रत्यक्षोपजीवित्वात् अत्यन्तातीन्द्रियविषये न प्रवृत्तिरित्यप्यत एव सेत्स्यति । आदौ एतदधिकरणपूर्वपक्षमनूद्य निरस्यति धर्म इति । द्रव्यक्रियागुणादीनां धर्मत्वं मीमांसकैरुक्तम्, न तु तार्किकवत् अदृष्टस्य । क्रिया च दानहोमादिः । गुणफलसंबन्धविधौ दध्नेन्द्रियकामस्य जुहुयादित्यादौ दध्यादि द्रव्यं धर्मः, 'यः कामयेत वर्षुकः पर्जन्यः स्यादिति, नीचैः सदो मिनुयात्' इत्यादौ सदोगतनीचैस्त्वादिगुणः । तथा च श्रुतिसिद्धं तत्तत्क्रियाद्येव धर्मः । इदञ्चेहास्माकमिन्द्रियदृश्यमेव । तस्मात् वेदैकप्रमाणकत्वं कथमस्येति चेत्— इदमापातवचनम् । छलत्वात् । येनाकारेण तस्य धर्मपदवाच्यत्वम्, तेनाकारेण तन्न प्रत्यक्षग्राह्यम् । क्रियात्वद्रव्यत्वाद्याकारतः किल प्रत्यक्षता । न हि तावता धर्मत्वेन व्यवहारः, सर्वैरपि तथाव्यवहारप्रसंगात् । फलसाधनत्वाकारेण तु धर्मता । फलञ्च धृतिशब्देनोच्यते धृतिः प्रीतिरिति । क्रियादौ धर्म इति व्यवहारः तज्जनकत्वात् । न हि फलस्यैहिकामुष्मिकरूपस्य दानादेश्च जन्यजनकभावोऽस्मदक्षवेद्योऽस्ति । अतोऽन्याभिप्रायेणाप्रत्यक्षत्वे कथ्यमाने अभिप्रायान्तरकल्पनया दूषणाच्छलमेतत् । स्वरूपेण प्रत्यक्षितेऽपि क्रियादौ फलसाधनत्वरूपाप्रत्यक्षाकारोपदेशात् वेदस्य न नैष्फल्यम् । इदं सत्संप्रयोगे इत्यादिसूत्रेण प्रत्यक्षग्राह्यविवेचनमुखेन साध्यते ॥ ९६ ॥

**97. धर्मे[ऽ] प्रत्यक्षतोक्तिर्भवति च सुगमा सिद्धसाध्यानुवृत्त्या**
**सत्सूत्रं साध्यमात्रप्रवणमिति च ते कल्पना निष्प्रमाणा ।**

**ज्ञानं तस्योपदेशस्त्विति च समिदं द्विप्रकारेऽपि धर्मे**
**सर्वं तात्पर्यवृत्त्या सुघटितमिह नः पश्यतां वृत्तिकारम् ॥**

**स. धर्म** इति । धर्मस्य प्रत्यक्षत्वात् वेदगम्यत्वं नास्तीत्याशंक्य आकारान्तरेणाप्रत्यक्षत्वकथनात् ईश्वरस्य धर्मत्वं न सूत्रकारेष्टमिति ज्ञायते । न हीश्वरः प्रत्यक्षः । अतः सत्सूत्रं साध्यमात्रधर्मत्वसाधकमिति ते कल्पना निष्प्रमाणा । यतः धर्मस्याप्रत्यक्षतोक्तिः सिद्धान्तिकृता सिद्धसाध्यरूपद्विविधधर्मानुवृत्ता । प्रत्यक्षत्वशंका तु कतिपयधर्ममात्रेऽपि भवितुमर्हति । तावताऽपि वेद एव प्रमाणमित्यवधारणभंगात् पूर्वपक्षोपपत्तेः । श्लोके अप्रत्यक्षतोक्तेरिति पदच्छेदः । अथवा प्रत्यक्षतोक्तेरित्येव छिद्यताम् । क्रियादेरिव साध्यस्य, सिद्धस्यापि, रामो विग्रहवान् धर्मः,' कृष्णं धर्मं सनातनम्' इत्युक्तस्येश्वरस्यावतीर्णस्य प्रत्यक्षग्राह्यत्वात् कथमवधारणमिति शंकनसामञ्जस्यात् । अनन्तरसूत्रे, तस्य ज्ञानमुपदेश इति यत् धर्मस्य शास्त्रैकगम्यत्वमुच्यते, तत् सिद्धसाध्योभयसाधारणं हि । तत्रत्योपदेशपदेन हि क्रियादिप्रेरकवाक्यमिव तत्त्वोपदेशकवाक्यमपि स्वरसतो गृह्यते । अत एव चोदनापदमपि सामान्यतो वेदपरम् । न प्रवर्तकवाक्यमात्रपरम् । धर्मपदस्य वेदार्थ इति सामान्यतोऽर्थवर्णनस्य वृत्तिकारेष्टत्वात् । अत एव 'चोदनेति क्रियायाः प्रवर्तकं वाक्यमाहुः' इति शब्दव्युत्पत्तिदर्शिनाऽपि शबरस्वामिना प्रकृते वेदसामान्यस्य ग्राह्यत्वमभिसंधाय, "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुम्" इति विवृतम् । विधिवाक्यमात्रार्थकत्वे तस्य प्रवृत्तिसाध्यमात्रपरतया

भूतादिपरत्वोक्तचयोगात् तस्मात् वृत्तिकारादिकं पश्यतां नः **सर्वं** क्वचित् साध्यमात्रविषयकवाक्यरचनम् तात्पर्यवृत्त्या सुघटितम् । जैमिनिना सिद्धधर्मस्य ब्रह्मणो विशिष्यानिरूपणमवश्यापेक्षितत्वाभावात् स्वगुरुबादरायणोक्तिप्रतीक्षया चेति प्रागेवोक्तमिति ॥ ९७ ॥

98. **धर्मं जिज्ञासमाने भवभृति करणायत्तबोधे प्रसिद्धे**
**तस्याध्यक्षः स नेति प्रथयितुमुदितं लौकिकाध्यक्षलक्ष्म ।**
**नो चेत्पश्यत्यचक्षुःप्रभृतिबहुविधश्रुत्यनीकावमर्दैः**
**लुण्टाकी हन्त लोकायतगतिरघृणा रुध्यतां चोदनाभ्यः॥**

स. ननु प्रत्यक्षस्वरूपं वदन् सूत्रकारः इन्द्रियसंप्रयोगजन्यं ज्ञानं प्रत्यक्षमिति न्यरूपयत् । तेन नित्यं प्रत्यक्षं किञ्चिन्नास्तीति ज्ञायते । अन्यथा लक्षणाव्याप्तिप्रसंगात् । ईश्वरस्तु, 'यो वेत्ति युगपत् सर्वं प्रत्यक्षेण तदा स्वतः' इति नित्यप्रत्यक्षाश्रय एव भवतामिष्टः । अतः सोऽपि न जैमिनीष्ट इत्यवगम्यत इत्याशंकां परिहरति **धर्म**मिति । धर्मं जिज्ञासमानस्तावदत्र नेश्वरः । किं तु जीवोऽस्मदादिः । अस्य च बोधः करणायत्त एव; न नित्यः । आक्षेपश्चेह धर्मस्य क्रियादिरूपस्यास्मत्प्रत्यक्ष-गोचरत्वान्न चोदनैकगम्यत्वमित्येव । न त्वीश्वरप्रत्यक्षविषयत्वमादाय । अतोऽस्मत्प्रत्यक्षाविषयत्वोपपादनायास्मत्प्रत्यक्षरूपप्रत्यक्षविशेषनिरूपण-मेवात्र प्रसक्तं निरूपितम् । **नो चेत्**—इदमसदुक्तं निर्वाहमुपेक्ष्य जैमिनेर्निरीश्वरत्ववादं परिकल्प्य स्वयं निरीश्वरो बुभूषति चेत्-सेयं लोका-यतगतिः वेदप्रामाण्यस्वीकारिभवन्निष्ठा, **अघृणा** जुगुप्सारहिता 'पश्य-त्यचक्षुः स शृणोत्यकर्णः, स्वाभाविकी ज्ञानबलक्रिया च, सत्यं ज्ञानम्'

इत्यादिश्रुतिसैन्यस्य नास्तिक्यनाशकस्यावमर्दैः लुण्टाकी सर्ववैदिकार्थापहारप्रवृत्ता स्वतः प्रामाण्यशालिचोदनावाक्यान्युपादाय तद्बलनिरूपणेनैव निरोधनीया। अथ भवानेव चेदास्तिको ब्रह्मविद्भविष्यति, कथं भवत्तो विपश्चित्तरो व्यासशिष्यो जैमिनिरसंमतेश्वरः स्यादिति ॥ ९८ ॥

**99. आत्मा देहाक्षबुद्धिप्रभृतिसमधिको धर्मचिन्ताधिकृत्यै**
**निर्धार्यस्त्वन्यथा चेत् सुरगुरुसमयस्वैरजल्पाः स्वदेरन्।**
**इत्थं निश्चित्य सूत्रे व्यधिकरणविभक्त्यादिभिस्तत्तदर्थ-**
**व्यावृत्तो धर्मकर्ता तदुचितफलभुक् सूचितः सूत्रकारैः ॥**

स. अथ सौत्रपदप्रयोजनोपपादनम्। नन्विन्द्रियजन्यं ज्ञानं प्रत्यक्षमित्येतावति वक्तव्ये किमिति सूत्रे विस्तरः। पुरुषस्येति पदाभावेऽपि ज्ञानं पुरुषस्यैव भवतीति ज्ञातश्चेति शंकायां तत्कृत्यमाह आत्मेति। देहेन्द्रियमनःप्राणधीभ्योऽन्यो जीवो नित्य इत्येतावत् अस्मिन् धर्मविचारशास्त्रे अधिकारसिद्धये ज्ञातव्यम्। **अन्यथा** देहाद्यात्मवादे संमन्यमाने **सुरगुरोः** बृहस्पतेर्यः **समयः** बार्हस्पत्यसूत्रदर्शितं मतम्, तदनुसारिणः शास्त्रावश्यतयोच्छृङ्खलाः जल्पाः, विषयभोग एव मोक्षः पाञ्चभौतिको देह एवात्मेत्यादय एव रुचिविषया भवेयुः। आत्मनां मरणकाले नाशात् लोकान्तरानुभाव्यफलार्थनानाधर्मोक्त्ययोगात् तादृशधर्मग्रन्थः सर्वः कुग्रन्थ एवेति बुद्धिः स्यात्। एतत्परिहाराय सूत्रे **पुरुषस्येत्यादिकम्**। अत्र **व्यधिकरणविभक्तेः** तत्तद्वस्तुमिथोभेददर्शिन्याः षष्ठ्यादिविभक्तेः प्रयोगात् विषयः तत्संनिकर्षः पुरुषः इन्द्रियं बुद्धिः तदुत्पत्तिरितीमे भिन्नभिन्नाः पदार्था इति

ज्ञापितम् । एवञ्चेन्द्रियतद्विषयतज्ज्ञानाद्यपेक्षया आत्मनो भेदो दर्शितः । अथ तज्ज्ञान तज्जनकेन्द्रियाद्याश्रयो यदि देह एव स्यात्, रूपादिगुणान्तरवत् सर्वदा बुद्धिः स्यात्, नेन्द्रियसापेक्षतया कदाचित् जन्म । तथा बाल्ये जातस्यानुभवस्य वार्धकभाविस्मरणेन सामानाधिकरण्यस्य वाच्यतया देहानाञ्चावस्थाभेदेन भिन्नतया न ज्ञाननिर्वाहःस्यात् । इन्द्रियजन्यबुद्ध्यधीनहानोपादानादिबुद्धयो या इन्द्रियजन्याः, ताश्च न भवेयुः पूर्वानुभवाधीनेष्टसाधनतादिस्मरणं विना तदभावात्; तदनुभवस्मरणयोश्चासामानाधिकरण्यादित्यादि अत्र सूच्यते । एवं देहाद्यतिरेके सिद्धे देहेन्द्रियादिविलक्षणोऽयं कर्ता अनादिर्नित्य इति आमुष्मिकफलभोगभाक् भवत्येवेति विवक्षितम् ॥ ९९ ॥

100. **अन्यैरात्मावसाये भवति विफलता तत्र वेदान्तवाचां**
**नो चेत् देहादितोऽन्यः स कथमिह मतः, श्रूयतां सावधानम् ।**
**यद्यन्यैरस्य बोधो भवतु विशदतावाप्तिराम्नायवाक्यैः**
**तैरेवास्यावसाये परमिह कथितस्तर्कतोऽनुग्रहः स्यात् ॥**

स. अन्यैरिति । नन्वेवं व्यधिकरणविभक्त्यादिना अनुभवयुक्त्यादिप्रदर्शनेन देहाद्यतिरिक्त आत्मा यदि वेदान्तवाक्यादन्यैरेवेदृशैः प्रमाणैरेवमवसीयेत, तदा वेदान्तवाक्यानां वैफल्यम् । "श्रौतीमेवात्मसिद्धिं श्रोत्रियाः संगिरन्ते" इति (आ. सि. 63) ह्याहुः । तद्विरुद्धमेवं वर्णनम् । **नो चेत्**–वेदान्तवाक्यातिरिक्तप्रमाणै र्नावगम्यते चेत्—अत्र तथा कथं मन्येत वेदान्तवाक्यविचारस्येदानीमकृतत्वादित्यर्थः । एवं शंकायां परिहारमाह **श्रूयतां सावधानम्**मिति । अत्र पक्षद्वयम्-देहातिरिक्त

आत्मा तर्कत एव सिद्ध्यतीत्येकः, न सिद्ध्यतीत्यन्यः । प्रथमपक्षे वेदान्तवाक्यैस्तत्र वैशद्यं भवति । देहातिरिक्तत्वनित्यत्वमात्रावगमेऽपि, तत्परिमाण—ज्ञानान्दरूपत्व—अपहतपाप्मादिभाव—नित्यधर्मं भूतज्ञानाश्रयत्व—भगवच्छेषत्वादिकं हि वेदान्तवाक्यैकवेद्यमिति । देहातिरेकोऽपि वेदत एवेति द्वितीयपक्षे, अत्र जैमिनिप्रदर्शितं तर्कजातमप्रतिष्ठितवदाशंक्यमानमपि पश्चादनुग्राहकतर्कतया स्थास्यतीति । 'एक आत्मनश्शरीरे भावात्' इति ब्रह्मसूत्रे एतदौचित्यविमर्शस्यावसरः ॥

101. पाठे चार्थे च भेदं विदधति कतिचिद्वृत्तिकारानुशिष्टाः
स्यादत्रातिप्रसक्तिः क इह निपुण इत्येतदप्यत्र चिन्त्यम् ।
प्रख्यातो वृत्तिकारो मुनिरनृतमसौ व्याचकारेति मन्दं
बाधे सत्यान्यपर्यं क्वचिदिति तु मतिर्मत्सरातङ्कमुक्ता ॥

स. अत्र सूत्रे संप्रति सर्वैरादृतः पाठः, 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' इति । उपवर्षस्तु वृत्तिकारः, त्संप्रयोगेत पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षमिति, सत्तरपदव्यत्यासेन पठतीति शाबरभाष्यानुसारिवार्तिकादौ व्यक्तम् । एवं पाठे भेदे, अर्थेऽपि भेदः सिद्ध्यति । प्रत्यक्षादीनि प्रमाणानि न परीक्षितव्यानीति पूर्वमुक्त्वा भ्रमात्मकप्रत्यक्षस्यापि सत्वात् कथमपरीक्षेति शंकायां प्रमाभूतप्रत्यक्षलक्षणं प्रदर्श्यतेऽनेन सूत्रेण, अतः पदयोर्व्यत्यस्य पाठः । सत्प्रत्यक्षं तद् भवति, यद्विषयं प्रत्यक्षं भवति, तत्संप्रयोगे इन्द्रियाणां बुद्धिजन्म भवति चेदिति । एवं वृत्तिकारानुयायिनः भेदं कल्पयन्ति । एवं चेत्–तत्तद्व्याख्यातृभेदेन पाठभेद इति अतिप्रसक्तिः अव्यवस्था

स्यात् । को व्याख्याता निपुण इति कथमवधार्यमिति । एवमाक्षेपोऽपि चिन्त्यः । अर्वाचीनैर्व्याख्यातृभिरयं वृत्तिकारो गौरवितो वा न वा । न द्वितीयः ; तद्गौरवप्रदर्शनात् । अतः सोऽनृतमाहेति कथमुच्येत । आप्तत्वात् तस्य तदुक्तेः स्वीकार एव । सर्वात्मना बाधे, तात्पर्यमन्यत् कल्पनीयं तावन्मात्रे इति परिशीलनमेव अस्माकं तदुपरि विद्वेषोऽस्तीति शंकानुत्पादकं स्यात् । तदादृतपाठस्य तद्ग्रन्थादन्यत्र ग्रन्थेषु सर्वथैवादर्शने तद्गृहीतः पाठः सः । अतोऽन्यथा कर्तुमनिच्छन् यथाग्रहणं व्याचकारेति वक्तव्यम् ॥ १०१ ॥

102. **पाठादत्रौपवर्षादनुपचितफला ह्यन्यथा पाठक्लृप्तिः**
**स्वच्छन्द(सच्छब्द ?)त्वात्तसारो विषयविषयिवत्संप्रयो**
**गोक्तिलभ्यः ।**
**यद्वृत्तं पूर्ववाक्ये न पठितमथ च न्यासि तद्वृत्तमन्यत्**
**पाठश्चार्षो न भेत्तुं क्षम इति विदुषां वृत्तिकारोऽनुवर्त्यः ॥**

स. वृत्तिकारपाठ समर्थनस्याप्यवकाशोऽस्तीति तन्निष्ठ विद्वत्पक्षे स्थित्वा निरूपयति **पाठा**दिति । सेश्वरमीमांसायां भाट्टाद्यनुसारेणैव सूत्रपाठात् बहुसंमतरीतिरेव श्रीदेशिकादृता । एतत्सूत्रखण्डविचारभागस्तत्र ग्रन्थे त्रुटितः । अतो वृत्तिग्रन्थौचित्यानौचित्यविमर्श आवश्यकस्तत्रेदानीं न लक्ष्यते । अत्रेषत् प्रदर्श्यते तन्निर्वाहप्रणाली । औपवर्षपाठापेक्षया अन्यपाठकल्पनं मा भूत् । स एव पाठोऽस्तु । अन्यथा फलाभावात् । यत्तु सच्छब्दस्य पूर्वं पठनम् , तत् **आत्तसारं** निष्फलम् । श्लोके **स्वच्छन्द** इत्यत्र **सच्छब्द** इति पाठ्यम् । कुत आत्तसारत्वमिति चेत् –तस्य

भवदुक्तोऽर्थः कः । **सत्संप्रयोगे सति** वर्तमाने संप्रयोगे इत्येव । अतेन्द्रियाणामित्यस्य कुत्रान्वयः। यथास्थानं इन्द्रियाणां बुद्धिजन्मेत्येव। तेन चाक्षुषस्पार्शनादीत्यर्थलाभ इति चेत् —तर्हि **संप्रयोगे** इत्यनेन कयोः संयोग उच्यते । विषयविषयिणोः अर्थेन्द्रिययोरिति अर्थात् लभ्यत इति चेत् —विषयविषयिणोरेव लाभे सप्तमीस्वारस्यादेव वर्तमान इत्यपि ज्ञातमेव । न चावर्तमाने कारणे कार्यं जायते । अतो व्यर्थं सत्पदम् । यदि **सता** वर्तमानेन विषयेणेन्द्रियाणां संप्रयोगे इतीतः परमुच्येत, तदापि अवर्तमानेन संयोगासंभवादेव तत् अर्थसिद्धमिति पुनस्तद् व्यर्थमेव । **यद्वृत्त**मिति । उपरितत्प्रत्यक्षमिति पाठस्य भवत्कल्पितत्वात्, पूर्वं यद्वृत्तस्यापेक्षितत्वात् । 'यत्संप्रयोगे पुरुषस्य इति पाठकल्पनं ज्यायः । यद्वा पूर्वं **यद्वृत्तस्य** यच्छब्दस्याभावात् वाक्यद्वित्वाप्रतीतेः उपरितच्छब्दो नावश्यक इति कथं स न त्यज्यते । वृत्तिकारः स्वयं तच्छब्दमेकमादावध्याहरति । स्थितस्तु सच्छब्द एवेत्यपि वार्तिकादौ चिन्तितम् । स्थितपदातिरिक्तं तत्सदिति पदद्वयमध्याहार्यमिति सुचरितमिश्रादिः। **तदि**त्यव्ययम् तेनेत्यर्थ इत्यन्ये । साक्षात् वृत्तिग्रन्थम-दृष्ट्वा एषां वाक्यमात्रमादाय किमपि निर्धारयितुमशक्यम् । वृत्यादृतपाठे तु सत्पदं समीचीनार्थकं प्रत्यक्षविशेषणमिति सफलं तत्। तत्पदञ्च प्रमात्वोपयोगि वास्तवार्थप्रत्यायकमिति तदपि सफलमेव । अस्तु वा सदिति पृथक्पदमादावेव । तत् प्रत्यक्षान्वयि । तत्प्रत्यक्षमिति च समस्त-मस्तु संप्रयोगे सति संप्रयुक्ततद्वस्तुविषयकप्रत्यक्षं सत् समीचीनमिति । प्रमाणनिरूपणावसरे प्रमात्मकज्ञानस्यैव वक्तव्यत्वात् सत्पदं सफलम् ।

केषाञ्चित् धर्मभ्रान्तिमादाय धर्मस्य प्रत्यक्षत्ववारणाय प्रमाया एव वक्तव्यत्वात् । आर्षः प्राचीनः पाठोऽर्वाचीनैर्नान्यथा कार्य इति वृत्तिकारानुसारिभिर्वक्तुं शक्यमिति श्लोकार्थः ॥ १०२ ॥

**वृत्तौ षट् चेत् प्रमाणान्यगणिषत न सा मानसंख्या ततः स्यात्**
**त्यक्तं षष्ठं च कैश्चित् भवति च फलिनी गोबलीवर्दनीतिः ।**
**धर्मे मानान्तराणां गतिमिह नुदतो नात्र संख्याभिसन्धिः**
**मानानि त्रीणि शोध्यान्यमनुत च मनुः प्रेप्सतां धर्मसिद्धिम् 103.**

स. ननु वृत्तिकारस्यानुवर्त्यत्वे, प्रमाणानि षडिति तदुक्तमपि स्वीक्रियतामित्याशंकायाम्, **बाधे सत्यान्यपर्यम्** इति प्रागुक्तस्येदमेकमुदाहरणमिति मनसिकृत्याऽऽह **वृत्ता**विति । प्रत्यक्षमनुमानमुपमानं शब्दोऽर्थापत्तिरनुपलब्धिरिति षट् प्रमाणानि गणितानि । तानि तथैव मीमांसकेष्टानि च । न त्वस्माभिः । प्रत्यक्षानुमानशब्दरूपप्रमाणत्रयमात्रस्वीकारादिति चेत्—अस्तु । तावता मानानां षोढा संख्यानं तत्रेष्टं न भवति । तदनुसारिभिरेवार्वाचीनैः कैश्चित् अनुपलब्धिरूपं मानमधिकतया न स्वीकृतम् । अनुपलब्धिरियं ज्ञातानुपलब्धिर्वा अज्ञातानुपलब्धिर्वेति विकल्प्य, आद्या अनुमानान्तर्भूता, अन्त्या प्रत्यक्षे इति मत्वा । तद्वत् उपमानार्थापत्ती अप्यनुमानेऽन्तर्भवताम् । पृथक्पाठमात्रेण न वस्तुभेदः स्यात्; गा आनय बलीवर्दमानयेति प्रयोगमात्रेण बलीवर्दस्य न गोभिन्नत्वम् । अत आदरविशेषात् पृथगुक्तिः । पार्थक्येऽपि धर्मे प्रामाण्यं कस्यास्ति, कस्य नेति चिन्तार्थमपि स्यात् । मानान्तराणां धर्मज्ञापने **गतिः** प्रवृत्तिर्नेति निरूपणैदम्पर्यात्

तद्भेदाभेदविचारमुपेक्षाञ्चक्रे । मनुनाऽपि त्रयमेव गणितम्, "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशु(सि)द्धिमभीप्सता" इति ॥ १०३ ॥

**नन्वेवं क्वापि रामायणपरिपठि(गणि?)ता युक्तयष्षट् कथं स्युः**
**मन्वादेस्त्रित्ववादोऽप्यथ भवतु परं न्यूनसंख्यानिवृत्त्यै ।**
**मैवं तत्तद्विशेषैः पृथगनुपठितैरर्थवैशद्यसिद्ध्यै**
**मानैस्तत्तद्विशेषाः सह परिपठितास्सन्तु तत्रान्यथा वा ॥ 104.**

स. **नन्वेव**मिति श्लोकः **प्रत्यक्षादि**रिति श्लोकात् पूर्वमिह पठ्यते औचित्यात् । ननु मानवमिव श्रीमद्रामायणमपि प्रमाणम् । तत्र **क्वापि** कबन्धेन रामं प्रति हितज्ञापनावसरे उक्तम्, "राम षड्युक्तयो लोके याभिः सर्वं विमृश्यते" इति । युक्तिः हेतुरपदेशः प्रमाणमिति पर्यायाः । एवञ्च-मन्वादेः प्रमाणत्रित्वमात्रवादः **न्यूनसंख्यानिवृत्त्यै** । प्रत्यक्षमेकमेवेति चार्वाकाः ; प्रत्यक्षमनुमानञ्चेति द्वयमेवेति बौद्धकणादादयः । तन्मतनिषेधायेति । निरस्यति **मैव**मिति । इतरानुमानाद्यपेक्षया उपमानार्थापत्त्यादि प्रमाणे स्थितं विशेषं दर्शयितुं तथा पठनम् उपवर्षादिकृतमिति भावः । **तत्र** रामायणे । पक्षान्तरमाह **अन्यथा वे**ति । न तत्र प्रत्यक्षादिप्रमाणानां युक्तिपदेन ग्रहणम् **सर्व**मिति पदमात्रेण सर्वप्रमेयान्वयिप्रमाणग्रहणमित्यस्यायुक्तत्वात् । प्रकृतोपयोग्यर्थानामेव युक्तिपदार्थत्वात् । अत एव तत्र व्याख्यातारः, संधिविग्रहयानासनद्वैधीभाव समाश्रयरूपाः राजयुक्तीरेव तदर्थतया व्याचक्रुः । अन्यसमाश्रयः कार्य इति रामं प्रति वदन्, "परिमृष्टो दशान्तेन दशाभागेन सेव्यते" इति ह्युपर्याह ।

तदर्थस्तु दुर्दशाया अन्तभागेन परिमृष्टः दुर्दशावसाने स्थितः **दशाभागेन** अन्तातिरिक्तदुर्दशाभागवता सेवनीयः। सद्दशास्थितः सेवितोऽप्युपेक्षेत। दुर्दशावसानाभावे साधुरपि न समर्थः इति भावः। सुग्रीवदुर्दशाया अवसानकालोऽयम्, तत्पूर्वभागगतेन त्वयैव स सेवितव्यः। तद्दशावसाने तेन ते उपकार इति। अत्र घट्टे सर्वैरप्यव्याख्यातम् श्रीकोशेष्वमुद्रितश्चैकमर्धमुपलभ्यते **रामायणसारसंग्रहग्रन्थे** [उद्यानपत्रिकामुद्रिते]। यथा, "रामषड्युक्तयो लोके याभिः सर्वं विमृश्यते। तासां विमर्शनं न्याय्यं मार्गेण हितयोर्द्वयोः। परिमृष्टो दशान्तेन दशाभागेन सेव्यते" इति। अहितं विहाय द्वौ हितौ यौ तद्विषये युक्तिं प्रकृतोपयोगिनीं चिन्तयेति तत्रोच्यते। अतीव संगतमिदमत्र प्रकृते। सर्वथा रामायणं न प्रत्यक्षादिप्रमाणपरमिति ॥ १०४ ॥

105. **प्रत्यक्षादिर्न हेतुर्जिनसुगतमुखैः कल्पितानां कथाना-**
**मित्येतत्सिद्धमत्र श्रुतिरपि न हि तन्मूलमूह्यं विरोधात्।**
**इत्यप्येतद्विरोधाधिकरणविदितं तेन मोहादिर(ज?)न्यैः**
**अन्यैर्बाधोपरोधौ न तु निगमगिरामित्युपक्रान्तसिद्धिः ॥**

**स.** सत्सूत्रस्य तत्सूत्रस्य वाऽर्थस्तावत् इन्द्रियाणां संप्रयोगे पुरुषस्य बुद्धिजन्म; तत् सत् प्रत्यक्षं धर्मेऽनिमित्तम् विद्यमानोपलम्भनत्वात् वर्तमानदर्शित्वात् तस्य। धर्मस्य च विध्यधीनानुष्ठानानन्तरमेव विद्यमानतया ततः प्राक् धर्मं दृष्ट्वाऽनुष्ठानमित्यस्य दुर्वचत्वात्; धर्मकाले फलस्य, स्वर्गादिफलकाले धर्मस्य चाभावेन तदुभयगतसाध्यसाधनभावस्य विद्यमानत्वाभावेन तदग्रहणे अयं धर्म इति ग्रहणायोगादिति। एतावताऽ

अनुमानाद्यगम्यत्वमप्युक्तं मन्तव्यम् । तस्य प्रत्यक्षोपजीवित्वात् । तेन बुद्धाद्यागमानामप्रामाण्यमपि सिद्ध्यतीत्याह प्रत्यक्षेति । बुद्धादिभिर्यत् फलमुद्दिश्य यत् कर्म शिष्यते, तत्फलतत्कर्मणोः साध्यसाधनभावस्तैः केन प्रमाणेनावगतः । अस्मदादिप्रत्यक्षादिसदृशत्वात् तेषामपि प्रत्यक्षादेः । अतः सर्वं कथामात्रम् । न चास्मद्वेद एतन्मूलत्वेनोह्यः वेदाप्रामाण्यस्य तदिष्टतया तेषां वेदविरोधित्वात् । बुद्धादिधर्माणां प्रत्यक्षादिप्रमामूलकत्वाभावात् चोदनातिरिक्तप्रमाणकत्वं धर्मस्य नेत्येतावदत्र सिद्धम् । तेषां मानवादिवत् श्रुतिप्रमाणकत्वाभावस्तु विरोधाधिकरणे (1–4) वक्ष्यते । तेन मोहविप्रलम्भान्यतरजन्यत्वमेव तदागमेषु सिद्धम् । अतो मोहादिजन्यैरन्यैरागमैश्चोदनाया बाधो वा तुल्यकक्षत्वं वा न भवतीति प्रकृतसूत्रविवक्षितमिति । श्लोके जन्यैरिति शोध्यम् ॥

106. प्रत्यक्षं सांख्यबौद्धप्रभृतिभिरुदितं भावनोत्थं न विद्मः
संस्काराणां प्रकर्षः स्मृतिमुपजनयेद् दृष्टमात्रे प्रकृष्टाम् ।
तस्माद्धर्मे निमित्तं भवति न सुगताद्यागमः क्षिप्तमूलः
श्रद्धेया चोदनैवेत्यवधृतिरियमित्यत्र तात्पर्यसिद्धम् ॥

स. प्रत्यक्षादिर्न हेतुरिति प्रागुक्तमर्थं किञ्चिद्विशदीकर्तुमाह प्रत्यक्षमिति । सेश्वरमीमांसायां पूर्वपक्षे उक्तं सर्वमत्रानुसंधेयम् । प्रथमतो धर्मतत्त्वस्य सुग्रहत्वाभावेऽपि तच्छीलनपराणां रत्नतत्त्वमिव संस्कारोपचयसहकृतेन प्रत्यक्षेण ग्रहीतुं शक्यते । यद्वा कामातुरकामिनीसंदर्शनादिष्विव भावनाप्रकर्षो धर्मप्रत्यक्षे कारणं भवितुमर्हति । एवं काकोलूकगृध्रादिषु इन्द्रियप्रकर्षतारतम्यदर्शनात् प्रत्यक्षतारतम्यं

क्वचिद् विश्रान्तं तारतम्यत्वात् परिणामतारतम्यवदित्यनुमानेन केषाञ्चित् प्रत्यक्षं सर्वग्राह्यपि भवितुमर्हति। अत एव बुद्धकपिलादयः सर्वज्ञा इति धर्मस्य प्रत्यक्षविषयत्वमक्षतमिति शंका। तन्निरासोऽत्राधिकरणे विवक्षितः। तदुच्यते **प्रत्यक्षमिति**। भावना नाम संस्कारः। तज्जन्यज्ञानस्य स्मृतिमात्रत्वात् प्रत्यक्षत्वमेव नास्ति। भावना चानुभूतविषय एव भवतीति दृष्टान्ते **प्रकृष्टां धियमुपजनयेत्**। प्रमाणान्तराननुभूते सति धर्मे कथं भावना, कथञ्च ततः प्रत्यक्षम्। अत एव आलोचनं व्यापार इन्द्रियाणां विकल्पस्तु मनसः इति रीत्या संस्कारजं धर्मप्रत्यक्षमित्यपि न; संस्कारहेतोरनुभवस्याभावात्। रत्नतत्त्वदृष्टान्तोऽपि न युक्तः। सुसूक्ष्मनिरीक्षणसंस्कारादिकं प्रत्यक्षयोग्यवर्णादिग्रहणे उपयुज्येत, न गुरुत्वग्रहणे। अतो न तावता रत्नतत्त्वप्रत्यक्षम्। तारतम्यत्वादित्यनुमानमप्यत एव न सम्यक्। इन्द्रियाणां योग्यविषय एव तारतम्यं प्रत्यक्षे स्यात्; न त्वयोग्यविषये। न हि जातु कश्चित् रसं चक्षुषा पश्येत्। अत एव बुद्धादयो न सर्वज्ञाः। यदाहुः, "सुगतो यदि सर्वज्ञः कपिलो नेति का प्रमा। तावुभौ यदि सर्वज्ञौ मतिभेदः कथं तयोः" इति। अतश्चोदनातिरिक्तमूलकानां सुगताद्यगमानां प्रमाणभूतमूलाभावात् अप्रमाणत्वमेवेति सिद्धान्तः॥ १०६॥

107 **प्रत्यक्षादिप्रमाणं स्वविषयनियतं दर्शयन् सूत्रकारः**

**प्रत्याचष्ट प्रवृद्धान् प्रमितिपरिभवे विश्वलुण्टाकवादान्।**
**पश्यन्तो वृत्तिमार्षीं तत इह शबरस्वामिमुख्याः समीचीं**
**चिन्ताव्याघातभीताश्चिदचिदनुगतां सत्यतां साधयन्ति॥**

27

स. अनेन सूत्रेण प्रत्यक्षानुमानादेः प्रामाण्यमङ्गीकृत्य धर्मविषये तदप्रवृत्तिमात्रवादिना सर्वप्रमाणापलापिनां जगन्मिथ्यात्ववादिनां निरासोऽप्यर्थसिद्ध इत्याह प्रत्यक्षादीति । स्वविषयनियतम् । अविषये धर्मे तदप्रवृत्तिमात्रेण स्वविषयेऽपि तदप्रवृत्तिर्न युक्तेति सूत्रेष्टम् । विश्वलुण्टाकानां—सर्वापलापिनां वादान् निराचकार । उपवर्षकृतायां वृत्त्यामिदं विस्तरेण निरूपितं शबरस्वाम्यादयो दृष्ट्वा, तत्कृतायाश्चिन्तायाः पश्चात्तनैर्व्याघातो मा भूदिति मत्वा, अस्माभिस्तदनिरूपणे अस्माकं तदनिष्टतामर्वाचीना मन्येरन्निति मत्वा च व्याघातभीताः स्वयमप्यार्षवृत्त्यनुसारेण चेतनाचेतनात्मकजगत्सत्यत्वादिकं साधयन्तीत्यर्थः । तथा चात्र तावत्प्रमेयनिरूपणस्य सर्वप्रमाणतत्त्वनिरूपणस्य च प्रासंगिकत्वान्नावश्यकतेति भावः। इति धर्मे प्रमाणन्तरनिरासाधिकरणम् ॥ १०७

1-1-5 औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः
तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे
तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ॥

108. प्रत्यक्षप्रत्यपेक्षान्वयतदितरयोरत्र भङ्गात् तदुत्थं
मानं नात्रानुमानं तदनुविहिततो वाक्यमत्राप्रमाणम् ।
इत्याशङ्कां निरोद्धुं परमिह विदधे सूत्रमौत्पत्तिकाद्यं
कर्ता शारीरकस्य स्वगुरुरपि वदत्येतदित्याह भक्त्या ॥

स. अथ वेदप्रामाण्याधिकरणम् । चोदनासूत्रसिद्धे अवधारणद्वये प्रथमावधारणमुपपादितम् । अथ वेदः प्रमाणमेवेत्यवधारणमुपपाद्यते । प्रत्यक्षेति । प्रत्यपेक्षेत्यत्र, प्रत्यवेक्षेति

पाठेऽप्येक एवार्थः। प्रत्यक्षप्रमाणस्य प्रत्यपेक्षा—प्रतिनियततया विशिष्यापेक्षा धर्मप्रमाणत्वेनांगीकृतस्य शब्दस्यास्ति न वा। तद-पेक्षान्वयस्तु नास्ति, वेदस्यापौरुषेयत्वस्वीकारात्। न चापेक्षाविरहेण प्रमाणत्वम्, कस्यापि प्रत्यक्षातिरिक्तस्य प्रत्यक्षनिरपेक्षत्वादर्शनात्। एवञ्च प्रत्यक्षप्रत्यपेक्षं यत् लोके प्रमाणं तदन्वये धर्मग्रहणम्, तदितरस्मिन् अनन्वये धर्माग्रहणमित्यस्य अत्र—धर्मे अंगात् नात्रानुमानं शब्दो वा कश्चित् प्रमाणम्; सर्वस्य तदनुविहितः तदनुविधानात् प्रत्यक्षसा-पेक्षत्वात्। अर्थं बुद्ध्वा शब्दरचना। प्रमाणान्तरेणार्थं गृहीत्वा हि शब्दः प्रयोक्तव्यः। न च धर्मरूपोऽर्थः प्रमाणेन केनचिद् गृह्यते। स्वर्गाग्नि-होत्रयोः साधनभावांशे व्याप्तिग्रहायोगात् नानुमानेनापि धर्मग्रहणम्। अतस्तदुत्थमनुमानं नात्र मानम्। अत एव अनपेक्षत्वेऽपि अपौ-रुषेयत्वात् प्रामाण्यमिति निरस्तम्। अस्य शब्दस्यायमर्थ इति संकेत-ग्रहेणैव शब्दस्य प्रयोज्यतया शब्दनित्यत्वायोगात्-इत्याशंकां निरोद्धुं पूर्वं पश्चात्, औत्पत्तिक इति शब्दः यत्र सूत्रे आद्यः तत् औत्पत्तिकाद्यं सूत्रं विदधे चक्रे। इदमौत्पत्तिकत्वं स्वतःप्रामाण्यञ्च शारीरकशास्त्रकृत् स्वगुरुर्बादरायणोऽप्याहेति स्वोक्तस्य श्रद्धेयत्वाय गुरुं प्रकाशयतीति। बादरायणो जैमिनेर्गुरुरिति मीमांसकैरपि स्वीकृतम्, यथा न्यायरत्नाकरे, **गुरुपर्वक्रमोऽपि** वा इति श्लोकवार्तिक-व्याख्यानावसरे, "पर्व अवच्छेदः। गुरुपर्वणां क्रमो गुरुपर्वक्रमः। तद् यथा ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, सोऽप्या-दित्याय, स च वसिष्ठाय, सोऽपि पराशराय, पराशरः कृष्ण द्वैपाय-

नाय, सोऽपि जैमिनये। स च स्वोपदेशानन्तरमिमं न्यायं ग्रन्थे निबद्धवान्" इति। कृष्णद्वैपायन एव बादरायणः; "द्वीपे बदरिकामिश्रे बादरायणमच्युतम्। पराशरात् सत्यवती पुत्रं लेभे परान्तपम्" इत्यादेरित्यन्यत्र विस्तरः। अस्त्वेतत्। शब्दस्यार्थेन सह संबन्धः यदा क्लृप्तः, तदनन्तरमेव वेदेन भाव्यमिति—तन्न—शब्दार्थसंबन्धो ह्यौत्पत्तिकः सहजः शब्दार्थाभ्याम्। अतः संबन्धस्य कल्पितत्वाभावात् तदनन्तरत्वं वेदस्येति नेति भावः॥ १०८॥

109. **निर्बाधास्सन्ति बोधाः कतिकति जगति त्यक्तदोषप्रसङ्गाः**
**दोषोपेतेऽपि धर्मिप्रभृतिषु नियतः स्थापितः सत्यभावः।**
**तस्मादौत्सर्गिकत्वं प्रनिरमत धियां मानभावस्य युक्त्या**
**वेदोत्पन्नेऽपि नित्येश्वरमतिनयतो दोषहान्यैव तत् स्यात्॥**

ननु वेदजन्यार्थज्ञानस्य प्रामाण्यं कथमित्यपेक्षायां, लोके शाब्दबोधस्य आप्तप्रामाण्यादेव प्रामाण्यमानुभविकमिति वेदवक्तुराप्तस्य गुणमुपन्यस्यैव प्रामाण्यं वक्तव्यम्। अतः संबन्धनित्यत्वमात्रेण न प्रामाण्यसिद्धिः। यदि आप्तगुणनैरपेक्ष्येण स्वत एव प्रामाण्यमिष्यते, तर्हि अप्रामाण्यमेव स्वतः किं न स्यादित्यत्राह **निर्बाध** इति। **कतिकतीति**। असंख्याका इत्यर्थः। **दोषोपेतेऽपि दोषाधीने** बाधेपि। अयमर्थः—बोधः प्रमाणम् अनपेक्षत्वात्। गुणमनपेक्ष्य स्वत एव प्रामाण्यम्। जायमानानां ज्ञानानां प्रत्यक्षानुमितिशाब्दरूपाणां दोषजन्यत्वग्रहे सति अप्रमाणताग्रहः। अन्यदा तु प्रामाण्यग्रह एवौत्सर्गिकः। अप्रामाण्यग्रहस्योत्सर्गिकत्वे ज्ञानाधीना प्रवृत्तिः कुत्रापि

न स्यात् । न च प्रामाण्यग्रहे सत्यपि तत्राप्रामाण्यमेवास्तीति वाच्यम्–तथा कल्पने मानाभावात्–कल्पकज्ञानस्याप्रामाण्यात् कल्पनाया उपेक्ष्यत्वात् । अतोऽप्रामाण्यं दोषाधीनम्, तदभावे प्रामाण्यमित्येव वक्तव्यम् । ज्ञानानामिदं प्रामाण्यमौत्सर्गिकमित्येतत् भ्रमज्ञानेऽपि धर्मिग्रहांशे प्रामाण्यादंगीकर्तव्यम् । शुक्तौ इदं रजतमिति ज्ञाने रजतांश एव ह्यप्रामाण्यम् । न तु धर्मिणि इदमंशे । एवं प्रामाण्यस्य सार्वत्रिकत्ववत् अप्रामाण्यस्य सार्वत्रिकत्वं न ह्यस्ति । अतो न तत् औत्सर्गिकम् । तस्मात् मुनिः बादरायणो जैमिनिश्चोक्तयुक्त्या धियां मानत्वस्यौत्सर्गिकत्वम् अमत अमन्यत । इत्थञ्च वेदोत्पन्नमर्थज्ञानमपि प्रमाणं दोषाधीनत्वाभावादिति । गुणं विना दोषाभावमात्रेण प्रामाण्यमवश्यमेष्टव्यम् ; ईश्वरगतस्य नित्यज्ञानस्य गुणजन्यत्वाभावेन गुणाधीनप्रामाण्याभावात् । प्रामाण्यस्य च वक्तव्यत्वात् दोषाभावप्रयुक्तत्वस्यैव स्वीकर्तव्यत्वात् । ईश्वरे दोषाभावश्च सर्वसेश्वरेष्टः ॥ १०९ ॥

110. **पाणिन्यादिप्रवाहैरसदितरतया स्थापितः शब्दराशिः**
**शब्दस्येत्युद्गृहीतो न खलु सहजसंबन्धशाली तदन्यः ।**
**गावीगोण्यादिशब्दास्त्वलसजडमुखैरर्भकालापनीत्या**
**कीर्त्यन्ते तत्तदर्थेष्विति न खलु ततस्तत्र तच्छक्तिसिद्धिः ॥**

स. ननु सूत्रे **शब्दस्यार्थेन संबन्धः औत्पत्तिक** इत्युक्तम् । अविशेषेण सर्वस्य शब्दस्येति प्रतीयते । तदयुक्तम् । तत्तत्पुरुषबुद्धिकल्पितानामपूर्वाणामनेकेषां सांकेतिकानां शब्दानां दर्शनेन तत्र नित्यसंबन्धाभावात् । "औत्पत्तिक इति नित्यं ब्रूमः" इति शाबरोक्तं हि

भवतामपीष्टम् । अथ शब्दोत्पत्तिप्रभृति स्थित इत्यर्थांगीकारे अनादिसंसारे प्रथमशब्दोत्पत्तिकालो दुर्वचः । यदा यदा शब्दोत्पत्तिः तदा तदा संबन्ध इत्यर्थस्वीकारे उत्पत्तिपदं व्यर्थम् । प्रवाहनित्य इत्यर्थस्तत इष्टः । तथात्वञ्च कल्पितस्थले नास्ति । एवमपभ्रंशानां शब्दानामाद्यन्तवत्तया तत्रापि नित्यः संबन्धो दुर्वचः । अतस्तत्र गत्यन्तरे किमनेनात्र परम् औत्पत्तिकत्वेनेत्यत्राह **पाणिनीति** । शब्दस्येति सौत्रेण पदेन उद्गृहीतः निष्कृष्य गृहीतः साधुशब्द एव । साधुत्वञ्च व्याकरणाधीन-संस्कारवत्त्वम् । तत् त्वदुक्तशब्देषु नास्तीति न दोषः । गावी गोणी इत्येवमपभ्रंशाः गोशब्दस्थाने तत्तद्देशे प्रयुज्यन्ते । तत् शिशूनां वचन इव स्खालित्यादिति मन्तव्यम् । तत्र, एवं प्रयोक्तव्ये इत्थं प्रयुक्तम् अज्ञानादपाटवाच्चेति साधुशब्दसरणेनार्थज्ञानसंपादनात् तत्र पृथक् शक्तिर्नास्ति । एवं शक्त्यभावे सिद्धे तदुत्पत्तिमजानतां पश्चात्तनानां तत्र शक्तिभ्रम एव । ये तु शब्दाः पुरुषैः स्वबुद्ध्या कल्पिताः, अर्थाश्च तेषां संकेतिताः, तेषामत्राप्रसक्तत्वात् न शब्दस्येत्यनेन तद्ग्रहणमिति । सूत्रे **औत्पत्तिक** इति उत्पत्तिपदघटनेन निर्देशः, शब्दाः नोत्पद्यन्त इति मीमांसकवैयाकरणभ्रमव्युदासाय ॥ ११० ॥

111. **बन्धश्चेद्बन्धशून्यः कथमिव घटयेत् बन्धवत्त्वेऽनवस्था**
**मैवं संबन्धमात्रस्थितिमपलपतः स्वोक्तिबाधादिदोषात् ।**
**इष्टश्चेद्दूषकत्वप्रमृतिरपि मृषा सिद्धमिष्टं परेषां**
**दृष्टः कल्प्यः श्रुतो वा न तदपलपितुं शक्यते संप्रयोगः ॥**

स. ननु शब्दस्यार्थेन संबन्ध औत्पत्तिक इति कोऽयं संबन्धः ॥ वाच्यवाचकभाव इति चेत्—न वाच्यार्थ-वाचकशब्दातिरिक्तं कञ्चन संबन्धमुपलभामहे। यदि अर्थे संज्ञी इति व्यवहारदर्शनात् संबन्धः कश्चिदिष्यते, तर्हि तस्य संबन्धस्यार्थेन शब्देन वा संबन्धोऽस्ति न वा। न चेत्—कस्यायं संबन्धः। अस्ति चेत्—तर्हि द्वितीयसंबन्धस्वीकारापत्तिः; अथ तस्य च शब्देन संबन्धोऽन्यो वाच्य इत्येवमनवस्था स्यात्। अतः संबन्धो दुर्वच इत्याशंकते **बन्ध** इति। उपसर्गार्थस्य धातुगतत्वात्, **बन्धो बन्धशून्यश्चेत्** इत्यस्य संबन्धः संबन्धान्तर-शून्यश्चेदित्यर्थः। **बन्धवत्त्वे** संबन्धान्तरस्वीकारे। इमामाशंकां परिहरति **मैवमि**ति। किं त्वया **संबन्धमात्रं** सर्वोऽपि संबन्धः अपलप्यते, वेदगतः वाच्यवाचकभावरूपः संबन्ध एक एव। वा सर्वापलापिनस्ते स्वोक्तिरपि न युक्ता। तस्याः प्रकृते संबन्धाभावात्। दूष्यदूषकभावस्यापि संबन्धत्वात् तत्प्रभृतिरपि संबन्धो मृषात्वेन ते इष्टश्चेत्, अस्माकमिष्टं सिद्धम्; असदुक्तस्यादूषितत्वात्। विशेषतश्च न दूषणम्। **तत्** तस्मात् **संप्रयोगः** संबन्धोऽयं प्रत्यक्षदृष्टो वा अन्यथाऽनुपपत्त्या कल्पनीयो वा प्रमाणग्रन्थारूढो वा यथा तथा भवतु। प्रामाणिकत्वं तु न प्रतिषेध्यम्। अत्र **वक्तु** (54) मित्यादिः पूर्वोक्तः श्लोकोऽप्यनुसंधेयः॥

**112. वेदे तच्चोदिते च त्यजदुपधि महालोकसंगृह्यमाणे, मानत्वं धर्मता (तां) च स्थितमपि कुरुतां(कृणुतां)नाम नित्यं तथाऽपि। एतस्येत्येतदित्थं हितमहितमिदं त्वेवमित्यादिबोध-स्तत्तद्वेदोपदेशप्रभव इति वदत्यत्र तस्मादिशब्दः ॥**

स. एवं सूत्रे प्रथमवाक्यस्यार्थो वर्णितः। अथ तस्य ज्ञानमुपदेश इति भागस्यार्थं वर्णयति **वेदे** इति। **तस्य**—धर्मस्य **ज्ञानं**—ज्ञानहेतुः। करणे ल्युट्। सामान्ये नपुंसकम्। **उपदेशः** अज्ञातहिताहितप्रतिपादन-रूप इति तदर्थः। श्लोके **अपिकुरुतां नाम** नित्यमित्यादौ शोधनीयम्। श्लोकार्थस्तु—**त्यजदुपधि** व्याजनिरपेक्षं यथा तथा, बौद्धादि-मतादरणे दृष्टं प्रयोजनरूपं कारणं विविधमस्ति। तादृशकारणमूलकत्वं विना महाजनैः परिगृह्यमाणे वेदे मानत्वं तथा परिगृह्यमाणे वेदचोदिते अर्थे धर्मता च **स्थितम्**। नपुंसकमनपुंसकेनेति क्लीबैकत्वे। एतन्मानत्व-धर्मत्वयोरस्वीकारः अपलापः क्रियते। एवं तद्विसनं परः करोतु नाम। अथापि तेन वेदेन इदं हितम् इदमहितमिति ज्ञानमुत्पाद्यत इत्येतदपलपितुं न शक्यत इति। **एतस्या**धिकारिणः एतत् एवं प्रकारेण हितमिति, इदं तु एतस्यैवमहितमित्यादिरूपो बोधः वेदजन्य एवेत्याह सूत्रे **तस्यादि-शब्दः**। **तस्य**शब्दः आदिर्यस्य सः **तस्यादिः**। तादृक् शब्दः 'तस्य ज्ञानमुपदेशः' इत्ययम् ॥ ११२ ॥

**नित्यप्रत्यक्षसिद्धं निगममितरदप्याह चेत् विश्वकर्ता, स्मर्तृत्वं**
**तस्य न स्यात् क्वचिदितरसमं तद्गिरां च स्मृतीनाम् (तित्वम् ?)।**
**मा भूदेतत् तथाऽपि स्मरतिरिह भवेत् क्षेत्रसामादिनीत्या**
**वेदार्थव्यञ्जकत्वात् स्मृतिरिति च वचस्तेन सञ्जाघटीति ॥** 113

स. ननु पूर्वकल्पे उपदिष्टमर्थमस्मिन् कल्पे स्मृत्वोपदिशति भगवानिति तस्य स्मर्तृत्वं भाष्यकारादयो वदन्ति। तत्कृतायाः कृतेश्च विष्णुस्मृतिरिति व्यवहारोऽपि दृश्यते। कथमेतत्। तस्य हि न स्मृति-

रूपं ज्ञानमपेक्षितम्; स्वतः सदा सर्वद्रष्टृत्वात्। अनुभूतार्थस्मरणपूर्वकत्वाद्धि मन्वादिस्मृतौ स्मृतिशब्दप्रयोगः। यथा निगमं तथैव पञ्चरात्रं गीतां विष्णुस्मृत्यादिकञ्च स स्वमुखेनाह स्वप्रत्यक्ष्यमाणार्थज्ञापनाय। अतस्तस्य क्वचित् किञ्चिद्विषये स्मर्तृत्वम् इतरसमं मन्वादिवत् न स्यात्; तद्गिराञ्चेतरसमं मानवस्मृत्यादितुल्यं स्मृतित्वञ्च न स्यादिति पूर्वार्धस्यार्थः। तज्ज्ञानस्य प्रत्यक्षरूपत्वात् स्मृतित्वाभावं स्वीकरोति मा भूदेतदिति। स्मरतिः स्मृधातुप्रयोगः पूर्वकालावच्छिन्नग्रहणविषयविषयकोत्तरकालावच्छिन्नग्रहणरूपत्वेन साजात्यादौपचारिकः। क्षेत्रसामादिनीत्येति। यथा क्षेत्रशब्दः केदारवाची शरीरसामान्ये स्त्रियाञ्च प्रयुज्यते, 'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते', औरसः क्षेत्रजो दत्तः इत्यादौ। यथा च सामशब्दः वैदिकगीतिविशेषवाची अन्यत्रापि प्रयुज्यते। सुस्वरो देवदत्त इत्यर्थे सुसामा देवदत्त इति। स्वरो घोषो नाद इति समानार्थाः। स सामशब्देनोच्यते इत्युक्तं शाबरे (7-2-7)। एवं सामशब्दस्य गीतिविशिष्टायामृचि प्रयोगात् किं विशिष्टार्थकत्वं गीतिमात्रार्थकत्वं वेति विचार्योक्तं वार्तिके, "एकखण्डेन शब्देन विशिष्टो यत्र गम्यते। विशेषणस्य वाच्यत्वं तत्र सर्वत्र जायते" इति। विशेषतश्च बृहद्रथन्तरादि-सामविशेषवाचिशब्दानां गीतिमात्रपरता वा अन्यपरता वेति एकविंशतिसूत्रात्मकैकाधिकरणात्मकेन सप्तमद्वितीयपादेन विचार्य गीतिपराणां तेषामन्यत्रोपचारात् प्रयोग इति स्थापितम्। एवं सिंहादिशब्दा अपि लोके द्रष्टव्याः। तन्नीत्येत्यर्थः। विष्णूक्तग्रन्थे स्मृतिशब्दप्रयोगः मन्वादि-

स्मृतीनामिव वेदप्रतिपादितार्थप्रतिपादकत्वसाम्यात् । एवं वेदे अधीतमर्थमत्र पश्यन्तोऽधीतवेदाः वेदवाक्यं समानार्थं स्मरन्ति । अतः श्रोतृस्मरणमादायापि स्मृतित्वं स्यात् । तेनात्र स्मृतिरिति वचः पदप्रयोगः सम्यग्घटते ॥ ११३ ॥

**114. किञ्चाम्नायान् अभिन्नक्रमनियमतयाऽध्यापयेच्छात्रपूर्वान्**
**गीतादिग्रन्थराशिं क्रमविघटनया तत्तत्र प्रयुङ्क्ते ।**
**तस्माद्विष्णुस्मृतिर्या तदितरदपि यन्नित्यसर्वज्ञशास्त्रं**
**प्रख्यातं भारतादौ भवति तदखिलं वेदराशेर्विभक्तम् ॥**

**स.** निगमानां भगवदुक्तग्रन्थान्तराणाञ्च नित्यतत्प्रत्यक्षसिद्धत्वाविशेषेऽपि तेषामपि वेदत्वेन व्यवहारानर्हताप्रयोजको विशेषो वर्तत इत्याह **किञ्चेति** । **अभिन्नक्रमनियमतया** सर्वेष्वपि कल्पेषु एकानुपूर्वीकतयैवाम्नायान् स भगवान् **छात्रपूर्वान्** साक्षात्स्वशिष्यान् स्वशिष्यब्रह्मादीन् प्रति शिष्यभूतांश्च **अध्यापयेत्** अनूच्चारणोपधायकोच्चारणविषयान् कुर्यात् । गीतादिविषयेऽपि सर्वदा एकानुपूर्वीकत्वमिति न । श्लोकानां पदानाञ्च यथेच्छं परिवर्तनमपि कुर्वन् प्रयुङ्क्ते । अध्यापनीयमेवेति न निर्बन्धः । श्रुत्वा पश्चाल्लिखितपाठस्यापि करणसंभवात् । तस्मात् तत् सर्वं वेदराशेर्विभक्तम् विलक्षणम् । किं तत् ? या विष्णुस्मृतिः यच्च तदन्यत् भारतादौ नित्यसर्वज्ञशास्त्रत्वेन भगवच्छास्त्रत्वेन प्रसिद्धं पञ्चरात्रम् अन्यच्च, तदखिलम् ॥ ११४

**115. सन्दर्भो यस्त्वपूर्वः स्मृतिरिव कविभिः कल्प्यते सावधानैः**
**नित्यं सर्वज्ञबुद्धौ निहितवपुरसौ नैगमात् को विशेषः ।**

सत्यं पुंसां विशेषादुपनमति भिदा तत्र मानेतरात्मा
निर्बाधत्वेतराभ्यां भवति कवयतां कर्तृभावोऽपि कश्चित् ॥

स. एवं लोकानुजिघृक्षया साक्षाद् भगवदुपदिष्टानां तत्कृतीनां वेदानुरोधात् तदुपदिष्टनित्यवेदतुल्यं पूर्णं प्रामाण्यमित्यपि व्यञ्जितम् । वेदप्रामाण्यनिष्ठैरेव क्रियमाणानां वेदार्थविशदीकरणलक्ष्याणां काव्यादिग्रन्थानामपि नित्यसर्वज्ञबुद्धिगोचरत्वसत्त्वात् प्रामाण्यमविशेषेण स्यादिति शंकायां स्मृतिवत् विशेषोऽस्तीत्याह संदर्भ इति । पूर्वार्धेन शंका । परिहर्तुमाह सत्यमिति । पुंसां कर्तॄणामस्ति विशेषः । भ्रान्तेः पुरुषधर्मत्वात् । मन्वादिस्मृतीनां वेदविरोधे भ्रमप्रमादसंभावनया विरुद्धत्वबुद्धौ सत्यामुपेक्षैव । मानेति । निर्बाधत्वहेतुना कश्चिन्मानात्मा, इतरेण सबाधत्वेन हेतुना चान्यत्रामानात्मेति भेदः । वेदविषये तत्कृतग्रन्थविषये चान्येषां पठतां कर्तृत्वं नास्ति । तत्तद्ग्रन्थेषु तेषां कर्तृत्वमपि भगवत्पारतन्त्र्यसहितमस्ति । अतोऽन्यकर्तृकमव्यवस्थितप्रामाण्यकम् । तदन्यत् कार्त्स्न्येन प्रमाणमिति भेद इति ॥ ११५ ॥

116. बुद्धार्हन्तौ कणादः कपिल इति यथाकाममुद्गृह्यमाणाः
सर्वज्ञाः सन्त्यनेके कलितमपि च तैः संगृहीतं ततः किम् ।
वेदादित्यप्रकाशप्रतिहतगतिभिर्दृष्टिभिस्तादृशानां
धर्माधर्मव्यवस्था दुरधिगमतमा दोषमालाविलाभिः ॥

स. एवं वेदानुरोधिनां वाक्यान्यपि यदि कचिन्न प्रमाणानि, तर्हि बौद्धादिग्रन्थेषु कः संदेहः । तत्र कार्त्स्न्येनाप्रामाण्यमेवेत्याह बुद्धेति । सर्वज्ञभगवद्बुद्धौ भातत्वं तेष्वपि तुल्यम् । बुद्धादीनामेव

सर्वज्ञत्वं तु तैस्तैरभिमानेनाऽऽरोपितम्। बुद्धात् अर्हन् ज्यायान्। जगदनपलापात्। बुद्धार्हन्तौ बुद्धः अर्हन् इत्युभौ सर्वथैवावैदिकौ। वैदिकाभासौ कपिलकणादौ। बुद्धादिसंनिकृष्टः कणादः। तदुक्तस्य सर्वस्यापरिग्रहाच्चात्यन्तमनपेक्षा सूत्रोक्ता। आम्नायोक्तधर्मस्वीकारः कणादस्य कपिलस्य चाविशिष्टः। वेदान्तोक्तप्रकृत्यादितत्त्वानामपि स्वीकारात् कपिलो विशिष्यते। भगवदंशत्वात्, वस्तुतः कापिलानामुपेक्ष्यत्वेऽपि कपिलो जैमिनिरिव नोपेक्ष्य इति चेत्—न हि कपिलग्रन्थः कश्चित् प्रमाणभूतो जैमिनिसूत्रमिव यथावद्व्याख्येयः सेश्वरो दृश्यते। न च व्यासः सूत्रे जैमिनिमिव तमादृत्य किञ्चिदाह। अतः सांख्यग्रन्थरीत्या कपिल उपेक्ष्य एव। पुराणरीतिस्त्वन्या। त इमे मिथो विरुद्धवादिनः सर्वज्ञविरुद्धचित्ताः। तेषां मतं तदनुयायिभिरनेकैः संगृहीतं परिगृहीतञ्च। अथापि वेदविरुद्धत्वादप्रामाण्यमेव। तदाह वेदादित्येति। दोषमालाविलाभिरिति मालापदेन पूर्वोक्तस्मृतिकाव्यादिवत् अल्पदोषत्वाभाव उच्यते॥ ११६॥

117. **प्रत्यक्षादन्यदेव स्मृतिजनकतया वर्णयन्तोऽनुमानं**
**तस्माच्छास्त्रं विभक्तं न कथमकथयन् बाधनाक्षेपसाम्यात्।**
**प्रत्यक्षेऽप्यप्रमाणं त्ववधृतिविरहान्निर्विकल्पं वदन्तः**
**शास्त्रेऽप्येवं जजल्पुः स्वहृदयविहतं तत् स्वतोऽन्यैश्च वार्यम्॥**

**स. तस्य ज्ञानमुपदेश** इति सूत्रखण्डस्य शब्दरूपप्रमाणानंगीकरिखण्डकत्वं निर्विकल्पशाब्दज्ञानखण्डकत्वञ्चाभिप्रेत्याह **प्रत्यक्षादिति**। अनुमानं प्रत्यक्षानन्तर्भूतं पृथगिति सत्यम्, अथापि न तस्या-

नुभवजनकत्वम्, किन्तु ज्ञातार्थविषयकतया स्मृतिजनकत्वमेव । अत एव ह्युच्यते–'विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात् । अनुमाभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः' इति । अयमर्थः–पर्वते धूमेनाग्निः साध्यते । तत्र पर्वतीयाग्निरूपविशेषेण सह धूमस्य व्याप्तिर्नास्ति, व्यभिचारात्; पूर्वं तथाऽग्रहणाच्च । सामान्येन व्याप्तिग्रहश्चेत्—योयो धूमवान् स वह्निमानिति व्याप्तिग्रहणकाल एव वीप्सावलात् सामान्यतः पर्वतेऽप्यग्निः सिद्ध एवेति किमत्र साधनीयम् । अतो ज्ञातैकदेशग्रहणमेवानुमितिरिति स्मृतित्वमेवानुमितेरिति । एवं वदन् शास्त्रं कथं पृथक् प्रमाणं न मन्यते । तद्धि प्रत्यक्षविलक्षणम् । तज्जन्यज्ञानस्य साक्षात्कारत्वाभावात् परोक्षत्वात् । न च स्मृतिरूपम्; अप्राप्ते शास्त्रमर्थवदिति अज्ञातार्थज्ञापकत्वात् । बाधनाक्षेपसाम्यात् प्रत्यक्षप्रमाणं नेति बाधने यथाऽऽक्षेपः, तद्वदत्राप्याक्षेपसंभवात् । यद्वा बौद्धादयः तदीयस्मृतिग्रन्थहेतुतया प्रत्यक्षातिरिक्तमनुमानं प्रमाणं स्वीकुर्वते, तथैव शब्दमपि कस्मान्न स्वीकुर्वते ॥ अथ शब्दस्यानुमानादतिरिक्तत्वे बाधकमस्ति, एतानि पदानि स्मारितार्थसंसर्गवन्ति आकांक्षादिमत्पदकदम्बत्वादिति तस्यानुमानविधयैव प्रमाणत्वादिति चेत्—अनुमानस्यापि प्रमाणत्वे बाधकमस्ति, विशेषेऽनुगमाभावादित्यादिनाऽनुमाभङ्गस्य दर्शितत्वात् । अथानुमाया अनिष्टौ प्रागेव पर्वतेऽग्नेर्ज्ञातत्वे, अनुमानं विहायैव कस्मादग्न्यर्थी पर्वतं नारोहेदिति तत्राक्षेपोऽस्तीति चेत्–अत्रापि अनुमानवत् व्याप्तिपरामर्शापेक्षाविरहात् शब्दस्यानुमानता कथमित्याक्षेपः सम इति । अतः शास्त्रं प्रमाणम् । यत् तत्र

केचित्, 'न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम्' इति निर्विकल्पकज्ञानं न प्रमेति वदन्त एव, सोऽयं देवदत्तः, तत्त्वमसीत्यादौ एकविशेषणविशिष्टेऽपरविशेषणवैशिष्ट्यायोगात् विशेषणत्यागेन विशेष्यमात्रग्रहान्निर्विकल्पकमेव ज्ञानमिति वदन्ति—तदयुक्तम्; विशेषण विवक्षाया अविरोधावश्यकत्वयोर्भाष्ये प्रपञ्चनात्। एवञ्च मुखान्तरेण तैस्तद्वाक्यस्यानुपदेशत्वमप्रामाण्यमेवोक्तं स्यात्। अतः शास्त्रं सर्वमुपदेशरूपं प्रमाणम् ॥ ११७ ॥

118. **वश्याकृष्ट्यादिषट्कप्रतिकृतिलपनप्रस्तरस्फोटनाद्यं**
**दृष्टं जैनादिशास्त्रेष्वपि कुहकपथः क्षुद्रविस्रम्भयोग्यः ।**
**बाधे दोषे च दृष्टे बडिशवदनवर्त्यामिषन्यायनिष्ठै-**
**र्मन्वाद्याप्तोपदेशप्रणिहितमतिभिस्तेषु वाचाऽपि नार्चा ॥**

स. जैनादिग्रन्थानामुपदेशत्वं नेत्येतत् तेषां विप्रलम्भकार्याणि प्रदर्श्य तत्साम्येनापि स्थापयति **वश्याकृष्टीति**। वश्याकृष्ट्यादिषट्कं वशीकरणम् आकर्षणम् आवेशनं स्तम्भनम् उच्चाटनं मारणमिति मान्त्रिकलोकप्रसिद्धम्। वशिः आकृष्टिश्चेति विग्रहः। वशिः वशीकरणम्। अन्यादृशषट्कं चेत्, अन्यत्र द्रष्टव्यम्। **प्रतिकृतिलपनेति**। प्रतिमाजल्पेत्यर्थः। उक्तञ्च **न्यायकुसुमाञ्जलौ** (2–स्त) "आदित्यस्तम्भनं पाषाणपाटनं शाखाभङ्गः भूतावेशः प्रतिमाजल्पनं धातुवादः इत्यादिग्रन्थनात् (वञ्चनात्) कुहकवञ्चितास्तान् परिगृह्णन्ति" इति। अयं **कुहकपथः** वञ्चकपुरुषादृतो मार्गः क्षुद्राणामेव **विस्रम्भयोग्यः**। विश्वसनीयः। तदुक्तानामर्थानां लोकरीत्या वेदेन च बाधे

न्दृष्टे, तद्वदेवान्यांशानामपि दोषमूलकत्वे दृष्टे सति एभिर्जैनादिभिरास्तिकवशीकरणेन हिंसनार्थं वडिशमुखे मत्स्यग्रहणप्रवृत्तैर्मांसनिक्षेपवत् वश्याकृष्ट्यादिकमादृतमिति जानीयुः । एवं ज्ञात्वा वेदाविरोधिमन्वाद्युपदेशमात्रग्रहणेन, 'हैतुकान् बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' इति वचनं स्मरन्तो जैनादीन् वाचाऽपि न पुरस्कुर्युरिति ॥ ११८ ॥

119. **त्यक्तानां वेदनिष्ठैरगतिपरवतां त्यागदम्भास्थितानां**
**मूढानां क्षुद्रतर्कैर्मुनिसप्तघटिकाभोजनौत्सुक्यभाजाम् ।**
**तत्तद्बाह्यागमेषु भ्रमदनुगधियां भण्डसम्मोहितानां**
**स्वैराचारार्थिनां च स्वकहृदयविसंवादशारः प्रवेशः ॥**

स. जैनादिमतप्रविष्टा ये सन्ति, ते कीदृशा इति परिशीलनेऽपि तन्मतदौर्बल्यं सुग्रहमित्याह त्यक्तानामिति । वैदिकमतभ्रष्टत्वेन हेतुना ये वैदिकैस्त्यक्ताः, ते तत्र प्रविशन्ति । एवम् **अगतिपरवताम्** गत्यन्तराभावतः पराधीनानाम्, सर्वत्यागिनो विरक्ता इति डम्भे दृष्टिमतां तारतम्यज्ञानहीनानां कुतर्काधीनमोहभाजां **मुनिसप्तघटिकासु** सप्तघटिकापरिमितकाले शीघ्रमेव भोजनलाभ इति तत्रोत्सुकानाम्, एवं रीत्या ये प्रविष्टाः भ्रान्ताः तदनुसारिबुद्धीनामर्वाचीनानां तन्मततत्त्वमेवाविदुषां तथा **भण्डसंमोहितानाम्**—भण्डास्ते, ये उपेक्ष्यमाणा अपि निरस्यमाना अपि निर्लज्जाः स्वोद्दिष्टसिद्धिपर्यन्तमनुवर्तमानाः पुरुषस्तवनविषयप्रशंसनप्ररोचनादि कुर्वन्त एव सन्ति, तेषामन्ततो वशीभवताम्, एवं वैदिकमार्गालम्बने यथेच्छं चरितुं न पार्यते, अतो बाह्यमेव ग्राह्यमिति तदर्थिनाञ्च तत्र प्रवेशः । तदुक्तं **न्यायकुसुमाञ्जलौ,**

"संभवन्ति चैते हेतवो बौद्धाद्यागमपरिग्रहे । तथाहि—भूयस्तत्र कर्मलाघवमित्यलसाः ; इतः पतितानामपि तत्रानुप्रवेश इत्यनन्यगतिकाः, भक्ष्याद्यनियम इति रागिणः, स्वेच्छया परिग्रह इति कुतर्काभ्यासिनः, पित्रादिक्रमाभावात् प्रवृत्तिरिति पाषण्डसंसर्गिणः, 'उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते' इत्यव्यग्रताभिमानिनः, सप्तघटिकाभोजनादिसिद्धेर्जीविकेति अयोग्याः, आदित्य......कुहकवञ्चिताः तान् परिगृह्णन्तीति संभाव्यते । अतो न ते महाजनपरिगृहीताः" इति । किञ्च तेषां तत्र प्रवेशः स्वहृदयविसंवादशारः । हृदयमेव तेषां साक्षि, यत् नेदं पूर्वपुरुषपरिगृहीतम्, तथापि कालवशात् कार्यवशाच्च ग्राह्यं भवतीति मतिमूलकेन विसंवादेन अप्रामाण्यज्ञानेन शारः कर्बुरः चित्रः प्रवेशः । प्रथमप्रवृत्तिरेवम् ; अथ तु वासनावशात् तेषामेवोत्तरकाले तदनन्तरणाञ्च तदनुसाराधीनमूढश्रद्धया च तत्र स्थितिरिति ॥

120. पाषण्डत्वप्रसिद्धिश्चतुरुदधिपरिष्कारवत्यां पृथिव्यां
पापानां षण्डमन्यन्मतमखिलपरिभ्रष्टमाविष्करोति ।
प्रत्यन्तक्षुद्रभाषाविहितमनियताशेषकृत्यहमेतत्
तत्प्रत्यर्थिस्वभावश्रुतिपरिषदवध्वस्तमस्तं प्रयाति ॥

स. ननु विपरिवर्त एव किं न स्यात्, बौद्धाद्यागमस्था एव वैदिकैरपूर्वार्थिकल्पनाकुशलैराकुलिता अर्वाचीने वैदिकमते प्रविश्य तदुत्कर्षभ्रान्त्या तथा तथा चरन्तीति । अत्राह पाषण्डेति । अवैदिका एव लोके ग्रन्थेषु पाषण्डत्वेन व्यवह्रियन्ते । पापानां षण्डं येषां ते पाषण्डाः । एवं पाषण्डपदस्य पापहेतुभूतं वेदभ्रष्टं मतमित्यर्थः ।

कुसुमाञ्जलौ पाखण्डेति पदं स्वीकृत्य, 'प्रमाणेन खण्डिताः पाखण्डाः' इत्युक्तम् । किञ्च भाषासु संस्कृतं प्राचीनम् । अन्याः क्षुद्रा इति सर्वसंवादः । अतस्तन्मूलकानि मतानि तदा तदा प्रवृत्तानीति सुगमम् । अनेनेदं ग्राह्यमिति व्यवस्थाऽपि नास्ति, उच्चावचवृत्तिभाजः सर्वे अव्यवस्थया तत्तत् गृह्णन्ति । अल्पसंख्याकाश्च ते ग्रन्थाः न चतुष्षष्टि-कल-चतुर्दशविद्यास्थानानन्तशाखानाद्यविच्छिन्नसंप्रदायवेदपरिषदः पुरः स्थातुमर्हन्ति । एतदवध्वस्तत्वात् बौद्धादय एव विवेकिनः तत्तत् परित्यजेयुरिति तत् सर्वमस्तंप्रयातीति भाव्यम् ॥ १२० ॥

121. साधूनां त्राणमिच्छुस्तदहितदमने दत्तदृष्टिर्मुकुन्दो
मायानिष्पन्नदैत्यप्रमुखकुहनया मोहयामास पापान् ।
मिथ्यादृष्ट्यैव शास्त्राण्यपि कतिचिदसौ निर्ममे निर्ममेभ्य-
स्त्वाचष्टानन्यशेषश्रुतिनिकरशिरस्सारसंग्राहकाणि ॥

स. ननु भवदादृतस्य भगवत एतन्मतेष्वनभिमतिर्यदि स्यात्, कथमेषामभिवृद्धिं सहेत । तस्मात् सर्वमपि श्रेयस्करमेवेति मन्वानान् प्रति प्रमाणग्रन्थदर्शितमर्थं प्रदर्शयन्, अविशेषेऽभिमते अर्वाचीनत्यागेन वैदिकादरण एवाऽऽर्जवं रक्षितं भवेदित्याशयेनाऽऽह साधूनामिति । मायानिष्पन्नदैत्येति । यथोक्तं श्रीविष्णुपुराणे (3. 17) "इत्युक्तो-भगवांस्तेभ्यो मायामोहं शरीरतः । समुत्पाद्य ददौ विष्णुः प्राह चेदं सुरोत्तमान् । मायामोहोऽयमखिलान् दैत्यांस्तान् मोहयिष्यति । (18) पुनश्च रक्ताम्बरधृङ्मायामोहो जितेन्द्रियः । अन्यान् आहासुरान् गत्वा मृद्वल्पमधुराक्षरम् .... .... तथा तथा त्रयीधर्मं तत्यजुस्ते यथा

“संभवन्ति चैते हेतवो बौद्धाद्यागमपरिग्रहे । तथाहि—भूयस्तत्र कर्मलाघवमित्यलसाः; इतः पतितानामपि तत्रानुप्रवेश इत्यनन्यगतिकाः, भक्ष्याद्यनियम इति रागिणः, स्वेच्छया परिग्रह इति कुतर्काभ्यासिनः, पित्रादिक्रमाभावात् प्रवृत्तिरिति पाषण्डसंसर्गिणः, ‘उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते’ इत्यव्यग्रताभिमानिनः, सप्तघटिकाभोजनादिसिद्धेर्जीविकेति अयोग्याः, आदित्य......कुहकवञ्चिताः तान् परिगृह्णन्तीति संभाव्यते । अतो न ते महाजनपरिगृहीताः” इति । किञ्च तेषां तत्र प्रवेशः स्वहृदयविसंवादशारः । हृदयमेव तेषां साक्षि, यत् नेदं पूर्वपुरुषपरिगृहीतम्, तथापि कालवशात् कार्यवशाच्च ग्राह्यं भवतीति मतिमूलकेन विसंवादेन अप्रामाण्यज्ञानेन शारः कर्बुरः चित्रः प्रवेशः । प्रथमप्रवृत्तिरेवम्; अथ तु वासनावशात् तेषामेवोत्तरकाले तदनन्तरणाच्च तदनुसाराधीनमूढश्रद्धया च तत्र स्थितिरिति ॥

120. **पाषण्डत्वप्रसिद्धिश्चतुरुदधिपरिष्कारवत्यां पृथिव्यां**
**पापानां षण्डमन्यन्मतमखिलपरिभ्रष्टमाविष्करोति ।**
**प्रत्यन्तक्षुद्रभाषाविहितमनियताशेषवृत्त्यर्हमेतत्**
**तत्प्रत्यर्थिस्वभावश्रुतिपरिषदवध्वस्तमस्तं प्रयाति ॥**

स. ननु विपरिवर्त एव किं न स्यात्, बौद्धाद्यागमस्था एव वैदिकैरपूर्वार्थकल्पनाकुशलैराकुलिता अर्वाचीने वैदिकमते प्रविश्य तदुत्कर्षभ्रान्त्या तथा तथा चरन्तीति । अत्राह पाषण्डेति । अवैदिका एव लोके ग्रन्थेषु पाषण्डत्वेन व्यवह्रियन्ते । पापानां षण्डं येषां ते पाषण्डाः । एवं पाषण्डपदस्य पापहेतुभूतं वेदभ्रष्टं मतमित्यर्थः ।

कुसुमाञ्जलौ पाखण्डेति पदं स्वीकृत्य, 'प्रमाणेन खण्डिताः पाखण्डाः' इत्युक्तम्। किञ्च भाषासु संस्कृतं प्राचीनम्। अन्याः क्षुद्रा इति सर्वसंवादः। अतस्तन्मूलकानि मतानि तदा तदा प्रवृत्तानीति सुगमम्। अनेनेदं ग्राह्यमिति व्यवस्थाऽपि नास्ति, उच्चावचवृत्तिभाजः सर्वे अव्यवस्थया तत्तत् गृह्णन्ति। अल्पसंख्याकाश्च ते ग्रन्थाः न चतुष्षष्टि-कल-चतुर्दशविद्यास्थानानन्तशाखानाद्यविच्छिन्नसंप्रदायवेदपरिषदः पुरः स्थातुमर्हन्ति। एतदवध्वस्तत्वात् बौद्धादय एव विवेकिनः तत्तत् परित्यजेयुरिति तत् सर्वमस्तंप्रयातीति भाव्यम्॥ १२०॥

121. साधूनां त्राणमिच्छुस्तदहितदमने दत्तदृष्टिर्मुकुन्दो
मायानिष्पन्नदैत्यप्रमुखकुहनया मोहयामास पापान्।
मिथ्यादृष्ट्यैव शास्त्राण्यपि कतिचिदसौ निर्ममे निर्ममेभ्य-
स्त्वाचष्टानन्यशेषश्रुतिनिकरशिरस्सारसंग्राहकाणि॥

स. ननु भवदादृतस्य भगवत एतन्मतेष्वनभिमतिर्यदि स्यात्, कथमेषामभिवृद्धिं सहेत। तस्मात् सर्वमपि श्रेयस्करमेवेति मन्वानान् प्रति प्रमाणग्रन्थदर्शितमर्थं प्रदर्शयन्, अविशेषेऽभिमते अर्वाचीनत्यागेन वैदिकादरण एवाऽऽर्जवं रक्षितं भवेदित्याशयेनाऽऽह साधूनामिति। मायानिष्पन्नदैत्येति। यथोक्तं श्रीविष्णुपुराणे (3. 17) "इत्युक्तो-भगवांस्तेभ्यो मायामोहं शरीरतः। समुत्पाद्य ददौ विष्णुः प्राह चेदं सुरोत्तमान्। मायामोहोऽयमखिलान् दैत्यांस्तान् मोहयिष्यति। (18) पुनश्च रक्ताम्बरधृङ्मायामोहो जितेन्द्रियः। अन्यान् आहासुरान् गत्वा मृद्वल्पमधुराक्षरम् .... .... तथा तथा त्रयीधर्मं तत्यजुस्ते यथा

यथा ।.... अन्यानप्यन्यपाषण्डप्रकारैर्बहुभिर्द्विज । दैतेयान् मोहयामास मायामोहोऽतिमोहकृत् ” इत्यादि । एवं भारते पाद्मपुराणादौ च द्रष्टव्यम् । तथाच मुकुन्दो देवादीनां साधूनां प्रार्थनामनुरुध्य तत्परिपालनमिच्छन् मायानिष्पन्नो यो दैत्यप्रमुखः स्वोक्तिसामर्थ्येन सर्वदैत्यनेता मोहबुद्धजिनादिः तदीयया कुहनया कपटमार्गेण पापान् असुरान् मोहयामास वैदिकभ्रष्टान् अकरोत् । तत एव मिथ्यादृष्ट्यैव विपरीतज्ञानेनैव हेतुना । विपरीतज्ञानजननार्थमिति यावत् । असौ बुद्धादिर्भूत्वा कतिचित् शास्त्राणि आगमाभासादीन् निर्ममे निर्मिमीते स्म । ये पुनः निर्ममाः अहंकारममकाररहिताः दैवसर्गान्तर्भूताः, तानुद्दिश्य अनन्यशेषाणां स्वयं मूलभूतानां तथा स्वान्यदेवतादिप्राधान्यनिरूपणपरत्वाभावात् स्वभिन्नं प्रति शेषतारहितानां श्रुतिनिकराणां शिरांसि उपनिषदः तत्सारसंग्रहपराणि गीतापाञ्चरात्रविष्णुस्मृत्यादीनि च सच्छास्त्राणि आचष्ट । सर्वविधप्रजासर्गप्रवृत्तस्य तत्तत्कर्मानुगुण्येन सदसत्सर्वशास्त्रकर्तृत्वमप्युपपन्नम् । हेयोपादेयविवेकेन तु अस्माभिः प्रवर्तनीयमिति ॥ १२१ ॥

122. **बाधे वेदोदितानां भवति विफलता सिद्धिरस्त्यन्यतश्चे-**
**न्नैष्फल्यं वेदवाचां दिनकरकिरणैर्दर्शिते किं प्रदीपैः ।**
**तस्मात् बाधोपलम्भव्यपनयनवचः सार्थकं वेदवेद्ये**
**द्वेधा बाह्यान् प्रवृत्तान् दमयितुमनसः संग्रहो ह्येष सारः ॥**

स. अथ अव्यतिरेकश्चार्थेऽनुपलब्धे इति सूत्रखण्डार्थमुपपादयति बाध इति । अव्यतिरेक इत्यनेन अबाध उच्यते । वेदोदितस्य

तत्तत्कर्मणां तत्तच्छ्रेयस्साधनत्वस्यान्यस्य वा लोके बाधादर्शनात् नोपेक्ष्यता । अनुपलब्धे असत्प्रमाणान्तराग्राह्येऽर्थे व्यतिरेकः बाध्ये दुर्वचः । यत्र तु वेदोदितानां बाधो लक्ष्यते, आदित्यो यूपः, यजमानः प्रस्तरः इत्यादौ, तत्र यथाश्रुतार्थस्वीकारे विफलता, वेदाप्रामाण्यञ्च स्यात् । अद्भुतानेकार्थप्रतिपादनपटोर्वेदस्य ईदृशप्रत्यक्षबाधितार्थतत्परत्वञ्च दुर्भणम् । मुख्यगौणनानाप्रयोगरीतेर्लोकप्रसिद्धत्वाच्च अर्थप्रकरणादिना तत्रार्थान्तरस्वीकारः । अतो न बाधितार्थपरत्वम् । एवमुपलब्धार्थ-परत्वमपि न भवति । अन्यतः प्रमाणान्तरेण सिद्धौ वेदवाचां नैष्फ-ल्यात् । न हि सूर्येण दर्शितमर्थं द्रष्टुं दीपोऽप्यारोप्यते । तस्मादप्राप्ते शास्त्रमर्थवत् । ज्ञातार्थानुवादस्तु तच्छेषतया । तस्मात् बाधितत्व-सिद्धत्वयोर्व्यपनयनार्थं वचः सौत्रं सार्थकम् । तेन ये विदितमेव वदता वेदेन किमित्याक्षिपन्ति, बाधितं वदति, तत् कथं प्रमाणमिति च ये आक्षिपन्ति, तान् उभयानप्यत्र वारयति । इदमेव, 'शास्त्रमसंनिकृष्टेऽर्थे विज्ञानम्" इत्युच्यते । ज्ञातमर्थं ज्ञाताकारेण वा ज्ञातविरुद्धाकारेण वा शास्त्रं न ज्ञापयति ; अपि तु अज्ञातमर्थं प्रतिपादयति, ज्ञातञ्चार्थ-मज्ञाताकारविशिष्टतया च प्रतिपादयतीति सारसंग्रह एषः ॥ १२२ ॥

123. नित्ये वेदे न वक्तुर्गुण इति स कथं मानमित्यप्ययुक्तं
वक्तुस्सत्त्वे हि वाचामपवदनभिया तद्गुणोऽन्वेषणीयः ।
नित्यज्ञानं च हेतोर्न भवति गुणतः, स्वीकृतं तच्च मानं
तादृग्विज्ञानमात्मन्यवितथविषयं वर्णितं क्वापि बोधे ॥

स. अथ तत्र प्रमाणं बादरायणस्यानपेक्षत्वात् इति सूत्रशेषं व्याख्यातुमाह **नित्य** इति । लौकिकवाक्यानां प्रामाण्यस्य तद्वक्तृणामाप्तत्वरूपगुणग्रहणपूर्वकमेव निश्चयात् अत्र तदग्रहणे कथं प्रामाण्यनिश्चय इत्येतच्छङ्कापरिहारार्थम् **अनपेक्षत्वा**दित्युक्तम् । सर्वत्र प्रामाण्यग्रहस्य स्वत एव भावात् किञ्चिदपेक्षैव नास्ति । उत्सर्गसिद्धस्य प्रामाण्यग्रहस्याकार्यकरता बाधितत्वज्ञाने वा दोषमूलकत्वज्ञाने वा सति स्यात् । अबाधितेऽर्थे बाधशंकाया नावकाशः । दोषमूलकत्वाभाव एव ततो निश्चेयत्वेनावशिष्यते । वाक्यानां दोषमूलकत्वसंभावना च वक्तृधीनत्वे भवेत् । वक्तृनिरपेक्षे अपौरुषेये वेदे कथं तदवकाश इति सूत्रतात्पर्यम् । इदमेव ज्ञानानां स्वतः प्रामाण्यं स्वाचार्यस्यापीष्टमिति **बादरायण**पदनिर्देशेन वदन् अर्थस्य साम्प्रदायिकत्वमाह । श्लोकार्थस्तु—वेदस्य त्वया नित्यत्वस्वीकारात् वक्तुरभावात् वक्तृयथार्थज्ञानरूपस्य गुणस्य दुर्वचत्वात् स कथं प्रमाणम् । ज्ञानानां प्रामाण्याप्रामाण्यान्यतराश्रयत्वस्य लोके दर्शनात् । विशेषनियामकाकांक्षायाम् अप्रामाण्यस्य कारणदोषः प्रयोजकः, प्रामाण्यस्य च कारणगुण इत्यस्यान्वयव्यतिरेकसिद्धत्वादिति पूर्वपक्षः । इदमयुक्तम् । प्रामाण्ये गुणः कारणमित्यस्यानंगीकारात् । प्रामाण्यमुत्सर्गसिद्धम् । शाब्दज्ञाने तदभावः वक्तृदोषादिति तदभावनिर्धारणार्थं वक्तृगुणो विमृश्यते । अतो दोषाभावमात्रेण प्रामाण्यसिद्धिः । अन्यथा परतः प्रामाण्यवादिभिः नैयायिकैरीश्वरज्ञानस्य प्रामाण्यं कथमिष्यते । तस्य ज्ञानस्य नित्यत्वेन पराधीनप्रामाण्यस्य दुर्वचत्वात् । न हि तत् नित्यज्ञानं

गुणरूपात् हेतोर्भवति । **तत्** नित्यज्ञानमपि अस्मदीयज्ञानवत् प्रमाणतया स्वीकृतम् । तस्मात् दोषाधीनत्वाभावात् तत् प्रमेत्येव वक्तव्यम् । एवञ्च तस्य स्वतः प्रामाण्यम् । किञ्च तैरेव जीवात्मन्यपि ज्ञानं तादृक् ईश्वरज्ञानतुल्यतया स्वत एव **अवितथविषयं** यथार्थविषयकत्वेन प्रमाणत्वेन स्वीकृतम् । कुत्र ? **क्वापि बोधे** क्वचित् बोधे जायमाने सति । **न्यायवार्तिकतात्पर्यटीकायां** वाचस्पतिमिश्रैः प्रामाण्यसाधकानुमाने प्रमाण्यसिद्धिः कथमित्याशंक्य स्वपरनिर्वाहकत्वान्नान्यापेक्षेत्युक्तत्वात् । तदिदं **सेश्वरमीमांसायां** (पु–70) द्रष्टव्यम् ॥

**124. चित्रादीनां समाप्तौ न भवति पशुवृष्ट्याद्यभीष्टं नियत्या स्वर्गादेः का कथा स्यादिति किल कलयन्त्यत्र लोकायतस्थाः । दृष्टोपाये फलानामनियतिवदिहाप्यस्तु किं नस्ततः स्यात् धर्माणां कर्मकर्तृप्रभृतिविगुणता तत्फलानाप्तिहेतुः ॥**

स. ननु वेदजन्यज्ञाने दोषमूलकत्वस्य दुरुपपादत्वेऽपि बाधितविषयकत्वादेवाप्रामाण्यमस्त्विति शंकामनूद्य परिहरति **चित्रेति** । चित्रया यजेत पशुकाम इति वाक्येन चित्रेष्टिः पशुरूपफलोद्देशेन विहिता । चित्रेति तदिष्टिनामधेयम् । दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यमिति अनेकद्रव्यसंसर्गाच्चित्रता । एवम् उद्भिदा यजेत पशुकामः, वृष्टिकामः कारीर्या यजेत, पुत्रकामः पुत्रेष्ट्या यजेतेत्येवमैहिकफलानि कर्माणि आदिपदग्राह्याणि । एतदनुष्ठाने समनन्तरक्षणे कार्येण भाव्यम् ; अन्यथा एषां कारणत्वासिद्धेः । न च पशुवृष्ट्यादिकमभीष्टं नियमेन भवति । अतो व्यभिचारात्

अकारणत्वम् । ततो वाक्यानाञ्च बाधितार्थकत्वम् । एवं दृष्टस्वल्पफल-विषयेऽप्ययाथार्थ्ये स्वर्गादौ कदापि समन्तरमजायमाने कथमबाधितत्वम्–इति चार्वाकमतस्थाः मन्यन्ते । ते प्रष्टव्याः—किं कार्यकारणभाव एव लोके नास्ति, उत प्रकृतमात्रे तदभावः । आद्ये बुभुक्षानिवृत्तये भोजनप्रवृत्तिरपि न स्यात् । अन्त्ये भोजनप्रवृत्तेर्भोज्यलाभं प्रति कारणत्वं कथम् ; क्वचित् प्रवृत्तिसत्त्वेपि तदलाभात् । आरोग्यं प्रति औषधसेवनं कारणमिति क्लृप्तम् । क्वचित् सत्यपि सेवने तदसिद्धिर्दृश्यते । तद्वदिहाप्यस्तु । तावता कारणत्वहानिर्न भवति । कार्योपधाने सामग्र्या अपेक्षितत्वात् । एककारणसत्त्वेऽपि कारणकलापरूपसामग्र्यभावे कार्यानुदयात् । किञ्च कारणमपि यादृशम्, तादृशं निष्पन्नं न वेत्यपि विचारणीयम् । "कर्मकर्तृसाधनवैगुण्यात्" इति न्यायसूत्रोक्तरीत्या अनुष्ठीयमाने कर्मणि, तत्कर्तरि, तत्साधनद्रव्ये च यथारूपत्वाभावे कारणस्यैवासिद्धिः, यथा पुत्रहेतोः स्त्रीपुंससंसर्गस्य स्थितस्य प्रायः कार्यकरत्वाभावः, तथेति भाव्यम् ॥ प्रभृतिशब्दः साधनाभिप्रायेण । तच्च द्रव्यमन्त्रादि । तथा च वैगुण्यमन्तरा कर्मण्यनुष्ठिते तत् फलं समनन्तरमजायमानमपि समये भावित्वेन स्वीकार्यम् । न तु स्त्रीपुरुषसंसर्ग–औषधसेवनादिवत् सर्वथा व्यर्थमित्यपि ध्येयम् ॥१२४॥

125. यागस्वर्गादिमध्ये यदि भवति किमप्यास्तिकानामपूर्वं
चित्रापश्वादिमध्ये न तदिह घटते तत्क्षणोत्पत्तियोगात् ।
नो खल्वन्यत्र देहे परमिह पशुवृष्ट्यादिलाभाय यत्नो
बाधे चैवं समस्ता श्रुतिरनृतवचस्तन्न बाधव्यपोहात् ॥

स. ननु यजेत स्वर्गकाम इत्यादौ देहान्तरभावि स्वर्गादिकं प्रति यागादेः कारणत्वं श्रुतं मध्ये अपूर्वरूपद्वारकल्पनाभावे न भवतीति तत् स्वीकृतम्। यदि तत्रापूर्वमास्तिकसंमतम्, तावता चित्रेष्ट्यादौ पश्वादिहेतुत्वेनोक्ते तन्न घटते। अत्र समनन्तरक्षण एव कार्योत्पत्ति-संभवेन तदावश्यकत्वाभावात्। न हि देहान्तरे पशुवृष्ट्यादिकं भवतु इत्यपेक्ष्य कश्चित् चित्रेष्ट्यादि करोति। एवञ्चात्र समनन्तरमेव पश्वादिप्राप्तेरदर्शनात् कारणत्वाभावात् वाक्यं बाधितार्थकम्। एतन्न्यायेन स्वर्गाद्यर्थश्रुत्यन्तराण्यपि मिथ्यावाक्यान्येवेति पूर्वपक्षः। समाधानमाह तन्न बाधव्यपोहादिति। चित्रादिस्थलेऽप्यपूर्वमास्ति-केष्टमिति भावः। अथ श्लोकद्वयेन तदुपपादनम् ॥ १२५ ॥

126. सद्यः सिद्धिर्यदा स्यादिह, न खलु तदा बाधशङ्कावकाशो
विघ्नैः सिद्धौ विलम्बः कृषिवदिह भवेदन्यथाऽतिप्रसङ्गात्।
तेनैवापूर्वमन्तर्भवति नरपतिप्रीणनन्यायदृष्ट्या
वैगुण्योत्थे विलम्बे विहतिविहतता शेषमप्येवमूह्यम् ॥

स. सद्य इति। चित्रादौ कुत्रापि न समन्तरक्षणे फलमित्यपि त्वया वक्तुं न शक्यते। दृष्टेऽपलापायोगात्। तथा च तत्र प्रयोगे कारण-त्वबाधो नास्ति। सिद्धौ विलम्बो विघ्नबलाद् भवेदिति प्रागेवोक्त-प्रायम्। कृष्यादौ उप्तेऽपि बीजे वर्षानन्तरमेवाङ्कुरप्ररोहः क्वचिदिति तन्न्यायेन विलम्ब इहापि। अन्यथा तत्रापि कृष्यादौ कारणत्वं मा भूत्। तेन हेतुनाऽत्र चित्रादावपि हेतुफलयोः अन्तः मध्ये अपूर्वं भवति। अपूर्वस्थाने सिद्धान्तिसंमतभगवत्प्रीतिरूपद्वारस्यानुगुणं दृष्टान्तमाह

नरपतीति। न हि विलम्बेन कार्यसिद्धौ नरपतिसेवनं प्राक्कृतमकारणं भवति। तद्वत्। यत्र तु कर्मवैगुण्याद् विलम्बः, तत्र कारणस्य विहत्या कार्यस्य विहततैव। यद्वा वैगुण्यपरिहारे प्रायश्चित्तसाधिते कार्यविहतेः विहतता बाधितता भवति; कार्यं विलम्बेन सिद्ध्यतीति नरपति-प्रीणनन्यायेन द्रष्टव्यम्। ननु कालान्तरे चेत् फलम्, तत् प्रतिग्रहादि-कारणान्तरायत्तमेवेति चित्रादेः कारणत्वे किं मानमिति चेत्—अविशेषेणोभयोरपि कारणत्वात्। प्रतिग्रहार्थवस्तुसंनिधानं चित्राद्यायत्त-मिति कस्मान्न भवेत्। अवश्यमेव तत्र कस्यचिद् दृष्टस्य वक्तव्यत्वात्। तदाह शेषमप्येवमूह्यमिति। (से–मी– पु. 81)॥ १२६॥

127. नानाभूतैर्निजाङ्गैः क्रमसमुपनतैरङ्गिसिद्धावपूर्वं
तत्तन्निष्पादनीयं करणसमुदयात्पूर्वमेवाभ्युपेत्यम्।
भोगश्चित्रादिसाध्यो बहुदिवससमासादनीयश्च मध्ये
त्यक्त्वाऽपूर्वं न सिध्येदपि च सुनियताऽदृष्टहेतुप्रनीतिः॥

स. यत्र समनन्तरक्षण एव फलोत्पत्तिः, तत्रापि चित्रादावपूर्व-मंगीकर्तव्यमेवेत्येतत् द्वेधोपपादयति नानेति। सर्वमपि कर्म पूर्वा-परानेकाङ्गविशिष्टतया विततमिति सर्वसंमतम्। तत्र क्रमिकाणामङ्गानां तेषां मिथो वा अङ्गिना सह वा मेलनं कथम्; क्षणिकतया तदातदा तेषां नाशात्। अतस्तत्तज्जन्याङ्गापूर्वमेलनमेवाङ्गमेलनम्। अतः करणस्य समुदयात् उत्पत्तेः पूर्वमेव तत् सर्वमभ्युपेत्यम् अभ्युपगन्तव्यम्। एवं करणभूतयागानुष्ठानात् पश्चात् क्रियमाणानामङ्गानां करणसाहित्यस्य स्वरूपेणासंभवात् करणसमुदयात् तेषां करणेन सह अपूर्वे सत्येव

समुदयात्—मेलनात् तदर्थं **पूर्वमेव** प्रयोगसमाप्तेः प्रागेव करणा-पूर्वमप्यभ्युपेत्यम् । प्रकारान्तरमाह **भोग** इति । पश्वादिफलापेक्षा हि भोगार्था । भोगश्चानेकवर्षानुवृत्तत्वात् अनेकाहोरात्रसाध्यः । पश्वा-दिस्थितिरूपः स भोगो यागकार्यो यावान्, तावति यागस्य कारणत्वोप-पादनं तावत्कालानुवृत्तापूर्वास्वीकारे न भवति । अतः स भोगः **अपूर्वं त्यक्त्वा** अपूर्वमनपेक्ष्य न भवेत् । नन्वेवं नित्ये कर्मण्यपूर्वं न स्यात्, फलाभावेन तत्र द्वारवैयर्थ्यादित्यत्राह **अपिचे**ति । नित्यमपि कर्म सापूर्वं वैदिककर्मत्वात् काम्यवदिति तत्रापि तथोत्पत्तिर्नित्या । किञ्च सांगकर्मानुष्ठानरूपप्रयोगविध्यवगतं साहित्यं हि अपूर्वमुखेनैव वक्तव्यम् । वस्तुतस्तत्रापि फलमस्त्येव पापक्षयादि । किञ्च चित्रादावपि अपूर्वं स्वीकर्तव्यम्, "धर्मः क्षरति कीर्तनात्" इति कीर्तननाश्यत्वस्यापूर्वं एव वक्तव्यत्वात् । अन्यथा कीर्तनेऽपि फलोत्पत्त्यापत्तेः ॥ १२७ ॥

128. **ग्राव्णां चैतन्यकृत्यं श्रवणमभिदधे सत्रचर्यां पशूनाम्**
**अन्येऽपि ह्यर्थवादप्रभृतिषु विहितास्तत् कथं मानतेत्थम् ।**
**व्याघातो यत्र दृष्टः श्रुतिषु बहुविधस्तत्र चाऽऽप्तोक्तिनीत्या**
**मुख्यादन्यत्र वृत्तेः प्रमितिकरणता स्थापनीया यथार्हम् ॥**

**स**. एवं यथाश्रुतार्थस्वीकारेणैव बाधपरिहारो यत्र, तत् प्रदर्शि-तम् । अथार्थान्तरवर्णनेन निर्वहणीयस्थले शंकित्वा परिहरति **ग्राव्णा**-मिति । अचेतनान् ग्राव्णः—पाषाणान् संबोध्य विधीयते, "शृणोत ग्रावाणः" इति श्रवणरूपं ज्ञानकार्यम् । "गावो वा सत्रमासत" इति गोकर्तृकं सत्रयागानुष्ठानमभिदधे । अन्येऽप्यर्थाः यूपादौ

आदित्याभेदादयः विहताः उच्यन्ते। एवं अर्थवादेष्विव मन्त्रेष्वपि द्रष्टव्यम् । तत्र तस्मात् वेदस्य मानता कथमिति प्रश्नः । समाधत्ते इत्थमिति । विवृणोति व्याघात इति । आप्तोक्तिषु अग्निर्माणवकः, गङ्गायां घोषः इत्यादौ कथं व्याघातपरिहारः ? शक्तिलक्षणागौणीरूपानेकवृत्तिसद्भावस्य लोकेष्टत्वान्न दोष इति चेत् —सेयं दृष्टिरत्रापि क्रियताम् । योग्यतामर्थप्रकरणादि च परिशील्यार्थान्तरं यथार्हं स्वीकार्यम् । विस्तरोऽन्यत्र ॥ १२८ ॥

129. यस्मिन् मूलप्रमाणं न भवति न भवेत् तत्र शब्दः प्रमाणं
धर्मे मानं च नान्यत् तत इह वचसो मानता मानशून्या ।
इत्युत्प्रेक्षाविलानां क्षम इह तु परं मूलदोषव्यपोहः
सोऽयं निर्धारणीयस्त्रिभिरधिकरणैर्दुस्तरैरुत्तरत्र ॥

स. ननु आप्तोक्तिनीत्यैति भवदुक्त्यैव शब्दस्य क्वचित् प्रामाण्यं क्वचिदप्रामाण्यञ्चानपलप्यम् । तथा प्रामाण्यनियामकञ्च, अर्थं बुध्वा शब्दरचनेति न्यायात् रचनाहेतुभूतज्ञानरूपं वक्तृगतं प्रामाण्यमेव । अन्यथा—घुणाक्षरराशेर्यदृच्छया किञ्चिदर्थबोधकत्वेऽपि प्रामाण्यादर्शनात् । एवं सामान्यत एव प्रमाणान्तरापेक्षत्वे स्थिते, सुतरां तत्र वक्तृविवक्षारूपप्रमाणान्तरानुरोधेनैवार्थनिर्णयः, यत्रार्थस्य यथाश्रुतस्य बाधो लक्ष्यते । अन्यथा हि अभिमानिनाऽपि बाधितार्थकमुपेक्ष्याबाधितार्थकमात्रं ग्राह्यं स्यादित्यत्राह यस्मिन्निति । प्रत्यक्षानुमानशब्दान्तरावगतस्यैवार्थस्य शब्देन ज्ञापनदर्शनात् मूलप्रमाणरहितत्वेनेष्टे वेदे मानतायां न मानमिति कल्पनया कलुषितमतीनां समाधानं—मूलदोषा-

भावात् अप्रामाण्यसाधकाभावात् प्रामाण्यमित्येव। यस्य वाक्यस्य यदर्थबोधने तात्पर्यम्; तदर्थज्ञानस्य प्रामाण्यं स्वतो गृहीतम्, तत्राप्रामाण्यशंका जायमाना दोषाभावज्ञानान्निवर्तते। अप्रामाण्यं प्रति दोषस्य कारणत्वात्। अत्रार्थे तात्पर्यमिति निर्णयश्चार्थप्रकरणादिभिर्भवितुमर्हति। एतदर्थत्रेशयमुपरितनैस्त्रिभिरधिकरणैर्भविष्यति; तैः क्रमेण शब्दानामसांकेतिकत्वस्य, वेदानामर्थप्रत्यायकत्वस्य, नित्यत्वस्य च स्थापनात्। तदधिकरणानि च सम्यङ्न्यायात्मकानि दुस्तराणि निषेधानर्हाणीति। तथा च बाधितस्थलेऽर्थान्तरस्वीकारे कारणाभावादप्रामाण्यमेवास्त्विति न शंक्यम्। नित्यतया सादरमधीयमानेषु वाक्यराशिषु मुख्यगौणान्यतरार्थपरत्वस्वभावं शब्दनिष्ठमुल्लंघ्य अप्रमाणत्वकल्पनस्यैवानुपपन्नत्वादिति भावः॥ १२९॥

130. एकः सर्वेन्द्रियाणां विषयमनुभवन् बुद्धितश्चातिरिक्तः
सत्सूत्रे भाति हस्ताद्यपघनघनतोऽप्यर्थतस्तुल्यनीत्या।
तस्मात् स्वर्गादि दृष्टेतरदपि हि फलं देहभेदात् स भोक्ता
बाधे चैवं विधूते भवति फलवती चोदनाऽतीन्द्रियार्था॥

स. नन्वपूर्वस्वीकारेण, यागादेः स्वर्गादिजनकत्वं बाधितमित्याशंकापरिहारस्तदा स्यात्, यदि कर्तुः स्वर्गादिभोक्तृत्वं संभवति। तदेव न; देहस्यैवात्मत्वेन तस्मिन्नष्टे तस्य स्वर्गानुभवस्य दुर्वचत्वात्। अतश्चोदना निष्फलेत्याशंकायाम्, **सत्संप्रयोगे** इति पूर्वसूत्रेणाऽऽत्मनित्यत्वमवगमितमत्रानुसंधेयमित्याह **एक** इति। तत्र सूत्रे सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्मेति भागेन इन्द्रिय-तज्जन्यज्ञान-तद्विषयवस्तु-

व्यतिरिक्तः पुरुष इति **अनुभवसिद्धमिति** व्यधिकरणविभक्तिनिर्देशेन ज्ञापितम्। स पुरुषस्तत्र न देहः, स्त्रीदेहस्यापि ग्राह्यतया पुरुषपदस्य साधारणत्वादात्मपरत्वात्। अस्तु सामान्यतो देह एव तदर्थ इति चेत्-इन्द्रियाणामेवाऽऽत्मत्वे को दोषः॥ एकेनेन्द्रियेण गृहीतमन्येनेन्द्रियेण प्रतिसंधातुमशक्यम्। चक्षुषा प्राक्दृष्टं पश्चादन्धो भूत्वाऽपि स्मरति। एवं तुल्यनयादिन्द्रियान्तराण्यपि नात्मेति चेत्-तर्हि देहात्मवादे, देहे को भाग आत्मेति विचार्यम्। न तावत् हस्तः; तदनुभूतस्य तत्कृतस्य च हस्तच्छेदानन्तरमपि स्मरणात्। एवं हस्तपादादयो ये **अपघनाः** अवयवाः तत्समुदायरूपात् **घनात्** मूर्तेरप्यन्य एवात्मेति इन्द्रियन्यायेनैव सिद्ध्यति। अतो देहात् भिन्नस्यैव पुरुषपदार्थत्वात् तस्य च देहनाशेऽपि सद्भावसंभवात् स्वर्गादिकं दृष्टातिरिक्तं फलं स **भोक्ता** भोक्ष्यते। अत एतन्मुखेनापि बाधाभावात् न चोदनाया नैष्फल्यम्॥ १३०॥

131. **स्वप्ने देहान्तरेणाप्यनुभवति सुखाद्येष पश्चात्तु जाग्रत्**
**स्वाप्ने देहे व्यतीते स्मरति किमपि तच्छैशवादौ स तद्वत्।**
**नानाभूतेषु पाणिप्रभृतिषु च परामृश्यतेऽसावभिन्नः**
**तद्वन्नानाशरीरो युगपदयुगपच्चैष भुङ्क्ते फलानि॥**

स. सर्वजनप्रसिद्धनानानुभवप्रदर्शनेन देहातिरेकमात्मनि स्थापयति **स्वप्ने** इति। अपवरके पुरुषे शयाने स्वाप्निका अनुभवाः प्रत्यात्ममनुभूयमानाः सन्ति। देहात्मवादे तेषामनुभवानामाधारः को देह इति विचार्यम्। न शयानो देहः, तदाऽनुभूयमानतावद्व्यापाराश्रयत्वस्य तत्र बाधात्। यदा च व्याघ्रादिरूपेणात्मग्रहणम्,

तदा व्याघ्रादिर्देह एव ह्यहम्बुद्धिगोचरो वक्तव्यः। एवञ्च स्वप्नानुभावी जाग्रदनुभावी च भिन्नः स्यात्। अतः स्मरणादि न भवेत्। न चात्रैव शरीरे व्याघ्रत्वव्यापृतत्वाद्यारोपोऽत्रैव जायत इति वाच्यम् अनुभवस्य वास्तवत्वेनैव निर्वाहसंभवे देहात्मवादार्थं तदुपेक्षणायोगात्। तर्हि जगति प्रतीतं सर्वं वस्तु सत्यं भवेदिति चेत्—भवतु॥ कथं सामग्र्यभावे तत्तद्वस्तुसंपत्तिः, जागरे च कथं तददर्शनमिति चेत्—जागरवस्तुसामग्र्यपेक्षया तत्र सामग्री विलक्षणेत्येव युक्तम्। अत एव तद्वस्तुदर्शनमेतद्दशापन्नस्य कस्यापि न भवति। श्रुतिसंवादश्चात्र वादे स्पष्टं द्रष्टव्यः, 'अथ रथान् रथयोगान् पथः सृजते' इत्येवम्। एवञ्च तद्देहानुभूतार्थस्य जागरितदेहे स्मरणात् देहद्वयानुयायी कश्चिदन्यः अनुभवस्मरणयोराधार इति भाव्यम्। शैशवदेहेऽनुभूतस्य यौवनादौ स्मरणात् तत्रापि देहभेदात् तदयोगात् तदर्थमेव देहातिरिक्ते स्वीकार्ये सति स्वाप्निकदेहादिकमपि सत्यमिष्ट्वा निर्वाहः क्रियताम्। एतावत् अपरिशीलयतां तु, 'न मे व्याघ्रादिशरीरमासीत्; स तु जातो विभ्रम एव' इति भ्रम इति। यथैवं स्वप्नजागरावस्थाभेदेन शैशवाद्यवस्थाभेदेन चानुभूतार्थप्रतिसंधानम्, तथा एकस्यां दशायामेव पाणिपादमुखाद्यवयवानां विभिन्नत्वेऽपि प्रतिसंधानमिति तेषामेवात्मत्वे तथा प्रतिसंधानानर्हत्वैव। एवञ्चैकजन्मसमाचार एवाऽऽत्मभेदं विना न भवति चेत्—देहान्तरे सत्यपि जन्मभेदेऽप्ययमेवाऽऽत्मा स इतीष्यताम्। अयुगपदनेकशरीरता शैशवयौवनभेदात्, युगपदनेकता पाणिपादादिभेदात्। इयं रीतिरेव सौभर्यादिष्वपि॥ १३१॥

132, न ज्ञानं बाह्य(ज्ञेय ?)शून्यं किमपि परमतिप्रत्ययात् स्वप्रवृत्तेः
न ज्ञेयं स्वप्रकाशं प्रकटतदितरावस्थयोस्तस्य त(स?)त्त्वात् ।
न ज्ञाता चेतरः(त्) स्यात् बहुविषयिगणग्राह्यधीस्तोमवत्त्वात्
त्रित्वासिद्धे त्रिकेऽस्मिन्नहितमतिभिर्भाव्यमित्यत्र भावः ॥

स. एवं निरूपितस्याऽऽत्मनो ज्ञातुः, तस्य ज्ञानमिति निर्दिष्टयोर्ज्ञेयज्ञानयोश्च त्रयाणां मिथो भेदं मूलस्वरससिद्धं स्थापयन् तदपलापतिरस्कारं तेनाऽऽह नेति । ज्ञानानामेव नीलाकारत्वपीताकारत्वघटाद्याकारत्वाद्यभ्युपगमेन वा सर्वथा निर्विषयत्वादिवादेन वा ज्ञानं सर्वं वस्तुतो ज्ञेयरहितमेवेति न युक्तम् । सर्वथा ज्ञानस्य ज्ञानशून्यत्वायोगात् । परस्य मतिविशेषं ज्ञात्वा तदुचितं प्रयत्यते सर्वैः । तिर्यगपि दण्डोद्यतकरं दृष्ट्वा धावति । आचार्यस्य ज्ञानवत्तामनुमाय तदुपसंपत्तिः क्रियते । परस्य मतविशेषमधिगम्य निरसितुं प्रयस्यते । न चात्र घटपटाद्यपलापवत् परमतेरप्यपलापः, ज्ञानत्वादपलापायोगात् । विषयापलापे च स्वपरमत्योरविशेषात् सर्वेषां ज्ञानानामप्यकार्यकरता, अविशेषात् सर्वकार्यकरता वा स्यात् । तथा ज्ञेयशून्यत्वमपि ज्ञानेनैव साधनीयम् । स चाभावो ज्ञेयस्तत्रास्तीति कथं ज्ञेयशून्यता । ज्ञेयसत्यत्वासत्यत्वविचारस्तु क्रियमाणः यथाप्रमाणं यथायथं तत्र तत्र सत्यत्वासत्यत्वे व्यवस्थापयेत् । सर्वथा ज्ञेयं सिद्धम् । तस्य, ज्ञानस्य चान्यदपि वैलक्षण्यम्, ज्ञेयं घटपटादि अस्वयम्प्रकाशम्, ज्ञानं तु स्वयंप्रकाशमिति । तस्य स्वप्रकाशत्वाङ्गीकारे तस्य सर्वस्य तत्तत्सत्ताकाले नियमेन भानापत्तिः, स्वयम्प्रकाशत्वे कदाचिदप्रकाशायोगात्, ज्ञानवत् ।

अतः **प्रकटावस्थायाः** प्रकाशमानतायाः **तदितरावस्थायाः** कदाचिद्-प्रकाशमानतायाश्च घटादौ सत्त्वात् न स्वप्रकाशतेति । तथा **ज्ञाता** चेतनः **इतरः(तु)** ज्ञेयं ज्ञानं वा न भवेत्, तयोर्ज्ञानाश्रयत्वाभावात् । एकस्य ज्ञानं प्रति विषयत्वात् अन्यस्य चाभेदात् आश्रयत्वासंभवात् । न च ज्ञानस्य वस्तुग्राहित्वं वस्तुविषयकत्वमिति यो धर्मः तमादाय ज्ञानज्ञानिव्यवहार इति वाच्यम्, तस्य ज्ञानस्य नियतविषयकतया भिन्नतया; नानाविषयकनानाज्ञानवत्त्वप्रतीतेः पृथगाश्रयमेकं विना निर्वाहायोगात् । प्रतिसंधानप्रवृत्त्यादिकं हि विविधज्ञानस्तोमा-श्रयमात्मानं साधयति । तत् सिद्धं त्रिकं मेयमतिमातृरूपं त्रिविधैर्हेतुभिः परस्परं तैरेव च त्रिभिः सिध्यति । एकाभावेऽन्यानुपयोगात् । तत् त्रिकविषयेऽवहितमतिभिर्भाव्यमिति भावः अत्र सूत्रेऽनुसंधेय इत्यर्थः ॥

१३४. न स्याद्धर्मः क्रियात्वाद्विहितमितरवन्नाप्यधर्मो निषिद्धं
तस्मादेवेति यावज्जिगदिषति मुधा तन्त्र(कः?)नासीरवीरः ।
तावद्दुष्कल्पकौतस्कुतसहितमहामोहमातङ्गयूथ-
क्रीडासंहारसिंहारव इह निगमः स्वार्थरोधं रुणद्धि ॥

स. अथोपदेशपदेन वास्तवार्थज्ञापकशब्दपरेण धर्मावास्तव-त्वपक्षनिरासमभिप्रेत्याह **न स्यादिति** । अथवा प्रकृतज्ञानमात्रस्य ज्ञेयशून्यत्वमिथ्यात्वमिति मतिं क्षिपति । दानादिर्न धर्मः क्रियात्वात् हिंसावत्, हिंसा नाधर्मः क्रियात्वात् दानादिवदिति यावत् गदितु-मिच्छति वादी, **मुधातन्त्राणाम्** आभासशास्त्राणां ;सेनाग्रे स्थितस्सन्, तावत् वेदरूपः सिंहारवः मत्तमातङ्गयूथमथनप्रचण्डोऽतिफल्गुमाक्षेप-

शब्दमभिभविष्यतीति । अयं न देवदत्तः मनुष्यत्वात् इतरवत्, इयं न पत्नी स्त्रीत्वात् इतरवत् । गौर्न गौः तिर्यक्त्वात् महिषवत् इत्येवं प्रतिवस्त्वपलापः स्यात् ॥ बाधादयोग इति चेत् —तुल्यम्; वेदेन बाधात् ॥ **दुष्कम्पाः** कम्पयितुमशक्याः ये **कौतस्कुतानां** इदं कुतः तत् कुत इति हेतुवादिनामेव महिताः महामोहाः त एव मातङ्गाः तत्समूहस्य **क्रीडया** लीलया संहारकः सिंहारवो हि वेदः ॥ १३३ ॥

**134. यस्यासिद्धं निषेध्यं कथमनुमिनुयात् तादृशस्तन्निषेधं**
**सिद्धं वा यस्य मानैः स च निरुपधिकं न क्षमस्तन्निषेद्धुम् ।**
**साध्यं मानैरबाध्यं किमपि यदि तदा सिद्धसाध्यत्वदोषो**
**यश्चाप्रत्यक्षमात्रं न सदिति कथयेत् स्वेष्टभङ्गात् स भग्नः ॥**

स. तदुक्तानुमानं विशिष्यापि दूषयति **यस्येति** । अयं न धर्मः, अयं नाधर्म इत्यनुमानद्वयम् । तत्र निषेध्यत्वाभिमतं धर्मत्वमधर्मत्वञ्च सिद्धमसिद्धं वा । असिद्धत्वे प्रतियोग्यप्रसिद्ध्या तदभावानुमानमशक्यम् । सिद्धत्वे, यस्य वादिन इदं मानैः सिद्धम्, स कथं प्रभुस्तन्निषेद्धुम् । तदा विशेषनिषेधस्तु स्यात् । अनेन कृतमग्निहोत्रम्, इदानीं कृतम्, अत्र कृतम्, अनेन द्रव्येण कृतं न धर्म इति । एवं सोपधिकनिषेधे धर्मापलापः सर्वथा न भवति । एकदेशनिषेधनेनापि स्वकीयानुमानस्य सम्यक्त्वतृप्तिर्न कार्या । तत्र विशेषव्यक्तौ धर्मत्वाभावः ऽधर्मत्वाभावो वा साध्यमानः अबाध्यो भवति चेत्, तर्हि त्वदनुमानप्रतीक्षां विनैव तत् सिद्धमिति **सिद्धसाध्यकत्वं** सिद्धसाधनमिति दोषस्त्वदनुमानस्य । तत्र साधकहेतुश्च क्रियात्वं न भवति, व्यभिचरितत्वात् । प्रतियोगिभूत-

धर्मत्वाश्रयेऽपि तत्सत्त्वात्। यस्तु कश्चित् प्रत्यक्षमात्रोपगमेन स्वर्गादि-साधनत्वरूपाकारस्याप्रत्यक्षत्वात् असत्त्वमिष्ट्वा धर्मं निषेधेत्, स प्रत्यक्षस्यापि इष्टस्य भंगात् भग्नः। घटादिकं सत् प्रत्यक्षत्वादिति यदि ब्रूयात्, हेत्वसिद्धिः। कथमिति चेत् —प्रत्यक्षसिद्धौ कारणाभावात्॥ चक्षुरादिकं कारणमस्तीति चेत्–तन्न; तस्याप्रत्यक्षत्वात्। भोजनस्य क्षुन्नि-वर्तकत्वशक्तिः भोग्यानां भोगहेतुत्वशक्तिरित्यादिकमप्यप्रत्यक्षत्वात् असिद्धमिति चार्वाकस्य वराकस्य स्वेष्टभङ्ग एव, स्वभङ्ग एव वा। यथा अस्मत्कृतेन दूषणेन, तथा तेनापि स भग्न इति॥ १३४॥

135. नित्यं विज्ञानमेकं क्षणभिदुरमुताम्नाय शेषं विमृद्नन्
व्याघातादिदोषैरपहृतविषयो दोषतैषां त्वखण्ड्या।
मर्यादा स्वा परा वा न खलु नियमयेत् तादृशैरर्थसिद्धि
मूलच्छिद्राद्कलशौ मुखरितपटहो मोहमूर्धाभिषिक्तः॥

स. ज्ञेयापलापिनो द्विविधाः—नित्यं ज्ञानमेकमेवास्ति, न किञ्चित् ज्ञेयमिति केचित्। अन्ये क्षणिकज्ञानसंततिरूपं ज्ञानम्; ज्ञेया-भावस्त्वविशिष्ट इति। क्रमेण शांकरयोगाचारग्रहणम्। योगाचारैक-देश्युक्तमेव शांकरगृहीतमिति वा। **क्षणभिदुरम्** क्षणे क्षणे भिद्यमानम्। एवं विज्ञानं नित्यं वा क्षणिकं वा **आम्नाय** आदृत्य ज्ञेयज्ञातात्मकं शिष्टं निषेधन्, निषेद्धा निषेधकं निषेधः इतीदमपि निषेधतीति प्रमेयरहित एव। न चैषां दोषत्वाभावः। तथा सति वन्ध्यासुतदत्तेन मृगतृष्णिकातोयेन योगाचारतृष्णा शाम्यतीति वाक्यमपि प्रमाणं स्यात्। वादिनां मर्यादाभेदः कामं स्यात् अवयवपञ्चकप्रयोग-

पूर्वकं वाद इति, कदाचित् त्रयमात्रपूर्वकमित्यपि, अनुमानेन वादः, आगमेनापीत्येवं समयभेदेन समयभेदकल्पनया । तथा प्रमाणषट्कं प्रमाणत्रिकमित्याद्यपि मतभेदेन । कदापि प्रमाणासिद्धिरिति तु नास्ति । यदि प्रमाणतर्कादिसर्वापलापेन वादकल्पनया विजयप्रसक्त्यभावे सत्येव पटहो मुखरीक्रियते, स तादृशो वादी मोहमूर्धाभिषिक्त इति नाम्नैव व्यवहारमर्हति । अनधिकार एवेदृशानां वादप्रस्थाने ॥ १३५ ॥

**136. प्रत्यक्षः शब्दराशिर्मतिरपि हि ततो दृश्यते नात्र बाधः**
**क्लृप्तिश्चातिप्रसक्त्यै कथमिह विमुखी मानता जानतां वः ।**
**लिङ्गं व्याप्तिस्तदुत्थानुमितिरपि तथा तेन चेष्टास्त्वदिष्टाः**
**तस्मादेकं प्रमाणं परिगणितवतोऽक्लृप्तपच्यं ततोऽन्यत् ॥**

प. सर्वापलापिनिरसनमासीत्; प्रत्यक्षेतरापलापिनिरासोऽत्र । सूत्रे उपदेशपदेन शब्दस्य प्रामाण्यं ज्ञाप्यते । कथं शब्दः प्रमाणमिति भ्रमस्तेन निवर्त्य इत्याशयेनाह **प्रत्यक्ष** इति । किं शब्द एव नेत्युच्यते, किं वा शब्दात् मतिर्न भवतीति, आहो जातापि न यथावदितीति विकल्प्य क्रमेण प्रत्याह । नाद्यः; शब्दराशिर्हि प्रत्यक्षः । न द्वितीयः, मतेरुत्पत्त्याः दृश्यमानत्वात् । न तृतीयः; बाधादर्शनात् । **नात्रबाध** इत्यत्र **दृश्यत** इत्यस्यानुषङ्गः । अदर्शनेऽपि बाधः कल्प्य इत्यत्राह क्लृप्तिश्चेति । भवदिष्टे प्रत्यक्षेऽपि अकारणकल्पना भवितुमर्हति । इह बाधकल्पने कारणं तु नास्तीति । आवयोः संप्रति वादकथायां शब्दादर्थं जानतां वः कथं मानत्वासंमतिः । अतो युष्मान् प्रति स्थिता मानता न विमुखी, किंतु शब्दनिष्ठैवेति । एवमनुमानापलापोऽपि न भवति, लिङ्ग

हेतुः, तन्निष्ठा व्याप्तिः अन्वयव्यतिरेकभेदेन निरूपिता; फलम् अनुमितिः, तत्फलं हानोपादानरूपचेष्टाः, इदं सर्वमिष्टं तत्तत्प्रमाणस्वीकारे सत्येव युज्यते। अतः प्रत्यक्षस्यैकस्येष्टौ अन्यत् सर्वमनायाससिद्धमिति ॥ १३६

**137. किंचित् सूत्रे प्रमाणं किल नियमयता किंचिदिष्टं ह्यमानं**
**मानामानव्यवस्थात्यज इह विविधाः प्रापितास्तेन हानम्।**
**निर्बाधैव प्रमेत्यप्यवगमितमिदं तेन तत्त्वानुभूतौ**
**माने ग्राह्येऽनुभूतिः प्रमितिरिति वदन्त्यप्रमादूरभू(भी)ताः ॥**

स. प्रमाणाप्रमाणविचारे प्राभाकराः अनुभूतिः प्रमेति प्रमां लक्षयन्ति, तदिदं सूत्र-लोक-सर्वव्यवहारविरुद्धमित्याह किञ्चिदिति। चोदना धर्मे प्रमाणम्, समीचीनप्रत्यक्षस्येदं लक्षणमिति व्यवस्थापयता सूत्रकारेण तदन्यस्यामानत्वमिष्टमिति स्पष्टम्। लोकशास्त्रप्रसिद्धिमनुरुध्य एवं कथनात् लोके मानामानव्यवस्था स्थिता नोपेक्ष्येति सिद्धम्। ये इमां व्यवस्थां त्यजन्ति, ते विविधाः बाह्यकुदृष्टिभूताः। ते हानं प्रापिताः त्याज्या अभवन्। एवञ्च प्रमालक्षणं बाधरहितं ज्ञानमिति, यथार्थ-व्यवहारहेतुर्ज्ञानमिति। तथा च तत्त्वानुभूतिः प्रमेत्युक्तं भवति। एवं तत्त्वानुभवे प्रमात्वेन ग्राह्ये तद् विहाय सामान्यतः अनुभूतिः प्रमेति वदन्ति प्राभाकराः। कारणम्—ते हि अप्रमादूरमुक्ताः। ईषदपि तेषामप्रमा नास्तीव। वस्तुतोऽप्रमामपि प्रमामेव ते मन्यन्ते, यथार्थं सर्वविज्ञानमिति हि तेषां प्रतिज्ञा। अस्त्वयम्। एवमपि भ्रमप्रमा-व्यवहारस्य सर्वलोकसिद्धस्योचिते निर्वाहे कार्ये सति तदयुक्तमेवेति ॥

133. वेदस्यार्थानुभूतिप्रजननशकनस्थापने किं फलं स्यात्
किं वा बुद्धार्हदाद्यैः परुषमभिहितं प्रत्युतेष्टं हि शिष्टम् ।
मन्वानः पीतशङ्खभ्रममनुभवनं तद्यवच्छेदसिद्ध्यै
विन्यस्यन् भेदकोक्तिं विहरतु विमतव्यूहभेदे विधातः ॥

स. अनुभूतित्वरूपप्रमालक्षणे प्राभाकरोक्ते दोषमाह वेदस्येति । चोदना वेदः प्रमाणमित्यनेन प्राभाकरपक्षे किमुक्तं भवति ? वेदः अर्थविषयकानुभूतिजनक इति । वेदमप्रमाणं वदन्तोऽपि तस्य अनुभूतिजनकत्वमिच्छन्त्येव । साऽनुभूतिर्बाध्यते न वेत्यन्यत् । सामान्यतः ज्ञानं प्रमेत्यनुक्त्वा अनुभूतिः प्रमेत्युक्तिः स्मृतिवारणाय । गृहीतार्थग्राहिणो धारावाहिकज्ञानस्यापि प्रमात्वमिष्टम् । अतः अगृहीतेति लक्षणे न निवेश्यते तैः । बुद्धार्हदादिवाक्यादप्यनुभूतिर्भवत्येवेति तस्यापि प्रामाण्यापत्तिः । अथ तत्रार्थविषयकत्वमनुभूतेर्नास्तीति चेत्— कोऽयमर्थो नाम । अपेक्ष्यमाणत्वमर्थत्वम् । तैरपि सत्याहिंसादयः पुरुषापेक्षिता अंशा उच्यन्ते । न खलु तैः परुष लोकासंमतं लोकविद्विष्टं लोकमर्मभेदि कथितम् । प्रत्युत लोकेष्टमेव कथितमिति ज्ञायते; हिताहितविचारेण प्रियकथनेन तैर्लोकावर्जनात् ॥ अथैवं प्राभाकरो मन्वीत—शुक्तौ यत् इदं रजतमिति ज्ञानम्, न तत् एकम् । किंतु इदमिति शुक्तिधर्मिप्रत्यक्षम्, रजतमिति आपणस्थविषयकस्मृतिः । तत्राप्रमात्वेन मतस्य रजतज्ञानस्य स्मृतेरनुभूतित्वाभावात् न प्रमात्वापत्तिः । बुद्धादिवाक्यानामसद्वेदवाक्यसमानविषयकत्वे, अनपेक्षितत्वादेवोपेक्षा। अधिक-बाधितार्थकत्वे अयोग्यत्वात् शाब्दबोधायोगात् केवलमनन्वित-

पदार्थस्मृतिमात्रमेवेति न तत्राप्यनुभूतित्वम् । अतो न दोष इति । तत्राह मन्वान इत्यादि । इदं रजतमिति भ्रमो मा भूत् । पीतः शंख इति भ्रमे शंख इव पीतरूपेऽपि चक्षुस्संनिकर्षसद्भावात् उभयत्रानुभूतिरेवेति तद्भ्रमेऽतिव्याप्तिः । तद्व्यवच्छेदाय अबाधिततत्त्वरूपं विशेषणं निवेश्यम् । एवञ्च वियातः धृष्टस्सन् विमतबाह्यादिनिरसनेऽपि निरङ्कुशं प्रवर्ततां तत्र बाधितत्वोपपादनेन । अतो नानुभूतित्वमात्रं प्रमालक्षणम् । उक्तञ्च शास्त्रदीपिकायामपि, "पीतशङ्खज्ञानमप्यनुभूतित्वात् प्रमाणं स्यात् । इष्टमेवेति वदतो लोकविरोधः" इति ॥१३८

139. आपाताद्न्यथाधीरखिलहृदयसंवादिनी, येऽत्र रुष्टाः
तेऽपि च्छायामिव स्वामतिपतितुमिमां कुत्रचिन्न क्षमन्ते ।
तत्सामग्र्यैव तत्तद्व्यवहरणमिति स्थापयन्तस्त्विहान्ये
प्रथ्यायन्तो लघुत्वं गुरुमतकथकाः प्राणिता देशिकैर्नः ॥

स. प्राभाकरोक्तं, यथार्थं सर्वविज्ञानमित्येतत् अस्माकमपीष्टमेव । अथापि भ्रमप्रमाशब्दव्यवहारः समञ्जसः कार्य इति व्युत्पादयितुं स्वसिद्धान्तमाह आपातादिति । आपातात् लाघवगौरवविचारं विना स्वारस्यस्यानुरोधे लोके भ्रान्तिज्ञानं सर्वं तार्किकेष्टरूपम् अन्यथाख्यातिरेव । इदं रजतत्वेन जानामीति यथार्थज्ञानस्येवायथार्थज्ञानस्यापि किञ्चिद्विशेष्यककिञ्चित्प्रकारकैकज्ञानत्वेनैवानुभवात् । इदमित्थमिति हि सर्वा प्रतीतिरुपजायते । अतोऽखिलहृदयसंवादोऽत्र सिद्धः । इदमिति, रजतमिति च ज्ञानद्वयवानहमिति न कश्चित् प्रत्येति । ये ख्यात्यन्तरवादिनः अत्र अन्यथाख्यातौ रुष्टाः असंमतिमन्तः, आत्मख्यातिः

असत्ख्यातिः, अनिर्वचनीयख्यातिः, अख्यातिरिति चान्यथा वादिनः, तेऽपि इमाम् अन्यथाधियमतिपतितुं कुत्रचिन्न शक्नुवन्ति । तदुक्तं श्रीभाष्ये, "ख्यात्यन्तरवादिनां तु सुदूरमपि गत्वा अन्यथावभासोऽवर्जनीयः—असत्ख्यातिपक्षे सदात्मना, आत्मख्यातिपक्षे अर्थात्मना, अख्यातिपक्षेऽपि अन्यविशेषणमन्यविशेषणत्वेन, ज्ञानद्वयमेकत्वेन च, विषयासद्भावपक्षेऽपि विद्यमानत्वेन" इति । ततः प्राक्, "अनिर्वचनीयरजतमपि परमार्थरजतमित्येव" इति च । अतः सर्वेषामेतदतिक्रमो दुश्शकः, यथा स्वच्छायाया स्वयमतिक्रमो दुश्शकः, तद्वत् । प्राभाकरास्तु अन्यथाज्ञानस्यास्य यत् कारणं इदमिति धर्मिज्ञानम् आपणस्थरजतस्मृतिश्च, तदुभयस्यान्यथाज्ञानजनकत्वम्, अन्यथाज्ञानस्य प्रवृत्त्यादिहेतुत्वमिति कल्पनामपेक्ष्य तदुभयस्यैव साक्षात् प्रवृत्त्यादिहेतुत्वमिष्यताम्, किमनेनाजागलस्तनायमानेनेति लाघवमनुसरन्तो वदन्ति । एवञ्च भ्रान्तिस्थले इदमिति, रजतमिति च पृथगेव ज्ञानमिति उभयमपि यथार्थम् । तावता रजतापेक्षिणः इदमर्थे शुक्तौ कथं प्रवृत्तिरिति चेत्-तत्र रजतभेदाग्रहात् । अन्यथाज्ञानं प्रति च इदमर्थज्ञानं रजतस्य स्मृतिः, तद्भेदाग्रहश्चेति त्रयमेव सामग्री । तयैव प्रवृत्त्याद्युपपत्तौ विशिष्टज्ञानं मध्ये नेष्यते । तस्मादख्यातिरित्युच्यते । भेदग्रहरूपख्यात्यभावाच्चेयमख्यातिरिति । भ्रान्तिज्ञाननिर्वाहिषु पक्षेषु अयमख्यातिपक्ष एवास्मदादृत इति प्राभाकराणामेतद्विषये अस्माभिः प्राणितत्वमेव । इदञ्च गत्यभावे । यत्र तु यथार्थत्वं विशिष्टैकज्ञानत्वञ्च भ्रान्तिव्यवहारस्थले सुवचम्, तत्र नाख्यातिः । किंतु यथानुभवं विशिष्टज्ञानमेवेति व्यक्तं

श्रीभाष्ये तदर्थ-त्रिवृत्करणपूतीकन्यायाद्युपपादनघट्टे ॥ १३९ ॥

**इति पञ्चमं वेदप्रामाण्याधिकरणम् ॥**

**अथ पदनित्यत्वाधिकरणम्-1-1-6. सूत्राणि 6-23**

140. **शब्दस्यार्थेन बन्धः सहज इति वचोमात्रमत्र प्रसक्तं**
**साकाङ्क्षे ह्यत्र शब्दाधिकरणमुदितं नित्यताप्त्यै पदानाम् ।**
**वर्णस्थैर्योक्तिपक्षे वितथविफलते स्तः पदस्थैर्यपक्षे**
**सूत्राणां योजनं च स्वरसगति भवत्पक्षवन्नातिखेदः ॥**

**स.** अस्मिन्नधिकरणे वर्णनित्यत्वस्थापनं कृतं मीमांसकैः। अस्माभिस्तु संबन्धानादित्वस्थापनाय शब्दानां पदानां वाचकानामनादित्वरूपं नित्यत्वं स्थाप्यते । न च पूर्वाधिकरणे, 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति वाच्यवाचकसंबन्धस्य सहजत्वं नित्यत्वमुक्तमेवेति किमत्रेति शंक्यम् —तत्र हि शब्दस्यार्थेन **बन्धः** संबन्धः सहज इति सिद्धानुवादमात्रम् ; न तु तस्य प्रतिज्ञानपूर्वकस्थापनम् ; हेत्वनुक्तेः । **अनपेक्षत्वादिति** तत्रत्यहेतुस्तु 'तत् प्रमाणम्' इत्युक्तं प्रामाण्यं प्रति । अतः **अत्र** संबन्धानादित्वे **साकांक्षे** कुत इति हेत्वाकांक्षे सति, इदं शब्दाधिकरणमुत्थितम् **पदानां** वाचकानां नित्यत्वसिद्धये । मीमांसकाद्दते वर्णस्थैर्यपरत्वे तु वितथत्वं विफलत्वञ्च । वर्णानां वस्तुतःस्थिरत्वाभावात् उत्पत्तिविनाशवत्त्वात् पक्षो **वितथः** बाधितार्थविषयकः । वेदनित्यतां प्रति तस्यासाधकतया फलाभावश्च । वाचकत्वं हि पदानामेव, न वर्णानाम् । वर्णनित्यत्वेऽपि सांकेतिकाः यदृच्छाशब्दा अपशब्दाश्च

दृश्यन्त एव। तस्मात् व्यर्थं तत्साधनम्। न च सूत्रयोजने क्लेशः। स भवत्पक्ष एव। सूत्रार्थः सेश्वरमीमांसायाम्॥

141. व्युत्पत्तिर्वाच्यवर्गे ह्यतिविषमतमा जातियोगान्निरूढा
शिक्षेयं वाचकेऽपि प्रथयितुमुचिता शीलितन्याययुक्तैः।
किं चोदात्तादिभेदा अपि विलयभृतो वाचकेषूपयुक्ताः
तादृक्त्वेनैव तेषां यदि नियमवचस्तद्वदत्रेति भाव्यम्॥

स. ननु सिद्धान्ते वर्णानामुत्पत्तिमत्त्वे तत्समुदायरूपाणां पदानामप्युत्पत्तिमत्त्वमेव। तत्र संबन्धः परं कथं नित्यः स्यात्। तेषां घटादिपदानां तदातदोत्पत्त्या व्यक्त्यानन्त्यात् संबन्धग्रहः सर्वासामशक्यः। एवमेकव्यक्तौ संबन्धग्रहणेऽपि व्यक्त्यन्तरेऽर्थप्रतीत्ययोगश्च इत्यत्राह व्युत्पत्तिरिति। व्युत्पत्तिः शब्दार्थसंबन्धग्रहणं वाचकानां वाच्यान् प्रति। तत्र वाच्यानां घटव्यक्तीनामनित्यत्वादनन्तत्वाच्च तत्र वर्गे समुदाये तद्ग्रहणं दुश्शकम्। यदि सर्वव्यक्तीनां घटत्वरूपजात्या क्रोडीकारात् सा व्युत्पत्तिर्निरूढा उपपन्ना भवति, इयं जातिपुरस्कारेण निर्वाहप्रक्रिया वाचकपदव्यक्तिवर्गेऽपि वक्तुमुचिता न्याययुक्तेः वृत्तं सद्भावोऽत्र शीलितं परिशीलितं यैस्तैः। न्यायशास्त्रे कुसुमाञ्जल्यादौ पदानामर्थानाञ्चानित्यत्वानन्त्ययोः सत्त्व एव संबन्धनित्यत्वं शीलितम्। किञ्च घटत्वादेर्जातित्वेऽपि घत्वादीनां वर्णनिष्ठानां जातित्वेऽपि घटपदत्वादीनां कथं जातित्वम्–घकारोत्तराकारोत्तरटकारोत्तराकारत्वं हि तत्। तत्रोत्तरत्वं न हि जातिरिति। वस्तुतो घटत्वादिरप्याकृतिविशेषः संस्थानविशेष एव। संस्थानञ्चावयवानां

परितः पङ्क्तिशश्च संयोग एवेति सापि न नित्यजातिः-तार्किकाद्युक्तस्य सामान्यनित्यत्वस्याप्रामाणिकत्वात् । तर्हि कथं व्युत्पत्तिरिति चेत्— घटानां व्यक्तिभेदेपि सौसादृश्यात्, तथा पदानामपीति आनुभविकमेतत् । अपि च वाचकताप्रयोजक आकारः स्वरोऽपि । यथा सत्यं ज्ञानमित्यत्र ज्ञानपदं ज्ञानविशिष्टार्थकम्, अर्शआद्यजन्तत्वस्थापकात् अन्तोदात्तस्वरात् । इन्द्रशत्रुरित्यादौ आद्युदात्तान्तोदात्तभेदेनार्थभेदः । उक्तञ्च, 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह' इति। तत्र स्वरस्यानित्यतया कथं वाचकतावच्छेदकत्वम् । उदात्तत्वादिना सौसादृश्येनेत्येव वक्तव्यम् । तथैव सर्वत्रेति किं वर्णनित्यत्वेनेति ॥

142. **वर्णा नित्या यदि स्युस्तदपि भवति किं मानताऽनाप्तवाक्ये
ते चानित्या भवेयुः क्रमवदथ च सा किं न निर्दोषवाचि ।
वेदप्रामाण्यसिद्ध्यै तदिह बत बुधा वर्णनित्यत्वक्लृप्तिः
वेदानित्यत्वशङ्कां प्रजनयति पदानित्यताऽतो निषेध्या ॥**

स. वर्णनित्यत्वेन प्रामाण्येऽनिष्टमाह **वर्णा** इति । **तदपि** तथापि वर्णनित्यत्वेऽपि अनाप्तवाक्ये मानता भवति किम् । वर्णनित्यत्वात् तत्रापि प्रामाण्यं स्यात् । **ते** वर्णाः अनित्या भवेयुः **क्रमवत्** इषेत्वेत्यादौ आनुपूर्वीवत् । वर्णानां नित्यत्वे पौर्वापर्यं तेषु दुर्वचमिति तदुच्चारण एव क्रमो वक्तव्यः । उच्चारणञ्चानित्यमिति अनित्य एव क्रमः । क्रमविशिष्टतयैवार्थबोधकत्वं वक्तव्यम् । सरः रस इत्यादौ क्रमभेदादेव ह्यर्थभेदः । तावता क्रमानित्यत्वेन निर्दोषायां वाचि वेदे **सा** मानता किं नास्ति । अस्त्येव । अतो न बाधकमनि-

त्यत्वम् । तस्मात् इहाधिकरणे वर्णनित्यत्वस्थापनं वृथा । तर्हि पद-नित्यत्वस्थापनं परं किमर्थमिति चेत्—पदानामनित्यत्वे वेदानामनित्यता स्यात् । संबन्धश्च नित्यो न भवेत् । अतः पदानित्यत्वं निषेधनीयमिति तदर्थमेवेदमधिकरणम् ॥ १४२ ॥

**143. शब्दस्पर्शादिहीनात् त्रिगुणजलनिधेरूर्मिजालैकदेशे**
**श्रोत्रादिग्राह्यतत्तद्गुणगणघटितः श्रावितो भूतवर्गः ।**
**शब्दस्याकाशनाशे लय इति कतिचित् प्रत्यभिज्ञानुरोधात्**
**तैरप्यास्थायि नित्या पदनियतिरसौ वर्णसाजात्ययुक्ता ॥**

स. वर्णानित्यत्वे पदनित्यत्वे च गमकं दर्शयति शब्देति । शब्दस्पर्शादिगुणरहितात् सत्त्वरजस्तमोगुणमात्रविशिष्टप्रकृतिद्रव्यात् महदहङ्कारक्रमेण भूतपञ्चकोत्पत्तिः ; समुद्रस्थानापन्नस्य प्रकृतिद्रव्यस्य तरङ्गैकदेशो महदादिरिति वक्तव्यम् । तत्रैकस्मिन्नंशे तदुत्पत्तेः । तदेकदेशे च भूतानि । श्रावितः श्रुत्या ज्ञापितः उत्पद्यमानत्वेन । तेषु शब्दादीनां गुणानां तैः सहोत्पत्तिः । अतः पूर्वं वर्णानां न प्रसक्तिः । उच्चारणाधीनत्वाच्च वर्णानां पश्चादपि असकृदुत्पत्तिविनाशौ, न तु रूपादिवत् चिरस्थायिता । एवञ्च सोऽयं गकार इति या व्यक्तिभेदेऽपि प्रत्यभिज्ञा, सा जातिनिबन्धना, तदेवेदमौषधमित्यादिवत् । केचित्तु सिद्धान्त्येकदेशिनः नयद्युमण्युक्तरीत्या, 'सृष्ट्यादावुत्पन्ना वर्णा आप्रलयमवतिष्ठन्ते' इत्याहुः । न्यायसिद्धाञ्जनेऽपि द्रष्टव्यम् । तत्तत्पुरुष-कृतोच्चारणभेदेन स्थिरतदभिव्यक्तिभेदमात्रम्, न तु तदुत्पत्तिः । एवञ्च प्रत्यभिज्ञा सुनिर्वहेति । तैरपि कल्पभेदेन वर्णभेदात् पदनित्यत्वं

साजात्यमूलकमेव वक्तव्यम् । एवञ्च वर्णाः पदानि च प्रवाहतो नित्यानि । अतः संबन्धोऽपि नित्यः । व्यक्तीनां पुनः अनित्यत्वमेव । वैदिकपदान्येव लोके संस्कृतपदानीति इमान्यपि नित्यानि । वेदरूपवाक्यराशिस्तु नित्यः आनुपूर्वीप्रवाहनित्यत्वात् । लौकिकवाक्यराशिस्त्वनित्यः ; पूर्वं तदानुपूर्व्यभावादिति निष्कर्षः ॥ १४३ ॥

**144. वर्णेभ्यः क्वापि वर्णान्तरजनिवचसामन्यथासिद्धिरस्तु**
**प्रत्यक्षं त्वन्यतुल्यं प्रथयति जननं तच्च नात्राप्रमाणम् ।**
**सूक्ष्मा पश्यन्त्यसौ वाक् क्रमसमुदयनान्मध्यमा वैखरीति**
**प्राप्ता भेदं विचित्राकृतिरुदयति तत् सुस्थितं वर्णजन्म ॥**

स. ननु दधि अत्र इति पदद्वयं संहितायां दध्यत्रेति प्रयुज्यते । तत्र इकारात् यकारो जात इति पक्षं सूत्रकारो निरस्यति "वर्णान्तरमविकारः" इति इकारयकारयोर्विकारविकारिभावानभ्युपगमेन । अतो नित्यत्वमिति शंकां परिहरन् उत्पत्तौ साधकान्तरमप्युत्तरार्धेनाह **वर्णेभ्य** इति । इकारः इत्वं हित्वा यत्वमापद्यत इत्यादिवाक्यानि न तद्विकारत्वसाधकानि । स्वाभाविकयकारस्थले यजते यातीत्यादौ येन स्थानप्रयत्नादिना तदुत्पत्तिः तस्यात्राप्यापेक्षितत्वात् तावत एव तदुत्पत्तौ इकारस्य कारणत्वायोगात् । **यजत** इति यकार एव इष्टेति इकारो भवतीति विपरिवर्त एव च किं न स्यात् । अत इकारयकारयोः ताल्वादिस्थानापेक्षणाविशेषात् यकारस्येकारविकारत्वमेव निषिध्यते, न तु सामान्यतो विकारत्वस्यैव निषेधः । प्रत्यक्षप्रमाणेन रूपादेरिव घटादेरिव च वर्णोत्पत्तेर्दर्शनात् । वाक्यप्रमाणाच्च । परा पश्यन्ती मध्यमा

वैखरीति वर्णानां क्रमेणोत्पत्तिरुच्यते । वायुजन्यः शब्दः प्रथमं प्राणापानापरपर्यायमित्रावरुणवासस्थाने नाभौ । सा सूक्ष्मा परा च । अथ हृदयस्थाने उत्पद्यमाना पश्यन्ती । ताल्वादिस्थाने मध्यमा । अथ परश्राव्यतया भवन्ती वैखरी । "अन्तर्न्यस्तैः" इति पादुकासहस्रनाद-पद्धतिश्लोको द्रष्टव्यः । **क्रमसमुदयनात्** . क्रमेणोदयात् । अतो वर्णा जन्यन्त एव ॥ १४४ ॥

**145. एकाक्षग्राह्यवर्गे सहकृतिनियमो भाति निम्बत्वगादौ**
**तद्वद्वर्णप्रभेदप्रतिनियतमरुद्भेद इत्यप्यपास्तम् ।**
**व्यक्तिर्निम्बत्वगादेर्न भवति परमुद्भूतिमात्रोपयोगात्**
**तादृक्चेत् व्यक्तिहेतुर्न कथमिह भवेदन्यथाऽतिप्रसङ्गः ॥**

स. नित्यानां वर्णानां वाय्वादिनाऽभिव्यक्तिरेव, नोत्पत्तिरिति वादो दूष्यते तार्किकैः, "अभिव्यक्तौ दोषात्" (वै. द. 2-2-31) इत्येवम् । समानेन्द्रियग्राह्याणां समानदेशानामेकव्यञ्जकव्यङ्ग्यत्वं लोके दृष्टम् । यथैकेनैव दीपेन घटपटादिः सर्वं एकस्थलस्थितो युगपदभि-व्यज्यते, तथा वर्णाः सर्वे श्रोत्रग्राह्याः कण्ठाद्यभिघातरूपैकव्यञ्जकव्यङ्ग्या न दृश्यन्ते । अतो न व्यङ्ग्यत्वमिति । अत्र मीमांसका आहुः— एकेन्द्रियग्राह्यत्वेऽपि केषाञ्चित् सहकारिभेदापेक्षाऽपि दृश्यते । यथा निम्बत्वगादिकं चक्षुर्ग्राह्यमपि न सहसा तथा निर्धार्यते, त्वक्संनिवेश-विशेषगन्धविशेषग्रहणादिसापेक्षत्वात् । तथा करतलप्रतिहतिवशाच्च प्रत्यक्षा अपि रविरश्मयः स्फुटमीक्ष्यन्ते । तद्वत् ककारगकारादि-ग्रहणे प्रतिनियतो वायुभेदः सहकारीति सहकृतिनियमोपपत्तिरिति ।

तदिदमनूदितं निरस्यति **इत्यप्यपास्त**मिति । निम्बत्वगाद्यभिव्यक्तिं प्रति गन्धग्रहणादेर्न कारणत्वम् । गन्धग्रहणात् प्रागेव द्रव्यस्य प्रत्यक्षितत्वात् । जातिरप्याकृतिविशेषः । स प्राङ् न दृष्टश्चेत्––तत्र भूयोवयवसंनिकर्षाभाव एव कारणम् । उपायविशेषो भूयोवयवसंनिकर्षार्थमुपयुज्येत, तावता गन्धग्रहोऽपि । अत एव रविरश्मिकरतलप्रतिघातस्थलेऽपि उद्भूतिमात्रे–भूयस्त्वापादनमात्रे तदुपयोगः, न प्रत्यक्षे सहकारिता । यत्र गन्धग्रहणपूर्वकं निम्बत्वग्ग्रहणम्, तत् अनुमितिरूपम् । हस्ते ईषन्मर्दनादिना तिलतैलत्वानुमानवत् । अवयवबाहुल्ये वस्तुस्फुटप्रत्यक्षमानुभविकम् । अनभिभूतावयवबाहुल्ये गन्धाद्युपलब्धिरपि । अतोऽपि विवक्षितो वाय्वादिर्व्यक्तिहेतुश्चेत्–सर्वाभिव्यक्तिः स्यात् । उत्पत्तिहेतुत्वे तु नायं दोषः । **अन्यथा** समानदेशत्वसमानेन्द्रियग्राह्यत्वसत्त्वेऽपि तत्तद्वस्तुप्रत्यक्षे सहकारिकारणान्तरान्वेषणे घटार्थमारोपितात् दीपादन्यः पटार्थमपेक्षितः स्यादिति ॥ १४५॥

146. **गन्धादौ प्रत्यभिज्ञा भवति न च तया तत्र नित्यत्वमिष्टं**
**सादृश्यात् तत्प्रक्लृप्तिः समगतिरुभयोः आगृहीतिर्न चेत् स्यात् ।**
**व्यक्त्यानन्त्यं च दृष्टं सममिदमुभयोर्लाघवोक्तिश्च लघ्वी**
**तस्मात् वैयात्यमात्रादयमुपनिहितो वर्णनित्यत्ववादः ॥**

**स.** प्रत्यभिज्ञाया ऐक्यासाधकत्वमाह **गन्धेति** । गन्धरूपरसादिषु भूतगुणेषु नवनवोत्पन्नेषु सत्यामपि तदेवेदमिति प्रत्यभिज्ञायाम् ऐक्यं नित्यत्वं नेष्यते । सादृश्यात् तथेति निर्वाहरीतिः उभयत्र **समगतिः** समानप्रसरा । **आगृहीतिर्न चेत् स्यात्** –एकत्र आग्रहो नास्ति चेत्,

एवमेव वक्तव्यम् । अनेकव्यक्ति–तदुत्पत्तिध्वंसकल्पने गौरवं तु दृष्टत्वान्न दोषः । ईदृशस्थले प्रत्यक्षविरोधेन लाघवोक्तिः लघुपक्षवादः लघ्वी हेयैव । अतोऽनुभवविरोधेन वर्णनित्यत्ववादे क्रियमाणे अस्माकं वेदनित्यत्वाभिनिवेशोऽत्र वादे प्रवर्तक इति परे प्रत्यवतिष्ठेरन् । तस्मात् सुपथैव तत्स्थापनं श्रेयः ॥ १४६ ॥

147. नित्यः शब्दो यदीष्टः, स कथमभिमतो दृश्यमानातिरिक्तः
प्रत्यक्षे शब्दवर्गे ध्वनिभिरपि परं तादृशैर्व्यक्तिरस्तु ।
अश्रद्धेयाऽत्र वैयाकरणसरणिरित्यर्थमर्थापयद्भिः
नित्यत्वं वर्णनिष्ठं भवतु च कथितं लाघवं लक्षयद्भिः ॥

स. वर्णनित्यत्ववादारम्भस्य वैयाकरणमतदूषणनैर्भर्यं कारणं स्यादित्याह नित्य इति । यदि शब्दस्य नित्यत्वमेष्टव्यम्, तर्हि वर्णाव्यतिरिक्तः स्फोटः किमिति कल्पनीयः । दृश्यमानादन्यस्य कल्पनामपेक्ष्य दृश्येषु वर्णेषु नित्यत्वस्वीकारेण प्रमाणनिर्वाहात् । व्यञ्जकत्वं नादैः स्फोटस्य स्वीकृतं विहाय वर्णानामेव तद्व्यङ्ग्यत्वमिष्यताम् इत्येव शब्दनित्यत्वमतान्वारोहः स्फोटवाद्यर्वाचीनवैयाकरणनिरासार्थं कृतः स्यात् । तदपेक्षयाऽत्र लाघवात् ॥ १४७ ॥

148. वायोरेके विकारं कतिचन जगदुः स्पर्शभाजां चतुर्णां
पञ्चानां केचिदूचुः कतिचिदभिदधुः पञ्चमस्यैव धर्मम् ।
नित्यं तत्रापि केचिज्जनिलयभिदुरं शब्दमन्ये परे तु
द्रव्यं वर्णाख्यमेतद् गतफलमखिलं शब्दमानत्वसिद्धौ ॥

स. अस्माकमत्रापेक्षितं वेदस्य प्रामाण्यम् । तत्साधकञ्च

संबन्धनित्यत्वम् । तत् वर्णपदादेः प्रवाहनित्यत्वेऽपि सिध्यतीति । तदत्र शब्दनित्यत्वानित्यत्वद्रव्यत्वाद्रव्यत्वादिविचारः कालहरणार्थः ; न प्रकृतोपयुक्तः । वृथाविचारे च बहवः पक्षाः प्रवृत्ताः । तथाहि— वायोर्विकार एव शब्द इति एके जगदुः । स्पर्शभाजां पृथिव्यप्तेजोवायूनां विकाराः शब्दा इति कतिचन । तेषामाकाशस्य च पञ्चानां भूतानां विकारा इति केचिदूचुः । पञ्चमस्य आकाशस्यैवायमिति कतिचिदभिदधुः । आकाशधर्मोऽप्ययमाकाशवदेव नित्य इति केचित् प्राभाकराः । संयोगात् विभागात् शब्दाच्च शब्दनिष्पत्तिरिति आकाशगुणस्यास्योत्पत्तिविनाशाभ्यामनेकत्वमन्ये तार्किकाः । परे तु द्रव्यमेव, न तु स्फोटोऽन्यः ; किंतु वर्ण इति । उक्तञ्च शाबरे, "अथ गौरित्यत्र कः शब्दः-गकार-ओकार-विसर्जनीयाः" इति । शब्दमानत्वसिद्धिविषये इदं सर्वं गतफलम् निष्फलम् । शब्दमानत्वं सर्वपक्षेऽपि स्थित्वा सुवचमिति नायं तदर्थविचार इति । तत्त्वविचारस्तु पृथक् अन्यत्र ॥

149. **कृत्वा रूपाणि नामान्यपि च वितनुते नाथ इत्यागमोक्त्या**
**नानित्यत्वं पदानां पुनरपि हि यथापूर्वमेव प्रयुङ्क्ते ।**
**बाह्याक्षेपाय सूत्रैरिह कथयतु वा वर्णनित्यत्वमाप्तः**
**कूलङ्कषं तदुद्भवात् स्यान्न कथमितरथा नैगमानां प्रकोपः ॥**

स. ननु यथा वर्णानामनित्यत्वमानुभविकम्, तथा पदानित्यत्वमपि । तत्र वेदोऽपि प्रमाणम् । "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् य आस्ते" इति रूपाख्यसंस्थानानाम् अर्थानामिव तद्वाचकानां पदानामपि तेनैव कृतत्वावगमात् । अतः ततः

प्राक् तदभावात् सांकेतिकाः तदिच्छामादाय सर्वे शब्दाः इति शंकाम-नूद्य निरस्यति कृत्वेति । एतदागमोक्त्या पदानां जातत्वावगमेऽपि अनित्यत्वं ततः प्रागस्थितत्वं न भवति । "धाता यथापूर्वमकल्पयत्" इति यथापूर्वमेव करणात् अनादिताया एव तत्र प्रतीतेः । तत् वाचकानां प्रवाहनित्यत्वम् । ननु सूत्रकारोक्तस्य वर्णनित्यत्वस्यासत्पक्ष-बाधकत्वाभावे तदपीष्यतामित्यत्राह वाद्येति । वादकौशलप्रदर्शनेन परान् अप्रगल्भान् कर्तुमियमन्वारुह्योक्तिः स्यान्नाम । न तथा तत्त्वम् अनेकश्रौतवाक्यविरोधादिति । अतः सूत्राणामपि तदविरोधेनार्थ-वर्णनमेव ज्यायः । मीमांसकोक्तप्रकारादस्मदर्थवर्णने क्लेशो नास्तीति सेश्वरमीमांसायां स्पष्टम् ॥ १४९ ॥

150. **उत्पत्त्यैव क्रमापि कतिचिदकथयन् बोधके वर्णवर्गे**
**व्यक्त्यैकेऽन्ये तु तत्तद्व्यवहृतिकृदभिप्रायभेदाद्वदन्ति ।**
**युक्तं तत् यौगपद्यं न कथमपि ततः संस्क्रियाजालजन्य-**
**स्मृत्यारूढेषु वर्णेष्ववगतिकरणं कल्प्यमेकं यथार्हम् ॥**

**स.** वर्णसमुदायस्यार्थप्रमाजनकत्वमुपपादयति शब्दप्रामाण्य-रक्षणार्थम् उत्पत्त्येति । वर्णानित्यत्वपक्षे घटादिपदेषु प्रयुज्यमानेषु एकवर्णानन्तरमन्यवर्णस्योत्पत्तिः । घटपदं नाम घकार–अकार–टकार–अकारसमुदायः । एकक्षणे चतुर्णामुत्पत्तौ पूर्वोत्तरत्वरूपक्रमाभावादर्थ-प्रतीतिर्न स्यात् । अतः क्रमेणोत्पत्तौ स्वीकार्यायां समुदायस्यैकदा सद्भावो नेति कथं पदस्य कारणत्वम् । वर्णनित्यत्वपक्षे उत्पत्त्यभावात् क्रमविशिष्टत्वं कथम् । क्रमश्चापेक्षितः अक्रमेणोच्चारणेऽर्थप्रतीत्य-

भावात्। अतः पदस्यार्थप्रतीतिजनकत्वं दुरुपपादमिति शंका। तत्र वैयाकरणाः पदस्फोटाख्यं वस्तु किञ्चित् परिकल्प्य तस्य पदार्थप्रतीतेः पूर्वं स्फुरणात् कार्योपपत्तिरिति समादधते। तद्विनैव सर्वसंमतरीत्यैवं परिहारः कार्यः—अनित्यत्वपक्षे वर्णाः क्रमेणोत्पद्यन्त एव। तत्र घकारोत्तरः अकार इत्यस्य घकारोत्पत्तिक्षणध्वंसोत्पत्तिक्षणोत्पन्नः अकार इत्यर्थः। एवं प्रत्यक्षरं भाव्यम्। अत्र क्रमः उत्पत्तिघटितः। यदा तु नित्या वर्णा उच्चारणवशात् क्रमेणाभिव्यज्यन्त इति पक्षः, तदा घकाराभिव्यक्त्युत्पत्तिक्षणध्वंसोत्पत्तिक्षणोत्पत्तिकाभिव्यक्तिकत्वं तदुत्तरत्वं वाच्यम्। इदमभिव्यक्तिघटितम्। इदमुक्तं व्यक्त्या एके इति। अत्र विपरीतोच्चारणेऽपि, तथा मौनिवाक्ये चार्थबोधो यथावस्थितक्रमकल्पनया भवति, तत्रेदं दुर्घटमिति कृत्वा व्यवहरणपरपुरुषाभिप्रायमपि उत्तरत्वे घटयन्तीत्याह अन्येत्विति। तथा च घकारोत्तरत्वेनाभिमतत्वम् अकारे वक्तव्यम्। एवमक्रमिकवारणं साधितम्। तदाह युक्तं तदिति पूर्वोक्तं। यथायथं त्रयमपि घटत इत्यर्थः। अथ वर्णसमुदायस्य बोधोत्पत्तिक्षणाव्यवहितपूर्वक्षणवर्तित्वमेव घटनीयं विचार्यम्; पूर्ववर्णानां नष्टतया समुदायस्यैकदा अभावात् तत्तद्वर्णश्रवणरूपानुभवस्यापि तदा तदा नष्टत्वात्। तथा तत्तदधीनस्मरणानामपि यौगपद्यायोगात्। एकदाऽनेकेषां ज्ञानानामसंभवात्। तस्मात् तत्तद्वर्णानुभवजन्यतावत्संस्काराधीनमेकं स्मरणं यथावत्क्रमादिविषयकं पदार्थज्ञानाव्यवहितपूर्वक्षणेऽस्तीति तदेकस्मृत्यारूढत्वेन वर्णानां करणत्वं वक्तव्यम्। ननु वर्णनित्यत्वपक्षे अभिव्यक्तिक्रमविशिष्टवर्णसमुदायः पूर्वक्षणेऽस्त्येवेति चेत्—सत्यमस्ति। तथापि तत्समु-

दायस्य समुदायत्वेन करणत्वं वाच्यम् । समुदायत्वञ्च तावद्वर्णान्यूनानतिरिक्तविषयकैकज्ञानविषयत्वमेव । वर्णस्य न्यूनत्वे, आधिक्ये वा तदर्थज्ञानकरणत्वायोगात् अन्यूनानतिरिक्तांशघटनम्, सर्वथा एकधीविषयत्वेनैव समुदायस्य करणत्वम् । एवं वाक्यस्य शाब्दबोधकरणत्वमपि तावतां वर्णानामेकस्मृत्यारूढत्वेनैवोपपाद्यम् । एवं ज्ञानगतैकत्वमादायैव एकं पदम् एकं वाक्यमिति व्यवहारः । विशिष्टार्थविषयकबोधैक्यात् अर्थैकत्वमपि । एवं कार्यकारणभावे निरूढे वैयाकरणस्वीकृतस्फोटकल्पनाऽनपेक्षिता । तत्कल्पने तस्य स्फोटस्य स्फुरणमेकेन वाऽनेकेन वा । अन्यूनानतिरिक्त तत्तत्क्रमविशिष्ट तावद्वर्णज्ञानत एव स्फोटज्ञानम् ततोऽर्थज्ञानमिति वक्तव्यम् । तथासति तावद्वर्णस्मृतेः साक्षादेवार्थज्ञानकारणत्वसंभवे किमनेन स्फोटेनाजागलस्तनेनेति ॥ १५० ॥

151. वर्णान्यः कोऽपि वैयाकरणनिगदितः स्फोटसंज्ञस्तु शब्दो
 न प्रत्यक्षो न कल्प्यो न च वचनमितो नान्यतोऽपि प्रसिद्धः ।
वर्णेषूक्तेषु बोधे भजति हि कलहः स्फोटबोधेऽपि साम्यं
 शब्दव्युत्पत्तिसिद्धौ न च भवति मुधा स्फोटसिद्ध्यैव योगः ॥

स. अत एव वैयाकरणपक्षं निरस्यति वर्णेति । तत्र न प्रत्यक्षं प्रमाणम्; वर्णमात्रस्यानुभवात् । उक्तरीत्याऽन्यथासिद्धत्वात् बोधस्य, नानुमानमपि । न च शब्दः प्रमाणम् । 'स्फोटस्त्वं वर्णसंश्रयः' इति वचनं तु वर्णानामर्थबोधकत्वशक्तिरपि भगवदधीनेति ब्रूयात् । अर्थापत्त्यादिप्रमाणसत्त्वपक्षेऽपि नास्य ततः सिद्धिः । अनुपलब्धिप्रमाणं तु स्फोटाभावसाधने उपयुज्येत । वर्णेषु उच्चारितेषु नष्टेषु जायमानो बोधः

कथमिति अर्थबोधविषये यः कलहः, सः स्फोटबोधेऽपि साम्यं भजति। तत्तद्वर्णतत्तज्ज्ञानानां नष्टत्वात् कथं तावदधीनः स्फोटबोध इति । अव्युत्पन्नस्य स्फोटबोधो न हेतुः । व्युत्पन्नस्य तु तावद्वर्णविषयक-वाच्यवाचकभावरूपसंबन्धस्मरणमेकमेवार्थोपस्थितिं तद्द्वारा बोधञ्च जनयिष्यतीति तस्य मध्ये स्फोटज्ञानेन योगो व्यर्थ एवेति ॥ १५१ ॥

वाक्यस्फोटोऽवक्लृप्तः प्रतिफणिति पदस्फोटनीत्या निरस्तो
वाक्ये तद्गोचरे वा कथमपि हि न निर्भागता जाघटीति ।
याभेदत् क्रमयुक्तिप्रभृति तदपि हि त्वन्मते दुर्घटं स्यात्
शब्दादर्थो विभातीत्यपि समुदितधीमूल एकत्ववादः ॥ 152.

स. एकं पदमिति व्यवहारः पदस्फोटं विना न भवति, वर्णेष्वे-कत्वाभावादिति पदस्फोटकल्पनवत्, 'पदानामनेकेषामेव वाक्यतया एकं वाक्यमिति कथं व्यवहारः ? तथा अर्थैकत्वादेकं वाक्यमिति अर्थैक्यमपि दुर्वचम्, पदभेदेनार्थभेदादनेकेषामेवार्थानां वाक्यार्थतया वाक्यार्थैक्यायोगात्' इति वाक्यस्फोटः तदर्थस्फोटश्च निरवयव एषितव्य इति एकत्वव्यवहारोपपत्तिरिति वैयाकरणाः । तन्निरस्यति वाक्येति । यथा वर्णानामेकधीविषयत्वेन पदे एकत्वव्यवहार उपपादितः, तथा पदानामेकधीविषयत्वेन वाक्ये तद्व्यवहार उपपाद्यः । तथा वाक्यार्थै-कत्वमपि अर्थानां मिथोऽन्वये कारकाणां क्रियान्वये सर्वकारकविशिष्टैक-क्रियारूपार्थैकत्वमादाय वैयाकरणमतेऽपि सुवचम् । धात्वर्थमुख्य-विशेष्यकबोधस्य तदिष्टत्वात् । अथ पाकक्रियाणां काष्ठप्रज्वालनादि-मण्डस्रावणान्तानामनेकत्वात् कथं विशेष्यैकत्वमिति चेत्—तत्राप्ये-

कधीविषयत्वादेकत्वमक्षतम् । एवं क्रियाभिन्नमुख्यविशेष्यकत्वस्वीकारिणि मतान्तरेऽपि निर्वाहो भाव्यः । तस्मात् एकत्वव्यवहारस्यान्यथानिर्वाहात् सभागत्वं सावयवत्वमेव वाक्यस्य तदर्थस्य चेति निर्भागत्वं न घटते । दुर्वचञ्च निर्भागत्वम्; तथासति भेदाङ्गप्रयुक्तिप्रभृतिकं यत् मीमांसाद्वितीय-तृतीय-तुरीयाध्यायाद्युपपाद्यम्, तदपि दुर्घटं भवेत् । तिस्र आहुतीर्जुहोतीति वाक्यं संख्याभेदात् कर्मत्रयविधायकमित्युच्यते । वाक्यार्थस्याखण्डत्वे कथं संख्याभेदः कर्मभेदश्च । कर्मसु त्रित्वञ्च शब्देन नोच्येत । व्रीहीनवहन्तीत्यत्र व्रीह्युद्देशेनोपादेयस्यावघातस्य विधानात् व्रीहयोऽङ्गि अवघातोऽङ्गमित्युच्यते । उद्देश्योपादेयविभागाभावे कथमेतत् ? 'पुरोडाशकपालेन तुषान् उपवपति' इत्यत्र कपालस्य तुषोपवापाङ्गत्वेऽपि न तुषोपवापस्य कपालप्रयोजकता, किं तु पुरोडाशस्यैवेति पुरोडाशपदेन ज्ञाप्यत इति प्रयोज्यप्रयोजकभेदः वाक्यार्थघटकानामनेकत्वेनोपपादनीयः । निरंशत्वे तत् दुरुपपादम् । एवं सर्वोऽपि वाक्यार्थो दुर्घट एव स्यात् । अतः वाक्यस्यानेकपदसमुदायत्वेऽपि वाक्यार्थस्य चानेकविशेषणविशेष्याद्यनेकार्थरूपत्वेऽपि समुदायस्यैकज्ञानविषयत्वेनैव शब्दादित्येकत्वम्, अर्थ इत्येकत्वञ्च निर्वाह्यमिति ॥१५२

153. शुद्धे सिद्धान्तसूत्रे फलवति न तथा वर्णपक्षोक्त(क्ति ?)बाधौ
पक्षाणां च त्रिकालप्रभवमतिशुचां का चिकित्सेति चेन्न ।
छद्मप्रक्षोभणीयच्छलमतिरसु [धु] ना शिक्षितश्छात्रगुप्त्यै
दुष्टोपन्यासतन्निस्तरणकथनतस्तादृशान्योपरोधात् ॥

स. अत्र कश्चिच्चोदयति—अधस्तात् पञ्चाधिकरणानि वृत्तानि। तत्र न किञ्चित् पूर्वपक्षार्थे सूत्रमसूत्रि। तद्वदेव शुद्धे केवले पूर्वपक्ष-सूत्ररहिते सिद्धान्तसूत्रे फलवति कार्यकरे पर्याप्ते पूर्वपक्षोक्तिः तद्बाधश्च न तथा फलवन्तौ। वर्णपक्षेत्यत्र पूर्वपक्षेति पाठः स्यात्। यद्वा पूर्वमीमांसकोक्तो वर्णपक्षः भवता कृतः तद्बाधश्च न तथेत्यर्थः। तस्मात् सूत्राणि सर्वाणि यथा सिद्धान्तपराण्येव स्युः, तथा व्याख्यानं कार्यम्। अन्यथा तत्रतत्र खण्डनीयपक्षाणामनेकरूपत्वसंभावनया सर्वे पक्षाः वक्तव्याः स्युः। कतिपयमात्रोक्तौ न्यूनता। कालत्रये मतीनां बह्वीनां संभवात् तन्मतिगतानां पक्षाणामनेकत्वादेकमात्रनिषेधे इतरचिकित्सा कथम्। अर्थात् निरसने तु सर्वग्रहणं सुकरमिति पूर्वपक्षसूत्राण्यनावश्य-कानीति। तन्निरस्यति नेति। यः पूर्वपक्षी छलगतिमान् तस्य सा गतिश्छद्मना क्षोभणीया भवति। किमर्थम्। न स पुरुषः तस्य सत्पुरुषत्वसंपादनायात्र शिक्षितः; वेदबाह्यस्य शोधनासंभवात्। अपि तु छात्राणां बुद्धिक्षोभपरिहारार्थं परत्रगौरवबुद्धिनिरसनार्थं तस्य शिक्षाऽत्र प्रतिपाद्यते। छात्रमेव संबोध्य, तवैषा बुद्धिरयुक्तेति वक्तुं न शक्यते। वस्तुतः छात्रस्य तथाविधदृढभ्रान्त्यभावात्। परमते स्थित्वा प्रश्नकरणे-ऽपि तथा तदभिमतेर्दुर्वचत्वात्। अतो बाह्यशिक्षैवेयं छात्रगुप्त्यर्थैव। तत्र छलगतेश्छद्मना क्षोभणमपि न दोषाय, "तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहणार्थं कण्टकशाखावरणवत्" इति हि न्याय-दर्शनम्। यद्वा छलेन बाह्यपक्षोपन्यासमिषेण छात्रस्य गतिः; सा बाह्य-निरसनव्याजेन शिक्षणीया भवतीति। अथवा अनधिकारिणा बाह्येन

वादायोगात् छात्रसमाधानच्छद्मना बाह्यगतिः क्षोभणीया भवतीति ।
एवमेकरीत्युपन्यासतन्निरसनमुखेन अन्यान्यपक्षनिरसनप्रकारा अपि सूच्यन्त एवेति न न्यूनतेति भावः ॥ १५३ ॥

**154. दृष्टौ तद्धैक इत्याद्यकृतकफणितौ पूर्वपक्षोक्तिभङ्गौ**
**तत्र स्वाध्यायपाठः फलमिति तु न सत् दृष्टहानादिदोषात् ।**
**सूत्रेऽप्येषैव रीतिर्भवति फलवती नान्यथाऽतिप्रसङ्गात्**
**कः पूर्वः कश्च पक्षः पर इति नियमः स्वारसिक्या प्रवृत्त्या ॥**

एवं पूर्वपक्षस्यापि सूत्रणे पूर्वपक्षः क इति सिद्धान्तः क इति न निर्धार्येतेति शंकां परिहरन् पक्षोद्भावन-निरसनप्रणालीयं वेदेऽपि दृश्यमानेति तदनुसारिणां तच्छायया ग्रन्थनिर्माणमुचितमित्याह दृष्टाविति । तद्धैक आहुः असदेवेदमग्र आसीदिति पक्षान्तरोपन्यासः । "कुत एतदिति । कथमसतः सज्जायेत । सत्त्वेव सोम्येदमग्र आसीत्" इति सिद्धान्तपक्षोपन्यासश्चेति **अकृतकफणितौ** अपौरुषेये वेद एव अन्योक्त्यनुवादत्वाभावेऽपि स्पष्टप्रतिपत्तये पूर्वपक्षिसिद्धान्तिरूपवादिद्वयपरिकल्पनेन पूर्वपक्षोक्तिः तद्भङ्गश्चेति द्वौ पक्षौ दृष्टौ । तत्र सर्वेष्वधिकरणेषु पूर्वपक्षा उद्भाव्यमानाः कैश्चित् तथा आदृता एवेति न निर्बन्धः । स्वयमेव संभावितत्वमात्रेणोद्भाव्य निरासात् । यथा 'को धर्मः कथंलक्षणकः' इति स्वरूप-लक्षणकथनार्थमविद्यमान-तज्जिज्ञासारोपः, तद्वत् । न च—पारायणाद्यर्थस्वाध्यायत्वसंपत्तये वेदे तथोक्तिः, न त्वर्थः कश्चिदस्तीति वक्तुं युज्यते ; दृश्यमानार्थत्यागे मानाभावात् । यत्तु पूर्वपक्षसिद्धान्तविवेचनं सूत्रे दुष्करमिति,

तत्रेत्याह क इति । पूर्वपक्षः पूर्वमुच्यते, सिद्धान्तः पश्चादिति स्वरसगत्यैव निर्णयसंभवात् । न हि वेदप्रामाण्यस्थापनप्रवृत्तः तद्बाधकं पूर्वपक्षप्रकारं सिद्धान्तत्वेन संमन्तुमर्हति । उत्तरपक्षं पूर्वमुल्लिख्य पश्चादाक्षिप्य स्थापनमपि क्वचिद् भवति। कियदेकं सूत्रम्, कुत्र पृथक्कारः इत्यादिकमप्येवं स्वारस्यबलादवसेयम् । संप्रदायश्च यथासंभवमनुपेक्ष्यः । अत एतदधिकरणप्रभृति सूत्रानेकत्वं पक्षद्वयोपन्यासश्चेति यथासंभवमाद्रियत इति ॥ १५४ ॥

इति शब्दनित्यत्वाधिकरणम् ॥

7 अथ वेदस्यार्थप्रत्यायकत्वाधिकरणम् । सूत्राणि 24-26

155. वाक्यात् वाक्यार्थबुद्धौ बहुविधकुहकक्षोभतो बाधितायां
तत्प्रत्यायत्तिसिद्ध्यै परमिह मुनिना न्यासि वाक्याधिकारः।
दृष्टापह्नुत्ययोगात् दृढतरविदितात् कार्यतो हेतुसिद्धौ
दन्तादन्तिप्रयासः पुनरिह विदुषां दर्पसङ्घर्षतन्त्रः ॥

स. अथ वाक्याधिकरणम् । पदानां नित्यत्वात् पदपदार्थयोः संबन्धस्य सांकेतिकत्वायोगात् औत्पत्तिकत्वं सुप्रतिष्ठितमिति पूर्वाधिकरणे निरूपितम् । एवं पदात् पदार्थप्रतीतावपि वाक्यात् वाक्यार्थप्रतीतिर्न भवितुमर्हतीति आक्षेपः परिह्रियत इह । तत्र अन्यत्र वाक्यस्यार्थप्रत्यायकत्वेऽपि अप्राप्तार्थबोधकत्वेनाभिमतात् वेदवाक्यादर्थबोधो न भवेदिति वेदमात्रे शंका । तत्परिहारोऽधिकरणकृत्यमिति स्वाभिमतं सेश्वरमीमांसायामुक्तम् । भाट्टास्तु सामान्येन वाक्यस्य वाक्यार्थबोधकत्वं न भवतीति शंका, तत्परिहारश्चात्रेति अधिकरणं

रचयन्ति । तदनुपपन्नमित्याह वाक्यादिति । ते खल्वेवमाहुः—वाक्यस्य वाक्यार्थबोधजनकत्वं कथम्? किं वाक्यान्तर्गतस्य पदस्य बोधकत्वम्, वाक्यस्य वा, उत पदार्थस्य । नाद्यः; पदस्य तथात्वे एकपदमात्रात् बोधापत्तेः । न द्वितीयः, अस्य पदस्यायमर्थ इति संबन्धग्रहवत् अस्य वाक्यस्यायमर्थ इति पूर्वं संबन्धग्रहाभावात् तत्तत्प्रयुक्तवाक्यानुपूर्व्याः विभिन्नतया बोधासंभवात् । नापि पदार्थः । तस्यैकस्य वाक्यार्थबोधकत्वाभावात् । अनेके पदार्थास्तथेति चेत् न; पदार्थज्ञानस्य मिथस्संबन्धज्ञानकारणताया अक्लृप्तत्वात् । न हि प्रत्यक्षेण देवदत्ते गृहीते तन्निकटे चान्यस्मिन् पुरुषे दृष्टे तयोर्द्वयोः संबन्धोऽस्माभिरवगम्यते । तत्र संबन्धकल्पनार्थः प्रयासोऽपि न दृश्यते । अतः पदार्थज्ञानमात्रात् वाक्यार्थज्ञानमयुक्तम् ॥ प्रत्यक्षादिस्थले तदभावेऽपि पदप्रयोगस्थले संबन्धकल्पनमिति चेत्—गौरश्वः पुरुषः, घटः कर्मत्वमानयनं कृतिरित्यादेरपि बोधकत्वमस्तु । किञ्च वाक्यस्य पदसमुदायरूपत्वात् पूर्वपदानां तज्ज्ञानानाञ्च नष्टत्वे कथं सर्वपदसमुदायात् वाक्यार्थबोधः । एवं बहुविधः कुहकक्षोभेण बाधः पूर्वपक्षविषय इति । तत्प्रत्यापत्तिसिद्ध्यै वाक्यार्थबुद्धिर्भवितुमर्हतीति तत्प्रतिष्ठापनायेदमधिकरणमिति । परिहारहेतुश्च भाट्टैः एवम्—पदाभिहिताः पदार्था एव वाक्यार्थज्ञाने करणम् । न पदानि, नष्टत्वात् । न केवलपदार्थाः प्रत्यक्षादौ संबन्धाप्रतीतेः । कतिपदप्रयोगे संबन्धप्रतीतिर्न भवतीति चेत्—आकांक्षादिमत्पदाभिहितानामेव पदार्थानां तदस्तु इति । इदं निरस्यति दृष्टेति । शब्दे प्रयुज्यमाने अर्थबोधस्तावत् अनुभवसिद्धः । कार्यान्यथानुपपत्त्या च कारणमवश्यमेष्टव्यम् । तत्र

कूटयुक्त्या कारणत्वापलापो न युक्तः। एवं कार्यकारणभावस्यावश्यकत्वे पदस्य वा वाक्यस्य वा पदार्थस्य वा तदस्तु। किमनेन। सामान्यतः शब्दप्रामाण्यस्थापनञ्च न्यायसूत्रकार्यमिति प्रकृते तन्त्रे तद्विमर्शो नापेक्षितः। अनुभवसिद्धस्य निर्वहणीयत्वात्। ततः पदस्य, पदसमुदायस्य, पदार्थस्येति तत्तत्पक्षस्वीकारेण पक्षान्तरनिरसनप्रयासः, तत्तद्वादिकृतः नेह संगत इति॥ अभिहितान्वयवादो भाट्टानाम्, अन्विताभिधानवादः प्राभाकराणाम्। पदैः पदार्थेष्वभिहितेषु पदविशेषसमभिव्याहारस्य संबन्धरूपवाक्यार्थप्रयोजकत्वमिति वादो नैयायिकानाम्। अस्माभिरेकतरपक्षस्य स्वीकार्यत्वेऽपि तत् न्यायदर्शनरूपप्रमाणशोधकशास्त्रकृत्यम्, न प्रकृताधिकरणार्थः। प्रकृतत्वात् वेदस्य, तस्यार्थप्रत्यायकत्वाभावे विशिष्य शंकिते तत्परिहार इह सूत्रेष्ट इति॥ १५५॥

156. वाक्याद्ज्ञातयोगादविदितकथनेऽतिप्रसङ्गप्रसङ्गो
मैवं व्युत्पन्नशब्दस्तबकमहिमतस्तत्तदर्थोपलब्धेः।
संबन्धः स्यात् गृहीतः कथमपि न तु वा तत्तदर्थे पदानां
वाक्यं वाक्यार्थयुक्तं न तु विदितचरं काव्यक्लृप्त्यादिदृष्टेः॥

स. ननु—संबन्धज्ञानं विना वाक्यं वाक्यार्थबोधकञ्चेत्—अव्युत्पन्नानामपि बोधः स्यात्। तस्मात् ज्ञात योगं ज्ञातसंबन्धकं वाक्यमेव कारणमिति चेत्—मैवम्—वाक्यानुपूर्व्याः तत्र तत्र विलक्षणतया वाक्यस्य वाक्यार्थस्य च संबन्धः कुत्रापि न गृहीतः। अतो वाक्यं वाक्यार्थयुक्तं न विदितचरं भवति। अत एवापूर्वकाव्यादीनामुदयः। तस्मात् वाक्यवाक्यार्थसंबन्धज्ञानं कारणमिति न भवति। नाप्यज्ञातसंबन्धकम्।

अव्युत्पन्नानामर्थज्ञानाभावात्। अतो व्युत्पन्नपदकदम्बमहिम्ना वाक्यार्थधी-रिति। तत्र पूर्वमेव पदानां संबन्धो गृहीतः स्यात् । यत्र प्रसिद्धपद-समभिव्याहारेण कतिपयपदार्थावधारणं कर्तव्यं भवति, यथा सहकारतरौ मधुरं पिको रौतीत्यादौ पिकादिपदस्य, तत्र वाक्यग्रहणात् प्राक् तत्पद-पदार्थसंबन्धो न गृहीत इत्येवास्तु। सर्वथा पदार्थावधारणात् वाक्यार्थ-बोधो भवत्येवेति ॥ १५६ ॥

157. यत् वाक्यं गोपदादिव्यतिकरितमिदं वक्ति गोत्वादिमद्भि-र्युक्तान्(?) वाक्यार्थभेदानिति सकृदखिलव्यापिसंबन्धबोधात्।
वाक्यं वाक्यार्थबोधे प्रभवति तदिहातिप्रसङ्गो न शंक्यः
पुंवाक्येऽप्येवमेव स्थितिरिति न ततो वेदवाचां विशेषः ॥

स. अन्विताभिधानखण्डनप्रवृत्तायां शास्त्रदीपिकायाम् "वाक्यं गोपद-युक्तं यत् तत् सास्नादिसमन्वितम्, वाक्यार्थं वदतीत्येवं व्युत्पत्तिः सुकरैव हि" इति तत्पक्षमुक्त्वा, "सत्यं व्युत्पत्तिरेवं स्यात्–तथापि तु न वाक्यतः। वाक्यार्थावगतिर्युक्ता तिरोभावेपि दर्शनात्" इति श्रुतकतिपयपदविस्मरणे-ऽपि बोधस्य जायमानतया पदविस्मरणेऽपि पदार्थज्ञानं कार्यकरमिति पदार्था-नामेव प्रमाणत्वमिति तन्निरसनं कृतम्। तदयुक्तम्। वाक्यश्रवणानन्तरभावि-पदार्थज्ञानस्थल एव वाक्यार्थबोधात् प्रत्यक्षादिमूलपदार्थस्मरणे तदभावात् वाक्यस्य करणत्वमक्षतम्। पदार्थज्ञानस्य च व्यापारत्वात् व्यापारेण व्यापारिणो नान्यथासिद्धिः। अन्यथा यागोऽपि स्वर्गं प्रति न करणं भवेत्, अपूर्वमुत्पाद्य नष्टत्वात् इत्यभिप्रेत्यान्विताभिधानपक्षेणार्थग्रहमाह यदिति। अत्रेयमाशंका—गां दद्यात्, गौर्न हन्तव्या इत्यादौ गोपदं दातृत्वादि-

सहितं दानाद्यन्वित सास्नारूपगोत्वसंस्थानवदर्थबोधकमिति विशेषसंबन्धव्युत्पत्तिर्लोके नास्ति। यत्तु गां बधानेत्यादिबन्धनाद्यन्वितगोरूपार्थज्ञानं लौकिकम्, न तत् वेदवाक्यार्थज्ञानोपयोगीति। तत्रोच्यते-धात्वादिकं विशेषरूपेणागृहीत्वा गोपदान्वितं पदं गोत्वादिमदन्विातार्थबोधकमिति सामान्येन व्युत्पत्तिः। एवञ्च दानबन्धनादिसर्वसंबन्धग्रहणान्न दोषः। एवं गोपदमितरान्वितार्थबोधकमिति गोपदविशेष्यकव्युत्पत्तिरपि भवतु। एवञ्च योऽयमतिप्रसंगः-यदि गोपदवधधातुसंबन्धाधीनबन्धनान्वितगोरूपार्थविशेषज्ञानमात्रादपि गां दद्यादित्यत्रापि वाक्यार्थबोधः स्यात्, अव्युत्पन्नस्यापि बोधः स्यादित्येवंरूपः—न तत्प्रसंगः। वाक्यघटकैकैकपदेपि इदं पदमितरान्वितैतदर्थबोधकमिति ज्ञानस्य पूर्वमावश्यकत्वात्। लोकेपि गामानय, अश्वं बधानेत्यादौ व्युत्पत्त्या अश्वमानयेत्यादावर्थबोधः एवं सामान्यरूपेण व्युत्पत्त्युपपादनेनैव निर्वाहः। अतो वेदवाचामर्थबोधकत्वाभावो नेति। यत्तु गामानयेत्यत्र गोपदमानयनान्वितगोरूपार्थपरम्। आनयेति च गोरूपार्थान्वितानयनपरमित्युक्तौ पौनरुक्त्यम्। एकैकेन पदेन सर्वोक्त्या वाक्यद्वयत्वं वाक्यभेदश्च स्यादिति—तन्न; सामान्यतः किञ्चिदन्वितैतदर्थबोधकमित्येव ग्रहणात् विशेषग्रहणाय पदान्तरस्यापेक्षितत्वात्। तद्विना वाक्यार्थविशेषानिष्पत्त्या कस्यापि दोषस्याभावादिति॥

158. वाक्यं नान्यत् प्रतीमः किमपि पदसमाहारतस्तान्यमानं
वाक्यस्यार्थः पदार्थादनधिक इति नापूर्वरूपोपपत्तेः।
अन्योन्योपक्रियादिप्रणिधिमति पदान्येव वाक्यं भवेयुः
वाक्यार्थत्वं पदार्थेष्वपि भवति मिथःश्लिष्टरूपातिरेकात्॥

स. पदपदार्थं वाक्यवाक्यार्थवैलक्षण्यं व्युत्पादयति वाक्यमिति । वाक्यं पदसमुदायापेक्षयाऽन्यत् न प्रतीमः । पदानि च प्रत्येकं प्रमाणं न भवन्ति । गौरित्येकपदप्रयोगे बोधाभावात् । अतो न वाक्यं मानम् । एवं मेयो वाक्यार्थोऽपि पदप्रतीतार्थसमुदायापेक्षयाऽन्यो न प्रतीयते । प्रत्येकं पदार्थस्तु न वाक्यप्रमेयः । अतो वाक्यार्थः प्रमेयो न भवतीति । एवं न शंक्यम् अपूर्वरूपोपपत्तेः । वाक्यस्य वाक्यार्थस्य च पदपदार्थातिरिक्तत्वाभावेऽपि आकारभेदात् इष्टसिद्धेः । पदं प्रत्येकमसमर्थं पदान्तरविशिष्टत्वेन रूपेण प्रमाणम् , पदार्थः प्रत्येकं केवलरूपेणाप्रमेयोऽपि पदार्थान्तरान्वितत्वरूपेण प्रमेयः इति । अत्र पदान्तरसमभिव्याहृतं पदं वा वाक्यम् , पदस्य पदान्तरेण समभिव्याहारो वा वाक्यमिति न विवदनीयम् ; अनतिभेदात् । एवं पदार्थविशिष्टपदार्थो वा पदार्थद्वयसंबन्धो वा वाक्यार्थ इत्यपि । संबन्धरूपवस्तुधर्मापेक्षया वस्तुनः प्राधान्यमेव स्वरसग्राह्यम् ॥ १५८ ॥

159. वाक्यं चेदप्रमाणं निखिलमभिलपेत् नास्य वादाधिकारः
किञ्चिच्चेन्मानमिष्टं तदितरदपि ते तादृशं किं न मानम् ।
एतत् यो वा न मानं व्यपदिशति स चाबाधतो मानमिच्छेत्
तस्मादाम्नायवाक्यैरकलुषधिषणोत्पत्तिरक्षोभणीया ॥

स. सामान्यतः शब्दाप्रामाण्यं दुर्वचमित्याह वाक्यं चेदिति । यदि निखिलमपि वाक्यमप्रमाणमिति वदेत् —तस्य वादे अधिकार एव नास्ति । वादस्य परं प्रति अर्थप्रत्यायनाय क्रियमाणत्वात् शब्दस्यार्थप्रत्यायकत्वाभावे वादासंभवात् । कतिपयवाक्यस्य मानत्वेष्टौ तद्रीत्यभंगे

अन्यत्र तदपलापो न युक्तः । यो हि विशिष्य, नेदं मानमिति ब्रूयात्, तेन बाधितत्वादित्येव हेतुर्वक्तव्यः । अबाधे चोपपादिते मानत्वं स स्वीकुर्यादेव । तत् सिद्धमाम्नायवाक्यानां निर्बाधज्ञानहेतुत्वमिति ॥ १५९॥

160. वाक्यात् वाक्यार्थबुद्धिर्न घटत इति यद्वाक्यमुक्तं भवद्भिः
तच्चेत् स्वार्थप्रतीतिं जनयति जनयेत् तद्वदन्यच्च वाक्यम् ।
नो चेत् भङ्गस्त्वदुक्त्या न कथमपि भवेदस्मदिष्टस्य, तस्मात्
अप्राप्ते वेदवाक्यान्यपि निजविषये मानतां न व्यतीयुः ॥

स. इदमपि सामान्यतः शब्दप्रामाण्यनिषेधकं वादिनं पृच्छामः- वाक्यं न प्रमाणम्, वाक्यस्य वाक्यार्थबुद्धिजनकत्वं नास्ति इति यो ब्रूयात्, तत्प्रयुक्तस्य तस्य वाक्यस्यार्थप्रतीतिजनकत्वमस्ति, न वा । नास्तीति चेत्, तर्हि त्वदुक्त्या न परपक्षभंग इति तस्मै वक्तव्यम् । अस्तीति चेत् ब्रूयात्, तदापि त्वद्वाक्यस्य बाधितार्थकत्वात् न तेनास्मत्पक्षभंग इति । सर्वथा वेदवाक्यानि प्रमाणतां न जहति अप्राप्ताबाधितार्थबोधकत्वात् ॥ १६० ॥

161. स्वव्याघातप्रसक्तौ स्वपरघटकवद्भावनं भ्रान्तकृत्यं
मूर्खाणां पण्डितानामपि न हि विहतं वाक्यमिष्टं प्रतीत्यै ।
इष्टं बोधं पदार्थैरपलपितुमवश्यायकल्पान् विकल्पान्
अल्पप्रज्ञाभिनन्द्यान् अभिदधतु ततः स्वोक्तिरेवापक्र(कृ?)त्ता ॥

स. ननु वाक्यात् वाक्यार्थबुद्धिर्न भवतीति वाक्यं वाक्यत्वाविशेषात् तस्य वाक्यार्थबुद्धिजनकत्वव्याघातकम्, कथं तेन परभञ्जनमिति भवदुक्तं न युक्तम्, स्वव्याघातकस्यापि परव्याघातकत्वसंभवात् । यथा

हि ज्ञान-रूपादीनां स्वनिर्वाहकत्वं परनिर्वाहकत्वञ्च, तथा स्वव्याघातकत्वं परव्याघातकत्वञ्चैकत्र युक्तमिति शंकां शमयति स्वेति। स्वपरघटकवत् स्वपरनिर्वाहकवत्। कस्यचित् स्वपरनिर्वाहकत्ववत् स्वपरव्याघातकत्वं भवेदिति चिन्तनं भ्रान्तकृत्यम्; बलहानेः। तथा हि सति वाक्यात् वाक्यार्थबुद्धिर्न भवतीति यत् वाक्यं तस्य वाक्यार्थबुद्धिजनकत्वमेषितव्यं स्यात्। तथा वाक्यत्वाविशेषात् वाक्यार्थबुद्धिजनकत्वाभावोऽपि संमन्तव्यः। न च भावाभावद्वयमेकत्र घटते। एवं बुद्ध्यजनकवाक्यस्यापि बुद्धिजनकत्वस्वीकारे बाधितार्थकवाक्यस्य सर्वस्याबाधितार्थकत्वमिष्टं स्यात्। पण्डितवद् मूर्खोऽपि विहतस्य वाक्यस्य यथावस्प्रतीतिजनकत्वं नेच्छेत्। एवञ्चसति वेदवाक्यानामपि अप्रामाण्यवत् प्रामाण्यमपि भवेदिति नास्मत्पक्षनिरासस्य प्रसक्तिः। एवञ्च वाक्यं न वाक्यार्थधीहेतुः पदत्वात् वर्णत्वात् शब्दत्वात् इत्येवं पदादिहेतुभिर्बाधने प्रवृत्तैः क्रियमाणाः विकल्पाः सर्वे हिमकल्पाः। तान् अल्पप्रज्ञपुरुषान् प्रति कामं ते वदन्तु। दृष्टविरुद्धानुमानानां बाधितत्वात् स्वोक्त हेतूनामाभासत्वमेव। वाक्याद् वाक्यार्थबोधस्याऽऽपामरप्रसिद्धस्यानुकूलमेव तर्काणां विमृश्यत्वात्। तत् सिद्धं सामान्यतो बोधानुदयो दुर्वच इति। वेदवाक्यस्य अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादेः स्वर्गादिसाधनताबोधकत्वं न भवति, साक्षाद्वा, कृष्यादेरिव लोकदृष्टरीत्या परम्परया वा कारणत्वनिरूपणायोगादित्यादिपूर्वपक्ष-तत्परिहारप्रकारश्च सेश्वरमीमांसायां द्रष्टव्यः। अतो वेदवाक्यस्यापि लोकवाक्यवदेव लोकदृष्टाकांक्षादिसाहचर्येण बोधकत्वं प्रामाण्यञ्चोपपन्नमिति। १६१ इति वेदस्यार्थप्रत्यायकत्वाधिकरणम्॥

8 अथ वेदापौरुषेयत्वाधिकरणम् । सूत्राणि 27-32.

कर्तृप्रत्यायकाः स्युः श्रुतिषु सुविदिताः काठकाद्याः समाख्याः
तेनेमाः पौरुषेय्यस्तदिह कुशलिनी विप्रलिप्सादिशङ्का ।
मैवं शारीरकोक्तां सरणिमवयतां नित्यसिद्धेषु वेदे-
ष्वाविष्कारेऽधिकारात् कतिचन पुरुषाः कर्तृनिर्देशमापुः ॥ 162.

स. अथ वेदनित्यत्वाधिकरणम् । पदनित्यत्वेऽपि भारतादिवत् वेदस्यानित्यत्वमेव । अतः पौरुषेयत्वात् दोषसंभावनया न प्रामाण्यनिश्चय इति प्रत्यवस्थानम् । कर्तुरस्मर्यमाणत्वादकर्तृका वेदा इत्यसंगतम् ; वक्तॄणां श्रूयमाणत्वादिति काठकादिसमाख्याग्रहणेनात्र पूर्वः पक्षः । काठकं कालापकमित्यादिसमाख्यानां कठेन कृतं काठकमिति रीत्याऽर्थवर्णनसंभवे कठेन प्रोक्तं काठकमिति रीत्याऽर्थवर्णनं न सम्यक् ; प्रवचनकर्तृत्वस्य बहुसाधारणत्वेनैकनिर्देशे कारणाभावात् । एवं विश्वामित्रसूक्तादिनामापि ग्राह्यम् । एवञ्चैषां वक्तॄणां जीवानां भ्रमप्रमादविप्रलम्भसंभावनया वेदप्रामाण्यानिश्चय इति । विप्रलिप्सादिशंकायाः पूर्वपक्षीष्टत्वात् कुशलिनीति समाहृत्य प्रयोगः । परिहरति मैवमिति । मन्त्रकृतो वृणीते, विश्वामित्रस्य सूक्तं भवतीत्यादौ ब्रह्मसूत्रे 'अत एव च नित्यत्वम्' इत्यत्र विवक्षितं समाधानमाह शारीरकेति । कतिपयभागानां कतिपये महर्षयः समयेषु प्रादुर्भावका इतीममर्थं वेदादेवाधिगम्य तदर्हान् सृष्ट्वा तन्मुखेन तान् भागान् तदातदा विधिराविर्भावयति । अतस्तत्तन्नाम्ना प्रसिद्धिरिति । इदञ्च तत्तद्व्यक्त्यसाधारणमिति व्यावर्तकाकारसत्त्वात् विशेषनिर्देशोपपत्तिः । किञ्च

सर्वशाखवेदाध्ययनसम्प्रदाये अनुवर्तमाने आयुरारोग्यबलवीर्यादि-हान्या पूर्णाध्ययनासंभवमवेक्ष्य व्यासो वेदशाखाव्यसनेन एकैकशा-खाध्ययने एकैकं न्ययुङ्क्त । त इमे प्रत्येकशाखाध्यायिनः कठादयः । एवं तेषामेकैकशाखाध्यायिपरम्पराकूटस्थत्वात् तत्तन्नाम्ना तत्तद्भागव्य-वहार इत्यपि संगतम् । ईदृशं प्रवचनमत्र विवक्षितमिति ॥ १६२ ॥

163. कल्पेकल्पे दयालुः स्थिरचरकृदधिष्ठाय रूपं कठाद्यं
शाखाभेदान् विचित्रान् समतनुत ततोऽध्यापयामास चर्षीन् ।
इत्युक्तं न्यायभक्तैरिदमपि च परं भक्तिमात्रप्रसूतं
निर्माणाध्यापने द्वे किमिति निगदिते पश्चिमेनैव लभ्ये ॥

स. तार्किकास्तु ईश्वरकृतत्वमेव वेदस्येच्छन्तः काठकादि-समाख्यानिर्वाहः कथमिति प्रश्ने ईश्वर एव कठादिरूपेणाऽऽविर्भूय निरमादित्याहुः । तत्र काममस्तु कठादिरपीश्वरावतार इति । प्रथमप्रवर्तक-त्वमीश्वरस्यैव प्रतिसर्गमित्यपि सर्वसमन्तव्यमेव । तेनैवोपपत्तौ ईश्वरस्य निर्मातृत्वं साक्षाद्वा कठादिरूपेण वा किमर्थं स्वीकार्यमित्याह कल्पेकल्प इति । पश्चिमेन अध्यापनेनैव काठकादिसमाख्यानिर्वाहे लभ्ये द्वे किमर्थं निगदिते । निर्माणकल्पनं निर्मूलमिति ॥ १६३ ॥

164. वाक्यत्वात् कर्तृमत्त्वे सति निगमगिरां कर्तृभेदे तु चिन्त्ये
वृद्धव्याहारसिद्धास्तदवधृतिकृतः काठकाद्याः समाख्याः ।
इत्येषा मुग्धभाषा बहुनिगमहता बाधशून्या (न्यो?) विपक्षे
नासौ वाक्यत्वहेतुर्निगमकृतकतां संप्रयोक्तुं [illegible]त ॥

स. ननु निर्माणकल्पनं न निर्मूलम्; वेदः सकर्तृकः वाक्यत्वादित्यनुमानेन सकर्तृकत्वे सिद्धे, महाजनपरिग्रहेण च प्रामाण्ये परिपूर्णे, कपिलादिष्वनाश्वासात् नित्यसर्वज्ञस्य निर्दोषस्येश्वरस्यैव कर्तृत्वे आप्तप्रामाण्यात् वेदप्रामाण्यं स्थास्यतीति तस्य निर्मातृत्वं निरूपयाम इति शंकायां वाक्यत्वानुमानं दुस्स्थमित्याह वाक्यत्वादिति। अनुमानेन सामान्यतः कर्तरि सिद्धे, कर्तृभेदे-कर्तृविशेषे जिज्ञास्यमाने काठकादिसमाख्यानामुपस्थितौ ताः तदवधृतिकृतः कठादेरीश्वरत्वावधारणकारिण्यः; अन्यथाऽनाश्वासादिति इयं तार्किकोक्तिः मुग्धभाषा अपातरमणीया मोहमूला च। बहुनिगमहतत्वात् 'वाचा विरूपनित्यया' इत्यादिवेदानादित्वबोधकश्रुतिबाधितत्वात्। एवं निगमनिरीक्षणे बाधितो हेतुः तदनिरीक्षणेन विचारेऽपि अप्रयोजकश्च। तदाह बाधशून्य इति। विपक्षेबाधकशून्यत्वमप्रयोजकत्वम्। तादृशः। हेतुरस्तु साध्यं मास्तु इति साध्यविरुद्धपक्षजिज्ञासायां बाधकतर्काभावात्। अतो वाक्यत्वहेतुरयं निगमस्य कृतत्वमनुमातुं न समर्थ इति। शून्येति स्त्रीलिङ्गपाठो न सम्यक्॥ १६४॥

165. वेदानां यच्च शाखाविभजनमुदितं द्वापरान्ते चतुर्णां
नानित्यत्वं ततः स्यात् समुदितपृथगाम्नानमात्रप्रवृत्तेः।
कृत्स्नाम्नानक्षमाणामुपचिततपसां गोचरः कृत्स्नमादौ
पश्चात्तु ज्ञानशक्त्योरपचयनियमात् व्यासक्लृप्तिः समीची॥

स. ननु व्यासेन वेदविभागः शाखाविभागश्च कृत इति सर्वसंमतम्। एवं हौत्राध्वर्यवौद्गात्राद्यनुकूलो वेदविभागः पूर्वस्थितानु-

पूर्वाभिन्नरूपेणैव भवति। अथैकैकवेदेऽपि शाखाविभागश्च कृतः इति आनुपूर्व्या अप्यनित्यत्वे कथं वेदनित्यत्वमित्यत्राह वेदानामिति। द्वापरयुगस्यान्ते शाखाविभागः कृत इत्युक्तम्। तावता आनुपूर्वीभेदः कथम्। न हि वृक्षशाखाविभागे एकशाखाभागानां शाखान्तरे प्रवेशो भवति। अत आनुपूर्वीमभङ्क्त्वा खण्डशोऽध्ययनं कारितमित्येतावदेव। अतः समुदायात् पृथक्कारमात्रम्—न तु एकत्र स्थितस्यान्यत्र निक्षेपरूपः संकरः। ततः प्राक् पूर्णवेदाध्ययनसमर्था आसन्। तपस उपचयाच्च पूर्णस्तेषां प्रत्यक्ष आसीत्। अथ शक्तिज्ञानह्रासमालक्ष्य कोऽपि पूर्णग्रहणसमर्थो नास्तीति निश्चित्य वेदान् व्यस्तवानिति॥ तत् व्यासेन महर्षिणा व्यासस्य विभजनस्य कृत्सिः समीची। अतो नित्यैवानुपूर्वी॥ १६५॥

**वेदाद्द्वेधाऽ(देवा ?) प्रधृष्याद्भवति विमृशतां वेदनित्यत्वसिद्धि-**
**र्मन्वादीनां च वाक्यैरवितथवचसां बाधदोषातिदूरैः।**
**अङ्गोपाङ्गैरशेषैरपि कथितमिदं सद्गृहीतैस्तदस्मिन्**
**प्रादुर्भावादिमात्रं प्रजनयति विभुः सोऽपि पारम्पर्यरूप्यः 166**

स. वेदानादित्वनित्यत्वप्रतिपादकश्रुति–स्मृति–षडङ्गादि–भूयोनुरोधेन, 'ऋचस्सामानि जज्ञिरे इत्यादिवचनानामर्थो वर्णनीय इत्याह वेदादिति। जनिबोधकत्वाभिमतः प्रमाणतमो वेद एव तदनादित्वमाह। वेदश्चाप्रधृष्यः। न तदर्थे बाधः कश्चिल्लक्ष्यते। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, वेदेन नामरूपे व्याकरोत् सतासती प्रजापतिः, वाचा विरूपनित्यया इत्यादिर्वेदः। मनुश्च,

सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् । वेदशब्देभ्य एवाऽऽदौ पृथक्संस्थाश्च निर्ममे इति । तथा पराशरः, नाम रूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम् । वेदशब्देभ्य एवाऽऽदौ देवादीनां चकार सः इति । व्यासश्च, अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः इति । एवं व्याकरणादिषु अङ्गग्रन्थेषु काठकादिशब्दानां कर्तृत्वनिमित्तकत्वानिष्टेः प्रवचननिमित्तकत्वादिप्रति-पादनात् वेदनित्यत्वमेवेष्टम् ॥ तर्हि, ऋचः सामानि जज्ञिरे इति कथमिति चेत्—जनि प्रादुर्भाव इति प्रादुर्भाव एव तत्र जनिधात्वर्थः । तथा, तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त अग्नेः ऋग्वेदः वायोर्यजुर्वेदः आदित्यात् सामवेदः इत्यादिपरामर्शे प्रादुर्भावकपुरुषसृष्ट्यादिकर्मापि तत्कार्यमिति ज्ञायते । पारम्पर्यरम्यः पारम्येण भोग्योऽपि नैतत्कर्ता । पारम्यादेव कल्पान्तरस्थितवेदप्रत्यक्षवत्त्वात् अपूर्वनिर्माणस्यानपेक्षितत्वा-दिति । वेदाद्दृष्टेश्चाऽप्रधृष्यादित्यत्र वेदादेवाप्रधृष्यादिति पाठः स्यात् । दृष्टेरित्येव पाठश्चेत्, प्रासार्थत्वमुखेन बाधितार्थत्वमुखेन चाप्रधृष्यादिति व्याख्येयम् । उपरि बाधदोषातिवृत्तेरित्युच्यते । वेदवाक्यमादाय प्रश्ने वेदवाक्यमेवादद्योत्तरणात् एवकारो युक्तः ॥ १६६ ॥

**167. कर्ता दृष्टः श्रुतो वा न हि परकथितस्तापसादिः श्रुतीनां**
**प्रद्विष्टोक्तिर्न तत्त्वस्थितिमवगमयेन्नाति(पि?)शक्ता नियोक्तुम् ।**
**अद्वैयैरन्यथोक्त्या भजति च विहतिं शङ्कनेऽतिप्रसक्तिः**
**शङ्का सार्वत्रिकी च स्वजनिविहतिकृत् सर्वचेतःप्रतीपा ॥**

स. सकर्तृकत्ववादिभिः क्रियमाणा कर्तृनिरूपणप्रक्रिया अनुपपन्नेत्याह कर्तेति। वेदस्य कर्तारः आसन्निति सामान्येनोहमात्रम् उत विशेषनिर्धारणम्। आद्यं निरस्तम्। अन्त्ये ये तस्य कर्तृत्वेनाभिमताः महर्षयो वा सर्वेश्वरो वा, ते तद्वेदकरणदशायां तैर्वादिभिर्न दृष्टा इति नेदं दर्शनमूलकं निर्धारणम्। तस्मात् श्रवणादेवमिति वक्तव्यम्। श्रवणञ्च किं वेदात्, उत किंवदन्त्या। वेदेन वेदस्य नित्यत्वोक्त्या तद्विरुद्धस्यानित्यत्वस्य तत्रोक्त्यसंभवात्। मन्त्रकृतो वृणीते इत्यादीनां वेदवाक्यानामबाधितमर्थान्तरं वर्णनीयमिति प्रागेवोक्तम्। अथ वैदिकजनोक्तिमूलकश्रवणपरम्परयेति चेत्—साऽपि एकरूपा न दृश्यते। वेदविरोधे च विरुद्धस्मृतिवदनादरणीयत्वमेव। या तु प्रद्विष्टोक्तिः, 'त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः' इत्येवम्—सा दूषणार्थं द्वेषमूलमुत्थितेति विस्पष्टमिति न तेन कर्तृसिद्धिः। तादृश्या वाचः अस्मदुपपाद्यमानार्थविषये अस्मान् अन्यान् वा सहृदयान् वियोक्तुं सामर्थ्यं सर्वथैव नास्ति। ये तु महाजनाः वेदार्थविदः श्रद्धेयाः, तैर्मन्वादिभिरन्यथैव नित्यत्वेनैवोच्यमानतया मात्रामात्रापरित्यागेन सश्रद्धाध्यायिसर्वमहाजनवचनविरोधात् विरोधिनां निमीलिताक्षाणां वादाः न निपुणगोष्ठीनिवेशमर्हन्ति। प्रत्युत विहतिं भजते। वृथाशंकने च सर्वत्रैव शंका स्यात्। ईदृशवृथाशंका तु वादिनां स्वस्वजन्मविषयेऽपि कर्तुं शक्यते, के तेषां पितरः इति। मातृविषयेऽपि संशयस्यावकाशे दृश्यमाने, पितृविषये को निर्णयः। तस्मात् पारम्परिकव्यवहारान्यथा-

करणेन नवनवदूषणोल्लेखनमयुक्तम् । नूनं सहृदयविसंवादी वाद एव तैः क्रियत इति ॥ १६७ ॥

168. अन्या मन्वन्तरेषु श्रुतिरिति च वचः कालयोगप्रवाहात्
जप्यश्रुत्यादिनीत्या न कथमितरथा द्रव्यपूर्वेण भेदः ।
दिष्टा यत्रानधीते मुनिभिरनघता तत्र तत्कर्तृतोक्ता
प्रोक्तं ब्रह्म स्वयंभ्वित्यपि जनिविलयाभावमत्र स्मरन्ति ॥

स. ननु "प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते" इति वचनात् मन्वन्तरभेदेन वेदभेद इत्यवगमात् तदा तदा वेदः कृत इत्यवगम्यत इत्यत्राह अन्येति । इदं वचः **कालयोगप्रवाहात्** । अनन्तेषु वेदेषु सर्वदैव सत्सु तत्तद्देशकालानुकूलवेदभागस्य तदातदा प्रचारविधानात् तस्य च पूर्वमन्वन्तरवेदभागादन्यतया तथा वचनोपपत्तिः । अन्यानधीतान् अयातयामान् वेदान् याज्ञवल्क्य आदित्यादध्यगीष्टेति च स्मर्यते, धर्माश्च देशकालभेदेन भिन्ना भवन्ति, 'अन्ये कृतयुगे धर्माः त्रेतायाञ्चापरे तथा । अन्ये च द्वापरे धर्मास्तथाचान्ये कलौ युगे' इति । तथा तत्तन्मन्वन्तरे सात्त्विकराजसतामसाधिकारिभेदात् तादृशप्रवर्तकपुरुषभेदाच्च धर्मा वेदोक्ता एव भिद्यन्ते । 'कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे' इति स्मरणात् युगान्तरे अन्ययुगधर्मप्रवृत्तपुरुषलाभेऽपि प्रायो भेद एव । अतो वेदे नित्ये तदा तदा प्रचार्यमाणो भागो विभिन्नो भवतीति तदाशयः । **जप्यश्रुत्यादिनीत्येति** । यथा पृथग्वा यज्ञमध्ये वा जपार्थमुपयुज्यमानाः मन्त्रभागाः तत्कर्मवत् नित्यत्वात् सर्वदैव सद्भावमर्हन्ति । अन्यथा

अङ्गभूतमन्त्रहान्या कर्मलोपापत्तेः । तथा ब्राह्मणभागा अपि यथाप्रमाणं नित्या इत्येव युक्तम् । अर्धजरतीयस्यानुचितत्वात् । इतरथा सोमयागादीनां सोमक्रतादिद्रव्यादिसाध्यानां द्रव्यादिविषयेऽपि भेदो न कथम् । यथा द्रव्यादिकं सर्वस्मिन्नपि काले तदेवेति न द्रव्यपूर्वेण-द्रव्यादिना भवन् भेदो नास्ति कर्मणि, तथा मन्त्रादिनापीति मन्तव्यम् । तर्हि मुनिभिरुपदिष्टं सर्वं नित्यवेद एवास्तु ; कृतं स्मृतिविभागेनेति चेन्न — यस्मिन् ग्रन्थे अनधीते गुरुमुखोच्चारणानूच्चारणाविषये, अंशतोऽप्यपरित्यज्य कर्तव्यमध्ययनं विना गृहीते सति अनघता दिष्टा-दोषो नास्तीति स्वीकृतम्, तत्र स्मृतीतिहासादौ तेषां कर्तृत्वमुक्तम् । वेदवत् तेषामानुपूर्व्येणानूच्चारणं कृत्वैव ग्राह्यत्वं नास्तीति भावः । तथाविधग्रन्थारम्भैरेव स्मृतित्वेन अवेदत्वेनोक्ता इति न वेदावेदविभागभङ्गः । स्मृतिकारैर्वेदनित्यत्वं वदद्भिर्यदि वेदं प्रमाणमपुरस्कृत्य तदुक्तं स्यात्-तदा तदनित्यताप्रतिपादकवेदविरोधात् वेदविरुद्धस्मृत्यन्तरवत् अश्रद्धेयता स्यादपि । वस्तुतो वेदानित्यत्ववादिवेदवाक्याभावस्योक्ततया न विरोधप्रसक्तिरित्यन्यदेतत् । ते तु "तासां स्वयम्भु अभ्यानर्षत्" इत्येवं बहूनि प्रमाणानि उपन्यस्यैव अत्र वेदे जनिविलययोरभावं स्मरन्तीति न तत्राप्रामाण्यशंकावकाशः ॥ १६८ ॥

169. कल्पादावेवमीशः कथयति निगमान् पूर्वयैवाऽऽनुपूर्व्या
तद्वन्मन्वन्तरादिष्वपि शिथिलसमाधानमात्रे क्रमैः स्यात् ।
नित्यश्रुत्यैव बाधादुपजनिविलयौ नानुमानैः प्रसाध्यौ
मीमांसाप्राच्यपादप्रसृतिरविहता देशिकैर्दर्शितेयम् ॥

स. कैमुतिकन्यायेन मन्वन्तरभेदेन वेदोत्पत्त्यभावमुपपादयन् अधिकरणोपसंहारेण सह पादोपसंहारमपि घटयति कल्पेति। प्रलयानन्तरं पुनः सृष्टिरिति पक्षं परित्यज्य सर्वदैव पृथिव्यादिभूतपञ्चकात्मकं जगत् अप्रलीनमेवास्तीति वदन्तो मीमांसकाः वेदाध्ययनं सर्वं गुर्वध्ययनपूर्वकमेवेति प्राथमिकाध्ययनं कदापि नेति वेदनित्यत्वं प्रतिष्ठापयन्ति। सृष्टिप्रलयश्रुतिवचानविरोधात् तथा वेदान्तिभिर्नेष्यते। देवताविग्रहाद्यपलापवत् सृष्टिप्रलयापलापस्तेषां नाद्रियते। एवञ्च कल्पादौ सृष्ट्यारम्भे वेदस्योपदेष्टा केनचित् भाव्यम्। स च पूर्वकल्पस्थितवेदानुभावी कश्चिदिति, तदा सर्वेश्वरातिरिक्तस्य तथाविधस्य दुर्वचतया स एवोपदेष्टा। तत्रैतत् स्यात्—ईश्वरस्य वेदनिर्माणे कः प्रयासोऽस्ति, किमिति पूर्वानुपूर्व्यैव वक्तव्यमिति निर्बन्धं स्वीकरिष्यति। तस्मादन्योऽपि वेदः तत्प्रणीतः स्यादिति-तन्न युक्तम्। पूर्ववेदज्ञानमीश्वरस्य तदानीमस्ति, न वा। न चेत् असार्वज्ञ्यादनीश्वरः स्यात्। आद्ये, अनुभवगतं परित्यज्य किमित्यन्यं निर्मास्यति, अन्यनिर्माणे च पूर्वपुण्यपाप, पश्चात्तनपुण्यपापवैलक्षण्यात् कर्मलोपादिशंकावकाशाच्च शासनस्थैर्यभंगः स्यादिति. स्वस्य स्थिरैकरूपशासनकर्तृत्वं द्रढयितुं प्राचीनमेवोपदिशतीति युक्तम्। कल्पारम्भ एवैवं वस्तुस्थितिश्चेत्—मन्वन्तरे कथमन्यथा भावः। तथा च मन्वन्तरे मन्वन्तरे श्रुतिरन्या विधीयत इत्यस्यायमर्थः—एकैकमन्वन्तरेऽपि मनुकार्यपरिपालनकाल इव तत्संतानगतानां राज्ञां कालेषु वेदधर्मपरिस्थितिरेकरूपा न भवतीति क्षीणतैव। तदा च तत्तदधि-

कारानुरोधेन वेदेषु प्रायः भागाः अनुष्ठेयेष्वादर्तव्या भागाश्चान्ये भवन्ति । न प्रारम्भकालस्थिता एव । एवं गते तस्मिन् मन्वन्तरे मन्वन्तरारम्भे क्षीणदशाकालिकप्रचारभाग्वेदभागभिन्नः मुख्यानुष्ठेयोत्तमधर्मप्रतिपादको भागः प्रचारं प्राप्यत इति । अतः शिथिलसमाधानमात्रं देशकालभेदानुसारिव्यवस्थादर्शिशास्त्रदर्शितैः कर्मैः क्रियत इति ॥ अतः वेदनित्यत्वविषयकश्रुत्यैवानित्यत्वबाधात् अनुमानानि आभासभूतानीति सिद्धमेतदधिकरणसाध्यं वेदनित्यत्वम् । सिद्धञ्च वेदप्रमाण्यं धर्मस्य वेदप्रमाणकत्वञ्चेति धर्मे वेद एव प्रमाणम् , वेदः प्रमाणमेवेति । इयं मीमांसाप्रथमपादव्याख्यानसरणिः प्राच्यरीत्यनुसारिश्रीनाथ-यामुन-यतिवरादिप्राच्यदेशिकैर्दर्शिताऽस्माभिः प्राचीनव्याख्यानादत्र स्थितं वैशिष्ट्यं व्युत्पाद्य सेश्वरमीमांसायां विस्तरेणोक्ता साम्प्रतं समग्राहीत्यर्थः ॥ १६९ ॥

170. अन्यैरप्यर्थवादप्रभृतिषु निहितैरादिमाध्यायभेदै-
र्मानं तत्तत्प्रवृत्त्या निगममिह मुनिः स्थापयामास साध्व्या ।
इत्थं प्रामाण्यसिद्धिं व्यवहरणदशाभाविनीं भावयन्तः
स्वाभीष्टस्थापकानामपि खलु वचसां मूलघातं सृजन्ति ॥

स. प्रथमाध्यायप्रथमपादस्य प्रत्यधिकरणविवक्षितार्थ एवं विस्तरेणादर्शि । अथ ग्रन्थमुपसंजिहीर्षुः अत्र त्रिपाद्यर्थं संगृह्णन् अद्वैतिगतिमस्यति अन्यैरित्यादिना । आदिमाध्यायस्यावान्तरभेदैः अन्यैः प्रथमपादव्यतिरिक्तैः त्रिभिः पादैः अर्थवादप्रभृतिषु निहितैः अर्थवादमन्त्रस्मृत्याचार-नामधेय वाक्यशेषसामर्थ्यरूपेषु सप्तसु प्रमाणेषु निहितैः—

तन्निरूपणप्रवृत्तैः साध्व्या समीचीनया तत्तत्प्रवृत्त्या, अर्थवादस्य स्तावकत्वं मन्त्राणामनुष्ठेयार्थप्रकाशकत्वं स्मृतीनां श्रुतिद्वारा विधायकत्वम् यागादिनामधेयस्य संकल्पाद्युपयोगित्वं वाक्यशेषस्य संदिग्धार्थनिर्णायकत्वं सामर्थ्यस्य विशेषाङ्गत्वसमर्थकत्वमित्यादिगतिप्रदर्शनेन पूर्णं वेदं प्रथमपादनिर्णीतविधिवाक्यमिव प्रमाणत्वेन सूत्रैर्जैमिनिः स्थापयामास। इदञ्च प्रामाण्यनिरूपणम्, "अनावृत्तिश्शब्दात्" इति शारीरकान्तिमसूत्र पर्यन्तपूर्णशास्त्रोपजीव्यम्। एवं निरूपितं प्रामाण्यमद्वैतिनो व्यावहारिकमिति अपारमार्थिकमिति वदन्ति। वेदवाक्यानां वास्तवप्रामाण्याभाव एव बौद्धैरप्युच्यते। कर्मकाण्डस्येव ब्रह्मकाण्डान्तर्गतानां तत्त्वमसि, अयमात्मा ब्रह्म, नेह नानास्ति इत्यादीनां स्वाभीष्टार्थस्थापकानामपि मिथ्याभूतमेव प्रामाण्यं भवतीति तन्मूलमद्वैतं न सिद्ध्येत्। न च तर्कात् सिद्धिः। तस्यापि हि व्यावहारिकमेव प्रामाण्यम्। तर्काप्रतिष्ठानञ्च सूत्रितं तेषामपीष्टम्। तस्मात् अद्वैतवचसामपि प्रामाण्यं व्यावहारिकमेव वदन्तः स्वसिद्धान्तमूलघातमेव कुर्वन्ति। ब्रह्म वा अद्वितीयत्वं वा तैर्येन प्रमाणेन साध्यते, तस्य प्रमाणस्य वस्तुतः सद्भावाभावात् तन्मूलप्रमेयसिद्धिरपि नास्त्येव॥ व्यवहारदशायामतीतायामेव प्रामाण्याभावः; इदानीं प्रामाण्यमस्तीति चेत्—यद्धि कदाचिदस्ति कदाचिन्नास्ति तन्न मिथ्या, अपितु अनित्यमेव। जगन्मिथ्यात्ववादिना च प्रामाण्यस्यापि मिथ्यात्वमेव वक्तव्यम्। तत् कथं तस्य कदाचित् सत्त्वम्। किञ्च व्यवहारदशायां प्रामाण्यं द्वैतवाक्यानामप्यविशिष्टम्।

यावद्व्यवहारं द्वैतवाक्यानि सन्त्येवेति तत्प्रभृत्यनेकप्रमाणबाधितत्वात् अद्वैतप्रमाणमद्वैतरूपार्थं विहाय यूपादित्याद्वैतवाक्यवत् अर्थान्तरपरतयैव व्यावहारिकं प्रामाण्यं लभेत । एवञ्च सार्वदिकमेव सर्वस्य प्रामाण्यमित्यलम् ॥ १७० ॥

171. ग्राह्यं सर्वत्र मानं परभजनविधौ भेदतादात्म्यचर्चा
तत्रैवाङ्गप्रयुक्ती परिकरघटने मार्गभेदक्रमाप्तिः ।
कर्ता वैराग्यपादप्रभृतिषु विविधावस्थितिः स्थापनीयः
शेषं चाशेषमीदृग्विलग(स?)ति बहुषु ब्रह्मकाण्डस्थलेषु ॥

स. एतदध्यापितस्य मानभावस्य शारीरकोपजीव्यत्वं यथा, तथा द्वितीयाद्यध्यायप्रतिपादितार्थानामपि शारीरकोपजीव्यत्वमस्तीत्याह ग्राह्यमिति। मानं प्रथमाध्यायोक्तं सर्वत्र ग्राह्यम् । एकैकाधिकरणेऽपि वेदवाक्यं विषयमुपादाय युक्तिरूपं मानं सहकारीकृत्यार्थविचारात् । तृतीयाध्याये तृतीयपादे परमात्मविषयकभजनविधयो निरूप्यन्ते । तत्र विद्यासु गुणोपसंहारतदभावनिर्धारणार्थं भेदाभेदचिन्ता भवति । तत्रैतत्काण्डद्वितीयाध्यायोक्तानां शब्दान्तरादीनां भेदकप्रमाणानामुपजीवनमावश्यकम्। तत्रैवोपासनेषु एतत्तृतीयाध्यायोक्तः अङ्गाङ्गिविचारोऽपि भवति । गतिचिन्तनं सर्वविद्याङ्गम् । वैश्वानरविद्यायां प्राणाग्निहोत्रादौ वैश्वानराराधनत्वादिचिन्तेति तत्रतत्राङ्गविचारोऽपि । यद्भक्तं प्रथममागच्छेत्....तां जुहुयादित्यादौ तत्र होम्यद्रव्यालाभे आहुतिलोपादङ्गलोपो भवेदिति उपासनस्य होम्यद्रव्यप्रयोजकत्वमस्ति न वेति

विचारे **प्रयुक्तिः** प्रयोज्यप्रयोजकभावः एतच्चतुर्थाध्यायोक्तः संबध्यते । एवञ्च **परिकरघटने** उपासनाङ्गयोजनविषये अङ्गत्वं प्रयुक्तिश्च । एवं गतिचिन्तनरूप**परिकरघटने** मार्गघटकानामर्चिरहश्शुक्लपक्षादीनां मध्ये कतमस्य पूर्वत्वं कतमस्य परत्वमिति विचारात् पौर्वापर्यरूपः प्रकृत-पञ्चमाध्यायोक्तः क्रमोऽप्युपजीव्यते । तृतीयप्रथमपादे धूमादिमार्गेण नाकं गन्तॄणां नरकं गच्छताञ्च कर्तॄणां विचारः, पश्चात्तु भक्तानां कर्तॄणा-मपि । अतः षष्ठोऽप्यध्याय उपजीव्यः । **शेषश्चाशेषमीदृक् विल-ग(स)ति**—सप्तमाध्यायप्रभृतिके अतिदेशषट्के उक्तार्थानामुपजीवनमपि यथायथं प्रतीयते ; अक्षिविद्यायाम्, 'तस्यैतस्य तदेव रूपम्, यदमुष्य रूपम्' इति आदित्यविद्योपास्यगतरूपातिदेशात्, तत्र मन्त्रजपादौ प्रसक्ते आदित्यमण्डलस्थाने अक्षिस्थानस्योहनीयत्वात्, द्युलोके स्थित्वो-पासकानामर्चिरादिमार्गे अग्न्यादिचिन्तनबाधात्, उपासनार्थानुष्ठितकर्म-भिरेव नित्यकर्मणां तन्त्रप्रसंगसिद्धेर्वक्तव्यत्वाच्चेत्यादि भाव्यम् ॥१७१॥

172. **श्रीमद्रामानुजोक्तां स्मृ(सृ?)तिमनुसरतामैकशास्त्र्यादिसिद्धेः**
**अव्याजोपायविद्यापथिकगतिविधौ न्यासि दिङ्मात्रमेतत् ।**
**शेषं चाशेषमित्थं शितमतिभिरनुप्रेक्ष्य संरक्षितव्यं**
**क्षुद्रक्षोभार्हतर्कोदितकुहककथावर्णिदुर्नाटकेभ्यः ॥**

**स.** ननु विंशतिलक्षणमेकं शास्त्रमित्यनंगीकारात् कथमेव-मुपजीवनमुच्यत इति शंकायाम्, शास्त्रभेदेऽपि एकोक्तोपजीवन-मन्यस्य युक्तम्, व्याकरणाद्यङ्गानां तत्रतत्र मिथ उपजीवनात् । 'प्रदीपः

सर्वविद्यानाम्' इति न्यायशास्त्रस्य सर्वोपजीव्यत्वात्। वस्तुतः शास्त्रमेकमेवेति व्याससूत्राण्येव गमयन्ति, वृत्तिकारैश्च स्थापितम्। स्मृतिरियमनुसृता श्रीभगवद्रामानुजपादैः प्राचीनसरणिप्रियैः। अतो बाह्यकुदृष्टिशास्त्रेषु क्षुद्रव्याजान्तरेणेव केनचित् व्याजेन विना उपायभूतवेदविद्यायां ये पथिकाः कर्मब्रह्मोभयज्ञानेन फलस्योभयापेक्षत्वमवधार्य कर्मभागमारभ्य मार्गे चरन्तः, तेषां गतिविधानार्थं दिङ्मात्रमेवमदर्शि। उपरितनभागेष्वपि कुतर्कपुरस्कारेणाप्रामाणिकार्थप्रतिपादकानां ये वादाः नाटकवदापातमनोहराः, तेभ्यो रक्षणं सूक्ष्ममतिभिः कार्यम्। दुर्नाटकदर्शनमयुक्तमिति हि निर्विवादमिति ॥ १७२ ॥

173. संक्षिप्तं विस्तृतं वा सरसबहुमतं सावधानप्रियं वा
प्राधान्येन प्रणीतं परफणितिपरिष्कारवृत्त्या स्थितं वा।
शिक्षासौकर्यतुष्टिप्रचितगुरुजनानुग्रहेद्धं सुधीभिः
श्रद्धेयं नाथजुष्टश्रुतियुवतिशिरोभूषणं भाषणं नः ॥

स. संक्षिप्तमिति श्लोकः तत्त्वमुक्ताकलापे संकल्पसूर्योदये च ॥

174 तत्तत्प्रत्यर्थिवर्गप्रचकितनिगमस्तोमतत्त्वार्थचिन्ता-
विष्वग्वैघटचघट्टोन्मथनपटुधिया वेङ्कटेशेन क्लृप्ता।
अक्षोद्या तर्कलोष्टैरतिमहति पदेऽप्यत्यजन्ती स्वसीमां
मीमांसापादुकेयं मितिपथगतिकृन्मृद्नती कण्टकौघम् ॥

स. मीमांसापादुकेति पादुकाशब्दार्थं दर्शयति तत्तदिति। प्रचकितत्वं निगमानां युक्तम् 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद् वेदो मामयं प्रतरिष्यति' इत्युक्तेः। तदर्थचिन्तासु तत्र-

तत्र विरोधोद्भावने क्रियमाणे सर्वविरोधपरिहारः पटुज्ञानसंपदा येन बहुग्रन्थनिर्माणेन वादप्रवर्तनेन शिष्यवृन्दशिक्षणेन च कृतः, तेन कवि-तार्किकसिंहेन सर्वतन्त्रस्वतन्त्रेण वेदान्ताचार्येण विरचितेयं पादुका। सर्वेषां कुतर्काणां पादुकासविधे लोष्टप्रायत्वात् अनया तेषां मर्दनमेव। यथा पादुकाधारके पादे महति सति पादुकापि तदनुरोधेन स्वाकारं भजते, तथा पादुकेयं निरूपणीयानामर्थानामाधिक्ये प्राप्तेऽपि साक्षात् अर्थान्तरेण वा व्यङ्ग्यमर्यादया वा तदर्थापेक्षितानप्यर्थान् प्रकाशयेत्। केषाञ्चिदेव परोक्तानामर्थानां खण्डनेऽपि, प्रामाणिकार्थानां केषाञ्चिदेव साक्षा-दुक्तत्वेऽपि खण्ड्यार्थान्तरसूचनं ग्राह्यार्थान्तरग्रहणमपि कृतमेवात्रेति मन्तव्यम्। किञ्चेयं **मितिपथे** प्रमेये वास्तवे **गतिकृत्** ज्ञानोत्पादिका; यथा पादुका मित्या स्थलमानेन पथि गतिं जनयति। कण्टकभूयिष्ठेऽपि प्रदेशे निर्भयं गन्तुं शक्यम्, यदि पादुका स्यात्। तथैतद्ग्रन्थधारणे सति सर्वविमतनिरसनं सुकरम्। अत इयं सत्पथसंचारमूलं सर्वेष्टसाधिकेति॥

175. **विख्यातो वेदघण्टापथ इति वितर्तिं प्रस्तुतां प्रस्तुतार्थाम्**
**उत्पद्यन्तां पृथिव्यामुपनिषदगदङ्कारवाचः प्रवाचः।**
**मिथ्यादृष्टिप्रवाहोदितकुमतिकथाकन्दलीकन्दलीनां**
**दृष्ट्वैवालीकलिप्सादृढनिहितमतिं दैत्यरोधी रुणद्धि(द्धु)॥**

**स०** सत्समृद्धिमाशास्ते **विख्यात** इति। **वेदघण्टापथः** मीमांसाशास्त्रम् **इति** उक्तप्रकारेण उक्तरीत्या शेषपूरणेन अत्र प्रस्तु-तार्थानुरोधिनीं **वितर्तिं** विस्तारं **प्रस्तुताम्** आरभताम्। उपनिषदा-मूषरप्रायत्ववादिनां सगुणब्रह्मप्रतिपादकोपनिषद्भागानां गदोत्पाद-

कानाञ्च सरणिं निरस्योपनिषदामारोग्यसंपादिकाः वाचो येषां ते प्रकृष्टवाचः पृथिव्याम् इतःपश्चादप्युत्पद्यन्ताम् । पूर्वपूर्वभ्रान्तपुरुष-संश्रयणप्रवाहपतनात् कुमतीनामेवाभिवृद्ध्या मीमांसाशास्त्रे पूर्वभाग-उत्तरभागश्चान्यथैवासीत् । तेषां सर्वेषां कथाः वादाः क्षुद्रकन्दल्यः । तासां कन्देषु सारो नास्ति । तन्मूलस्यायथावस्थितत्वात् । तत्र कन्देषु प्रायो मतिर्लीना भवति । कस्मात् । प्रायो जनानामतत्त्वार्थेषु विद्यमाना रुचिस्तत्त्वार्थे न भवति । पापमेवात्र कारणम् । प्रकृतिरेवम् । तस्मादली-कलिप्सया बलवत्या ये जनाः तत्र विपरीते निहिता भवन्ति, तेषां मतिस्तेषु कन्देषु लीना भवतीत्यत्र कः सन्देहः । आसुरसर्गनिविष्टाना-मियं मतिरसुरसंहारिणा देवदेवेनैव रोधनीया । तदनुग्रहः प्रजानां मतिं ततो निवर्त्य यथावस्थितार्थभूषितां करोत्विति भावः । कन्दली-कन्दानामसारत्वञ्च संकल्पसूर्योदय एव दर्शितम्, (8-58) "भोगेषु यौवतानां योगेषु लभेत सारमर्थानाम् । कन्देषु कन्दलीनां स्तम्बेषु च क इव राजरम्भाणाम्" इति ॥ १७५ ॥

176. शाक्योलूक्याक्षपादक्षपणककपिलामर्त्यवन्द्यप्रधानैः
अन्यैराम्नायचर्चाकवचधृतिकनद्गोमुखद्वीपिभिश्च ।
बंहीयः क्षोभिताऽपि श्रुतिरिह बहुधा जायमानेन गोप्त्रा
कालेकालेऽभिगुप्ता कलहमतितरन्त्यक्षता रक्षतान्नः ॥

इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र श्रीमद्वेंकटनाथ-
श्रीमद्वेदान्ताचार्यविरचिता मीमांसापादुका

शुभमस्तु ॥

स. बाह्यकुदृष्टिक्षोभपरिहारेण श्रुतिरक्षणं 'परित्राणाय साधूनाम्' इति संकल्पितवता भगवतैव कर्तव्यमिति तदेवाऽऽशास्ते शाक्येति । श्लोकोऽयं संकल्पसूर्योदये (2-36)ऽपि । औलूक्यः उलूकरूपधरमहेश्वरोपदिष्टार्थग्राही कणादः । अक्षपादः गौतमः । उभौ तर्कप्रवर्तकौ । अमर्त्यवन्द्यः बृहस्पतिः चार्वाकमतप्रवर्तकः । हिरण्यगर्भश्चेत्, योगशास्त्रप्रवर्तकः । आम्नायचर्चामेव कुर्मः, न तु केवलतर्केणार्थं साधयाम इति तच्चर्चारूपकवचधृत्या कुनन्तः वैदिकवत् भासमानाः गोमुखव्याघ्राः ; कुदृष्टय इति यावत् । बंहीयः अतिबहुलम् । बहुधा जायमानेन । "अजायमानो बहुधा विजायते" इति श्रुतिप्रसिद्धावतारेण गोप्त्रा विश्वगोप्त्रा भगवता तदातदा साक्षात् अन्यमुखेन चाभिगुप्ता सती श्रुतिरक्षता भूत्वा अस्मान् रक्षतु ॥ १७६ ॥

अर्वाग्व्याख्यासु दोषाः सरणिरपि निजा दर्शिता भाष्यकारैः
व्यासार्यार्यार्थपादैर्वरदगुरुवरैर्विस्तरोऽत्र व्यधायि ।
व्याख्यातं तन्त्रमेभिर्निखिलमपि ततः सर्वतन्त्रस्वतन्त्रैः
विद्याश्रद्धाविहीने क इह बत भवेन्नष्टसंधानसक्तः ॥

विख्याताद्भुतधीविरक्तिचरितश्रीरङ्गरामानुज-
प्रेमोदञ्चितपूर्णवीक्षणपदं चित्तश्च कृत्वा कृतीः ।
श्रीमद्देशिकसूनुनिर्मितपरित्राणानुसारी व्यधात्
श्रीवत्सान्वयवीरराघवकृती श्रीपादुकाव्याकृतिम् ॥

हयमुखदेवतेयमपरेति जगत्प्रथितः
प्रतिमतमर्दनप्रगुणबोधविधानपरः ।
लसदुपदेशमुद्रकरपद्म इमां मुदितः
कृतिमयमभ्युपैतु कृपया निगमान्तगुरुः ॥

इति अभिनवदेशिक-वात्स्यसच्चक्रवर्ति वीरराघवाचार्यकृतिषु

मीमांसापादुकाव्याख्या
सत्पथसञ्चारसमाख्या संपूर्णा

श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः

श्रीरस्तु—शुभमस्तु ॥



श्रीः

# मीमांसामेयसंग्रहः

प्रणिपत्य हयग्रीवं पूर्वाचार्यान् गुरूनपि ।
मीमांसाशास्त्रमेयार्थसंग्रहः क्रियतेऽधुना ॥

मानं भेदः शेषभावः प्रयुक्तिः कर्त्राकारोऽथातिदेशः समस्तः ।
तत्रैकान्तर्भेद ऊहश्च बाधस्तन्त्रादित्यस्थानि तन्त्रं प्रसङ्गः ॥

व्यासबोधायनादिमहर्षिवचनविस्पष्टावगतं पश्चात्तनशबरकुमारिल-शंकरादिग्रन्थतोऽप्यवगम्यमानं श्रीभाष्यकार-श्रीवरदगुरु—श्रीनिगमान्तगुरु-प्रभृतिपरमाचार्यप्रतिष्ठापितं पूर्वोत्तरमीमांसयोरैकशास्त्र्यमिति निरूप्य, जैमिनिसूत्राणामर्थवर्णनं तद्गुरुबादरायणाशयाविरोधेना सेश्वरमीमांसादौ दर्शितमपि प्रदर्श्य, विशिष्य आकृत्यधिकरण—अपूर्वाधिकरण—देवताधि-करणादिगतानां सूत्राणामर्थवर्णनप्रणाली व्युत्पादिताऽस्माभिरुपयुक्त मीमांसायाम् । अपौनरुक्त्याय तमंशं परित्यज्य मीमांसार्थसंग्रहमात्रं क्रियते, "कालक्षेपाक्षमत्वात् कतिचन कृतिनः शीघ्रमन्ते रमन्ते" (अ.सा) इत्युक्तरीत्या पूर्वमीमांसामनधीत्य शारीरकमात्राध्यायिनामपि पूर्व-भागार्थगतिव्युत्पत्तिसंपत्तये । चतुर्दशविद्यास्थानविशदज्ञानसंपादनैदम्पर्ये कालक्रमेण क्षीणेऽपि पदवाक्यप्रमाणानां त्रयाणां शास्त्राणामध्ययनं परं वेदान्तशास्त्रोपयोगितया प्राच्यैः कृतमासीत् ।

तत्र पदशास्त्रं व्याकरणम् । संस्कृतशब्दानामनादीनां साधूनां तदपभ्रंशादीनामसाधूनाञ्च विवेचनाय प्रवृत्तमेतत् । प्रमाणशास्त्रं गौतमीयं न्यायदर्शनं न्यायविस्तर इति आन्विक्षिकीति च प्रसिद्धम् । मानाधीना

मेयसिद्धिरिति न्यायात् मेयनिर्णयार्थं मानस्यापेक्षितत्वात्, तन्मानमेव कतिविधम्, कथं तस्य मानत्वमिति शोधने प्रवृत्य प्रत्यक्षमनुमानं शब्द इति त्रयं प्राधान्येन तत्र विचारितम्। अधिकं प्राधान्यमनुमान-निरूपणस्य तत्राऽऽहतं बाह्यतर्कप्रतिक्षेपदृष्ट्या। अत एव तस्य न्याय-दर्शनमिति नाम। न्यायस्वरूपं तदवयवाः तेषामनुमाने उपयोगः अनुमानापेक्षितव्याप्तिस्वरूपं तदुपजीव्यतर्कस्वरूपं तदभावेऽनुमाना-भासत्वपरदूषणप्रक्रिया च विशोध्यते तत्र। तत्प्रदर्शितं पन्थानमाहत्य केन प्रमाणेन को विषयः साधयितुं शक्यते इति विवेचनेन प्रमेयनिर्णयः कर्तव्यो भवति। बाह्यमतनिरसनदृष्ट्या वेदप्रामाण्यमपि तत्र स्थापितमेव।

अथ वाक्यनामकं शास्त्रमधिक्रियते। तदिदं मीमांसाशास्त्रमेव। तत्र वेदवाक्यानामर्थविचारः क्रियते। न्यायदर्शनदर्शितरीत्या न्यायतदाभास निर्णयशालिनः अत्र वेदाद्यन्तर्गत तत्तद्वाक्यस्यार्थविमर्शे प्रवृत्ताः अर्थसंदेहे एककोटिसाधकन्यायानामाभासत्वम् अन्यकोटिसाधकानामनाभासत्वञ्च निर्धार्य समीचीनैर्न्यायैरधिकरणार्थं स्थापयन्ति। तथाच न्यायस्वरूपशिक्षणं न्यायशास्त्रात्। वेदार्थविचारे तदुपयोजनप्रणाली मीमांसाशास्त्रावगम्या। एकैकाधिकरणेऽपि सदसन्न्यायस्वरूपविवेचनस्यात्र सुबहु क्रियमाणतया मीमांसापादुकायाम् (श्लो. 18, 19, 20) उक्तरीत्या अधिकरण-पदस्याङ्गपञ्चकादियुतस्य न्यायार्थकतया च मीमांसाग्रन्था अपि बहवः तर्कग्रन्था इव न्यायशब्दघटितेनैव नाम्ना व्यवह्रियन्ते, न्यायरत्नाकरः, न्यायरत्नमाला, न्यायमाला, न्यायसुधेत्येवम्। एवं न्यायोपयोगादेव वेदान्तशास्त्रग्रन्था अपि बहवो न्यायपदघटनेन लब्धनामानः सन्ति।

एवं न्यायरूपाधिकरणसमुदायात्मके पूर्णमीमांसाशास्त्रे पूर्वमीमांसायां षोडशाध्यायाः, उत्तरमीमांसायाश्च चत्वारः। कालक्रमेण षोडशाध्याय्यामन्तिमाध्यायचतुष्टयपठनपाठनप्रणाली नष्टा। तस्याः पूर्वविचारितपरिशिष्टरूपतया याज्ञिकानुष्ठानरीत्यैव सुगमतया च तत्राश्रद्धा समजनीव। भामतीकारवाचस्पत्यादिकालेऽपि यथावत् तदलाभ इति, पश्चादप्पय्यदीक्षित-खण्डदेवादिकाले तत्रत्याधिकरणानामर्थसंग्रहः कतिपयसूत्राणि च दृष्टान्यासन्निति, अद्यापि सर्वेषां सूत्राणामलाभ एवेति चान्यच्च निरूपितमस्माभिरपि परमार्थभूषणे। मीमांसापादुकायामप्युक्तम्, "मध्यः काण्डश्च लुप्तस्थितिः" इति। शबरकुमारिलादिप्राचीनमीमांसकग्रन्था अपि द्वादशाध्यायीविश्रान्ताः। अध्यायस्यैव लक्षणपदार्थतया पूर्वमीमांसा ततःप्रभृति द्वादशलक्षणीति व्यवहारमलभत। वृत्तिकृतो हि "जैमिनीयेन षोडशलक्षणेन" इत्याहुः। द्वादशलक्षणीवत् षोडशाध्याय्यां शिष्टा चतुर्लक्षण्यपि कर्मकाण्डार्थविचाररूपैव। तस्य संकर्षकाण्ड इति देवताकाण्ड इति च प्रसिद्धिः। देवतास्वरूप-तद्भेद-तदुपासनतत्फलविचाररूपत्वात् देवताकाण्ड इत्युच्यत इति केचित्। लुप्तस्यापि मध्यकाण्डस्य पूर्णलोपाभावात् उपलभ्यमानानां सूत्राणां तदर्थपरग्रन्थानाञ्च दर्शने तथा देवतानिरूपणानवगतेः तादृशो देवताकाण्डो न जैमिनिकृतः, एतत्कृतस्तु कर्मभागविषयक एवेति परिशीलयन्ति। परिमलग्रन्थेऽपि कल्पतरुकृतस्य देवताकाण्ड इति व्यवहारस्य कथञ्चिदेव निर्वाहे प्रयत्नः कृतः देवतानिरूपणेदम्पर्यं जैमिनीयायां तच्चतुरध्याय्यां नास्तीति निरूप्य। तदधुना द्वादशाध्यायीप्रचार एवानुवर्तते। तत्प्रमेयसंग्रह इह क्रियते।

तत्रास्य शास्त्रस्य वाक्यनाम्ना व्यवहारात् वाक्यशब्दार्थः किञ्चिदिहोच्यते—परस्परान्वितार्थप्रतिपादकपदसमूहो वाक्यम्। गौरश्वः पुरुषो हस्तीत्यनन्वितपदसमुदायस्य वाक्यता न भवति। गौर्गच्छति, अश्वो धावतीत्यनयोः प्रत्येकं वाक्यत्वेऽपि एकवाक्यता नास्ति, परस्परमनन्वयात्। साक्षात् परम्परया वा स्वार्थविशेषणीभूतार्थप्रतिपादकयावत्पदविशिष्टं विशेष्यभूतार्थप्रतिपादकं पदमेकवाक्यपदविवक्षितं भवति। इदमेव "अर्थैकत्वादेकं वाक्यं साकांक्षं चेद् विभागे स्यात्" इति (पू.मी. 2.1-46) सूत्रे उक्तम्। देवदत्तः श्यामो युवा लोहिताक्ष इति समुदाय इव, देवदत्तः स्थाल्यामोदनं पचतीत्यत्रापि एकपदार्थस्यैव विशेष्यत्वात् अन्येषां विशेषणत्वात् नानाविशेषणविशिष्टैकार्थप्रतिपादनमस्तीति भवत्येकवाक्यता। एकस्मिन्नर्थेऽन्येषां विशेषणतयाऽन्वयोऽपेक्षित इति ज्ञापनार्थमेव, साकांक्षञ्चेद् विभागे स्यादित्युक्तम्। न च गावो धावन्तीत्यत्र विशेष्यस्यानेकत्वात् कथमेकविशेष्यकत्वमिति वाच्यम्--एकपदोपस्थापितस्यैव विशेष्यत्वमित्येव विवक्षणात्। अर्थानामनेकत्वेऽप्यदोषात्। देवदत्तः शुक्लां गामानयतीत्यत्र क्रियांप्रति देवदत्तस्येव गोरपि शुक्लां प्रत्येतत् प्रति विशेष्यत्वात् कथमेकविशेष्यकत्वमिति न शंक्यम्; एकमुख्यविशेष्यकत्वमिति वक्तव्यत्वात्। गोः शुक्लविशेष्यत्वेऽपि न मुख्यविशेष्यता। तस्या आनयनं प्रति विशेषणत्वात्। तत्र पदेषु बहुषु प्रयुज्यमानेषु कस्य किं विशेषणम्, किं किमवान्तरविशेष्यम्, किं मुख्यविशेष्यमिति विचार्यं भवति। तत्र कारकाणां क्रियायामन्वय इत्यनुभवात् क्रियापदे प्रायः सुबन्तानामन्वय इति ज्ञायते। नीलमुत्पलमानयेत्यत्र नीलकर्मक-

मुत्पलकर्मकमानयनमिति पृथक्पृथगन्वयानुभवाभावात् नीलोत्पलमानयेति समासस्थल इव व्यासस्थलेऽप्यन्वयौचित्यात् द्विः कर्मत्वभानं विहाय नीलत्वविशिष्टोत्पलकर्मकमानयनमित्येवार्थः स्वीकार्यः। तथा च समानाधिकरणपदानां विशिष्टैकार्थपरत्वं सर्वत्र। तत्र विशेष्यं क्रियान्वयीति श्रीभाष्ये अरुणाधिकरणार्थशिक्षणावसरे व्यरूपि। एवं देवदत्त ओदनं भुक्त्वा ग्रामं गच्छतीत्यादौ ओदनस्य भोजनं विशेष्यम्, भोजनस्य गमनं विशेष्यम्, ग्रामस्य च तदेवेत्येवं रीत्या क्रियां प्रति साक्षाद्विशेषणं परम्परया विशेषणश्च विमर्शनीयम्।

तत्रैवं विशेष्यतया प्रतीता क्रियैव मुख्यविशेष्यभूता; देवदत्त इति प्रथमान्तपदार्थस्यापि कर्तृकारकत्वात् इतरकारकवत् तां प्रति विशेषणत्वमेवेति वैयाकरणाः। बोधप्रक्रियाभेदेऽपि उद्देश्यविधेयविवेकः सर्वमताविशिष्टः।

मीमांसकास्तु–एकैकस्मिन् पदेऽपि प्रकृतिप्रत्ययरूपांशद्वयसद्भावात् तत्र किं विशेषणं, किं विशेष्यमिति विचार्यम्। घटमानयेत्यत्र घटेति प्रातिपदिकेन घटः, द्वितीयाविभक्तिरूपप्रत्ययेन च कर्मत्वमुच्यत इति घटः कर्मत्वं प्रति विशेषणम्। अत एव घटकर्मकमानयनमित्युच्यते। इदमेव चोक्तम्, 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत; तयोस्तु प्रत्ययः प्राधान्येन' इति। तथाच घटः कर्मत्वविशेषणम्, कर्मत्वमानयनविशेषणमिति वक्तव्यम्। तत्र आनयेत्यत्रापि धातुप्रत्ययरूपांशद्वयसद्भावात् तत्रापि प्रकृतिप्रत्ययौ इति पूर्वोक्तवाक्यप्रवृत्तौ आनयनं विशेषणं प्रत्ययार्थो विशेष्यमिति वक्तव्यम्। कस्तत्र प्रत्ययार्थ इति चेत्–विधिरिति केचित्। तस्य लिङादिलकारस्थल एव सद्भावात् आनयतीत्येवं लडादिलकारस्थले तदभावात्

सर्वाख्यातसाधारणी भावना कृतिरेव प्रत्ययार्थो मुख्यविशेष्यमिति परे । एवञ्च तत्र भावनायामेव धात्वर्थस्येव कारकाणामप्यन्वयोऽस्तु ; न तु धात्वर्थे । कारकाणां क्रियान्वय इत्यस्य भावनान्वय इत्येवार्थः । न च भावप्रधानमाख्यातमिति वचनान्तरेण भावः धात्वर्थः प्रधानमिति ज्ञायत इति वाच्यम्—भावो भावनेत्येव तदर्थात् । आख्यातं तिङ्विभक्तिः । तदर्थेषु बहुषु भावनायाः कृत्या एव प्राधान्यम् । न त्वन्यस्य विधिकालादेरिति तदर्थः । इयञ्च भावना अर्थभावनेत्युच्यते ; विधिरपि भावनेति व्यवह्रियते । सा शब्दभावना, प्रवृत्त्युत्पादकव्यापारत्वात् भावना, प्रवर्तकत्वस्य वेदवाक्यनिष्ठत्वात् शब्दभावनेति । अथभावनायाः अंशत्रयाकांक्षा भवति—किं भावयेत् केन भावयेत् कथं भावयेदिति । इमा एव साध्याकांक्षा करणाकांक्षा इतिकर्तव्यताकांक्षेत्युच्यन्ते । तत्र स्वर्गादिः फलं साध्यत्वेनान्वेति, यागादिः करणत्वेन, अन्यत् कथमित्याकांक्षयेति सिद्धं भावनाया मुख्यविशेष्यत्वमिति वर्णयन्ति ।

नैयायिकास्तु–प्रत्यक्षानुभवे यस्य येन संबन्धः प्रतीतः, तस्य तेन संबन्धं तथैव ज्ञापयितुमेव वाक्यप्रयोगात् यावत्संभवं तथैव बोधवर्णनं युक्तम् । न हि कारकाणां धात्वर्थान्वयं विना भावनान्वयः परम्परया अनुभवसिद्धः, अपेक्षितो वा । कार्यकारणभावकल्पनालाघवमेव प्रधानतया स्वीकृत्य अप्रतीतान्वयकल्पनं न युज्यते । अतो वैयाकरणसंमतो धात्वर्थान्वयः सर्वस्य युज्यते । तावता तस्यैव मुख्यविशेष्यत्वमिति न सिद्ध्यति । प्रत्यक्षे धर्मस्य प्रकारतायाः धर्मिणो विशेष्यतायाश्चानुभवसिद्धतया धात्वर्थापेक्षया धर्मिणो विशेष्यत्वौचित्यात् । तत्र प्रकृतिप्रत्ययार्थयोर्मध्ये

प्रत्ययार्थप्राधान्यात् आख्यातोपात्ताया भावनायाः धात्वर्थं प्रति विशेष्यत्वात् तादृशभावनाश्रयस्य देवदत्तादेः विशेष्यत्वं युक्तम् । सकलकारकप्रयोक्तुः क्रियाकर्तुः सर्वापेक्षया प्राधान्यमानुभविकम् । पाणिनिसूत्रमपि धात्वर्थ-मुख्यविशेष्यकत्वपरिपन्थि । तदधीते तद्वेदेति सूत्रात् वैयाकरणशब्द-निष्पत्तिः । सूत्रे अधीते इत्यादिपदस्याध्ययनादिधात्वर्थप्राधान्ये वैया-करणपदस्य व्याकरणाध्ययनं तद्वेदनमित्यर्थः स्यात् । न पुरुषपरता । यदा तु अधीते इत्यस्याध्ययनकर्तेति पुरुषप्राधान्यम्, तदैव विवक्षितार्थलाभः । न ह्यत्र 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इत्यादिसूत्र इव योऽधीते इति यच्छब्दोऽस्ति ; येन धात्वर्थमुख्यविशेष्यकत्वेऽपि वैयाकरणपदं पुरुषपरं स्यात् । अपि च पाणिनिः प्रातिपदिकेत्यादिना सूत्रेण प्रथमायाः प्राति-पदिकार्थ एवार्थत्वोक्त्या कर्मकारकादिस्थल इव कर्तृकारकद्वारा प्राति-पदिकार्थस्य क्रियान्वयं नेच्छतीति ज्ञायते । अतो धात्वर्थो भावना-द्वारा प्रथमान्तपदार्थं विशेषणम् । देवदत्तेन पच्यते तण्डुल इति कर्मणि-प्रयोगे तु कर्तृकारकस्य तृतीययोक्ततया देवदत्तस्य क्रियान्वयस्य करणा-दिवदवर्जनीयत्वात् प्रथमान्तार्थस्य कर्मकारकस्यैव प्राधान्यम् । प्रथमाया निरर्थकतया पूर्ववत् विशेष्यत्वसंभवादिति निरूपयन्ति ।

वेदान्तिनामाशयस्त्वेवम्—समानाधिकरणपदानां सर्वविशेषण-विशिष्टविशेष्यपरत्वमुक्तम् । विशेष्याणां कारकद्वारा धात्वर्थान्वय एव । धात्वर्थस्याख्यातार्थेऽन्वय इत्येतदपीष्यते । आख्यातार्थ एव क इति विचार्यम् । भावना कृतिरेवाख्यातार्थ इति न युक्तम् । 'लः कर्मणि च भावे च' इति कर्तृकर्माद्यर्थे लकारानुशासनात् । न चाऽऽकृत्यधिकरण-

न्यायेन कृतिरूपविशेषणपरता । आकृत्यधिकरणस्य धर्मविशिष्टधर्मि-परत्वस्थापनार्थत्वस्यास्माभिरुपपादितत्वेन वैपरीत्यात् । अतः कर्तुः कर्मणो वा लकारार्थस्य विशेष्यत्वम् । यत्तु मीमांसकैराकांक्षालयमुक्तम्— तदपि विचार्यम् । भावयेदित्युक्तौ किं भावयेदिति प्रथमाकांक्षेति सत्यम् । तदर्थः कः । लोके, कुरु इत्युक्तौ किम् इति भवन्ती आकांक्षा न फलविषयिणी, किं तु कर्तव्यांशविषयिणी । इदं कर्तव्यमित्यवसिते पश्चादेव किमर्थमिति फलाकांक्षा जायते । तस्मात् साध्याकांक्षेयं फलविषयिणीति कृत्वा स्वर्गादेः साध्यत्वेनान्वयवर्णनमयुक्तम् । न हि अहं स्वर्गं करोमि, कुर्यामिति कश्चित् प्रतिसंदध्यात् । नहि बीजं वपता पुरुषेण अंकुरं करोमीति व्यवह्रियते इत्युक्तं न्यायकुसुमाञ्जलौ । अतः किमित्याकांक्षा धात्वर्थादिरूपसाध्यविषयिणी । एवं कर्तव्ये निश्चिते तदनन्तरं किमर्थमिति फलबुभुत्सा । ततः केनेति करणाकांक्षा । करणाकांक्षा नाम, किं कृतेः करणमित्येवंरूपा न, किं तु कृतिसाध्यं यत् अवधृतं तत्करणाकांक्षेति मीमांसकैरप्युक्तम् । परं तत् साध्यं न फलम्, किंतु धात्वर्थ इतीदानी-मुपपादितत्वात् तस्य करणं किमित्येवेयमाकांक्षा । तच्च द्रव्यं पुराडाशादि यथायथम् । अथ च कथमित्याकांक्षा ।

यदत्र भावनादेर्विशेष्यत्वत्यागेन लकारार्थस्य धर्मिणो विशेष्य-त्वमुक्तम्, तदत्र सेश्वरमीमांसायामदर्शि (158 पुटे), "स्वर्गकामः साध्ययागादिविशिष्टः इति हि विध्युद्देशार्थः" इति । एतेन स्वर्गस्य भाव्यत्वेनान्वयसंपत्तये स्वर्गकामपदस्य स्वर्गश्चासौ कामश्चेति कर्मधारयं प्रथमायाः द्वितीयार्थञ्च वर्णयन्तो निरस्ताः । अत्र साध्येति पदेन

कृतिसाध्यत्वरूपलिङर्थज्ञापनम् । तदेव विधिः । लडाद्यर्थवर्तमान-त्वादेरिव लिङर्थविधिविषयत्वस्य च धात्वर्थेऽन्वयः, तस्य धात्वर्थस्य कर्त्रादौ लकारार्थे । तदुक्तं श्रीभाष्ये जिज्ञासाधिकरणान्ते, "विधि-वाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेर्वाच्यमित्यध्यवसीयते" इति । प्रेरकपुरुषाशय एव विध्यर्थ इति उदयनाचार्य-श्रीपराशरभट्टपादादीष्ट इति तत्पक्षनिर्वाहोऽपि 'स्वशास-नाववोधि शास्त्रम्' इति भाष्यानुसारेण प्रपञ्चितो न्यायपरिशुद्धौ । अथायमपि पक्षः प्रदर्शितः । शासनाववोधीति पदं शासनस्य शब्द-वाच्यत्वं तथा स्पष्टं नावगमयेत्, यथा प्रकृतभाष्यं कृतिसाध्यतायाः लिङादिवाच्यत्वम् । इष्टसाधनत्वकृतिसाध्यत्वाभिप्रायाक्षेपानुगुण्येन आप्ताभिप्रायस्य वाच्यत्वमित्यनुक्त्वा इष्टसाधनत्वापेक्षया कृतिसाध्यताया एवार्थत्वौचित्यं प्रागुपपादितवद्भिः इह तन्मात्रं शब्दानुशासनसिद्धं वाच्यमिति कथयित्वा तत्र स्वाध्यवसायप्रदर्शनात् भाष्यकृतामत्र नैर्भर्यं प्रतीयत इति एतत्पक्षादरणेनात्र साध्ययागादिविशिष्ट इत्युक्तम् । एवमाकांक्षात्रयं परित्यज्य पूर्वोक्ताकांक्षाचतुष्टयमपि न्यायपरिशुद्धयुक्त-मेव, 'अतः किं केन कथमिति भवत्प्रोक्तवत् किमर्थं किं केन कथमिति आकांक्षाचतुष्टये' इत्यादि । अत्र किं केनेत्याकांक्षाद्वये देवताप्रीणन-यागादिना किमित्याकांक्षापूरणे नामधेयादिना विशेषेण केनेत्या-कांक्षापूरणमित्युक्तमप्यनुसंधेयम् । केनेत्यस्य केन विशेषरूपेणेति तदाऽर्थः । अत एव ज्योतिष्टोमेनेति तृतीया । कीदृशं होममित्याकांक्षाया अपि संभवात् अग्निहोत्रं जुहोतीति द्वितीया । कथमित्याकांक्षायाः अङ्गभूत-

प्रकाराकांक्षात्ववत् स्वस्वरूपघटकावान्तरभेदविषयकत्वस्याप्यंगीकारे तु तत्रैवान्तर्भावो भवितुमर्हति। सर्वथा कुर्यादित्यत्र किमित्याकांक्षा कर्तव्य-क्रियादिविषयिणीति युक्तम् । शाबरभाष्ये चेमाश्चतुर्विधा आकांक्षाः प्रादर्शिषत, (1 1 32) "ज्योतिष्टोम इत्यभिधाय कर्तव्य इत्युच्यते । केनेत्याकांक्षिते सोमेनेति । किमर्थमिति स्वर्गायेति । कथमिति इत्थम्–अनयेतिकर्तव्यतयेति" इति । अतः कर्तव्य इति कृतिकर्मवचनात् किं कुर्यादिति कर्मकारकाकांक्षापूरणमिति ज्ञेयम् । तथा च न्याय-परिशुद्धौ, "शाब्दोऽयं पन्थाः" इत्यत्र 'शाबरोऽयं पन्थाः' इत्यपि ग्राह्यमिव । एवं कर्तव्य इति दर्शितं कृतिसाध्यत्वं लिङर्थं विहाय नियोगाख्यमपूर्वं विधिरिति वदन्तः प्राभाकराः, शब्दभावना लिङर्थ इति विधिशब्दे इच्छातुल्यप्रवर्तनां कल्पयन्तो भट्टाश्च लोकव्युत्पत्तिमति-क्रान्ता इति च ध्येयम् । तत् सिद्धं विधिवाक्यव्यतिरिक्त-लङादिमद्वाक्य-स्थले भूतत्ववर्तमानत्वाद्याख्यातार्थविशिष्टधात्वर्थविशिष्टः कर्त्रादिलं-कारार्थो विशेष्यः । विधिस्थलेऽपि स एव ; धात्वर्थे कृतिसाध्यत्वरूप-विध्यर्थान्वय इति विशेष इत्यलं प्रपञ्चेन ।

तदेवं वाक्यं नाम वेदे लोके वा एकपदबोध्यार्थमुख्यविशेष्यकबोध-जनकपरस्परान्वितपदजातमिति सिद्धम् । ईदृशवाक्यराशिरूपं वेदं विशया-स्पदानेकस्थलार्थनिर्णयार्थं न्यायकलापप्रदर्शनमुखेन व्याख्यातुं मीमांसा प्रवृत्ता । मीमांसाशास्त्रनिर्णीतस्थलव्यतिरिक्तेषु भागेषु संभवतां संशयविपर्य-याणामेतद्दर्शितगमनिकयैवार्थनिर्णयः सुकर इत्याशयेनैतावति विरतम् ।

तत्र विंशत्यध्याय्यां मीमांसायां प्रथमेनाध्यायेन प्रतिज्ञातोपयोगितया वेदस्य प्रामाण्यस्थापनपूर्वकं धर्मप्रमाणानि अष्टौ परिगणितानि । विधिरर्थवादो मन्त्रः स्मृतिराचारः नामधेयं वाक्यशेषः सामर्थ्यमिति। तत्र विधिः इदं कुरु इति कर्तव्यविधानार्थं वाक्यम् । तद्विहितस्यानुष्ठाने पुरुषप्ररोचनार्थं तत्तदर्थस्तावको भागः अर्थवादः । तदनुष्ठानकाले यथावदनुसंधानाय प्रयुज्यमानतया मन्त्राणामुपयोगः । एवं सार्थवादसमन्त्रविधिवाक्यसिद्धधर्मवत् श्रूयमाणवेदवाक्यानुपलभ्यो धर्मः स्मृतिग्रन्थावगतः, तन्मूलभूतो वेदोऽनधीयमानोऽप्यस्तीति विमृश्यास्माभिर्ग्राह्य इति ज्ञापनार्थं स्मृतिनिरूपणम् । एवं श्रुतिस्मृत्युभयानुपलभ्योऽपि आचारमात्राधिगम्यो धर्म आदरणीयः, तत्रापि वेदसद्भावस्योन्नयनादिति आचारोऽपि न्यरूपि । उद्भिदादिपदानां केषाञ्चिदर्थविधानपरत्वाभावेऽपि कर्मणां मिथोव्यावृत्ततया संकल्पव्यवहारादिसौकर्याय नामधेयतयोपयोग इति तन्नामधेयमपि चतुर्धा विभज्य व्युदपादि । यत्र कस्मिंश्चिन् विहितेऽनुष्ठेये तदर्थं द्रव्याक्षेपे, इदं वा द्रव्यं तद्वा, अविशेषेण योग्यं यत् किमपीत्यनियमो वेति संशयो भवेत्, तदा तद्विधिवाक्यस्य शेषभूतं वाक्यान्तरं तन्निर्णायकं यत्, तत् वाक्यशेष इत्युच्यते । क्वचिद्वाक्यशेषाभावेऽपि विधीयमानवस्तुसामर्थ्यादेव विशेषनिर्णयो भवेत् । तत्र सामर्थ्यमेव प्रमाणम् । तस्य वेदविहितवस्तुगतत्वात् वेदः प्रमाणमित्युच्यते । उदाहरणानि अन्यत्र द्रष्टव्यानि ।

अथ द्वितीयोऽध्यायः । अत्र पूर्वं विधीयमानत्वेनोक्तानां कर्मणां यागदानहोमादिरूपेण तदवान्तरविभाभिन्न भेदोऽस्तीति

निरूप्यते । भेदसाधकानि च प्रमाणानि षट् कथ्यन्ते शब्दान्तरमभ्यासः संख्या संज्ञा गुणः प्रकरणान्तरमिति । यागदानादीनां भेदः यजेत दद्यादिति मिथोभिन्नार्थकधातुत एवावगम्यते इति तत्र शब्दान्तरं कर्मभेदकम् । अपर्यायधातुः शब्दान्तरम् । यत्रैकरूप एव धातुः पुनःपुनरभ्यस्यते ; न च तत्र विधेयान्तरं किञ्चिदस्ति । तत्र पुनरुक्तिबलादेव कर्मभेदः। यथा पञ्चानां प्रयाजानां समिधो यजति, तनूनपातं यजतीत्यादिवाक्यैः । क्वचित् शब्दस्यैकत्वेऽपि तद्विशेषणसंख्यया कर्मभेदः, यथा तिस्र आहुतीर्जुहोतीति । अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिरित्यादौ संज्ञाभेदात् कर्मभेदः । यत्र संनिहितवाक्यविहितकर्मणि गुणविधानमिति निर्वाहो न संभवति, तत्र गुणविशिष्टस्य कर्मणोऽन्यस्यैव विधानम्, यथा सा वैश्वदेव्यामिक्षेति वाक्यसमीपगते वाजिभ्यो वाजिनमिति वाक्ये । एकस्मिन् कर्मणि प्रसिद्धा संज्ञैव तदुपस्थापकरहिते प्रकरणान्तरे श्रूयते चेत्, संज्ञासाम्येऽपि कर्मभेदः ; यथा मासमग्निहोत्रं जुहृतीति सत्रविशेषे । शाखाभेदे तु "एकं वा संयोगरूपचोदनाख्याऽविशेषात्" इति कर्मैक्यमेवेति अन्ते उक्तम् । अयमर्थः शारीरकेऽपि ३. ३. विशदः ।

अथ तृतीयोऽध्यायः । एवं कर्मणां नानात्वं दर्शितम् । एषां द्रव्यदेवादिरूपाण्यङ्गानि वक्तव्यानि । कर्मस्वेव कानिचित् केषाञ्चिदङ्गानि भवन्ति । तान्यङ्गभूतानि कर्माणि संनिपत्योपकारकाणि आरादुपकारकाणि इति द्वेधा विभज्यन्ते । प्रधानक्रियानिष्पादक द्रव्यदेवताद्यन्वयि कर्म संनिपत्योपकारकम् ; तदनन्वयि सत् उपकारकम् आरादुपकार-

कम् । सर्वत्र दृष्टोपकारलाभे तस्यैव ग्रहणम् , तदभाव एवादृष्टस्वीकारः। यथा व्रीहीणामवहननं कर्म तुषविमोकेन तण्डुलसंपादकत्वात् वैतुष्य-रूपदृष्टफलकम् । तेनैव प्रोक्षणमदृष्टार्थम् । एषामङ्गविधीनां विनि-योगविधिरिति नाम । विनियोगः-अङ्गत्वेनान्वयः, तद्बोधो वा । एवं विमर्शे उत्पत्तिविधिः विनियोगविधिः प्रयोगविधिः अधिकारविधिरिति विधेश्चतुर्धा विभागो भवति । कर्मस्वरूपज्ञापकविधिः उत्पत्तिविधिः । कस्यचित् केनचिदङ्गाङ्गिभावबोधको विधिर्विनियोगविधिः । एतद्विधि-सिद्धानामङ्गानामङ्गिनश्च सहानुष्ठानं कार्यमिति तत्र, किं पूर्वं किं पश्चादिति विवेचनेनानुष्ठानक्रमं व्यवस्थाप्य सर्वाङ्गविशिष्टप्रधानानुष्ठानविधिरूपमहा-वाक्यं प्रयोगविधिः । एवमङ्गाङ्गिवर्गे, एतावदनुष्ठातुं कः शक्तः; तस्य किं फलमिति अधिकारिदर्शको विधिः अधिकारविधिरिति कथ्यते । साङ्गस्य कर्मणः फलसंबन्धबोधको विधिरधिकारविधिरिति च ब्रूयुः । यावज्जीव-वाक्यमपि तथा । एवं विधीनां चतुर्धाविभागवत् अन्यत्त्रेधा विभागोऽप्यस्ति। अपूर्वविधिः नियमविधिः परिसंख्याविधिश्चेति । एष विभागो द्वितीयपादे मन्त्राधिकरणे सेश्वरमीमांसायामपि सुज्ञानः । अत्यन्ताज्ञातस्य विधिः अपूर्वविधिः विधिमन्तरा ज्ञातस्यापि विध्यभावे पाक्षिकत्वं स्यात्-कदाचित् त्यागोऽपि स्यादिति तदयोगव्यवच्छेदेन तस्य सर्वदा संबन्धनियमकरणं नियमविधिः । यथा व्रीहीनवहन्तीति । एतद्विध्यभावे हि, वैतुष्यकामः कदाचिदवहननं विना अश्मफलकादिना घट्टनादिनाऽपि वैतुष्यं संपादयेत् । विधिस्तत्र सर्वदाऽवहननसंबन्धकथनार्थम् । परिसंख्या नाम इतरनिषेधः। विधिमन्तरैव सर्वदैव प्राप्तिसंभवे क्वचित् तद्विधानं न तत्प्रापणार्थम् ,

किंतु तदवधारणेन तद्वत् प्राप्त्यर्हान्यनिषेधार्थमिति। इदं "परिसंख्या" इति सूत्रे द्रष्टव्यम्। अत्र शब्दतः फलतश्चेति विभागोऽपि मन्त्राधिकरण-दर्शितः। पूर्वोक्तचतुष्टये अधिकारविधिः षष्ठेऽध्याये। प्रयोगविधिः पञ्चमे। विनियोगविधिरिह तृतीये। प्रथमस्तु विधिः, "तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" इति 1-1-7 अधिकरणसूत्र एव सिद्धः।

एतद्विधिविबोध्यमङ्गत्वम्। इदञ्च, "शेषः परार्थत्वात्" इति सूत्रेण व्युत्पादितम्। एतदर्थश्च वेदार्थसंग्रहे "परगतातिशयाधाने-च्छयोपादेयत्वमेव यस्य स्वरूपम्, स शेषः परः शेषी" इति श्रीभाष्यकारै-रदर्शि। परार्थत्वं नाम परोद्देश्यकत्वम् परगतप्रयोजनहेतुत्वं वा। यद्गत-प्रयोजनमात्रोद्देश्यकत्वं यस्य, तदङ्गत्वं तच्छेषत्वं तस्य। परप्रयोजनभूत-परगतातिशयाधायकत्वं शेषत्वमिति तत्र टीकादौ व्याख्यातम्। यद्यपि सिद्धवस्तुभूतपरमपुरुषादिकं प्रति चेतनाचेतनयोः शेषत्वं विधिवाक्य-मन्तरेणावसीयेत, अथापि अनुष्ठेयकर्मनिरूपितमङ्गत्वं विधिमन्तरा दुर्ल-भमिति विधिघटितमङ्गत्वलक्षणमुक्तं मीमांसकैः। तच्च परोद्देशप्रवृत्त-कृतिकारकत्वेन विहितत्वम्। फलार्थं यागस्य करणतया विधानात् यागः फलाङ्गम्, यागोद्देशेन पुरुषस्य कर्तृतया, देशकालयोरधिकरणतया, क्रियान्तराणामितिकर्तव्यतारूपेण च विधानात् सर्वस्य यागाङ्गता। तत्राङ्गत्व-लक्षणघटकपदार्थेषु फलादिरूपपरशब्दार्थ - तदुद्देश - प्रवृत्ति - विधि-विषयत्वादेः समभिव्याहारलभ्यत्वात् विधिविषयगतं कारकत्वमेवाङ्गत्वे मुख्यांश इति तद्बोधकत्वं तृतीयादिविभक्तीनामिति द्वय विभक्त्या तत्र

कारकत्वं शक्त्या बोध्यते, सा श्रुतिरूपं प्रमाणमङ्गत्वे। यत्रेयं विभक्तिरूपा श्रुतिर्नास्ति, तत्र लिंगेन सामर्थ्येन श्रुतिकल्पना। लिङ्गस्याप्यङ्गत्वार्हस्य वाक्यरूपपदद्वयसमभिव्याहारात् क्वचिद् ग्रहणम्। वाक्यस्यापि क्वचिदुभयाकांक्षारूपप्रकरणात् कल्पनम्, अपेक्षिताकांक्षान्यूनतायामन्यतराकांक्षारूपस्थानादपि प्रकरणकल्पनम्, क्वचिदाकांक्षाद्वयस्यापि कल्पना भवति आध्वर्यवादिसमाख्यास्थले। तत्राङ्गाङ्गित्वार्हार्थद्वयस्य प्रकृतिप्रत्ययाभ्यामुक्ततया तदर्थद्वयसंबन्धसंपादनाय तत्कल्पनाया आवश्यकत्वात्। वाक्यस्थले अङ्गाङ्गिवाचकं पदं विभिन्नम्; अत्रैकपद एव भागद्वयमिति विशेषः। एवं विमृश्य श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपप्रमाणषट्कं परिगणितम्। उक्तरीत्या पूर्वपूर्वकल्पनेनैवोत्तरोत्तरस्य प्रमाणत्वात् यत्र द्वयोः प्रमाणयोः समावेशः विरोधश्च, तत्र दुर्बलत्वादुत्तरमुपेक्ष्य प्रबलभूतपूर्वानुरोधेनांगत्वनिर्णयः। अस्य सर्वस्यानेकेषु उदाहरणेषु विचारस्तृतीयेऽत्राध्याये। क्वचित् आनर्थक्यतिहतानां विपरीतं बलाबलमिति पूर्वत्यागेनोत्तरस्वीकारोऽप्यदर्शि। सर्वमिदं मीमांसापादुकायां 35 श्लोके समग्राहि। तत्र श्रुतिलिंगादिशब्दानामर्थोऽप्युक्त इति नेह प्रतन्यते।

अथ चतुर्थोऽध्यायः। तृतीय तुरीयद्वयमेका पेटिकेति वक्तव्यम्; अङ्गाङ्गित्वरूपसाधारणधर्मव्याप्यस्य प्रयोज्यप्रयोजकभावस्यात्र निरूपणात्। अङ्गि प्रयोजकम्; अङ्गं प्रयोज्यम्। न तु सर्वमङ्गि प्रयोजकमितीदमत्र निरूप्यते। प्रयोजकत्वमनुष्ठापकत्वम्। विधिरङ्गयर्थमेवाङ्गमनुष्ठापयतीति अङ्गिनः प्रयोजकत्वं स्वरसतः प्राप्तम्। तत् क्वचिन्नास्तीति निरूप्यते। एतद्विचारफलं किमिति चेत्—अप्रयोजक-

त्वात् क्वचिदङ्गलोपो न दोषायेति सिद्धिरिति। यथा सोमक्रयार्थं गवि नीयमानायां सप्तमं पदमध्वर्युरञ्जलिना गृह्णातीत्युक्तम्। तत्र गोनयनप्रयोजकं सोमक्रयणमेव, न तु सप्तमगोपदन्यासग्रहणम्। अतो यदि गौर्यदृच्छया सप्तमं पदन्यासं प्रस्तरे कुर्यात्, तत्राञ्जलिग्रहणमनिष्पन्नमिति तदर्थं न पुनर्नयनं गोः क्रियते। पांस्वञ्जलिग्रहणलोपो न दोषाय। एवम्, 'पुरोडाशकपालेन तुषान् उपवपति' इति तुषनिष्कासनं कपालकार्यमुक्तम्। तत्र पुरोडाशकपालेनेत्युक्तत्वात् कपालेषु पुरोडाशं श्रपयतीति विधिबलात् पुरोडाश एव कपालप्रयोजकः, न तुषोपवापः। अतः कपालभेदादौ प्रसक्ते न तुषोपवापसिद्ध्यर्थं कपालकल्पनम्।

एवमिदमप्युदाहरणम्—क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति वाक्ये मैत्रावरुणनाम्ने ऋत्विजे दण्डदानं विधीयते। दीक्षितस्य दण्डधारणं विहितम्। स एव दण्डः सोमक्रयानन्तरं मैत्रावरुणाय दीयते। तत्र किं दीक्षितधृतदण्डप्रक्षेपे यत्र क्वापि कर्तव्ये तत्प्रतिपत्तिरूपं दानम्, उत मैत्रावरुणस्य दण्डापेक्षतया तदर्थं दण्डदानमिति विशयः। दीक्षितदण्डप्रतिपत्तिरूपत्वस्वीकारे यत्र मैत्रावरुणोऽस्ति, दीक्षा नास्ति, तत्र निरूढपशौ दण्डदानलोपः। मैत्रावरुणायेति चतुर्थ्या संप्रदानत्वावगमात् दीयमानदण्डशेषित्वप्रतीतेः मैत्रावरुणकार्यार्थत्वं युक्तमिति सिद्धान्ते दीक्षितदण्डाभावेऽपि दण्डदानस्य कार्यता। अस्ति च प्रैषानुवचनप्रवृत्तस्य मैत्रावरुणस्य धृत्यर्थं दण्डस्यालम्बनतयोपयोगः। ततो दानं दण्डस्य प्रयोजकम्, न तु सत्यामपि द्वितीयायां दण्डो दानस्य प्रयोजक इति। एवमादि भाव्यम्।

प्रयोजकाप्रयोजकरूपैतर्थसंबन्धादेव क्रत्वर्थपुरुषार्थविभागोऽप्यत्राध्याये विचारितः। क्रतुशेषतया क्रियमाणानां क्रत्वर्थत्वम्। क्रतुशब्दः कर्मसामान्योपलक्षकः। पुरुषमुद्दिश्य क्रियमाणानां पुरुषार्थत्वम्। अनुष्ठीयमानानां कर्मणां फलार्थत्वेऽपि फलस्य पुरुषार्थत्वात् अन्ततः पुरुषार्थत्वमेव। तत्तत्कर्मानुष्ठाने क्रियमाणे तदर्थविहितानां यथावदनुष्ठाने निष्पद्यमाने मध्ये यदि तदसंबन्धिपुरुषार्थकार्यान्तरलोपः स्यात्, न तावता क्रतुवैगुण्यं भवति। तथा पुरुषार्थक्रियान्तरस्य क्रत्वर्थक्रियान्तरवैगुण्यात् न नैष्फल्यमित्यादिकं भाव्यम्।

अथ पञ्चमोऽध्यायः—द्वितीयाध्यायोक्तानां कर्मणामङ्गाङ्गिभावोऽप्यस्तीति सांगानुष्ठानं तृतीये सिद्धम्। तत्र चतुर्थेन प्रयोज्यप्रयोजकभावचिन्तनात् तत्र तत्रैतावन्त्येवाङ्गानीति इयत्ताऽपि गृहीता। अथ तेषामनुष्ठाने कर्तव्ये सर्वेषां युगपदनुष्ठानासंभवात् विलम्बे चाङ्गाङ्गिसाहित्यभंगात् एककार्यमध्ये कार्यान्तरप्रवेशायोगात् अविलम्बितक्रमेण सर्वानुष्ठानं कार्यमिति, किं पूर्वं किं पश्चादिति पौर्वापर्यरूपक्रमनियामकापेक्षायामत्रापि षट् प्रमाणानि अन्यानि परिगणितानि श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिभेदात्। यत्र वेदं कृत्वा वेदिं करोतीति रीत्या क्त्वाप्रत्ययादिना स्पष्टैव क्रमावगतिः, तत्र श्रुतिः प्रमाणम्। वेद इह दर्भमुष्टिः। यत्र वस्तुसामर्थ्यवशान्निर्णयः, तत्रार्थः प्रमाणम्। पक्वया यवाग्वा अग्निहोत्रहोमे कार्ये, किं होमः प्राक् यवागूपाको वेति संशयस्तदैव विलीयते, पाकाभावे यवाग्वा अनिष्पत्त्या पाकएव पूर्वमिति सुखमवगमात्। क्वचित् क्रमानुक्तावपि एवं सामर्थ्यवशान्निर्णयप्रसक्त्यभावेऽपि क्रम आद्रियते, यस्य पूर्वं पाठः तत् पूर्वं कार्यमिति पाठवशात्। तस्याप्यभावे तु स्थानं प्रमाणम्। यथा ज्योतिष्टोमे भिन्नभिन्नकालेऽनुष्ठेयाः अग्नीषोमीयसवनीयानुबन्ध्यास्त्रयः

पशुयागाः साद्यस्कनामके क्रतौ युगपदनुष्ठीयन्ते, सहपशूनालभेतेति वचनात्। तत्र किमग्नीषोमीयस्थाने त्रयमेलनम्, उत सवनीयस्थाने, आनुबन्ध्यस्थाने वेति विमर्शे, मध्यमस्य स्थाने इति सिद्धम्, स्थानातिक्रमसाम्यात्। अथ विचारः तत्र कतमस्य प्रथममनुष्ठानमिति। तत्रेदं स्थानं प्रमाणम् अस्य सवनीयस्थानत्वात् आश्विनग्रहग्रहणरूपपूर्वकर्मानुष्ठानानन्तरं तस्योपस्थितत्वात्, तत्साहित्यवचनबलात् तदनन्तरमेवान्ययोरुपस्थित्या प्रथमोपस्थितः सवनीयः प्रथममिति। अथ मुख्यक्रमः—सारस्वतौ भवतः इति वाक्यं सरस्वतीदेवताकं सरस्वद्देवताकञ्च यागं विधत्ते इति 'एतद्वै दैव्यं मिथुनम्' इत्यर्थवादादवगम्यते। तत्र सरस्वती च सरस्वांश्चेति स्त्रीप्राथम्येन विग्रहस्य कार्यतया स्त्रीयागः प्राक्, पुंयागः पश्चात्। तत्र मुख्यस्य—प्रधानस्य क्रममनुसृत्य स्त्रीदेवत्यहविर्द्रव्यनिर्वापः पूर्वम्, पुंदेवत्यहविर्द्रव्यनिर्वापः पश्चादिति निर्णयः। अथ प्रवृत्तिः। यादृशी प्रथमप्रवृत्तिः संपन्ना, तदनुरूपैव द्वितीयादिप्रवृत्तिरपीति। यथा सप्तदश प्राजापत्यान् पशूनालभेतेति वाक्यात् एकप्रजापतिदेवत्यतया सप्तदशपशुयागयुगपदनुष्ठाने सर्वेषां पशूनां प्रथममुपाकरणम् अथ सर्वेषां नियोजनमिति रीत्या पशुसंस्काराणामनुष्ठाने कार्ये, कस्य पशोः पूर्वमित्यत्र नियामकाभावात् यत्र क्वाप्यारम्भेऽपि, उपाकरणं प्रथमकार्यं यद्यत्पशौ येन क्रमेणानुष्ठितम्, 'नियोजनादिकमपि तेनैव क्रमेणानुष्ठेयम्, नान्यथेति व्यवस्था प्रवृत्तिक्रमादिति। अनेनैव विचारेण पूर्वपूर्वप्रमाणस्य बलीयस्त्वमपि सिद्ध्यतीति। एवं क्रमनिर्णयेन प्रयोगविधिशिक्षणं पञ्चमाध्यायकृत्यम्।

एवं कर्तव्यकार्यकलापे निर्धारिते अथ षष्ठेनाध्यायेनाधिकारिनिर्णयः। को नामाधिकार इति चेत्—अधिकारः फलस्वाम्यमिति

मीमांसकाः । षष्ठे प्रथमाधिकरणे यजेत स्वर्गकाम इत्यादौ स्वर्गादेः फलत्वेनान्वये पर्यवसानमुपपाद्य कर्मिणः फलमस्तीति स्थापनात् तादृश-फलभोक्तृत्वमेवाधिकार इति । इदञ्च, शास्त्रं पुरुषमधिकरोतीति प्राचीन-व्यवहारात्, "यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम्" इति न्यायसूत्रे अधिकृत्येत्यस्य उद्दिश्येत्यर्थात् पुरुषमुद्दिशति पुरुषोद्देशेन प्रवर्तत इत्यर्थावगमात्, पुरुषोद्देश्यकत्वं पुरुषभोज्यफलार्थकर्मविधायकत्वमेवेति अधिकरोतिशब्दवाच्यो यः भोक्तृत्वानुकूलव्यापारः तत्र फलांशः स्वर्गादिभोक्तृत्वं पुरुषनिष्ठमेव, ग्रामं गच्छतीत्यादौ ग्रामे गमनक्रि-याजन्यसंयोगरूपफलात्मकसंगमवदित्याशयेन । तथा 'तत्तद्देशाधिकारी', "यावदधिकारमवस्थितिः" इत्यादिप्रयोगेषु अधिकारपदस्य स्वामित्वमर्थः प्रतीयते । कर्मस्वामित्वमित्युक्तावपि कर्मजन्यफलभोक्तृत्व एव पर्यवसानम् । व्यवसायात्मिकेति गीताश्लोकतात्पर्यचन्द्रिकायाम् मदर्थमिदं कर्मेत्यभि-मानोऽधिकार इत्युक्तम् । पुरुषः कर्मण्यधिकरोतीत्यपि नवीन-प्रयोगदर्शनात् "शारीरकमीमांसायामधिकरोति" इति श्रीभाष्ये-ऽपि प्रयोगात् अधिकारशब्दार्थो व्यापारोऽपि पुरुषनिष्ठः सुवचः । सा च कृत्यर्हतैव । एवञ्च विधिरधिकरोति पुरुषमित्यत्र अधिकरोति नियुङ्क्ते इत्यर्थः । कीदृशस्य नियोज्यत्वमित्यालोचनेऽन्वीयमानाकार-व्यूह एव कृत्यर्हता । इदमेव नियोज्यविशेषणं स्वर्गकाम इत्यादिवाक्ये फलम्, निमित्तवाक्ये यावज्जीवमित्यादौ जीवनादिकमिति प्राभाकरैरुक्तम् । फलमस्यास्य काम्यमानं फलम्, फलकामनेत्येवार्थः । तदेव नियोज्य-विशेषणम् । फलभोक्ता भवतीत्यर्थः अधिकरोतीत्यस्य न स्वरसः ; फलस्य भावित्वात् । अधिकारस्य चाद्यतनत्वात् । कार्यानुष्ठानार्हो भवतीत्यर्थस्तु

घटते । अत एव अर्थित्वसामर्थ्ये अधिकार इति अस्माभिरुच्यते । "फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात्" इति जैमिनिसूत्रे सर्वाधिकारं सर्वनियोजकं सर्वपुरुषकृत्यर्हतागमकमित्यर्थ एव स्वरसः स्यात् ; न तु फलभोक्तृत्वघटितोऽर्थः; फलार्थत्वादिति तद्दर्शिपदसत्त्वात् । "द्रव्यपेक्षया तु मनुष्याधिकारत्वात्" इत्यत्र तदनन्तराधिकरणे च अर्थित्वसामर्थ्यविचारः क्रियते अधिकारविवेचनाय । अत एवोक्तम्, "अर्थित्वेन समर्थता त्रिकृततनुः संपिण्डिताऽधिक्रिया" इति । ननु नित्ये कर्मणि किं फलम् ? कथमर्थित्वमिति चेत्-तत्रापि प्रत्यवायपरिहारः फलम् । पापक्षयरूपफलमपि श्रुतम् । फलापेक्षिणा वर्णाश्रमधर्मानुष्ठानमपि श्रीपराशरोक्तम् । निवृत्तिधर्मेषु मोक्षः फलम् । सात्त्विकत्यागपुरस्कारेणानुष्ठानेऽपि भगवतः शेषिणः प्रीतेरुद्देश्यत्वान्न निष्फलतेति ।

अयञ्चाधिकारो यागादौ न सर्वेषाम् , अपितु अग्निविद्यावताम् । अग्निराधानजन्यः । विद्या अध्ययनजन्या । आधानाध्ययने त्रैवर्णिकान् प्रत्येव विहिते इति तेषामेव यागाद्यधिकारः । यजमानस्येव पत्न्या अपि द्रव्यस्वामित्वात् यागादौ कर्तृत्वं तस्या अपि । अध्ययनजन्यविद्या आवश्यकांशे तया सम्पाद्या । 'पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु' इत्युक्तेः । उभयसाध्ये कर्मणि पुरुषगतविद्ययैव कार्यसिद्ध्या, निषेधबलेन च स्त्री न पूर्णाध्ययनमर्हति । अत एव भक्तेस्तत्तदात्मार्पणरूपायाः भिन्नत्वात् न संभूय दम्पत्योर्भक्तियोगे कर्तृत्वम् । काम्ये कर्मणि सर्वाङ्गोपसंहारसमर्थ एवाधिकारी । नित्यनैमित्तिकयोरङ्गवैकल्येऽपि यथाशक्त्यनुष्ठानम् । तिर्यगादीनां कर्मानुष्ठानस्य नैव प्रसक्तिः । शूद्रादीनामपि वैदिकेष्वपि सामान्यधर्मत्वेन प्रसिद्धेषु सत्यवदनादिष्वधि-

कारोऽस्त्येव। विशेषवचनबलात्तु निषादस्य रथकारजातेश्च याग-विशेषेऽधिकार इष्यते। ऋत्विजां तु यजमानकर्तृकवरणबलात् तत्तदङ्गानुष्ठानेन यजमानोपकारकत्वमपि। दक्षिणाप्राप्तिरेव तेषां फलम्। प्रधानफलं तु यजमानस्य सपत्नीकस्य। यत्र सत्रादौ सर्वेषामेव यजमानत्वम्, ऋत्विक्कार्यकर्तृत्वञ्च, तत्र सर्वेषां फलम्। काम्यं कर्म कामनया प्रक्रान्तमपि कामनाविच्छेदेऽपि यथाकथञ्चित् समापनीयम्। अङ्गलोपे प्रायश्चित्तेन तत्परिहारः। मुख्यद्रव्यालाभेऽपि प्रतिनिधिद्रव्येण वाचनिकेन सादृश्यमूलगृहीतेन वा कार्यपूर्तिः। एवमधर्माणामपि प्रायश्चित्तनाश्यतेत्यादिकमत्र विचारितम्। एवं वेदबोधितश्रेयस्साधनताकत्वं धर्मत्वम्, वेदबोधितानिष्टसाधनताकत्वमधर्मत्वमिति षड्भिरध्यायैर्न्यरूपि।

वृत्तं द्वादशाध्याय्यामध्यायषट्कम्। इदमुपदेशषट्कमित्युच्यते। अवशिष्टमतिदेशषट्कम्। तत्र सप्तमादिदशमान्तानामतिदेशमात्रविषयकता। एकादशद्वादशयोस्तु उपदेशातिदेशोभयसाधारण्यमस्ति। अथ चतुरध्याय्यपि तथोभयविषयिण्येव। उपदेशो नाम कर्तव्यस्य कर्मणोऽपेक्षितानामङ्गानां तदुद्देशेनैव यथाकथञ्चिद्विधानम्। यत्र तु एकस्मात् कर्मणः अन्यस्य कर्मणि अनुष्ठानरीतिरानीयते, तत्रातिदेश इत्युच्यते। सामान्यत एवं विचारः सप्तमेऽध्याये। अतिदेशवाक्यम् इदं कर्म तद्वत् कर्तव्यम् (प्रकृतिवत् विकृतिः कर्तव्या) इत्येवंरूपम्। यत्र समग्राङ्गोपदेशः, सा प्रकृतिः। यत्र तु ततोऽङ्गान्यानीयन्ते, सा विकृतिः। किमर्थं कुर्यात्, किं तत्साधनमित्याकाङ्क्षाद्वयस्य विकृतिषु वाक्यतो लाभेऽपि कथं कुर्यादिति इतिकर्तव्यताकाङ्क्षायां संनिधौ अपेक्षितसर्वाङ्गपाठाभावात् कुतश्चित् कर्मणोऽङ्गान्यत्र गृह्यन्ते। तत्र प्रकृतिस्थले यथा अङ्गिवाक्यस्य अङ्गवाक्यस्य च

सद्भावात् परस्परविषयाकांक्षारूपप्रकरणवशादङ्गग्रहणम्, तथाऽत्रापीति वक्तुं न शक्यते—अङ्गवाक्यानामत्राभावात् । अतः अङ्गिगतैकाकांक्षाबला- देवान्यत्र स्थितानामङ्गानामप्याकांक्षाकल्पनयाऽऽनयनम्; तैस्तत्र यागे प्रकृतिरूपे उपकारस्य क्लृप्ततया क्लृप्तोपकारकत्वरूपबलदर्शनात् । यत्र वचनमेव विस्पष्टमस्ति, यथा, इषुयागे, 'समानमितरच्छ्येनेन' इति श्येनयागात् धर्मग्रहणविधाने, एवं वैश्वदेवे पूर्वपर्वहविर्धर्माणामुत्तरपर्वह- विष्षु "एतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि" इत्येवम्— तत्र स्पष्टोऽतिदेशः । अयं वाचनिकातिदेशः । अन्यो नामसाजात्य- मात्रेणातिदेशकल्पनायाम् । द्वितीयाध्याये प्रकरणान्तररूपप्रमाणात् नित्या- ग्निहोत्रापेक्षया कुण्डपायिनामयनाग्निहोत्रमन्यदित्युक्तम् । तस्येति- कर्तव्यताकांक्षायां नित्याग्निहोत्रादतिदेशः क्रियते । अत एव तदग्नि- होत्रसादृश्यात् सिंहो माणवक इत्यत्र सिंहशब्दवत् अत्राग्निहोत्रशब्द इति । अथान्य आनुमानिकातिदेशः । प्रत्यक्षवचनाभावेऽपि नाम- साजात्याभावेपि च द्रव्यदेवतादिसादृश्यपर्यालोचनया इष्टिपशुसोमयागेषु अङ्गातिदेशः, एतद्वत् इदं कर्तव्यमिति वचनकल्पनया क्रियते । यथा सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः इत्यादाविति ।

एतदतिदेशत्रये योऽयमानुमानिकातिदेशः सामान्यत उक्तः, तस्य विशेषो विचार्यते अष्टमे । चरुपुरोडाशादिरूपौषधद्रव्यका इष्टयः, सोमलतारसनिष्पाद्यः सोमयागः, पशुद्रव्यकः पशुयागः, तत्रेष्टीनां सोमयागप्रकृतित्वं नास्ति । इष्टिमध्ये दर्शपूर्णमासयोः प्रकृतिता । तद्वत् अनुष्ठेयत्वमितरासाम् । ज्योतिष्टोमाङ्गभूतस्याग्नीषोमीयपशुयागस्य दर्श- विकारता तद्धितप्रतिपाद्यदेवताकत्वादिरूपसादृश्यात् । अतः पशुयागं प्रति

इष्टेः प्रकृतित्वम्। दर्शपूर्णमासौ नाम पूर्णमासयागत्रयं दर्शयागत्रयञ्च। प्रथमम् आग्नेयपुरोडाश-उपांशुयाज—अग्नीषोमीयपुरोडाशयागरूपयागत्रयम्। द्वितीयञ्च आग्नेयपुरोडाश-ऐन्द्रदधियाग-ऐन्द्रपयोयागरूपयागत्रयम्। सोमयागस्तु सोमलताभिषवेण तद्रसेन नानाग्रहपात्रेषु गृहीतेन ग्रहणकालोक्ततत्तद्देवता उद्दिश्य पृथक्पृथक् क्रियमाणः। पशुयागस्तु पशुं विशस्य तदङ्गवपाहृदयादिभिःक्रियमाणः। ज्योतिष्टोमे दीक्षाकाले कृतःदर्शप्रकृतिकः अग्नीषोमीयपशुयागः। स सोमयागदिने क्रियमाणस्य सवनीयपशुयागस्य प्रकृतिः; पशुद्रव्यकत्वरूपसाजात्यातिशयात्; उपाकरणनियोजनाद्यपेक्षिताङ्गसंपत्तिसौकर्याच्च. ऐकादशिनेषु पशुयागेषु सवनीयस्य प्रकृतिता। सौत्रामण्यादिषु पशुगणेषु ऐकादशिनप्रकृतिकत्वम्। दर्शपूर्णमासेष्टिवत् स्वयं प्रकृतिभूतो ज्योतिष्टोमः सोमयागः। तस्य विकृतयःविश्वजिदादयो यागाः। उभयत्र विधिवाक्ये स्वार्थविहितदेवतादर्शनविरहात् अव्यक्तत्वसाम्यात्। द्वादशाहोऽपि ज्योतिष्टोमविकृतिः। द्विरात्रादयः द्वादशाहस्य विकृतिभूताः। संवत्सरसत्रेषु संवत्सरसत्रत्वसाम्यात् गवामयनाख्यसत्रयागविकृतित्वमित्येवं बोध्यम्। दैक्षपशोर्दर्शविकारत्वमुक्तम्। तत्रापि पयोयागविकारत्वम्; पयसः पशोश्च साक्षात् पशुप्रभवत्वरूपसादृश्यातिशयात्। तद्धितप्रतिपाद्यदेवताकत्वमस्याप्यस्ति, ऐन्द्रं पय इति हि तद्विधिः। सांनाय्यशब्दवाच्ययोर्दधिपयसोर्मध्ये दध्नोऽपि पशुप्रभवत्वेऽपि न साक्षात् तत्प्रभवता। अतो न दधियागः प्रकृतिः। दर्विहोमा नाम केचित् सन्ति स्मार्तपार्वणस्थालीपाकादिकर्तृषु यथा दार्विहोमिक इति प्रसिद्धिः, तथा श्रौतवास्तुहोमादिकर्तृष्वपि तद्व्यवहारात्। तेषां न काचित् प्रकृतिः; अपेक्षिताङ्गानां पूर्णतयोपदिष्टत्वात्। अन्यस्तेभ्यो धर्मातिदेशाभावात् तेषामपि न काचिद्वि-

कृतिः । अतः प्रकृतिविकृतिविलक्षणास्ते । इत्येवं सापवादो विशेष-विचारोऽष्टमे । इति सप्तमाष्टमयोरतिदेशविचारतया एकपेटिकात्वम् ।

अथ नवमोऽध्यायः–अतिदिष्टस्थले स्थित ऊह इह विचार्यते । ऊहो नाम प्रकृतौ दृष्टस्य विकृतावतिदिष्टस्यान्यथाभावः । एतदर्थश्च, "ऊहः" इति सूत्रे मन्त्राधिकरणे (1-2-4) सेश्वरमीमांसायामुक्त एव । अत्राध्याये ऊहो-पयोगितया अंगानां किञ्चिदुद्देशेन विधीयमानानामपूर्वार्थत्वं विचारितम् । अपूर्वस्थाने देवताप्रीतिर्ग्राह्या भवत्यसत्सिद्धान्ते । अत्रत्यदेवताधिकरणार्थः तत्त्वटीकायां द्रष्टव्यः। उपयुक्तमीमांसायाश्च पूर्वाधिकरणविवेचनपूर्वकं तदर्थप्रपञ्चनं कृतमस्माभिः । सोऽयमूहस्त्रिविधः मन्त्रोहः सामोहः संस्कारोहश्चेति। आद्यः अग्नये जुष्टं निर्वपामीत्यादिमन्त्रविषयकः। स मन्त्रः प्रकृतौ अग्निविषयकः स्थितः विकृतौ सूर्यविषयकः क्रियत इति सिद्धो-ऽन्यथाभावः। तत्राग्निपदेन यथा शक्त्या अग्निरुच्यते, तथाऽत्र सूर्यवचनार्थं सूर्यायेति पदप्रयोगात्। सौर्यमिति सूर्यपदेन तद्देवतानिर्देशात् । स च कश्चित् प्रातिपदिकोहः लिंगोह इत्यादि बहुप्रकारः । प्रकृतौ एकवचनस्य विकृतौ वस्तुद्वित्वबहुत्वसत्त्वेऽपि नान्यथाभावः, प्रत्येकैकत्वविवक्षयैव निर्वाहसंभवा-दित्याहुः । सामोहस्तु प्रकृतौ एकस्यामृचि गीतस्य साम्नः विकृतौ ऋगन्तरे गाने कार्ये। साम्नः ऋगक्षराभिव्यक्त्यर्थत्वात् एकारादेः आयीभावादिना व्यञ्जनं यथायथं भवति। तत्र प्रथमतः यस्मिन् प्रदेशे आयी इति गीतम् , तत्रैव प्रदेशे गानमित्यस्वीकृत्य, यत्र एकारोऽस्ति, तत्राऽऽयीभाव इति एकारवति प्रदेशान्तरे तदङ्गीकारात् ऊहः। न च 'यद्योन्यां गायति तदुत्तरयोर्गायति' इति योनिऋग्गतस्य साम्नः उत्तराग्रन्थपठितयोरन्ययोर्द्वयोर्गाने विकृतिकर्मा-गमूतत्वाभावेऽपि ऊहसंभवात् प्रकृतिविकृतिस्थल एवोह इति कथमिति-

-वाच्यम् ; अतिदेशस्थले ऊह इत्येतावत एव विवक्षितत्वात् यथो-
-क्तमिति वाक्यस्यैव वाचनिकातिदेशरूपत्वेन तदापि सामोहोपपत्तेः ।
सामगानाच्च स्तोत्रनिष्पत्तिः । अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं
शस्त्रम् , प्रगीतमान्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रमिति भेदात्
सामाभावे स्तोत्रानिष्पत्तेः । एवं वदन्त एव मीमांसकाः गुणिनीं देवतां
तद्गुणांश्च श्रूयमाणान् अविरुद्धान् अबाधितानप्यपलपन्तीति साहसमे-
तत् । "स्तेगान् दंष्ट्राभ्यां मण्डूकान् जम्भ्येभिः" इत्यश्वमेधीयमन्त्रं
मनसि निधाय यदुक्तं (9.1-4) शास्त्रदीपिकायाम् , स्तेगमण्डूकादीनां
तिरश्चाम् , अचेतनानामोषधिवनस्पतीनाम् , ईदृशानां देवतात्वेन श्रूयमा-
णानां को नाम फलदायित्वं श्रद्दधीत' इति-तत् विप्रलम्भमात्रम् ; तत्तदभि-
मानिदेवतानामतिशयितचैतन्यानामेव फलदायित्वोक्तिसंभवात् । स्तेगा
नाम क्षुद्रजन्तुविशेषाः गोकर्णगा इति प्रसिद्धा इति सायणीयम् ।
सामानि च बृहद्रथन्तरवैरूपवैराजादिनाम्ना प्रसिद्धानि । एकं साम तृचे
क्रियत इति वचनात् सामगानमृक्त्रये भवति । स्तोत्रसाधनीभूता ऋक्
स्तोत्रीया । साम्नः ऋगक्षराभिव्यक्त्यर्थतया ऋगङ्गत्वम् । तादृशर्क्समूहः
स्तोमः । नवकस्य त्रिवृदिति नाम । एवं पञ्चदशः सप्तदश एकविंश
इति भेदाः। गायत्री उष्णिक् अनुष्टुप् बृहती पङ्क्तिः त्रिष्टुप् जगती इति
छन्दोभेदाः । उत्तरोत्तरस्याः चतुरक्षराधिकत्वम् । प्रथमा गायत्री चतु-
र्विंशत्यक्षरा । तत्र अष्टकपादत्रयवती, षट्कचतुष्पात , सप्तकत्रिपात् इति
भेदोऽपि। अन्योऽपि त्रिपाद्भेद इत्यलम् ॥ संस्कारोहस्तु प्रकृतौ व्रीहिषु
क्रियमाणानामवघातादीनां नीवारादिद्रव्येषु करणात । नन्वत्र नान्यथा-
भावः इति चेत्-अवघातप्रोक्षणादीनां तत्तद्द्रव्यकाठिन्यपरिमाणादितार-

तस्यानुरोधेन यथार्हं कर्तव्यत्वादन्यथाभावो भवेदेवेति नोहत्वहानिरिति ।

अथ दशमोऽध्यायः—अत्र बाधो विचार्यते । प्रकृतितो विकृता-वतिदिष्टेषु पदार्थेषु केषाञ्चिदननुष्ठानम् अग्रहणं बाधः । न च विकृतौ नित्यकर्तव्यायां यथाशक्त्यनुष्ठाने केषाञ्चिदननुष्ठानात् सोऽपि बाधः स्यादिति वाच्यम् ; अननुष्ठेयत्वं हि बाधः । तत्र तु अनुष्ठेयस्यैवाशक्त्या त्याग इति भेदात् । स चार्थलोपात् प्रत्याम्नानात् प्रतिषेधादिति त्रेधा । कृष्णलचरौ प्राकृतोऽवघातो नानुष्ठीयते; अर्थस्य वैतुष्यरूपस्य प्रयोजनत्वा-भावात् । कृष्णलाः सुवर्णमाषाः। न तेषु वैतुष्यप्रसक्तिः । अतिदेशशास्त्रं हि विकृतेरुपकारापेक्षायां क्लृप्तोपकारत्वेन प्राकृतपदार्थान् अर्पयति । यदि वैतुष्यरूपोपकारो नापेक्ष्यते, नतरामवघातापेक्षेति कथं तदतिदेशः । एवं तर्हि प्राप्तबाधो दशमाध्याये इति कथमिति चेत्—न हि सर्वथाऽति-देशाकल्पना । अङ्गान्तराणामानयनाय प्रकृतिवत् विकृतिरियं कर्तव्येति वचनस्यात्र कल्पितस्य सद्भावात्—वैतुष्यसंभवासंभवविमर्शप्राक्कालेऽस्य शास्त्रस्य वैतुष्यप्रापकत्वमपि मन्येत । विमर्शानन्तरं स्थितस्यापि प्रमाण-स्यावघातमात्राविषयकत्वकल्पनम् । तथाच यत्र सामान्यतः प्रापक-प्रमाणसत्त्वेऽपि विशेषस्य तदविषयकत्वम्, तत्र प्राप्तबाधः। तृतीयाध्याये तु श्रुतिलिंगादिस्थले उक्तो बाधोऽप्राप्तबाध उच्यते । तत्र हि प्रापकप्रमाणं श्रुतिरेव । लिंगादीनामपि श्रुतिकल्पनाद्वारैव प्रमाणत्वात् । तत्रोत्तरप्रमाण-कल्प्यश्रुतिप्रारम्भात् प्रागेव पूर्वश्रुत्यैव विनियोगसिद्ध्या उत्तरप्रमाणात् श्रुतिकल्पनैव वार्यत इति प्रमाणस्यैवाभावात् अप्राप्तबाध इत्युच्यते ।

ननु कृष्णलानां चरुभाव एव कथम् । अतश्चरुस्थाने कृष्णला-नामेव साक्षात् द्रव्यत्वम् । न हविःप्रकृतिता । तर्हि घृते श्रपयतीति

वचनं कथमिति चेत्-वचनबलात् तत्राग्निसंयोगमात्रं श्रपणम् । अतोऽन्यदुदाहरणम्-स्वयंदिनं(खण्डितं)बर्हिर्भवतीति वाक्येन लवनं विनैव स्वत एव पृथग्भूतानां बर्हिषां ग्रहणात् तत्र लवनकार्याभावात् लवनलोपः।

अथ द्वितीयः, शरमयं बर्हिर्भवतीत्यादौ प्रत्याम्नानात् बाधः। प्रत्याम्नानं प्राकृतस्थाने वस्त्वन्तराम्नानम् । बर्हिर्भिः कर्तव्यं वेदिस्तरणं शरैरेव क्रियते अभिचारार्थे सोमारौद्रकृष्णव्रीहिचरुयागे। गवामयने पत्न्य उपगायन्ति इत्युपगानमुक्तं न प्रकृतौ ऋत्विज उपगायन्तीत्युक्तमुपगानम्। प्राकृतमुपगानं मुखकार्यमुद्गातृसामगानोपचायकम् । इह तु वीणादिकार्यमुपगानम् अत्र विहितापूर्वदुन्दुभिनादोपचायकमिति भेदात् । अतो न पत्नीभिः ऋत्विजां बाधः । प्रतिषेधात् बाधो यत्र, महापितृयज्ञे, न होतारं वृणीते इति होतृवरणस्य। यजतिषु येयजामहं करोतीति प्राप्तस्य येयजामहस्य च नानूयाजेषु इति प्रतिषेधः । अत्रेदं बोध्यम्——महापितृयज्ञसंबन्धिहोतृवरणप्रवृत्तिः प्रतिषिध्यते, तथा अनूयाजाधिकरणकयेयजामहकरणप्रवृत्तिश्च । सा प्राप्ता वा अप्राप्ता वा। अप्राप्ता चेत्, न प्रतिषेधः; अप्रसक्तप्रतिषेधायोगात् । प्राप्ता चेत्-शास्त्रतोऽन्यस्माद्वा । नान्त्यः; एतद्विषये शास्त्रातिरिक्तप्रमाणाप्रसक्तेः । नाद्यः; शास्त्रप्राप्तस्य सर्वात्मना निषेधे प्रापकशास्त्रवैयर्थ्यापत्तेः । अतः अतिरात्रषोडशिग्रहणाग्रहणवत् विकल्प एव स्यादिति कथं सर्वात्मना प्रतिषेधः श्रौतप्रतिषेधस्थले सुवच इति शंकाऽवतरति । अत इह प्रतिषेधं परित्यज्य पर्युदासाङ्गीकारः । प्रतिषेधः आख्यातार्थप्रवृत्तिप्रतियोगिकात्यन्ताभावः। पर्युदासो नाम आख्यातार्थान्वयिपदार्थान्तरप्रतियोगिकभेदः। तथा च होतृवरणभिन्नं कार्यं कुर्यात्, होतृभिन्नं वृणीत, अनूयाजभिन्नेषु येयजामहं कुर्यादिति भेदार्थघटनेन वाक्यार्थः । अन्ततः

प्रतिषेध एव पर्यवसानात् प्रतिषेधाद्बाध इत्युच्यत इति ।

अथैकादशोऽध्यायः—अत्र तन्त्रं विचार्यते । तन्त्रं नाम अनेकोद्देशेन सकृदनुष्ठानम् । यत्र नानेकमुद्दिश्य सकृत्करणम्; किंतु एकमुद्दिश्य करणेऽपि अनुद्दिष्टस्याप्यर्थात्सिद्धिः, तत्र प्रसंग इत्युच्यते । तद्विचारो द्वादशे । एकरूपाणामङ्गानामनेकाङ्ग्युद्देशेन कर्तव्यानां पृथक्पृथक् तत्तदङ्ग्यर्थमनुष्ठानं विना सकृदनुष्ठानमेव सर्वोपकारकमिति अत्रोच्यते । यदि तावत् काम्यानि कर्माणि नानाफलसाधनतयाऽऽम्नातानि सकृत्करणादेव तावन्ति फलानि जनयेयुः, तर्हि तयैव रीत्या अङ्गानामपि जन्मनि सकृदनुष्ठानं पर्याप्तमेवेति हेतोः तद्विचारानवकाशः स्यात् । अतस्तदप्यत्र विचार्यते, किं काम्यं सकृत् कृतं सर्वं फलं दद्यादिति । अर्थवादाधिकरणे (1-2-17) "फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः" इति सूत्रं तत्र प्रसक्तपूर्णाहुत्यादिमात्रविषयकं न, किंतु सामान्येन सर्वविषयकमित्येव स्वीकृतम् – अथापि कर्मपरिमाणतारतम्यानुरोधेन तत्र फलतारतम्यं विवक्षितम् । न तु सकृदनुष्ठाने सर्वं फलं भवति न वेति । यद्यपि चतुर्थाध्याये, (4-3-27) "तत्र सर्वे अविशेषात्" इति पूर्वपक्षं कृत्वा, "योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात्" इत्यनेन एकैकप्रयोगादेकैकमेव फलमित्युक्तम् । तथापि न तेनास्य पुनरुक्तिः । तत्र सिद्धान्तसूत्रस्यार्थस्तावत् –योगसिद्धिः–पर्यायः–क्रमः । सहकार्यन्तरयोगे कार्यसिद्धिः । कुतः ? अर्थस्य—फलस्य उत्पत्त्यसंयोगित्वात् कर्मोत्पत्तिमात्रेण संबन्धाभावात् । तावन्मात्रेण सर्वफलोत्पत्तिश्चेत् —पुरुषानपेक्षितानि विरुद्धान्यपि फलान्यापतेयुरित्यनर्थः स्यादिति । अत्राध्याये पुनरेवमाशंक्यते, "कर्मण्यारम्भभाव्यत्वात् प्रत्यारम्भं फलानि

स्युः" । यथा कृषौ क्रियमाणायां प्रतिप्रयोगं तत्फलानि भवन्ति । यथैकस्मिन् सस्ये वृक्षे लतायां वा बहूनि व्रीहिधान्यादीनि फलानि, तथा एतत्कर्मजन्यानि फलानि भवेयुरेव । न च कारणान्तराभावः । विहितस्य कर्मण एव कारणत्वात् । न च कर्मणश्चिरध्वस्ततया अपूर्वमंगीकर्तव्यं द्वारतया ; तत् एकस्मिन् फले उत्पद्यमाने नश्यतीति न फलान्तरमिति वाच्यम्—कर्मणि ध्वस्तेऽपि तदुपलक्षितः पुरुष एव द्वारमस्तु ; कर्मध्वंस एव वा ; कृतमपूर्वेण । भवदपि अपूर्वम् अन्तिमं कर्मोत्पाद्यं फलमुत्पाद्यैव विनश्यतु । न च विरुद्धफलोत्पत्त्ययोगः। विरोधात् तदनुत्पादेऽपि अविरुद्धानेकसमुच्चयसंभवात् । अस्तु वा अनिष्टस्य विरुद्धस्योत्पत्त्या इष्टस्यानुत्पत्तिवारणाय कामनाया विनिगमकता । तत्र अनेकेषां फलानां युगपत्कामनायामनेकफलोत्पत्तावदोषादित्येवम् । तत्र पुरुषभेदेन विभिन्नफलसमुच्चयेनाव्यवस्थादेरयोगात् एकमेकदा फलमेकमेवेष्टं कुर्यादिति सिद्धान्तः । एतन्निरूपणात् अङ्गानामपि सकृदुपकारजनकत्वमेव सिद्धम् । अतः प्रयोगभेदेन अङ्गानि पृथगनुष्ठेयानीत्यपि सिध्यति । अत्रोदाहरणम्—ऐन्द्रदधियागः ऐन्द्रपयोयागश्च दर्शे क्रमेण कर्तव्यौ । तत्र संप्रतिपन्नदेवताकत्वात् दधिपयोरूपद्रव्यद्वयं युगपदेव दीयत इति यागयोस्तन्त्रेणानुष्ठानम्। संप्रतिपन्नदेवताकत्वं एकदेवताकत्वम् । उद्देश्यदेवताया एकरूपत्वम्। तत्र द्रव्यद्वयमेलनमपि । न चोभयमेलने द्रव्यस्यान्यथात्वापत्तिः क्षीरनीरविवेकिन्या देवताया पृथक्करणयोग्यतासत्त्वात्। एवं दर्शप्रयोगे पूर्णमासप्रयोगे एकैकप्रयोगे प्रधानयागत्रयसद्भावेऽपि न प्रयाजादीनामङ्गानां त्रिवारमनुष्ठानम् , किंतु त्रयोद्देशेन सकृदेवेति तन्त्रता । यानि तु तत्तद्द्रव्यनिष्पादनौपयिकतया पृथक्कार्याणि, न तेषां तन्त्रत्वप्रसक्तिः ।

आरादुपकारकाङ्गानां तन्त्रत्वं सुनिश्चितम् । तत्राचार्यान्तरपक्षोपन्यास-पूर्वकं बादरायणपक्षमेव जैमिनिः परिजग्राह, "विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः" इति । यथा बहूनां प्रधानकर्मणां क्रमेण विधाने तत्संनिधौ प्रयाजादिविधाने, यत्समीपे यद्विधिः तस्यैव तदित्यस्वीकृत्य सर्वार्थिता, तथाऽनुष्ठानेऽपि एकाङ्गिसमीपकालेऽङ्गानुष्ठानेऽपि सर्वार्थित्वमेव तस्य ; सर्वथा क्रमेणानुष्ठाने किञ्चित्समीपकालत्वस्यावर्जनीयत्वादिति । पूर्णमासेऽनुष्ठितान्यासन्निति दर्शप्रयोगे तदननुष्ठानं न। प्रयोगावसान एव तज्जन्यातिशयोपरमात् । अतिशयोऽपूर्वमात्मगुण इति मीमांसकाः ; देवताप्रीतिरिति वयम्। एकफलार्थानां कर्मणामेकः प्रयोगविधिरेव सर्वत्र । अत्र तु वचनबलात् दर्शपौर्णमासीरूपकालभेदात् त्रिकभेदेन प्रयोगभेदः । उत्सर्गतः सांगैकफलसर्वकर्मसंबन्धी प्रयोग एक एव । क्वचित् व्यापकप्रयोगमध्ये व्याप्यप्रयोगा अपि भवन्ति । प्रयोगभेदेनानुष्ठि-तयोरप्यंगांगिभावः क्वचिद् वचनबलात्। एवं दक्षिणाभेदेऽपि प्रयोगभेद इष्यते । प्रयोगान्वयिनो गुणाश्च देशः कालः कर्ता च। क्वचित् मन्त्र-स्वरोऽपि प्रयोगान्वयीत्याहुः । ततो देशभेदे कालभेदे कर्तृभेदे चैकप्रयो-गानन्तःपातिनोऽङ्गिनः अङ्गानि पृथगेवानुष्ठेयानि । अन्यथा तन्त्रमिति।

अथ द्वादशोऽध्यायः—एतदध्यायार्थः प्रसंगः। तदर्थानुष्ठानाभावेऽपि तदपेक्षितोपकारहेतुत्वं प्रसङ्गः। चमसेनापः प्रणयेदिति वचनेन अप्प्रणयने चमसपात्रविधानेऽपि गोदोहनेन पशुकामस्य प्रणयेदिति बलात् पश्वर्थं गोदोहनपात्रग्रहणे तेनैवाप्प्रणयनसिद्ध्या चमसाग्रहणम् । तथा ज्यो तिष्टोमे सवनीयपशुयागैकदेशो वपायागः प्रातर्निष्पन्नः, हृदयादियागाः सायम् । सर्वार्थतया च सकृत् प्रयाजादिकमङ्गमनुष्ठीयते । तत्र मध्ये,

"अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति तदङ्गभूतः पुरोडाशयागोऽपि कार्यः। तस्यापि पूर्णमासप्रकृतिकत्वात् प्रयाजादिकं प्राप्तम्। अथापि न पृथगनुष्ठीयते। पश्वर्थानुष्ठितानां प्रयाजादीनां तत्रासमाप्तकृत्यतया जागरूकत्वात् तत एव कार्यसिद्धिरिति। प्रयाजानुष्ठानस्य पशुपुरोडाशप्रयोगमध्यगत्वाभावात् न तदुद्देशेनानुष्ठानम्। एवं नित्यमेव कर्म अग्निहोत्रादिकं स्वर्गादिकामनयाऽनुष्ठेयं भवति। तत्र काम्यानुष्ठानेनैवाग्निहोत्रस्वरूपनिष्पत्त्या न पृथङ्नित्यानुष्ठानम्। एवं दर्शपूर्णमासाङ्गभूतं व्रतं सत्यवदनब्रह्मचर्यादिरूपम्, अग्ने व्रतपते व्रतं चरिष्यामि इत्येवंरूपं सोमाङ्गभूतेष्टिपशुविषये पृथङ्नानुष्ठीयते, सोमार्थमपि व्रतसत्त्वात् तेनैव कार्यसिद्धेः। सत्यवदनं पुरुषार्थमिव क्रत्वर्थमपि पृथक्। यदि कश्चित् सत्यमेव वदिष्यामि इति पुरुषार्थसंकल्पवान्, सोऽपि क्रत्वर्थं पृथगनुतिष्ठेत्। अन्यथा कदाचित् पुरुषार्थलोपे क्रतुलोपापत्तेः। तत्रैकप्रयोगान्तःपातरूपकारणाभावाच्च। इह सोमप्रयोगान्तःपातित्वादिष्टिपश्वोर्न पृथग्व्रतानुष्ठानम्। यत्रैकफलार्थाः प्राजापत्यादयः काम्येष्टयो युगपत् कर्तव्याः, तत्र सकृत्कर्तव्ययोराज्यभागयोः दर्शपूर्णमासरूपप्रकृतिभेदेन मन्त्रभेदे प्राप्ते कतरस्य मन्त्रस्य ग्रहणमिति चेत्—भूयसांन्याय इहोक्तः। भूयसामनुरोधेन मन्त्रो ग्राह्य इति। एवञ्च तदाज्यभागजन्योपकारेणान्यत्र प्रसङ्गसिद्धिः। समसंख्याकत्वे मुख्यानुरोधः। एतद्विवेचनं **परमार्थभूषणे।**

एवं तन्त्रप्रसङ्गौ विचार्य तदुचितसंकल्पपूर्वं प्रकृतिं विकृतिं वा नित्यं काम्यं वा यथावत् साङ्गमधिकारी अनुतिष्ठेत्। यत्र ऋत्विगपेक्षा शास्त्रसिद्धा, तत्र ब्राह्मणस्य ऋत्विजो वरणमिति द्वादशान्तिमाधिकरणे दर्शितम्।

उपलभ्यमाने लुप्तोद्धारप्रवृत्तसंकर्षसर्वाधिकरणपूर्वोत्तरपक्ष-संग्रहरूपे ग्रन्थे गम्भीरजभास्करकृते तेन भाट्टदीपिकया योजयितुमिष्टः सूत्राणि न मुद्रितानि अलाभात्। तत्र चतुरध्याय्यां षोडश पादाः—
1. ज्योतिष्टोमादिपादः 2. दर्शादिपादः 3. साकंप्रस्थयीयादिपादः 4. वाजिनादिपादः 5. इष्टकापादः 6. अवदानपादः 7. प्रैषपादः 8. होमपादः 9. कालपादः 10. अग्निपादः 11. ग्रहपादः 12. वरणपादः 13. सामिधेनीपादः 14. निगदपादः 15. वषट्कार-पादः 16. अनारभ्यवादपादश्च। इति संकर्षकाण्डरूपचतुर-ध्यायीसंग्रहः। एवं धर्मनिरूपणमेवात्र संकर्षे।

एवं जैमिनीयषोडशलक्षणात्मक पूर्वमीमांसाप्रतिपाद्यसाध्योपायभूत-सर्वधर्मसमाराध्यं सिद्धोपायतया, तत्तत्काम्यकर्माराध्यदेवतान्तरवत् साध्योपायवच्च भंगुरत्वाभावेन च सनातनधर्मत्वेन सुप्रसिद्धं श्रीमन्नारा-यणात्मकं परं ब्रह्म बादरायणीयेन उत्तरमीमांसारूपेण चतुर्लक्षणेन शारीरकेण प्रतिपाद्यते।

जयति जगदेकहेतुर्निर्बाधो निरघसद्गुणाम्भोधिः।
भक्providedाराध्यो मुक्तप्राप्यः श्रीशः परं ब्रह्म॥
पूर्वोत्तरमीमांसाप्रदीप इति तन्प्रमेयसंग्रहणम्।
अतनोदभिनवदेशिकवात्स्य श्रीवीरराघवाचार्यः॥

इति वात्स्य-सच्चक्रवर्ति-वीरराघवाचार्यकृतिषु
मीमांसामेयसंग्रहः
शुभमस्तु
* * * *

(1) विस्तरभिया सर्वस्थलव्याख्यानाकरणेऽपि यत्र यत्रात्यर्थ-गहनत्वमालक्ष्यत, यत्र यत्र शाबरभाष्य-कुमारिलवार्तिकादिमीमां-सकग्रन्थप्रदर्शनं विना वाक्यार्थो दुर्ग्रह इत्यालोच्यत, तत्र सर्वत्र तदुदाहरणेन वक्तव्यं सूक्ष्मार्थटीकायां संग्रहेणादर्शि। अथापि तत्र त्यक्तकतिपयांशविवरणमिह क्रियते। शब्दाधिकरणे (1-1-6)110 पुटे यत्तु परेषामाक्षेपवार्तिकमिति फक्किकायाः तत्र कर्तव्यं विवरणं न कृतम्, तत्रोद्धृते श्लोके अशुद्धिदर्शनात् साक्षात् वार्तिकग्रन्थम् अदृष्ट्वा तच्छोधनायोगात् शोधनावसर एव यथावद्विवरणं कार्यमिति। तदत्र शुद्धपाठप्रदर्शनपूर्वकं विव्रियते। तस्मिन् अधिकरणे प्रथम-श्लोकोऽयम्, "यद्यनित्यत्वपक्षेऽपि शब्दादर्थोऽवगम्यते। अनादि-र्व्यवहारश्च नित्यत्वं किं नु साध्यते" इति शुद्धः पाठः। पक्षोऽपि, शब्दादेव, किंन, इति स्थलत्रयेऽप्यशुद्धिः। अस्य प्रघट्टस्य आक्षेपवार्तिक-मिति नाम। अस्मिन्नधिकरणे वर्णनित्यत्वं मीमांसकैः साध्यते। अस्माभिर्वर्णानित्यत्वमेवांगीकृत्य वर्णसमुदायरूपस्य पदस्य, पदसमुदाय-रूपस्य वाक्यस्य, वाक्यसमुदायरूपस्य ग्रन्थस्य चात एवानित्यत्वे अवर्ज-नीयेऽपि अनादौ संसारे पदानामेवमेव प्रयुज्यमानतया प्रवाहनित्यत्व-सत्त्वात् प्रवाहानादिपदगतः बोध्यबोधकभावरूपः संबन्धोऽप्यनादिर्नित्यः, अन्येषां ग्रन्थानामनादित्वाभावेऽपि पदवदेव वेदानामप्येवमेव सर्वेषु कल्पेषु अधीयमानतया वेदोऽपि नित्य इति संबन्धनित्यत्ववेदनित्यत्व-स्थापनं क्रियते। अस्मत्पक्षरीत्यैव निर्वाहे सिद्धे किमर्थं वर्णनित्यत्वस्थापन-मिति वार्तिककारेणात्राऽऽक्षेप उपन्यस्यते प्रथमम्। अतो जैमिनिना

वर्णनित्यत्वस्थापनं क्रियमाणं व्यर्थमिति स एव ज्ञातवानस्ति। एवं प्रबलं पूर्वपक्षं परमुद्भाव्य यथावत् समाधिं न कृतवान् वार्तिककार इति अत्र आचार्यैरुच्यते। स हि, "सत्यमिच्छन्ति तेऽप्येवं न्यायस्तत्र परीक्ष्यते। न पराभ्युपगत्यैव प्रामाण्यमवतिष्ठते" पीठिकां परमकरोत्। न्यायं तु न प्रादर्शयत्। वर्णानां नित्यत्वे लाघवम्, सोऽयं गकार इति प्रत्यभिज्ञाऽप्यस्ति साधकेत्यादिवादे तु घट-पट-रूप-रसादीनां सर्वेषां नित्यता स्यात्। उत्पादविनाशानुभवविरोधस्तु उभयत्राविशिष्टः। अथ तेनैवाऽऽशंकितम्-वर्णनित्यत्वेऽपि पदनित्यत्वं न भवति। पदस्य व्यवस्थितक्रमविशेषवर्णसमुदायरूपतया, क्रमस्य च वर्णे नित्ये साक्षाद-संभवात् पुरुषकृतोच्चारणाधीनध्वनिगतत्वमेवेति क्रमस्यानित्यतया तद्वि-शिष्टरूपेणैव वर्णानां पदत्वात् पदाद्यनित्यत्वमवर्जनीयमिति। तत्रत्या इमे श्लोकाः, "वर्णाः सर्वगतत्वाद्धो न स्वतः क्रमवृत्तयः। अनित्यध्वनि-कार्यत्वात् क्रमस्यातो विनाशिता। पुरुषाधीनता चास्य तद्विवक्षावशाद् भवेत्। वर्णानां नित्यता तेन निष्फला परमाणुवत्। यथा सत्यणुनित्यत्वे घटे तद्रचनात्मके। न नित्यतैवं वर्णेषु नित्येषु पदनाशिता" इति। अथ घटे धर्म्यंशः परमाणुर्नित्यः; अवस्था तु भवत्यनित्या। तथा वर्णा नित्याः क्रमोऽनित्य इति युक्तमिति कथितम्। न हि दृष्टान्तमात्रेण वस्तुसिद्धिः। संभवति वर्णानामेव साक्षात्क्रमवत्त्वे ध्वनिमेकं मध्ये स्वीकृत्य तत्रत्यस्य क्रमस्य वर्णे आरोप इति कुसृतिरियं वर्णनित्यत्व-श्रद्धानिबन्धनेति प्रत्यवस्थाने किं समाधानम्। वर्णगतः क्रम एव पदमिति पदमनित्यमित्याशंकावारणायोक्तम्, "क्रमः क्रमवतामङ्गमिति किं युक्ति-

साध्यता । धर्ममात्रमसौ तेषां न वस्त्वन्तरमिष्यते" इति । क्रमस्य पदार्थ-धर्मत्वात् धर्मिण एव प्राधान्यात् क्रमविशिष्टवर्ण एव पदमिति गदितम् । तावता किं भवति? क्रमस्य विशेष्यत्वे इव विशेषणत्वेऽपि, विशिष्टे स्यादेवानित्यत्वम् । शब्दस्य रूपादेरिव गुणत्वोत्पद्यमानत्वादेः श्रुतिप्रत्यक्षप्रतिपन्नतया तद्विरुद्धो वर्णनित्यत्ववादः, विवक्षितासाधकश्चेति च प्रागेव प्रत्यपादि ॥

(2) अथ सप्तमेऽधिकरणे 112 पुटे यद्यपिकर्त्रादेरिति वाक्यम् । तत्र यद्यपि तथापीत्यनयोरन्वयो दुर्घट इव भायात् । विशेषविरोधरूपो दोष एव यद्यपीति वाक्ये उक्तः, तथापीति वाक्येऽपि विरोधस्यैव कथ्यमानत्वात् आनुरूप्यमेव हि । तत्र कथं यद्यपीति प्रयोग इति ॥ अत्रोच्यते-तथापीत्यतः प्राक् यद्यपीति वाक्यशेषतया वाक्यं पूरणीयम् । तत् अनुमानेऽपीत्यंशे अवधानकल्पने ज्ञायेतेति न प्रयुक्तम् । तच्च वाक्यम्—'अत्र त्वनुमानाभावात् न व्याप्तिपरामर्शापेक्षेति शब्दार्थबोधः स्यादेव, विरोधाभावादिति मन्येत' इत्येवंरूपम् । तथाचानुमाने विरोधो युक्तः, नात्रेति शंका । अत्रापि विरोधसंभवः तथापीति वाक्येनोपपाद्यत इति ॥

(3) हेतुवन्निगदाधिकरणेऽन्ते टिप्पणे **शिष्टं परिशिष्टे** इत्युक्तम् । तदत्र कथ्यते—शतपथब्राह्मणे 8 प्रपाठके 3ब्राह्मणे 5अनुवाके श्रूयते, "पात्राणि भवन्ति । पात्रेषु ह्यशनमश्यते । यवमयानि भवन्ति । यवान् हि जक्षुषीः वरुणोऽगृह्णात् । शूर्पेण जुहोति । शूर्पेण ह्यशनं क्रियते" इति । शूर्पेण जुहोतीत्यस्य तैत्तिरीये श्रवणेऽपि, तेन ह्यन्नं क्रियत

इत्येवंरूपांशस्तत्र न लक्ष्यते । "करम्भपात्राणि जुहोति" इति वाक्यं कौस्तुभे लिखितम् । **सोमनाथीये,** "चातुर्मास्येषु यवमयकरम्भ-पात्रहोमः" इत्युक्तम् । तद्वैशद्यायेदं लिख्यते । तत्र वेदभाष्यम् — पुरोडाशादिरूपतां विहाय पात्ररूपेण निर्माणमुपपादयति **पात्राणीति** । **हि**=यस्मात् पात्रेषु कांस्यादिनिर्मितेषु **अशनम्** अन्नम् **अश्यते** भुज्यते । अत इत्यर्थः । **जक्षुषी**रित्यस्य भक्षितवतीरित्यर्थः । तेषां करम्भपात्राणां होमं विधत्ते **शूर्पेणे**ति । जुह्वादिपात्रं विहाय शूर्पेण तानि गृहीत्वा होमः कार्यः । शूर्पेणहि तुषनिर्वपनद्वारा अन्नं क्रियत इति । पत्नी जुहोतीति कर्तृविधिः-इति । करम्भविषये चेदं ग्राह्यम्—"करम्भो दध्ना संयुक्ताः सक्तवः । तन्मयानि पात्राणि इति का. श्रौ. सू. 55. 2. 1. करम्भ-पात्राणि जुहोति शूर्पेण मूर्ध्नि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखी ॥ तद्व्याख्या—करम्भपात्राणि पत्नी जुहोति जुहूस्थानापन्नेन शूर्पेण मस्तकस्योपरि शूर्पं कृत्वा इत्यादिः । यवैः क्रियमाणं होम्यद्रव्यं पात्राकारं भवतीति करम्भपात्राणीत्युक्तम् ।

अत्र पूर्वपक्षे दर्व्यादीनामपि होमकरणत्वमित्यस्त्विति शंक्यते । तत् पात्ररूपहोम्यद्रव्याधारत्वार्हान्नकरणविषयं द्रष्टव्यम् ॥

**शुभमस्तु**

सेश्वरमीमांसा या षष्ट्यशीत्यधिकाः कारिकाः सन्ति। अत्र तु

## मीमांसापादुकाश्लोकानां अक्षराद्यनुक्रमणिका ; श्लोकसंख्या

ஸ்ரீ:

# ஸேச்வரமீமாம்ஸையும் மீமாம்ஸாபாதுகையும்

பாதராயணரென்ற வ்யாஸமஹர்ஷி அருளிச் செய்த ப்ரஹ்ம ஸூத்ரமென்ற சாரீரக சாஸ்த்ர மும் அவருடைய சிஷ்யரான ஜைமிநி முனி வரைக் கொண்டு அவர் எழுதி வைத்த பூர்வ மீமாம்ஸையும் சேர்ந்து மொத்தம் 20 அத்யாயம் ஒரே சாஸ்த்ரம். இது 14 வித்யா ஸ்த்தானங் களில் ஒரு வித்யா ஸ்த்தானமாகும். இப்படி இது ஒரே சாஸ்த்ரமென்றதை வ்யாஸ ஸூத்ரத் தினின்று ஊஹிப்பதோடு போதாயந வ்ருத்தி யென்ற ப்ரஹ்ம ஸூத்ர வியாக்யானத்திலும் ஸ்பஷ்டமாகக் காணலாம் என்று ஸ்ரீபாஷ்யகாரர் அருளிச் செய்தார். இந்த வ்ருத்தியைப் பின் பற்றியே விசிஷ்டாத்வைத ஸித்தாந்தத்திற்கு இணங்க ஸ்ரீபாஷ்யம் அருளப் பெற்றது. இந்தப் பண்டைய ஸமயம் பூர்வ மீமாம்ஸைக்குப் பழைய உரையான உபவர்ஷ வ்யாக்யானத்திலும் பின் வந்த சபரஸ்வாமி முதலானோர்களின் பாஷ்யாதி களிலும் தெரியவருகிறது. ஸ்ரீசங்காரசார்யரும் "ஏக ஆத்மந:" என்கிற ப்ரஹ்ம ஸூத்ரத்தில் தமது சாஸ்த்ரத்தின் முதல் அத்யாயமாக பூர்வ மீமாம்ஸையின் முதல் அத்யாயத்தைத் சொல்லி யிருக்கிறார். அதன் பழைய வுரைகளும் அதைப் பின் பற்றியே சென்றன.

மீமாம்ஸையாவது விசாரம். சிறந்த விஷயத் தைப் பற்றி முடிவு செய்வதற்கான சர்ச்சை வேதத்தின் பொருளே நமக்குச் சிறந்ததாகை யால் அதைப் பற்றிய விசாரம் முழுமையு மீமாம்ஸையாகும். வேதம் கர்மகாண்டம் ஜ்ஞான காண்டம், என்ற இருபாகமாகும். முந்திய பாகத்தின் பொருள் விசாரம் பூர்வ மீமாம்ஸை.

உபநிஷத் (ஞானகண்ட) விசாரம் உத்தர மீமாம்ஸை. மூலம், உபநிஷத்துடன் சேர்த்து ஒரு வேதமாகின்றது போல் மீமாம்ஸையும் சாரீரகம் சேர்ந்து ஒரு சாஸ்த்ரமாகிறது.

ஜைமினி முனிவரின் ஸூத்ரங்களுக்கு உரை செய்யவந்தவர்களில் பிற்காலத்தியவர் சில கொள்கையை மாற்றிவிட்டனர். அதாவது—கர்மாநுஷ்டானத்தில் வேறுபாடு ஒன்றுமில்லை யென்னலாமானாலும், இவர்கள் யாகத்திற்கு விசேஷமான மதிப்பைக் கொடுக்கவேண்டுமென்ற கருத்தினால், கர்மாக்களின் மேன்மை அபாரமென்றும் தாமே பலனெல்லாம் அளிக்குமென்றும் இதற்காக தேவதைகளையும் ஈச்வரனையும் இசைய வேண்டிய அவசியமில்லை யென்றும் சொல்ல முன் வந்தனர். அதன் மேல் கேள்வி எழுந்தது, யாகம் ஹோமம் எல்லாம் செய்தது தெரியாமல் உடனே மறைகின்றனவே, அவை வெகு வருஷங்கள் கழித்து யஜமானனுக்கு ஸ்வர்க்கம் முதலான பலனை எவ்வாறு அளிக்குமென்று. அதற்காக யாகத்தினின்று அத்ருஷ்டம் அபூர்வமென்பது ஒன்று ஆத்மாவில் உண்டாகிறது. அதனால் பலன் என்று இசைந்தனர். இப்படி வாதம் செய்தால் தேவதைகளையும் ஈச்வரனையும் கொள்ளாத நாஸ்திகர்களையும் தர்மானுஷ்டானத்திற்கு இழுக்கலாமென்று இவர்கள் கருத்து.

இது உண்மைக்கு மாறாயிருப்பதால் வேதாந்திகள் அனைவரும் இதனை மறுத்து தேவதைகளையும் ஈச்வரனையும் ஸ்தாபித்து புதிய மீமாம்ஸகவாதத்தை மறுத்தனர். தார்க்கிகர்களும் மீமாம்ஸக வாதம் துர்வாதமென்றே கருதினர். இப்படியிருப்பினும் மீமாம்ஸகர் செய்த உரைகளை எடுத்துக் கழிக்க யாரும் முன் வரவில்லை. அதற்கு வழி காண்பித்தவர் ஸ்ரீபாஷ்யகாரர். இவர்

அருணுதிகரணம், ஆக்ருத்யதிகரணம், தேவதாதி கரணமென்ற சில அதிகரணங்களுக்கு அவர்கள் சொல்லும் பொருள் ஏற்கவாகாதென்று நிரூபித்தார். பழைய நூல்களை ஆதாரமாகக் கொண்டு அபூர்வத்திஞல் பலன் என்பதை அடித்து தேவதா ப்ரீதியினுல் பலன் என்பதை விசேஷமாக விளக்கிஞர். அதற்குப் பிறகு ஸ்ரீதேசிகனுக்கு நிரீச்வர மீமாம்ஸையின் போக்கை முழுமையும் மறுத்து ஒரு ஸூத்ரம் விடாமல் ஸேச்வர மீமாம்ஸையாக ஜைமினியின் கருத்தை விளக்க வேண்டுமென்று ஆவலுண்டாயிற்று, நடுவே ஸ்ரீநாராயணுர்யரென்ற ஒரு மஹான் ஜைமினிஸூத்ரம் இவ்வளவு வேண்டா என்று சிலவற்றைத் தள்ளி மீமாம்ஸா சாஸ்த்ரத்தையும் சுருக்கிக்காட்டியிருப்பதாக ஸ்ரீதேசிக ஸ்ரீநயநாசார்ய க்ரந்தங்களிலிருந்து விளங்குகிறது. க்ரந்தம் இல்லாமையால். எந்த இடத்தில் எவ்விதமான மாறுதல் என்று தெரியவில்லை. ஸ்ரீதேசிகன் வ்ருத்திகாரர் இசைந்து பண்டையோர் ஸம்ப்ரதாயமாக வந்த ஸூத்ரங்களை மாற்ருமல் அவற்றிற்கெல்லாம் வேதாந்தத்திற்கு இணங்கப் பொருள் உரைத்தருளிஞர். இதே ஸேச்வரமீமாம்ஸை.

இது பன்னிரண்டு அத்யாயங்களுக்கும் செய்யப் பெற்றது. தாத்பர்ய சந்திரிகை (2-18) முதலான பல க்ரந்தங்களில் இந்நூலை ஸ்ரீதேசிகனே குறிக்கிருர். ஆயினும் சிஷ்யர்கள் இதைப் பாதுகாக்கவில்லை. முதல் அத்யாயத்தில் முதல் இரண்டு பாதங்களே இப்போது காண்கிறன. இதாவது நீடித்திருக்க வேணுமென்று ஸர்வதேச ப்ரசாரத்திற்கு அனுகூலமாக தேவநாகரி லிபியில் அச்சிடப் பெற்றது. இதில் பூர்வ மீமாம்ஸையின் உரைகளான சாபரபாஷ்யம், குமாரில் வார்த்திகம், அதன் உரை காசிகை முதலான

வுற்றை மேற்கோளாகவும் சிலவிடங்களில் மறுப்பதற்காகவும் எடுப்பதாலும் சிலவிடங்களில் ஸூத்ரங்களை ஒன்ருக்கியும் சிலவிடங்களில் பிரிந்ததைச் சேர்த்தும் உரையிடுவதாலும், மூல க்ரந்தங்களை எடுத்துக் காட்டக் கீழே சுருக்கமான வியாக்யானமும் எழுதியிருக்கிறேன். முழு மீமாம்ஸைக்கும் எழுத வேண்டிய வழி இதனின்று இப்போது நன்கு புலனாயிற்று.

மீமாம்ஸையில் முதல் அத்யாயமானது—வேதம் ப்ரமாணமென்றும், தர்மத்திற்கு வேதம் தவிர வேறு ப்ரமாணமில்லை யென்றும், அந்த வேதம், விதி அர்த்தவாதம், மந்த்ரம் என்றவாறு பிரியுமென்றும் தர்மத்தை, இப்போது நாம் அறிவதற்கு எட்டு ப்ரமாணங்கள் வேதத்தை யொட்டியுள்ளன என்றும் தெரிவிக்கும்.

முதல் பாதத்தில்—தர்ம லக்ஷணம், தர்மத்திற்கு ப்ரமாணம், ப்ரத்யக்ஷம் அனுமானமென்ற ப்ரமாணங்களுக்கு எட்டாதது தர்மம். வேதம் ப்ரமாணம். வேதத்திலுள்ள சொற்களே ஸம்ஸ்கிருத பாஷையாக ப்ரசாரத்திலிருப்பதால் இந்த பாஷையின் வியவஹாரம் உலகிலிருப்பதால் வேதத்தின் பொருள் அறியவியலும். வேதம் நித்யம் எப்போதும் உளது. மற்ற க்ரந்தங்கள் போல் புருஷர்கள் இயற்றி வந்ததல்ல. ஆகையால் ஒருவித தோஷமும் சொல்லவாகாது. இந்தக் கொள்கைக்கு வேதத்திலே முரண்படும் பாகம் ஒன்றுமில்லை. அநுகூலமே யெங்குமுளது. அந்த வேதத்தில் இதைச் செய் என்று செயலை விதிக்கும் பாகமே ப்ரதானமாக தர்மத்தைக் காட்டும். என்ற விஷயங்கள் கூறப்பெற்றன. இதில் எட்டு அதிகரணங்கள்.

இரண்டாம் பாதத்தில் அர்த்தவாதம் மந்த்ரம் இரண்டும் விசாரிக்கப்பட்டன. அர்த்தவாதமாவது செய்ய வேண்டுமென்று விதிக்கப்பட்ட செயல்களின் பெருமையைக் கூறி அவற்றில் ருசியை விளைவிக்கும் வாக்யம். அது போல் செய்யக் கூடாதவற்றிற்கு உள்ள தோஷத்தையும் தெரிவிக்கும். மந்த்ரமாவது கர்மாநுஷ்டான காலத்தில் சொல்ல வேண்டிய சொற்கள். இது ருக்கு யஜுஸ் ஸாமம் என்று மூன்று விதமாயிருக்கும். மந்த்ரங்களின் சொற்களையறிந்த பிறகு பொருளையுமறிந்த பிறகு அப்பொருள் கொண்ட வேறு வடமொழி சொற்களையோ. வேறு பாஷையையோ சொன்னால் பலன் இல்லையாகையால் விதிக்கப் பெற்ற மந்திரங்களையே ஒழுங்காகக் கூறவேண்டும். அவற்றின் சக்தியே பலனுக்குக் காரணமாகும். இப்படி அதையே என்று வியவஸ்த்தை கொள்வதால் இந்த விதியை நியமவிதி என்பது. சில இடங்களில் பொதுவான மந்த்ரம் வேறொன்றுக்கும் ஆகும்போல் தோன்றும். அதற்கு வேண்டா என்று விலக்குவதில் நோக்காகவும் விதியுண்டு. இதனை பரிஸங்க்யா விதி என்பர்.

இதெல்லாம் மீமாம்ஸகர்களும் நாமும் இசைந்ததேயாம்.

ஆனாலும் பல அம்சங்களில் வேறுபாடு உண்டு. தர்மம் என்ற சொல் நாம் செய்யும் செயல்களைச் சொல்வது போல் ஸித்தோபாயமான பகவானையும் சொல்லும். 'க்ருஷ்ணம் தர்மம் ஸநாதநம்' என்ற ப்ரமாணமும் உளது. (2) விதியெல்லாம் ஈச்வரனுடைய ஆஜ்ஞையாகும் என்பதும் ஒரு விசேஷம். (3) வேதம் நித்யம் என்பதற்காக வர்ணம் சப்தம் எல்லாமே நித்யமென்பர் மீமாம்ஸ

கர். சப்தம் உலக ஸ்ருஷ்டியில் ஸ்ருஷ்டிக்கப்படுவ தால் நித்யமாகாதென்பது நமது கொள்கை. வர்ணம் நித்யமானதால் க்ரந்தம் நித்யமாய் விடாது. அப்படியானல் உலகிலுள்ள காவ்யங்கள் உள்பட எல்லாம் நித்யமென்னவாகும். வேதம் ஈச்வரனல் ஒவ்வொரு கல்பத்திலும் உண்டாக் கப் படுவதென்பர் தார்க்கிகர். முன் சென்ற கல்ப் பத்திய வேதமே அவனுக்கு நினைவிலிருக்க, வேறு எதற்குப் புதிதாகச் செய்வது? எல்லா கல்பங் களிலும் இதே வேதமுள்ளதென்பது வேதாந்தி ஸித்தாந்தம். (சொல் அவரவர் சொல்லும் போது உண்டாவதானலும் இதனலேயே வேதம் நித்யமென்பது. (4) இது போல் அர்த்தவாத மென்பது விதி நிஷேத வாக்யங்களுக்கே உப யோகப்படுமென்பர் மீமாம்ஸகர்—நாம் அப்படி கொள்வதில்லை. அர்த்தமாவது பொருள். அது கர்மாவும் ப்ரஹ்மம் போன்ற தத்துவமுமாம். அத தன் பெருமையைப் பகரும் பாகம் அர்த்தவாதம். ஆகையால் உபநிஷத்தும் அர்த்தவாதமே. அது கர்மாவுக்கான அர்த்தவாதமன்று, ஸ்வதந்த்ர மென்போம். (5) மற்றொரு விஷயம்—அர்த்த வாதம் மந்த்ரம் என்றவற்றில் கர்மாவுக்கும் தேவதைகளுக்கும் கூறிய பெருமைகளை உண்மை யென்று கொள்ள வேண்டிய அவச்யமில்லை. பொதுவாகக் கர்மா சிறந்ததென்று சொன்னல் போதும். மந்த்ரத்தில் சொன்ன விஷயங்களில், கர்மா, தேவதை என்று மட்டும் கொண்டால் போ தும். தேவதைக்குச் சொன்ன மூர்த்தி குணங்கள், ஐச்வர்யம் ஆயுதம் முதலானவற்றைக் கொள்ள வேண்டா. 'நாம் அளிப்பதை தேவதைகள் பெறு கிருர்கள்; ப்ரீதியடைகிருர்கள்; பலனுக்கு அருள் புரிகிருர்கள்' என்பதெல்லாம் இல்லையென்பர்

மீமாம்ஸகர். இவ்வாறு வேதத்திற் சொல்லிய வற்றை வைதிகர்கள் என்று பேர் வைத்துக் கொண்டு இல்லையென்கிறார்களே. இது நாஸ்திக ஸஹவாஸத்தினாலேற்பட்ட கேடு என்பர் வேதாந்திகள். ஆகையால் ப்ரத்யக்ஷத்திற்கு— அனுபவத்திற்கு முரணாக ஏதேனும் இருந்தால் அந்த இடத்தில் வேறு கருத்து ஆராய வேண்டிய தானாலும் மற்ற இடங்களில் வேதம் சொல்வதை யெல்லாம் இசைய வேண்டுமென்று வேதாந்தி களின் கொள்கை. இந்த ஸேச்வர மீமாம்ஸையிற் சொன்ன ஒவ்வொரு விஷயத்தையும் இங்குக் கூறுவதென்றால் விரிவாகும். அது வடமொழி கற்று சாஸ்த்ர ஜ்ஞானமும் சிறிது பெற்றவர் களுக்கே எளிதில் அறியக் கூடியதாகும்.

மீமாம்ஸா பாதுகையென்பது முதல் அத்யா யத்தின் முதற் பாதத்துக்கு மட்டும் ஏற்பட்ட க்ரந்தமாகும். ஸேச்வர மீமாம்ஸையிற் சொன்ன விஷயங்களே இவை யென்றாலும் இது நாஸ்திக மீமாம்ஸகரின் போக்குக்கு மற்றொரு வித மான விமர்சமாகும். அத்துடன் முக்கியமாய் நாம் அறிய வேண்டிய விஷயங்கள் ச்லோகங் களால் சொல்லப்பட்டிருப்பதால் மனத்தில் தரித் துக்கொள்ள சிஷ்யர்களுக்கு அனுகூலமாகு மென்ற கருத்தினாலும் இது இயற்றப் பெற்றது. குமாரிலர் முதற்பாதத்திற்கு மட்டும் ச்லோக வார்த்திகம் எழுதினார். பிறகு ச்லோகமாகாத வாக்யங்களைக் கொண்டு தந்த்ரவார்த்திகம். இங்கு முதற்பாதத்திற்கு ச்லோகம் வாக்யம் என்ற இருவிதமான உரைகள் அருளப்பெற்றன. இவ்வாறு விஷயச் சுருக்கம்.

# நன்றியறிவிப்பு

ஸ்ரீதேசிகனுடைய பெருமைகளில் வேதாந்தா சார்யகம் போலே கவிதார்க்கஸிம்ஹத்வமும் ஸர்வ தந்த்ர ஸ்வதந்த்ரத்வமும் உலகுக்கு அறிவிக்கப் படவேண்டுமானால், அவர் அருளிச் செய்த தர்க்க மீமாம்ஸாபரிஷ்காரமும் காவ்யநாடகங்களைப் போல் ப்ரகாசம் பெற நாம் முன் வரவேண்டு மென்று வேதாந்த க்ரந்தங்களை விட இவற்றில் நோக்கு வைத்து அனேகமாகக் காவ்ய நாடகங் களை வெளியிடும்போதே நடுவே இதையும் வெளி யிட முன் வந்தோம். ந்யாய பரிசுத்தியைச் செவ் வனே வெளியிட்டால் தர்க்க பரிஷ்காரம் ப்ரகாச மாகும். இப்போது இந்த மீமாம்ஸா க்ரந்தங்கள் இரண்டையும் அச்சிட்டு வெளியிடுவதற்கு வேண் டும் பொருள் உதவி செய்தவர் ஸ்ரீ. உ. வே. என். ஆர். ஸ்ரீநிவாஸன் என்பவர். இவர் சிறு வயதிலிருந்தே பகவத்பாகவத பக்தி, ஸதாசாரம், அடக்கம், சாந்தி முதலான குணங்கள் நிறைந்த வர். எவ்விதத்திலும் தமக்குப் பொருந்திய தர்ம பத்னியுடன் ஸதாசார்ய பரிபூர்ண கடாக்ஷத் திற்குப் பாத்ரமாயிருப்பவர். வேதாந்தக்ரந்தங்க ளெல்லாம் காலக்ஷேபம் செய்தவர். இவர்களுக் கும் இவர்களுடைய ஸந்ததிகளுக்கும் ஆயுரா ரோக்ய ஐச்வர்ய ஸந்தாந ஸத்குண ஜ்ஞாநாதி களை ஸ்ரீதேசிகன் அருள்வராகுக.

உத்தமூர். தி. வீரராகவாசார்யர்
உபயவேதாந்த க்ரந்தமாலா-
ஸம்பாதகர்

## BOOKS READY FOR SALE

| | | |
|---|---|---|
| 1. | Sri Bhashya with Sruta Prakasika | 50 00 |
| 2. | Sri Bhashya with Bhashyartha Darpana | 25 00 |
| 3. | Vedanta Dipa | 4 00 |
| 4. | Paramartha Bhushana | 25 00 |
| 5. | Vaiseshika Darsana with Rasayana | 7 00 |
| 6. | Tarkasangraha with Sukha Pravesini | 1 00 |
| 7. | Upayakta Parayana | 2 50 |
| 8. | Rakshagranthas by Srimad Vedanta Desika | 10 00 |
| 9. | Seswara Mimamsa and Mimamsa Paduka with Commentary | 10 00 |
| 10. | Yadavabhyudaya with Appayya Dikshita's Commentary and Tamil Translation | 40 00 |
| 11. | Paduka Sahasra with Sanskrit and Tamil Commentaries | 35 00 |
| 12. | Sankalpa Suryodaya with Sanskrit and Tamil Commentaries | 30 00 |
| 13. | Vedanta Dipa with Tamil and English Commentaries | 15 00 |

Gita Bhashya Tatparya Chandrika and other Books are Under Print

All other Sri Desika's works are being published.

All those under print will be supplied in the rate half price for those who purchase all the books by paying their full cost mentioned above.

**Ubhaya Vedanta Granthamala**

25, NATHAMUNI STREET, T. NAGAR

MADRAS-17